"रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः।
वामदक्षिणतो युक्ता दश तेन निशाकरः।
वीथ्याश्रयाणि चरति नक्षत्राणि रविर्यथा ॥२॥
सोमपुत्त्रस्य चाष्टाभिर्वाजिभिर्वायुवेगिभिः।
वारिजैः स्यन्दनो युक्तस्तेनासौ याति सर्व्वतः ॥३॥
शुक्रस्य भूमिजैरश्वैः स्यन्दनो दशभिर्वृतः ॥ ४ ॥
अष्टाभिश्चाथ भौमस्य रथो हैमः सुशोभनः ॥५॥
बृहस्पतेरथाष्टाश्वः स्यन्दनो हेमनिर्म्मितः ॥६॥
रथस्तमोमयो ह्यश्वो मन्दस्यायसनिर्म्मितः। ७।
स्वर्भानोर्भास्करारेश्च तथा षड्भिर्हयैर्वृतः॥८॥६॥
एते महाग्रहाणां वै समाख्याता रथा नव।
सर्व्वे ध्रुवे महाभागा निबद्धा वातरश्मिभिः ॥
ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः।
भ्रमन्ति भ्रामयन्त्येनं सर्व्वाण्यनिलरश्मिभिः ॥"

इति कौर्म्मे ४० अध्यायः ॥ * ॥

श्रीजगन्नाथदेवस्य रथः यात्राशब्दे द्रष्टव्यः ॥*॥
(त्रिपुरदहनार्थं महेश्वरादिष्टा देवा येन प्रकारेण तद्रथं निर्म्मितवन्तस्तदाह। मात्स्ये। १३३। १३—७१।
"त्रिनेत्र एवमुक्तस्तु देवैः शक्रपुरोगमैः।
उवाच देवान् देवेशो वरदो वृषवाहनः ॥
व्यपगच्छतु वो देवा महद्दानवजं भयम्।
तदहं त्रिपुरं धक्ष्ये क्रियतां यद्ब्रवीमि तत् ॥
यदीच्छथ मया दग्धुं तत् पुरं सहदानवम्।
रथमौपयिकं मह्यं सज्जयध्वं किमास्यते ॥
दिग्वाससा तथोक्तास्ते सपितामहकाः सुराः।
तथेत्युक्त्वा महादेवं चक्रुस्ते रथमुत्तमम् ॥
धरां कूवरकौ द्वौ तु रुद्रपार्श्वचरावुभौ।
अधिष्ठानं शिरो मेरोरक्षो मन्दर एव च ॥
चक्रुश्चन्द्रञ्च सूर्य्यञ्च चक्रे काञ्चन-राजते।
कृष्णपक्षं शुक्लपक्षं पक्षद्वयमपीश्वराः ॥
रथनेमिद्वयं चक्रुर्देवा ब्रह्मपुरःसराः।
आदित्यं पक्षयन्त्रं यन्त्रमेताश्च देवताः ॥
कम्बलाश्वतराभ्याञ्च नागाभ्यां समवेष्टितम्।
भार्गवश्चाङ्गिराश्चैव बुधोऽङ्गारक एव च ॥
शनैश्चरस्तथा चात्र सर्व्वे ते देवसत्तमाः।
वरूथं गगनं चक्रुश्चारुरूपं रथस्य ते ॥
कृतं द्विजिह्वनयनं त्रिवेणुं शातकौम्भिकम्।
मणिमुक्तेन्द्रनीलैश्च वृतं ह्यष्टमुखैः सुरैः ॥
गङ्गा सिन्धुः शतद्रुश्च चन्द्रभागा इरावती।
वितस्ता च विपाशा च यमुना गण्डकी तथा ॥
सरस्वती देविका च तथा च शरयूरपि।
एताः सरिद्वराः सर्व्वा वेणुसंज्ञाः कृता रथे ॥
धृतराष्ट्राश्च ये नागास्ते च वेश्यात्मकाः कृताः।
वासुकेः कुलजा ये च ये च रैवतवंशजाः ॥
ते सर्पा दर्पसम्पूर्णाश्चापतूणेष्वनूनगाः।
अवतस्थुः शरा भूत्वा नानाजातिशुभाननाः ॥
सुरसा सरमा कद्रूर्विनता शुचिरेव च।
तृषा बुभुक्षा सर्व्वोग्रा मृत्युः सर्व्वशमस्तथा ॥
ब्रह्मवध्या च गोवध्या बालवध्या प्रजाभयाः।
गदा भूत्वा शक्तयश्च तदा देवरथेऽभ्ययुः ॥
युगं कृतयुगञ्चात्र चातुर्होत्रप्रयोजकाः।
चतुर्व्वर्णाः सलीलाश्च बभूवुः स्वर्णकुण्डलाः ॥
तद्युगं युगसङ्काशं रथशीर्षे प्रतिष्ठितम्।
धृतराष्ट्रेण नागेन बद्धं बलवता महत् ॥
ऋग्वेदः सामवेदश्च यजुर्व्वेदस्तथापरः।
वेदाश्चत्वार एवैते चत्वारस्तुरगा भवन् ॥
अन्नदानपुरोगाणि यानि दानानि कानिचित्।
तान्यासन् वाजिनां तेषां भूषणानि सहस्रशः ॥
पद्मद्वयं तक्षकश्च कर्कोटक-धनञ्जयौ।
नागा बभूवुरेवैते हयानां वालबन्धनाः ॥
ओङ्कारप्रभवास्ता वा मन्त्रयज्ञक्रतुक्रियाः।
उपद्रवाः प्रतीकाराः पशुबन्धेष्टयस्तथा ॥
यज्ञोपवाह्यान्येतानि तस्मिन् लोकरथे शुभे।
मणि-मुक्ता-प्रवालैस्तु भूषितानि सहस्रशः ॥
प्रतोदोङ्कार एवासीत् तदग्रञ्च वषट्कृतम्।
सिनीवाली कुहू राका तथा चानुमती शुभा ॥
योक्त्राण्यासंस्तुरङ्गाणामपसर्पणविग्रहाः ॥
कृष्णान्यथ च पीतानि श्वेतमाञ्जिष्ठकानि च।
अवदाताः पताकास्तु बभूवुः पवनेरिताः ॥
ऋतुभिश्च कृतः षड्भिर्धनुः संवत्सरोऽभवत्।
अजरा ज्याभवच्चापि सावित्री धनुषो दृढा ॥
कालो हि भगवान् रुद्रस्तञ्च संवत्सरं विदुः।
तस्मादुमा कालरात्रिर्धनुषो ज्याऽजराभवत् ॥
सगर्भं त्रिपुरं येन दग्धवान् स त्रिलोचनः।
स इषुर्विष्णुसोमाग्नि-त्रिदैवतमयोऽभवत् ॥
आननं ह्यग्निरभवच्छल्यं सोमस्तमोनुदः।
तेजसः समवायोऽथ चेषोस्तेजो रथाङ्गधृक् ॥
तस्मिंश्च वीर्य्यवृद्ध्यर्थं वासुकिर्नागपार्थिवः।
तेजः संवसनार्थं वै मुमोचातिविषो विषम् ॥
कृत्वा देवा रथञ्चापि दिव्यं दिव्यप्रभावतः।
लोकाधिपतिमभ्येत्य इदं वचनमब्रुवन् ॥
संस्कृतोऽयं रथोऽस्माभिस्तव दानवशत्रुजित्।
इदमापत्परित्राणं देवान् सेन्द्रपुरोगमान् ॥
तं मेरुशिखराकारं त्रैलोक्यरथमुत्तमम्।
प्रशस्य देवान् साध्विति रथं पश्यति शङ्करः ॥
मुहुर्दृष्ट्वा रथं साधु साध्वित्युक्त्वा मुहुर्मुहुः।
उवाच सेन्द्रानमरानमराधिपतिः स्वयम् ॥
यादृशोऽयं रथः कॢप्तो युष्माभिर्मम सत्तमाः।
ईदृशो रथसम्पत्त्या यन्ता शीघ्रं विधीयताम् ॥
इत्युक्त्वा देवदेवेन देवा विद्धा इवेषुभिः।
अवापुर्महतीं चिन्तां कथं कार्य्यमिति ब्रुवन् ॥
महादेवस्य देवोऽन्यः को नाम सदृशो भवेत्।
मुक्त्वा चक्रायुधं देवं सोपास्य इषुमाश्रितः ॥
धुरि युक्ता इवोक्षाणो घटन्त इव पर्व्वतैः।
निश्वसन्तः सुराः सर्व्वे कथमेतदिति ब्रुवन् ॥
अहं सारथिरित्युक्त्वा जग्राहाश्वांस्ततोऽब्जजः ॥
ततो देवैः सगन्धर्व्वैः सिंहनादो महान् कृतः।
प्रतोदहस्तं सम्प्रेक्ष्य ब्रह्माणं सूततां गतम् ॥
भगवानपि विश्वेशो रथस्थे वै पितामहे।
सदृशः सूत इत्युक्त्वा चारुरोह रथं हरः ॥
आरोहति रथं देवे ह्यश्वा हरभरातुराः।
जानुभिः पतिता भूमौ रजोग्रासश्च ग्रासितः ॥
देवो दृष्ट्वाथ वेदांस्तानभीषून् प्रग्रहयान् भयात्।
उज्जहार पितृनार्त्तान् सुपुत्त्र इव दुःखितान् ॥
ततः सिंहरवो भूयो बभूव रथभैरवः।
जयशब्दश्च देवानां सम्भूतार्णवोपमः ॥
तदोङ्कारमयं गृह्य प्रतोदं वरदः प्रभुः।
स्वयम्भुः प्रययौ वाहाननुमन्त्र्य यथाजवम् ॥
ग्रसमाना इवाकाशं मुष्णन्त इव मेदिनीम्।
मुखेभ्यः ससृजुः श्वासानुच्छ्वसन्त इवोरगाः।
स्वयम्भुवा चोद्यमानाश्चोदितेन कपर्द्दिना।
व्रजन्ति तेऽश्वा जवनाः क्षयकाल इवानिलाः ॥
ध्वजोच्छ्रयविनिर्म्माणे ध्वजयष्टिमनुत्तमाम्।
आक्रम्य नन्दी वृषभं तस्थौ तस्मिञ्छिवेच्छया ॥
भार्गवाङ्गिरसौ देवौ दण्डहस्तौ रविप्रभौ।
रथचक्रे तु रक्षेते रुद्रस्य प्रियकाङ्क्षिणौ ॥
शेषश्च भगवान् नागः अनन्तोऽनन्तकरोऽरिणाम्।
शरहस्तो रथं याति शयनं त्यक्त्वा तदा ॥
यमस्तूर्णं समास्थाय महिषं चातिदारुणम्।
द्रविणाधिपतिर्व्यालं सुराणामधिपो द्विपम्
मयूरं शतचन्द्रञ्च कूजन्तं किन्नरं यथा।
गुहः आस्थाय वरदो युगोपमरथं पितुः ॥
नन्दीश्वरश्च भगवान् शूलमादाय दीप्तिमत्।
पृष्ठतश्चापि पार्श्वाभ्यां लोकस्य क्षयकृद्यथा ॥
प्रमथाश्चाग्निवर्णाभाः साग्निज्वाला इवाचलाः
अनुजग्मू रथं शार्व्वं नक्रा इव महार्णवम् ॥
भृगुर्भरद्वाज-वसिष्ठ-गौतमाः
क्रतुः पुलस्त्यः पुलहस्तपोधनाः।
मरीचिरत्रिर्भगवानथाङ्गिराः
पराशरागस्त्यमुखा महर्षयः ॥
हरमजितमजं प्रतुष्टुवु-
र्वचनविधैर्विचित्रभूषणैः।
रथस्त्रिपुरे सकाञ्चनाचलो
व्रजति सपक्ष इवाद्रिरम्बरे ॥
करिगिरिरविमेघसन्निभाः
सजलपयोदनिनादनादिनः।
प्रमथगणाः परिवार्य्य देवगुप्तं
रथमभितः प्रययुः सदर्पयुक्ताः ॥
मकर-तिमि-तिमिङ्गिलावृतः
प्रलय इवातिसमुद्धतोऽर्णवः।
व्रजति रथवरोऽति भास्वरो
ह्यशनिनिपातपयोदनिस्वनः ॥" *॥)

अथ ज्योतिर्व्विदाभरणे रथकर्म्माह।
"लोलमैत्रलघुक्षिप्रकभेषु
स्यन्दनाखिलविधानमथाहुः।
सेनसद्गुरुवशाम्बुतपस्यैः
साधुराशिवति साश्रभिरङ्गे ॥"

अथ रथचक्रमाह।
"उष्णदृष्णिकरकीर्णपुरस्ता-
द्दैयस्त्रवलयं वलयस्य।
सप्तभागनिचितभ्रममग्रा-
दाविमध्यमनसो नवभागम्।
अग्रभे भवति संकलिरन्तः-
कूवरोडुनि जयोऽथ रथाङ्गे।

रथाङ्गपाणिः, पुं, ( रथाङ्गं सुदर्शनचक्रं पाणौ यस्य । ) विष्णुः । इति हलायुधः ॥ ( यथा भागवते । १ । ३ । ३८ ।
"सवेद धातुः पदवीं परस्य
दुरन्तवीर्य्यस्य रथाङ्गपाणेः ॥")

रथाङ्गी, स्त्री, ( रथस्याङ्गमिवाकृतिर्यस्याः । रथाङ्ग + ङीष् ।) ऋद्धिः । इति राजनिर्घण्टः ॥

रथान्तरः, पुं, कल्पभेदः । इत्यग्निपुराणम् । (रथन्तर इत्यपि पाठः ॥ )

रथाभ्रः, पुं, वेतसवृक्षः । इति शब्दरत्नावली ॥

रथाभ्रपुष्पः, पुं, ( रथाभ्रस्य पुष्पमिव पुष्पमस्य ।) वेतसः । इत्यमरटीकायां भरतः ॥

रथावरोही, [ न् ] पुं, ( रथे अवरोहतीति । अव + रुह + णिनिः । ) रथस्थयुद्धकर्त्ता । इति हेमचन्द्रः ॥

रथिकः, पुं, ( रथोऽस्त्यस्येति । रथ + ठन् । ) रथी । इत्यमरः । २ । ८ । ७६ ॥ ( यथा, बृहत्संहितायाम् । १५ । ११ ।
"हस्ते तस्करकुञ्जर-
रथिकमहामात्रशिल्पिपण्यानि ॥" )
तिनिशवृक्षः । इति राजनिर्घण्टः ॥ ( रथेन चरतीति । रथ + "पर्पादिभ्यः ष्ठन् ।" ४ । ४ । १० । इति ष्ठन् । रथचारिणि, त्रि । इति सिद्धान्तकौमुदी ॥ )

रथिनः, पुं, ( रथस्य इनः प्रभुः । शकन्ध्वादित्वादकारलोपः ।) रथी । इत्यमरः ।२।८।७६ ॥

रथिरः, पुं, ( रथोऽस्त्यस्येति । रथ + "मेधारथाभ्यामिरन्निरचौ वक्तव्यौ ।" ५ । २ । १०६। इत्यस्य वार्त्तिकोक्त्या इरच् । ) रथी । इति शब्दरत्नावली ॥ (यथा, ऋग्वेदे । ३ । १ । १७ ।
"अनुदेवान् रथिरो यासि साधन् ॥"
"रथिरः रथी ।" इति तद्भाष्ये सायणः ॥ )

रथी, [ न् ] पुं, (रथोऽस्यास्तीति । रथ + इनिः ।) रथस्वामी राजादिः । तत्पर्य्यायः । रथिकः २ रथिनः ३ । इत्यमरः । २।८।७६ ॥ रथारोही ४ रथी ५ रथिरः ६ । इति हेमचन्द्रः ॥ रथस्वामी ७ साराचः ८ । इति शब्दरत्नावली ॥ स्यन्दनारोहः ९ । इति जटाधरः ॥ ( यथा, रघुः । ७ । ३७ ।
"पत्तिः पदातिं रथिनं रथेश-
स्तुरङ्गसादी तुरगाधिरूढ़म् ॥" )

रथ्यः, पुं, ( रथं वहतीति । रथ + "तद्वहति-रथयुगप्रासङ्गम् ।" ४ । ४ । ७६ । इति यत् । ) रथस्य वोढ़ा घोटकः । इत्यमरः । २ । ८ । ४६ ॥ रथांशः । इति हेमचन्द्रः ॥ ( रथस्य नेता । यथा, ऋग्वेदे । ६ । २१ । ६ ।
"ऋभुर्न रथ्यं नवं दधाता केतमादिशे ।"
"रथ्यं रथस्य नेतारम् ।" इति तद्भाष्ये सायणः ॥ रथसम्बन्धिनि, त्रि । यथा, ऋग्वेदे । २ । ३१ । ७ ।
"अश्विनं रथ्यो अयघीविमश्राः ।"
"रथ्यो रथसम्बन्धी अश्विनं सर्पणशीलोऽश्व इव ।" इति तद्भाष्ये सायणः ॥ रथस्येदमिति । "रथात् यत् ।" ४ । ३ । १२१ । इति यत् । ) क्ली चक्रम् ॥ ( युगम् । इति काशिका ॥

रथ्या, स्त्री, ( रथानां समूहः । रथ + "खलगो-रथात् ।" ४ । २ । ५० । इति यत् । ) रथसमूहः । तत्पर्य्यायः । रथकट्या (ड्या) २ रथव्रजः ३ । अभ्यन्तरमार्गः । नाछ इति भाषा ॥ तत्पर्य्यायः । प्रतोली २ विशिखा ३ । इत्यमरः ॥ आवर्त्तनी । इति मेदिनी ॥ ( रथाय हिता । रथ + "रथाद्यत् ।" ४ । ३ ।१२१ । इति यत् । यद्वा, रथं वहतीति । "तद्वहतीति ।" ४ । ४ । ७६ । इति यत् । ) पन्थाः । ( यथा, महाभारते । १ । १४१ । ६० ।
"पानागारेषु रथ्यासु सर्व्वतीर्थेषु चाप्यथ ।
चत्वरेषु च कूपेषु पर्व्वतेषु वनेषु च ॥" )
चत्वरम् । इति हेमचन्द्रः ॥

रद, उत्खाते । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) रेफादिः । उत्खातमुत्खननमिति गोविन्दभट्टः । रदति भूमिं शूकरः । इति दुर्गादासः ॥

रदः, पुं, ( रदतीति । रद विलेखने + पचादित्वात् अच् । ) दन्तः । ( यथा, आर्य्यासप्तशत्याम् । ४०६ ।
"क्षमसि प्रकटयसि रदं
करं प्रसारयसि त्वमपि श्वयसि ।
धिङ्मानं तव कुञ्जर
जीवं न जुहोषि जठराग्नौ ॥" )
विलेखनम् । इति मेदिनी । दे, १४ ॥ पुरुषदन्तलक्षणं यथा,—
"विवर्णैर्धनहीनाश्च दन्ताः स्निग्धा घनाः
शुभाः ।
तीक्ष्णा दंष्ट्राः समाः श्रेष्ठा जिह्वा रक्ता समा
शुभा ॥"
स्त्रीदन्तलक्षणं यथा,—
"कुन्दपुष्पसमा दन्ता भाषितं कोकिलासमम् ।
दाक्षिण्ययुक्तमशठं हंसशब्दसुखावहम् ॥
नासा समा समपुटा स्त्रीणान्तु रुचिरा शुभा ।
करालविषमा दन्ताः क्लेशाय च भयाय च ।
चौर्य्याय श्यामोसाश्च दीर्घा भर्त्तुश्च मृत्यवे ॥"
इति गारुडे ६६ अध्यायः ॥ ७ ॥
दन्तलग्नस्य शुचित्वं यथा,—
"दन्तवद्दन्तलग्नेषु जिह्वास्पर्शेऽशुचिर्भवेत् ॥"
इति कौर्म्मे उपविभागे १२ अध्यायः ॥ ७ ॥
"दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्य्याद्यत्नमुद्धरणे पुनः ।
भवेदशौचमत्यर्थं त्वग्वेधाद्व्रणे क्षते ॥"
इति प्रायश्चित्ततत्त्वधृतवचनम् ॥

रदच्छदः, पुं, ( रदानां छद आच्छादकः । ) ओष्ठः । इति हेमचन्द्रः ॥

रदनः, पुं, ( रद्यतेऽनेनेति । रद + करणे ल्युट् । रदतीति । रद + ल्युर्वा । ) दन्तः । इत्यमरः । २ । ६ । ९१ ॥ ( यथा, हरिवंशे । १३० । ८७ ।
"रदनैः पन्नगरिपुं करेण शिरसा तदा ।
ऐरावतो गजपतिराजधान नदंस्तथा ॥"
रद + भावे ल्युट् । ) उत्खनने, क्ली ॥

रदनच्छदः, पुं, ( रदनानां छद आच्छादकः । ) ओष्ठः । अधरः । इत्यमरः । २।६।९० ॥ तस्य शुभाशुभलक्षणं यथा,—
"मांसलैश्च धनोपेता अवक्रैरधरैर्नृपाः ।
बिम्बोपमैश्च स्फुटितैरोष्ठैः रूक्षैश्च खण्डितैः ।
विवर्णैर्धनहीनाश्च दन्ता स्निग्धा घनाः शुभाः ॥"
इति गारुडे ६६ अध्यायः ॥

रदनी, [न्] पुं, ( रदनौ प्रशस्तदन्तावस्य स्त इति । रदन + इनिः । ) हस्ती । इति राजनिर्घण्टः ॥

रदी, [न्] पुं, ( रदौ प्रशस्तदन्तावस्य स्त इति । रद + इनिः । ) हस्ती । इति हलायुधः ॥

रध, य ञ ऌ हिंसने । पाके । इति कविकल्पद्रुमः ॥ ( दिवा०-पर०-सक०-वेट् । ) य, रध्यति । ञ, रधिष्यति रत्स्यति । ऌ, अरधत् । इति दुर्गादासः ॥

रन्ज, म औ ञ } रागे । इति कविकल्पद्रुमः ॥
रन्ज, य म औं ञ } ( भ्वा०-दिवा० च-उभ०-वर्णान्तरोत्पादने सक०-आसक्तौ अक०-अनिट् ।) य ञ, रज्यति रज्यते । म, रजयति मृगान् मृगरमणादन्यत्र रञ्जयति पुत्त्रं पिता । औ रङ्क्ता । ञ, रजति रजते । रागो वर्णान्तरोत्पादनमासक्तिश्च । इति दुर्गादासः ॥

रन्तिदेवः, पुं, ( रमते इति । रम + संज्ञायां क्तिच् । रन्तिस्वामी देवश्चेति । ) विष्णुः । चन्द्रवंशीयनृपतिभेदः । स तु साङ्कृतिपुत्त्रः । इति मेदिनी । वे, ६२ ॥ (यथा, भागवते ।९।२१।२।
"गुरुश्च रन्तिदेवश्च संकृतेः पाण्डुनन्दन ! ।
रन्तिदेवस्य महिमा इहामुत्र च गीयते ॥"
अयं हि याज्ञिको दाताग्रगण्य इति पुराणेषु श्रूयते । एतद्यज्ञहतगोचर्म्मरसेनैव चर्म्मण्वती नदी जाता । यथा, महाभारते । ३ । २०७ । ८—९ ।
"राज्ञो महानसे पूर्व्वं रन्तिदेवस्य वै द्विज ।
द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा ॥
अहन्यहनि वध्येते द्वे सहस्रे गवां तथा ।
समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ॥
अतुला कीर्त्तिरभवत् नृपस्य द्विजसत्तम ! ॥"
तथाच तत्रैव । १२ । २९ । १२२—१२८ ।
"उपातिष्ठंश्च पशवः स्वयं तं संशितव्रतम् ।
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ।
महानदी चर्म्मराशेरुत्क्लेदात् सुस्रुवे यतः ।
ततश्चर्म्मण्वतीत्येवं विख्याता सा महानदी ॥
ब्राह्मणेभ्यो ददौ निष्कान् सदसि प्रतते नृपः ।
तुभ्यं निष्कं तुभ्यं निष्कमिति क्रोशन्ति वै द्विजाः ।
सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान् संप्रपद्यते ।
अन्वाहार्य्योपकरणं द्रव्योपकरणञ्च यत् ॥
घटाः पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च ।
नासीत् किञ्चिदसौवर्णं रन्तिदेवस्य धीमतः ॥

स्वामी॥ वनविशेषः। यथा, हरिवंशे।१५५।२२।
"भाति चैत्ररथश्चैव नन्दनश्च वनं महत्।
रमणं भावनं चैव वेणुमन्ते समन्ततः॥")
रमणः, पुं, (रमते रमयतीति वा। रम् + णिच् वा + ल्युः।) पतिः। (यथा, कुमारे। ४। २१।
"वचनीयमिदं व्यवस्थितं
रमण! त्वामनुयामि यद्यपि॥"
रमयति स्त्रीपुरुषयोः अन्तःकरणमिति। रम् + णिच् + ल्युः।) कामदेवः। इति मेदिनी। णे, ७२॥ गर्द्दभः। इति हेमचन्द्रः। ३। १८१॥ वृषणः। इति शब्दचन्द्रिका॥ महारिष्टः। इति राजनिर्घण्टः॥ (धरवसुपुत्त्राणामन्यतमः। यथा, मात्स्ये। ५। २४।
"कल्याणिन्यां ततः प्राणो रमणः शिशिरोऽपि च
मनोहरा धरात् पुत्त्रानवापाथ हरेः सुता॥"
रमणीये, त्रि। यथा, भागवते। ४। ६। १०।
"रमणं विहरन्तीनां रमणैः सिद्धयोषिताम्॥")
रमणकं, क्ली, (रमन्ते लोका अत्र। रम् + ल्युट्। संज्ञायां कन्।) जम्बुद्वीपान्तर्गतवर्षविशेषः। स तु रम्यकवर्षः। यथा,—
"एवमेवोत्तरे त्रीणि वर्षाणि च तपोधन।
कुरुवर्षं सिन्धुकूलात् शृङ्गवानवधिः स्मृतः॥
हिरण्मयं ततो वर्षं श्वेतावधि निगद्यते।
रम्यकञ्च ततो वर्षं नीलकस्यावधिः स्मृतः॥"
अपि च।
शेष उवाच।
"दक्षिणेन तु श्वेतस्य निषधस्योत्तरेण तु।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः॥
शुक्लाभिजनसम्पन्नाः सर्व्वे सुप्रियदर्शनाः।
दशवर्षसहस्राणि शतानि दश पञ्च च।
जीवन्ति ते महाभाग नित्यं मुदितमानसाः॥"
इति पाद्मे भूखण्डे १२८। २२६ अध्यायौ॥
(अन्यत् रम्यकशब्दे द्रष्टव्यम्॥ वीतिहोत्रस्य पुत्त्रभेदः। यथा, भागवते। ५। २०। ३१।
"तद्द्वीपस्याधिपतिः प्रैयव्रतो वीतिहोत्रो नाम तस्यात्मजौ रमणकधातकनामानौ वर्षपती नियुज्य स्वयं पूर्व्वजवद्भगवत्कर्म्मशील एवास्ते॥")
रमणा, स्त्री, रमणी। इत्यमरटीका॥ (पीठस्य शक्तिविशेषः। यथा, देवीभागवते। ७।३०।६७।
"रमणा रामतीर्थे तु यमुनायां मृगावती॥")
रमणी, स्त्री, (रमतेऽस्यामिति। रम + ल्युट्। ङीप्।) नारी। इति मेदिनी। णे, ७२॥ उत्कृष्टस्त्रीविशेषः। या वपुर्गुणोपचारेण सौभाग्येन कान्तं रमयति सा। इत्यमरभरतौ॥ (यथा, कथासरित्सागरे। ५२। २१४॥
"रथेन रमणीयुक्तः प्रजानां दत्तकौतुकः॥")
बालाखवृक्षः। यथा,—
"बाला च रमणी रामा वन्ध्या कालकलापि च॥"
इति शब्दचन्द्रिका॥
रमणीयं त्रि, (रम् + अनीयर्।) सुन्दरम्। इत्यमरटीका॥ (यथा, गीतगोविन्दे। १। ११।
"वितरसि दिक्षु रणे दिक्पतिकमनीयम्
दशमुखमौलिबलिं रमणीयम्॥")
रमण्यं, त्रि, (रम् + "ऋरम्योश्च।" उणा० ३। १०१। इति अन्यप्रत्ययः। रमणीयम्। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥)
रमतिः, पुं, (रमतेऽस्मिन् इति। रम् + "रमेर्नित्।" उणा० ४। ६३। इति अतिप्रत्ययः। नित्त्व।) नायकः। स्वर्गः। इति मेदिनी। ते, १४३॥ काकः। इति शब्दरत्नावली॥ कालः। कामदेवः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥
रमा, स्त्री, (रमयतीति। रम् + णिच् + अच्। टाप् च।) लक्ष्मीः। इति मेदिनी। मे, २५॥ (यथा, भागवते। ३। ८। २३।
"एष प्रसन्नवरदो रमयात्मशक्त्या
यद्यत् करिष्यति गृहीतगुणावतारः॥"
यथा च।
"रमा यत्र नवाक् तत्र यत्र वाक् तत्र नो रमा।
ते यत्र विनयो नास्ति सा च सा च स च त्वयि॥"
इत्युद्भटः॥)
शशिध्वजराजकन्या। सा कल्किदेवेन विवाहिता। यथा,—
"ततः शशिध्वजो राजा गृहादाहूय पुत्त्रकान्।
सुशान्ताया मतिं बुद्ध्वा रमां प्रादात् स कल्कये॥"
इति कल्किपुराणे २५ अध्यायः॥
शोभा। इति राजनिर्घण्टः॥ (गङ्गा। यथा, काशीखण्डे। २६। १४५।
"रेवती रतिसन्दम्या रत्नगर्भा रमा रतिः॥"
रमाधवः, पुं, (रमाया लक्ष्म्या धवः पतिरिति।) श्रीकृष्णः। यथा। रमाधवः पूज्यो माधवत्वात्। इत्यवयवग्रन्थे जगदीशः॥
रमानाथः, पुं, श्रीकृष्णः। रमा लक्ष्मीस्तस्या नाथः स्वामी। इति षष्ठीतत्पुरुषसमासनिष्पन्नः॥
रमापतिः, पुं, (रमायाः पतिः।) श्रीकृष्णः। यथा, मुग्धबोधव्याकरणे।
"मुकुन्दस्यासितमिदमिदं यातं रमापतेः।
मुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥"
(यथा च देवीभागवते। १। ५। ८।
"दत्त्वा भारं धनुष्कोट्यां निद्रामाप रमापतिः॥")
रमाप्रियं, क्ली, (रमायाः प्रियम्।) पद्मम्। इति शब्दचन्द्रिका॥
रमावेष्टः, पुं, (रमया वेष्ट्यतेऽसौ। वेष्ट + घञ्।) श्रीवासः। इति राजनिर्घण्टः॥
रमिता, त्रि, (रम् + णिच् + क्त। टाप्।) रतिप्रापिता। यथा,—
"त्वरितगतिर्व्रजयुवतिस्तरणिसुताविपिनगता।
सुररिपुणा रतिगुरुणा परिरमिता प्रमदमिता॥"
इति छन्दोमञ्जरी॥
"व्रजयुवतिर्गोपवधूः सुररिपुणा श्रीकृष्णेन परिरमिता सती प्रमदं हर्षं इता गता। किम्भूता। त्वरितगतिः त्वरिता शीघ्रा गतिर्यस्याः सा तथा। पुनः किम्भूता तरणिसुताविपिनगता यमुनासम्बन्धिवनमुपागता। किम्भूतेन रतिगुरुणा रतौ शृङ्गारे गुरुणा उपाध्यायेन। अयमभिप्रायः। स्वयं रतिकुशलो नायिकाश्च रतिमध्यापयति।" इति तट्टीका॥
रमेश्वरः, पुं, (रमाया लक्ष्म्या ईश्वरः पतिर्नियन्ता वा।) विष्णुः। यथा,—
"श्रीराम राघव रमेश्वर रावणारे
भूतेश मन्मथरिपो प्रमथाधिनाथ।
चाणूरमर्द्दन हृषीकपतेऽमुरारे
त्वाख्या भटा य इति सन्ततमामनन्ति॥"
इति काशीखण्डे हरिहरस्तोत्रम्॥
रम्भः, पुं, (रम्भते रागलङ्घनादिकमनेनेति। रभि + कर्म्मणि घञ्।) वेणुः। (रम्भते उद्यमशीलो भवति निरन्तरमुद्गरभरणायेति भावः। रभि + अच्।) वानरविशेषः। इति मेदिनी। भे, ७॥ महिषासुरपिता। यथा,—
श्रीशौर्व्व उवाच।
"आराधितो महादेवो रम्भेण सुरवैरिणा।
चिरेण स च सुप्रीतस्तपसा तस्य शङ्करः॥
अथ तुष्टो महादेवः प्रत्यक्षं रम्भमुक्तवान्।
प्रीतोऽस्मि ते वरं रम्भ वरयस्व यथेप्सितम्॥
एवमुक्तः प्रत्युवाच रम्भस्तं चन्द्रशेखरम्।
अपुत्त्रोऽहं महादेव यदि ते मय्यनुग्रहः॥
मम जन्मत्रये पुत्त्रो भवान् भवतु शङ्कर।
एवमुक्तस्तु दैत्येन प्रत्युवाच वृषध्वजः॥
भवत्वेतद्वाञ्छितं ते भविष्यामि सुतस्तव।
इत्युक्त्वा स महादेवस्तत्रैवान्तरधीयत॥
रम्भोऽपि यातः स्वस्थानं हर्षोत्फुल्लविलोचनः।
पथि गच्छन् स रम्भोऽथ ददर्श महिषीं शुभाम्॥
त्रिहायणीं चित्रवर्णां सुन्दरीं ऋतुशालिनीम्।
स तां दृष्ट्वाय महिषीं रम्भः कामेन मोहितः॥
दोर्भ्यां गृहीत्वा च तदा चकार सुरतोत्सवम्।
तयोः प्रवृत्ते सुरते सा तदा तस्य तेजसा॥
दधार महिषी गर्भं तदाभून्महिषासुरः॥"
इति कालिकापुराणे ५८ अध्यायः॥
(असौ एव जन्मान्तरे रक्तवीजो जातः। एतद्विवरणं यथा, देवीभागवते। ५।२।१८-४८।
व्यास उवाच।
"दनोः पुत्त्रौ महाराज! विख्यातौ क्षितिमण्डले।
रम्भश्चैव करम्भश्च भ्रातरौ दानवोत्तमौ॥
तावपुत्त्रौ महाराज! पुत्त्रार्थं तेपतुस्तपः।
बहून् वर्षगणान् कामं पुण्ये पञ्चनदे जले॥
करम्भस्तु जले मग्नश्चकार परमं तपः।
वृक्षं रसालवटं प्राप्य च रम्भोऽग्निमसेवत॥
पञ्चाग्निसाधनासक्तः स रम्भस्तु यदाभवत्।
ज्ञात्वा शचीपतिर्दुःखमद्धयौ दानवौ प्रति॥

ध्यानयोगेन देवस्य निर्धूताशेषकल्मषः ।
आस्ते परिचरन् भक्त्या महाभागवतोत्तमः ॥”
तथाच मात्स्ये । ११२ । ३० ॥ वैष्णवे । २।२।१३॥
ब्रह्माण्डे च । ६ । १ । ७ ॥ द्रष्टव्यम् ॥ ) पटोलमूलम् । इति त्रिकाण्डशेषः ॥ ( यथा, सुश्रुते । १ । ३६ अध्याये ।
“कम्पिल्लकरम्यकपाटलापूगहरीतक्यादयः ॥”
पुं, आग्नीध्रपुत्त्रभेदः । एतन्नामानुसारेणैव रम्यकवर्षोऽभवत् । यथा, भागवते । ५ । २ । १६ ।
“तस्यामु ह वा आत्मजान् स राजवर्य्य आग्नीध्रो नाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान् नवपुत्त्रानजनयत् ॥”)

रम्यपुष्पः, पुं, ( रम्यं दर्शनीयं पुष्पमस्य । ) शाल्मलिवृक्षः । इति राजनिर्घण्टः ॥ (शाल्मलिशब्देऽस्य गुणादयो ज्ञेयाः ॥ )

रम्यफलः, पुं, ( रम्यं फलमस्य । ) कारस्करवृक्षः । इति राजनिर्घण्टः ॥

रम्या, स्त्री, ( रमतेऽस्यामिति । रम+“पोरदुपधात् यत् ।” ३ । १ । ९८ । इति यत् । टाप् च । ) रात्रिः । इति मेदिनी ॥ स्थलपद्मिनी । इति राजनिर्घण्टः ॥ ( गङ्गा । यथा, काशीखण्डे तन्नामसहस्रनामकीर्त्तने । २९ । १४५ ।
“रेवती रतिकृद्रम्या रत्नगर्भा रमा रतिः ॥”)

रम्रः, पुं, (रम्+स्फायादित्वात् रः ।) अलक्तवर्णः । शोभा । इत्युणादिकोषः । २ । २३८ ॥

रय, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् । ) ङ, रयते । इति दुर्गादासः ॥

रयः, पुं, (रयते अनेनेति । रय+“पुंसि संज्ञायां घः प्रायेण ।”३ । ३ । ११८ । इति घः । रीयतेऽनेनेति वा । री गतौ+घप्रत्ययेन साधुरिति ।) वेगः । इत्यमरः ।२।२।६७ ॥ प्रवाहः । यथा,—
“प्रवाहः पुनरोघः स्याद्वेगो धारा रयश्च सः ॥”
इति हेमचन्द्रः ॥
(यथा, महाभारते । २।१७ । ६ ।
“कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः ॥”
पुरूरवसः पुत्त्रभेदः । यथा, भागवते ।९।१५।१।
“ऐलस्य चोर्व्वशीगर्भात् षडासन्नात्मजा नृप ।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥”)

रराटी, स्त्री, (ललाट+रलयोरैक्यात् लस्य रत्वम् । ततो ङीप् ।) ललाटः । इति पुराणम् ॥ (यथा, भागवते । २ । १ । २८ ।
“तस्य रराटीं विदुरादिपुंसः
यच्छन्तु शीर्षाणि सहस्रशीर्ष्णः ॥”)

रल्लकः, पुं, (“रमणं रत् क्विप्यनुनासिकलोपे रत् इच्छा तां लाति कः रल्लस्ततः स्वार्थे कन् ।” इत्यमरटीकायां रघुनाथचक्रवर्त्ती । ) कम्बलः । इत्यमरः ॥ पक्ष्म । इति सुभूतिः ॥ मृगविशेषः । इति मुकुटः ॥

रव, ए शब्दे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) ए, रवति । इति दुर्गादासः ॥

रवः, पुं, ( रूयते इति । रु ध्वनौ+भावे अप् । ) शब्दः । इत्यमरः ॥ (यथा, रघुः । ९ । ५४ ।
घनुरधिज्यमनाधिरुपाददे
नरवरो रवरोषितकेशरी ॥”)

रवणं, क्ली, ( रौतीति । रु+युच् । ) कांस्यम् । इति हेमचन्द्रः ॥ ( रु+भावे ल्युट् । ) रवश्च ॥

रवणः, पुं, ( रौतीति । रु+“सुयुरुवृणो युच् ।” उणा० २ । ७४ । इति युच् । ) उष्ट्रः । इति हेमचन्द्रः ॥ (यथा, माघे । १२ । ९ ।
“उत्थातुमिच्छन् विधृतः पुरोबला-
न्निधीयमाने भरभाजि यन्त्रके ।
अर्द्धोज्झितोद्गारविभिन्नंरस्वरः
स्वनाम निन्ये रवणः स्फुटार्थताम् ॥”)
कोकिलः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

रवणः, त्रि, ( रु+युच् । ) शब्दनः । तीक्ष्णः । भण्डकः । चञ्चलः । इति शब्दरत्नावली ॥

रवथः, पुं, ( रु+“शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ।” उणा० ३ । ११३ । इति अथप्रत्ययः । ) कोकिलः । इत्युणादिकोषः ॥

रविः, पुं, ( रूयते स्तूयते इति । रु+“अच इः ।” उणा० ४ । १३८ । इति इः । ) सूर्य्यः । अर्कवृक्षः । इत्यमरः ॥ सूर्य्यस्य भोग्यं दिनं वाररूपम् ॥ यथा,—
“रवौ वर्ज्ज्यं चतुः पञ्च सोमे सप्त द्वयं तथा ॥”
इत्यादिवारवेलाकथने समयप्रदीपः ॥
तत्र निषिद्धानि यथा,—
“माषमामिषमांसञ्च मसूरं निम्बपत्रकम् ।
भक्षयेद्यो रवेर्व्वारे सप्तजन्मन्यपुत्त्रकः ॥
आर्द्रकं मधु मत्स्यञ्च भक्षयेद्यो रवेर्दिने ।
सप्तजन्म भवेद्रोगी जन्म जन्म दरिद्रता ॥
निम्बं मांसं मसूरञ्च विल्वकाञ्जिकमार्द्रकाम् ।
भक्षयेद्यो रवेर्व्वारे सप्तजन्मन्यपुत्त्रकः ॥”
इति कर्म्मलोचनम् ॥ * ॥
रविग्रहस्य रक्तश्याममिश्रितवर्णः । अयं पूर्व्वदिक्पुरुषक्षत्त्रियजातिसत्त्वगुणकटुरससिंहराशिस्वस्थानचक्षरमीनिचितान्नकलिङ्गदेशानामधिपतिः । काश्यपगोत्रः । द्वादशाङ्गुलशरीरः । पद्महस्तद्वयः । पूर्व्वाननः । सप्ताश्ववाहनः । शिवाधिदैवतः । वह्निप्रत्यधिदैवतश्च । इति ग्रहयज्ञतत्त्वादयः ॥*॥ अस्य व्युत्पत्तिर्यथा,
“अववीमांस्ततो लोकांस्तस्मात् सूर्य्यः परिभ्रमात् ।
अचिरात्तु प्रकाशेत अवनात् स रविः स्मृतः ॥”
इति मात्स्ये १०१ अध्यायः ॥ * ॥
अस्य भार्य्यापत्यानि यथा,—
“मरीचेः कश्यपो जज्ञे तस्माज्जज्ञे विभावसुः ।
तस्य भार्य्याभवत् संज्ञा पुत्त्री त्वष्टुः प्रजापतेः ॥
त्रीण्यपत्यानि राजेन्द्र ! संज्ञायां महतां
निधिः ।
आदित्यो जनयामास कन्यामेकां सुलोचनाम् ।
वैवस्वतं मनुश्रेष्ठं यमञ्च यमुनां ततः ॥
नातितेजोमयं रूपं सोढुं नाशं विवस्वतः ।
मायामयीं ततश्छायां सवर्णां निर्म्ममे स्वतः ॥
संज्ञोवाच ततश्छायां सवर्णे शृणु मे वचः ।
अहं यास्यामि सदनं पितुस्त्वं पुनरत्र मे ।
भवने वस कल्याणि ! निर्व्विशङ्कं ममाज्ञया ॥
मनुरेष यमावेतौ यमुनायमसंज्ञकौ ।
स्वापत्यइच्छा द्रष्टव्यमेतद्बालत्रयं त्वया ॥
न वक्तव्यमिदं वृत्तं त्वया पत्यौ कदाचन ।
इत्याकर्ण्याथ सा त्वाष्ट्रीं देवी छाया जगाद
ताम् ॥
आकचग्रहणान्नाहमाशापाचे कदाचन ।
आख्यास्यामि चरित्रं ते याहि देवि ! यथासुखम् ॥
इति छायां गृहे स्थाप्य संज्ञागात् पितुरालयम् ।
उवाच पितरं देवी जामातुस्तव न क्षमा ॥
तेजः सोढुमहं तात ! काश्यपस्य महात्मनः ।
तन्निशम्य सुकोपाचौ भर्त्सयामास कन्यकाम् ॥
महां श्रेयः कथं वा स्यादिति सा परिचिन्त्य च ।
अगच्छद्वडवा भूत्वा चरन्ती चोत्तरान् कुरून् ॥
तपस्तेपे च सा तीव्रं पतिमाधाय चेतसि ।
मन्यमानोऽथ तां संज्ञां सवर्णायां तथा रविः ॥
सावर्णिं जनयामास मनुश्रेष्ठं महीपते ।
शनैश्चरं द्वितीयञ्च सुतां भद्रां तपोयिकाम् ॥
सवर्णा स्वेष्वपत्येषु सापत्न्यात् स्त्रीस्वभावतः ।
चकाराप्यधिकं स्नेहं न तथा पूर्व्वजेष्वहो ॥
चिरमालोक्य तां भार्य्यां उवाच सविता वचः ।
अयि भाविनि बालेषु समेष्वपि कुतस्त्वया ॥
विधीयतेऽधिकः स्नेहः सावर्ण्यादिसुतान् प्रति ।
नाचचक्षे तदा साथ भास्वते परिपृच्छते ॥
ततः समुद्यते शप्तुं छाया सर्व्वं शशंस ह ।
यथा वृत्तं तथा तथ्यं तुतोष भगवान् रविः ॥
निरागसं न शशाप जगाम त्वष्टुरन्तिकम् ।
त्वष्टापि च यथान्यायं सान्त्वयित्वाथ काश्यपम्
निर्दग्धुकामं कोपेन प्रार्थयच्च मुदा तदा ॥
त्वष्टोवाच ।
तवातितेजसो भीता प्राप्योत्तरकुरून् वने ।
वडवारूपमास्थाय संज्ञा चरति शाद्वले ।
द्रष्टा हि तां भवानद्य स्वभार्य्यां तात मा रुष ॥
तथ्यानुज्ञोऽथ सविता गत्वोत्तरकुरूनथ ।
स हरिर्हरिरूपेण मुखेन समताडयत् ॥
त्वरमाणा च सवितुः परपूरुषशङ्कया ।
सा तन्निरवमत् शुक्रं नासिकाभ्यां विवस्वतः ।
देवौ तस्मादजायेतामश्विनौ भिषजां वरौ ॥”
इति पाद्मे स्वर्गखण्डे ११ अध्यायः ॥
( अन्यत् सूर्य्यशब्दे द्रष्टव्यम् ॥ )

रविकान्तः, पुं, ( रविणा रविकरसंयोगेन कान्तः कमनीयः । ) सूर्य्यकान्तमणिः । इति राजनिर्घण्टः ॥

रविचक्रं, क्ली, ( रवेश्चक्रम् । ) नराकारसूर्य्यचक्रविशेषः । यथा,—
“लिख्यते रविचक्रन्तु भास्करो नरसन्निभः ॥
यस्मिन्नृक्षे भवेत् सूर्य्यस्तदादौ त्रीणि मस्तके ।
त्रयं वक्त्रे प्रदातव्यमेकैकं स्कन्धयोर्न्यसेत् ॥
एकैकं बाहुयुग्मे तु एकैकं हस्तयोर्द्वयोः ।

हृदये पञ्च ऋक्षाणि एकं नाभौ प्रदापयेत् ॥
ऋक्षमेकं ददेद्गुह्ये एकैकं जानुकं न्यसेत् ।
नक्षत्राणि च षष्ठानि रविपादे नियोजयेत् ॥
चरणस्थेन ऋक्षेण अल्पायुर्जायते नरः ।
स्वदेशगमनं जानौ गुह्यस्थे परदारवान् ॥
नाभिस्थेनाल्पसन्तुष्टो हृत्स्थेन स्यान्महेश्वरः ।
पाणिस्थेन भवेच्चौरः स्थानभ्रष्टो भवेद्भुजे ॥
स्कन्धस्थिते धनपतिर्मुखे मिष्टान्नमाप्नुयात् ।
मस्तके पट्टबन्धस्तु नक्षत्रं स्याद्यदि स्थितम् ॥"
इति गारुडे ६० अध्यायः ॥

रविजः, पुं, (रवेर्जायते इति । जन्+डः ।) शनैश्चरः । यथा ज्योतिस्तत्त्वे ।
"उत्तरभाद्राभिषाहास्वातिमूलाश्विपूर्व्वा
रविरविजकुजाह्वे भूतपञ्चाननव्याम् ॥"
(बहुवचने तु केतवः । यथा, बृहत्संहितायाम् । ११ । १० ।
"प्रागपरदिशोर्दृश्या
नृपतिविरोधावहा रविजाः ॥")

रवितनयः, पुं, (रवेः तनयः पुत्रः ।) सावर्णिकमनुः । यथा,—
"स बभूव महाभागः सावर्णिस्तनयो रवेः ॥"
इति देवीमाहात्म्यम् ॥
वैवस्वतमनुः । शनिः । (यथा बृहत्संहितायाम् । ३४ । १२ ।
"परिवेषमण्डलगतो
रवितनयो क्षुद्रधान्यनाशकरः ॥")
यमः । (सुग्रीवः । कर्णः । द्विवचने अश्विनीकुमारौ ॥)

रविनन्दनः, पुं, (रवेर्नन्दनः । यद्वा, रविं नन्दयतीति । नन्दि+ल्युः ।) सुग्रीवः । इति त्रिकाण्डशेषः ॥ सावर्णिमनुः । वैवस्वतमनुः । (यथा भागवते । ८ । १ । १९ ।
"श्रोतुर्व्व्रतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥")
शनिः । यमश्च ॥ (द्विवचने अश्विनीकुमारौ ॥)

रविनाथं, क्ली, (रविरेव नाथोऽस्य ।) पद्मम् । न पुंसि, पुं । इति शब्दचन्द्रिका ॥

रविपत्रः, पुं, (रविवत् दीप्तिमत्पत्रं यस्य ।) आदित्यपत्रक्षुपः । इति राजनिर्घण्टः ॥

रविप्रियं, क्ली, (रवेरेव प्रियमस्य ।) रक्तकमलम् । ताम्रम् । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा,—
"ताम्रमौडुम्बरं शुल्वमुदुम्बरमपि स्मृतम् ।
रविप्रियं म्लेच्छमुखं सम्यक्पर्य्यायनामकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

रविप्रियः, पुं, (रवेः प्रियः ।) आदित्यपत्रः । रक्तकरवीरः । इति राजनिर्घण्टः ॥ लकुचः । इति शब्दमाला ॥

रविरत्नकं, क्ली (रवेः रत्नम् । ततः कन् ।) माणिक्यम् । इति राजनिर्घण्टः ॥

रविलोहं, क्ली, (रविप्रियं लोहम् ।) ताम्रम् । इति राजनिर्घण्टः ॥ (गुणादयोऽस्य ताम्रशब्दे विज्ञेयाः ॥)

रविलोचनः, पुं, (रविर्लोचनमस्य ।) विष्णुः । यथा,—
"रविर्व्विरोचनः सूर्य्यः सविता रविलोचनः ।"
इति तस्य सहस्रनामस्तोत्रम् ॥

रविसञ्ज्ञकं, क्ली (रविः सञ्ज्ञा यस्य इति । कप् ।) ताम्रम् । इति शब्दचन्द्रिका ॥

रविसुतः, पुं (रवेः सुतः ।) सुग्रीवः । स च शनैश्चरादि । यथा,—
"नीलाञ्जनचयप्रख्यं रविसुतं महाग्रहम् ।
छायाया गर्भसम्भूतं वन्दे भक्त्या शनैश्चरम् ॥"
इति नवग्रहस्तोत्रम् ॥

रवीन्दं, क्ली, (रविणा सूर्य्यकरस्पर्शेन इन्दति प्रकाशते इति । इन्द+अच् ।) पद्मम् । इति धरणिः ॥

रश, स्वने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) रेफादिस्तालव्यान्तः । रशति । इति दुर्गादासः ॥ सौत्रधातुरयम् ॥

रशना, स्त्री, (अश्नुते व्याप्नोतीति । अशू व्याप्तौ + "अशे रश च ।" उणा० २ । ७५ । इति युच् धातो रशादेशश्च ।) काञ्ची । इत्यादिकोषः ॥ (यथा, रघौ । ८ । ५८ ।
"इयमप्रतिबोधशायिनी
रशना त्वां प्रथमा रहःसखी ॥")
जिह्वा । इति शब्दरत्नावली ॥ ("जिह्वावाची तु रसनाशब्दो दन्त्यसकारवानेव । रसयति स्वादयतीति । नन्द्यादित्वात् ल्युः । इति कलिङ्गः । रसना काञ्चिजिह्वयोरिति तु धरणिः ।' उज्ज्वलः । २ । ७५ ॥ रज्जुः । यथा, वाजसनेयसंहितायाम् । २१ । ४६ ।
'होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित । रशनया रज्ज्वा कृत्वा अधित धृतवान् पशून् इति शेषः । इति तद्भाष्ये महीधरः । अङ्गुलयः । इति निघण्टुः ।२।५॥ अत्र सदा बहुवचनप्रयोगो भवति । इति देवराजयज्वा ॥)

रश्मिः, पुं, (अश्नुते व्याप्नोतीति । अशू व्याप्तौ + 'अश्नोते रश्च ।' उणा० ४ । ४६ । इति मि धातो रशादेशश्च ।) किरणः । (यथा, मनौ । ५ । १३३ ।
"मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः ।
रजो भूर्व्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत् ॥")
पक्ष्म । अभीषुः । इति मेदिनी ॥ ० ॥ (यथा, ऋग्वेदे । १ । २८ । ४ ।
"यत्र मन्थां विबध्नते रश्मीन् यमितवा इव ।"
'रश्मीन् अश्वबन्धनार्थान् प्रग्रहान् ।' इति तद्भाष्ये सायनः ॥) सूर्य्यस्य रश्मिना जलादानं यथा,—
"तेजोभिः सर्व्वलोकेभ्य आदत्ते रश्मिभिर्ज्जलम् ।
समुद्राद्वायुयोगाच्च वहन्त्यापो गभस्तयः ॥
ततस्तु पयसा काले परिवर्त्तन् दिवाकरः ।
नियच्छत्यपो मेघेभ्यः शुक्लाशुक्लैस्तु रश्मिभिः ॥"
इति मात्स्ये १०२ अध्यायः ॥ ० ॥

अपि च ।
"एवमेष महादेवो देवदेवः पितामहः ।
करोति नियतं कालं कालात्मा ह्यैश्वरी तनुः ॥
तस्य ये रश्मयो विप्राः सर्व्वलोकप्रदीपकाः ।
तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः ॥
सुषुम्नो हरिकेशश्च विश्वकर्म्मा तथैव च ।
विश्वव्यचाः पुनश्चान्यः सम्पद्वसुरतः परः ।
अर्व्वावसुरिति ख्यातः स्वराडन्यः प्रकीर्त्तितः ॥
सुषुम्नः सूर्य्यरश्मिस्तु पुष्णाति शिशिरद्युतिम् ।
तिर्य्यगूर्द्ध्वप्रचारोऽसौ सुषुम्नः परिगीयते ॥
हरिकेशस्तु यः प्रोक्तो रश्मिर्नक्षत्रपोषकः ।
विश्वकर्म्मा तथा रश्मिर्बुधं पुष्णाति सर्व्वदा ।
विश्वव्यचास्तु यो रश्मिः शुक्रं पुष्णाति नित्यदा ।
सम्पद्वसुरिति ख्यातः स पुष्णाति च लोहितम् ॥
वृहस्पतिं प्रपुष्णाति रश्मिरर्व्वावसुः प्रभोः ।
शनैश्चरं प्रपुष्णाति सप्तमस्तु स्वराट् तथा ॥
एवं सूर्य्यप्रभावेन सर्व्वा नक्षत्रतारकाः ।
वर्द्धन्ते वर्द्धिता नित्यं नित्यमाप्याययन्ति च ॥
दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव सर्व्वशः ।
आदानान्नित्यमादित्यस्तेजसा तमसां प्रभुः ।
आदत्ते स तु नाडीनां सहस्रेण समन्ततः ॥
नादेयांश्चैव सामुद्रान् कूप्यांश्चैव सहस्रकम् ।
स्थावरान् जङ्गमांश्चैव यच्च कुल्यादिकं पयः ॥
तस्य रश्मिसहस्रन्तु शीतवर्षोष्णनिस्रवम् ।
तासां चतुःशतं नाड्यो वर्षन्ते चित्रमूर्त्तयः ॥
चन्दनाश्चैव याह्याश्च केतना भूतनास्तथा ।
अमृता नामतः सर्व्वा रश्मयो वृष्टिसर्ज्जनाः ॥
हिमोद्वहाश्च तामस्यो रश्मयस्त्रिशताः पुनः ।
रश्म्यो मेध्याश्च वैध्याश्च ह्रादिन्यो हिमसर्ज्जनाः ।
चन्द्राभास्ता नामतः सर्व्वाः पीताभाः स्युर्गभस्तयः ।
शुक्राश्च ककुभश्चैव गावो विश्वभृतस्तथा ।
शुक्लास्ता नामतः सर्व्वास्त्रिविधा घर्म्मसर्ज्जनाः ॥
समं बिभर्त्ति ताभिः स मनुष्यपितृदेवताः ।
मनुष्यानौषधेनेह स्वधया च पितॄनपि ॥
अमृतेन सुरान् सर्व्वांस्त्रिसर्ग्गांस्तर्पयत्यसौ ।
वसन्ते ग्रीष्मके चैव शतैः स तपति त्रिभिः ॥
शरद्यपि च वर्षासु चतुर्भिः सम्प्रवर्षति ।
हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः ॥
वरुणो माघमासे तु सूर्य्यः पूषा तु फाल्गुने ।
चैत्रे मासि भवेदंशो धाता वैशाखतापनः ॥
ज्यैष्ठमूले भवेदिन्द्र आषाढ़े सविता रविः ।
विवस्वान् श्रावणे मासि प्रोष्ठपद्यां भगः स्मृतः ॥
पर्ज्जन्योऽश्वयुजि त्वष्टा कार्त्तिके मासि भास्करः ।
मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः ॥
पञ्च रश्मिसहस्राणि वरुणस्यार्ककर्म्मणि ।
षड्भिः सहस्रैः पूषा तु देवोंऽशः सप्तभिस्तथा ॥
धाताष्टभिः सहस्रैस्तु नवभिस्तु शतक्रतुः ।
विवस्वान् दशभिः याति यात्येकादशभिर्भगः
सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिस्तपेत् ।
अर्य्यमा दशभिः पाति पर्ज्जन्यो नवभिस्तपेत् ॥
षड्भी रश्मिसहस्रैस्तु विष्णुस्तपति विश्वधृक् ।
वसन्ते कपिलः सूर्य्यो ग्रीष्मे काञ्चनसप्रभः ॥

अथ तदुदाहरणानि ।
"शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ।
त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद्वयः ॥
मण्डूकपर्ण्याः स्वरसः प्रभाते
प्रयोज्य यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण च शङ्खपुष्पी ॥"
मण्डूकपर्णी ब्राह्मी । वरमी इति लोके । तदलाभे मञ्जिष्ठापि ग्राह्या । तस्या अपि रसायनत्वात् ।
"माक्षिकेण तुगाक्षीर्य्या पिप्पल्या लवणेन च ।
त्रिफला सितया वापि युक्ता सिद्धं रसायनम् ॥
सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ।
वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥
पुनर्नवस्यार्द्धपलं नवस्य
पिष्टं पिबेद्यः पयसार्द्धमासम् ।
मासत्रयं तत्त्रिगुणं समां वा
जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥
ये मासमेकं स्वरसं पिबन्ति
दिने दिने भृङ्गरजःसमुत्थम् ।
क्षीराशिनस्ते बलवीर्य्ययुक्ताः
समाशतं जीवनमाप्नुवन्ति ॥
शतावरी मुण्डितिका गुडूची
सहस्रिकर्णा सहतालमूली ।
एतानि कृत्वा समभागयुक्ता-
न्याज्येन किंवा मधुनावलिह्यात् ॥
जरारुजाभ्यां विमुक्तदेहो
भवेन्नरो वीर्य्यबलादियुक्तः ।
विभाति देवप्रतिमः स नित्यं
प्रभामयो भूरिविवृद्धबुद्धिः ॥
पीताश्वगन्धा पयसार्द्धमासं
घृतेन तैलेन सुखाम्बुना वा ।
वीर्य्यस्य पुष्टिं वपुषो विधत्ते
बालस्य शस्यस्य यथाम्बुवृष्टिः ॥
अयःपलं गुग्गुलुरत्र योज्यः
पलत्रयं योषपलानि पञ्च ।
पलानि चाष्टौ त्रिफलारजश्च
कर्षं लिहन् यात्यमरत्वमेव ॥"
लौहगुग्गुलुः ।
"न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विविधं निषेवते ।
गतिं स देवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथैव चाक्षयम् ॥"
इति रसायनाधिकारे भावप्रकाशः ॥
( तथा च ।
"लाभोपायो हि शस्तानां रसादीनां रसायनम् ।
पूर्व्वे वयसि मध्ये वा तत् प्रयोज्यं जितात्मनः ।
स्निग्धस्य सुतरक्तस्य विशुद्धस्य च सर्व्वथा ॥
नाविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।
वाजीकरो वा मलिने वस्त्रे रङ्ग इवाफलः ॥"
"रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा ॥
निर्वाते निर्भये हर्म्ये प्राप्योपकरणे पुरे ।
दिश्युदीच्यां शुभे देशे त्रिगर्भां सूक्ष्मलोचनाम् ॥
धूमातपरजोव्यालस्त्रीमूर्खाद्यविलङ्घिताम् ।
सज्जवैद्योपकरणां सुमृष्टां कारयेत् कुटीम् ॥
अथ पुण्येऽह्नि संपूज्य पूज्यांस्तां प्रविशेच्छुचिः ।
तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः ॥
ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः ।
दानशीलदयासत्यव्रतधर्म्मपरायणः ॥
देवतागुरुभक्तो युक्तो युक्तस्वप्नप्रजागरः ।
प्रियौषधः पेशलवाक् प्रारभेत रसायनम् ॥
हरीतकीमामलकं सैन्धवं नागरं वचाम् ।
हरिद्रां पिप्पलीं वेल्लं गुडञ्चोष्णाम्बुना पिबेत् ॥
स्निग्धः स्विन्नो नरः पूर्व्वं तेन साधु विरिच्यते ।
ततः शुद्धशरीराय कृतसंसर्ज्जनाय च ॥
त्रिरात्रं पञ्चरात्रं वा सप्ताहं वा घृतान्वितम् ।
दद्याद्यावकमाशुद्धेः पुराणशकृतोऽथ वा ॥
इत्थं संस्कृतकोष्ठस्य रसायनमुपाहरेत् ।
यस्य यद्यौगिकं पश्येत् सर्व्वमालोच्य सात्म्य-
वित् ॥"
"कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ।
अतोऽन्यथा तु ये तेषां सूर्य्यमारुतिको विधिः ॥
वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः ॥"
इत्युत्तरस्थानीयवाग्भटे ३९ अध्याये ॥
विशेषस्तु तस्मिन्नध्याये ज्ञातव्यः ॥ * ॥ रसः पारदः तच्छया तञ्जातीय-हरितालादिकश्च अयनं आश्रय उपायो वा यस्य तत् । स्वर्णादि-करणम् ।
अथ रसायने ईश्वर उवाच ।
"गोमूत्रं हरितालञ्च गन्धकञ्च मनःशिलाम् ।
समं समं गृहीत्वा तु यावत् शुष्यति पेषयेत् ॥
एकादशदिनं यावन् यत्नेन रचयेत् शुचिः ।
मन्त्रेण धूपदीपादिनैवेद्यैर्गन्धमिश्रितैः ॥
मन्त्रस्तु ॐ हरिहराय रसायनं सिद्धिं कुरु कुरु स्वाहा । अयुतजपेन सिद्धिः ।
तद्वटीं गोलकं कृत्वा वस्त्रेणावेष्टयेत् पुनः ।
मृत्तिकां लेपयेत्तस्य छायाशुष्कन्तु कारयेत् ॥
गर्त्ते कुण्डे विनिक्षिप्य पलाशकाष्ठवह्निना ।
ज्वालयेदष्टयामन्तु नान्यथा शङ्करोदितम् ॥
तद्भस्म जायते सिद्धिर्व्विद्धि सिद्धिसमाकुलम् ।
ताम्रपात्रे अग्निमध्ये बिन्दुमात्रं नियच्छति ॥
तत्क्षणाज्जायते स्वर्णं नान्यथा शङ्करोदितम् ।
दातव्यं गुरुभक्ताय न दद्याद्दुष्टमानसे ।
सिद्धपीठे भवेत्सिद्धिर्गोपनीलचनापने ॥
यस्मै कस्मै न दातव्यं दातव्यं शिवभक्तके ।
अग्निमुखं द्विजातीनां पाचकानां विशेषतः ॥
गोप्यं गोप्यं महागोप्यं देवानामपि दुर्लभम् ॥"
प्रकारान्तरम् ।
"आनीय बहुयत्नेन समस्तं तोलकद्वयम् ।
वसुरादं शिवपादं मायाबिन्दुसमन्वितम् ॥
बीजत्रयपाठशतं प्रजपेत् सत्वलोपरि ।
अशीतितोलकमानं हाणधेनुस्समुद्भवम् ॥
दुग्धमानीय यत्नेन चाष्टोत्तरशतं जपेत् ।
वस्त्रयुक्तेन सूत्रेण दुग्धमध्ये विनिक्षिपेत् ॥
उत्तापं ज्वालयेद्धीमान् मन्दमन्देन वह्निना ।
रिपुर्वदार्द्धपर्य्यन्तमर्द्धशेषं भवेद्यदि ॥
तदैवोत्तोल्य तद्द्रव्यं दुग्धं तोये विनिक्षिपेत् ॥"
ततः परीक्षा कर्त्तव्या ।
"निर्धूमं पावके मध्यं दृष्ट्वा उत्थाप्य यत्नतः ।
तत्रैव प्रजपेन्मन्त्रं सर्व्वबन्धनमात्मकम् ॥
सार्द्धेन तोलकं ताम्रं दृष्ट्वा उत्थाप्य यत्नतः ।
गुञ्जाप्रमाणं तद्द्रव्यं सत्यं सत्यं हि शङ्करि ! ।
रौप्यं भवति तद्द्रव्यं नान्यथा शङ्करोदितम् ॥"
प्रकारान्तरम् ।
"कृष्णसर्पमेकं गृहीत्वा तस्य मुखे शिववीर्य्यं पूरयित्वा सर्पस्य मुखं गुदञ्च बद्ध्वा नूतनमृन्मय-स्थालीमध्ये संस्थाप्य स्थालीमुखं मृदादिना संलिप्य निर्ज्जनस्थाने प्रातरारभ्य पुनःप्रात-र्यावत् वह्निना ज्वालं दद्यात् । ततः शुभक्षणे स्थालीमुखमुद्धृत्य सर्पभस्म विहाय शिववीर्य्यं गृह्णीयात् । ततस्तोलकमितं ताम्रं गालयित्वा तस्मिन् गालितताम्रे रक्तिकमात्रं तत् शिववीर्य्यं दद्यात् तेन तत्क्षणादेव तत्ताम्रं सुवर्णीभूतम् । आदौ शिवार्च्चनं कृत्वा पश्चात् प्रयोग एव कर्त्तव्यः ॥" इति दत्तात्रेयतन्त्रे ईश्वरदत्तात्रेय-संवादे रसायनं नाम त्रयोदशः पटलः ॥ )
रसायनः, पुं, गरुडः । विहङ्गः । इति मेदिनी ॥
रसायनफला, स्त्री, ( रसायनेन फलति या । फल् + अच् । टाप् । ) हरीतकी । इति त्रिकाण्डशेषः ॥
रसायनश्रेष्ठः, पुं, ( रसायनेषु श्रेष्ठः । ) पारदः । इति राजनिर्घण्टः ॥
रसायनी, स्त्री, ( रसान् तैलादीन् अयते प्राप्नोतीति । अय् + ल्युः । ङीष् । ) गुडूची । काकमाची । महाकरञ्जः । गोरक्षदुग्धा । मांसच्छदा । इति राजनिर्घण्टः ॥ ( मञ्जिष्ठा । अस्याः पर्य्यायो यथा,—
"मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका ।
भण्डीतकी च गण्डीरी मञ्जूषा वस्त्ररञ्जिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
रसालं, क्ली, ( रसं आलातीति । आ + ला + कः । ) सिह्लकम् । बोलम् । इति मेदिनी ॥
रसालः, पुं, (रसं आलाति गृह्णाति । आ + ला + कः । ) इक्षुः । आम्रः । इत्यमरः ॥ ( यथा, साहित्यदर्पणे १० परिच्छेदे अतिशयोक्त्यलङ्कारे ।
"प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम् ।
पश्चादुद्भिन्नबकुलरसालमुकुलश्रियः ॥" )
पनसः । इति शब्दरत्नावली ॥ कुन्दरुष्कम् ॥ गोधूमः । पुण्ड्रकनामेक्षुः । इति राजनिर्घण्टः ।

जहार वैनतेयश्च चञ्चुना त्रिदिवं गतः ॥
संग्रामश्रमसम्प्राप्ते श्रमवेगप्रधाविते ।
आरूढ़े वैकृतं प्राप्ते च्युता ह्यमृतबिन्दवः ॥
मक्षुत् सन्दूषिते देशे पतितास्तत्र संस्थिताः ।
तस्मात् कालवशाज्जातं दुर्भिक्षं द्वादशाब्दि-कम् ॥
विशुष्काः कानने सर्व्वा वृक्षकाण्डप्रतानिकाः ।
तस्माच्च काननं सर्व्वे प्रकष्टं गहनं गताः ॥
तेषां मध्ये जराग्रस्तो गतिहीनोऽतिजर्ज्जरः ।
सयष्टिः सरणिच्युतः शीर्णदन्तावलीमुखः ॥
स च त्यक्तस्तैः क्षुधापन्नैः ऋषिभिस्तत्र विस्मृतः ।
सोऽपि क्षुधातुरः सर्व्वां पर्य्यटन्नुर्व्वरां महीम् ॥
कुत्रचित् पुण्ययोगेन दृष्टवान् विटपान् शुभान् ।
नीलशैवालसङ्काशान् शाद्वलान् बहुलान् भुवि ।
क्षुधासंपीड़नेनापि भुक्तवान् शाद्वलानपि ॥
पक्षमासानन्तरे शुष्कान् विटपान् तदनन्तरम् ।
भुक्तवान् कन्दकान् सोऽपि मासमेकं तथा ऋषिः ॥
पश्चात् सुभिक्षे सञ्जाते सर्व्वे चैकत्र संस्थिताः ।
सोऽपि वृद्धो युवा भूत्वा गतस्तत्र च यत्र ते ॥
तं दृष्ट्वा विस्मयापन्नाः पप्रच्छुः किं कृतं त्वया ।
नोक्तवान् सोऽपि किञ्चिच्च यदा तैः शापित-स्ततः ॥
यत्त्वया खादितं द्रव्यं तदभक्ष्यं द्विजातिभिः ।
दुर्गन्धमपि चित्रञ्च तस्माज्जातं रसोनकम् ॥"
"तेन रसोनकं नाम विख्यातं भुवनत्रये ।
कुक्कुटाण्डनिभं ग्रीष्मे शीर्णपर्णं समुद्धरेत् ॥
बद्ध्वा पुटे सुनिर्गन्धं धारयेत्तत्क्षपामते ।
दोषाग्निदर्शनात्तेन म्रियते दीर्य्यते भुवि ॥
वर्षासु शिशिरे चैव कारयेन्मात्रया युतम् ।
रामठं जीरके द्वे च अजमोदाकटुत्रयम् ॥
घृतसौवर्च्चलोपेतं वातरोगे विशेषतः ।
मातुलुङ्गरसेनापि शूलनाशे प्रकीर्त्तितः ॥"
इति हारीते कल्पस्थाने तृतीयेऽध्याये ॥
अस्यान्यत् द्विधाभक्ष्यत्वकारणादिकं रसोनशब्दे द्रष्टव्यम् ॥ )

**रसोपलं**, क्ली, ( रसवत् पारद इव उपलम् । ) मौक्तिकम् । इति त्रिकाण्डशेषः ॥

**रस्नं**, क्ली, ( रस+"कृषिशुषिरसिभ्यः कित् ।" उणा० ३ । १२ । इति नप्रत्ययः । ) द्रवम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**रस्यं**, क्ली, ( रसात् भुक्तान्नादिपरिपाकात् आगत-मिति । रस+ यत् । ) रक्तम् । इति शब्द-चन्द्रिका ॥ ( यथा, महाभारते ।१४।५०।३२।
"यन्नैव गन्धिनो रस्यं नरूपं सर्वशब्दवत् ॥"
रसयुक्ते, त्रि । यथा, भगवद्गीतायाम् । १७ ।८।
"रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥")

**रस्या**, स्त्री, ( रसाय हिता । रस्+यत् । टाप् ।) रास्ना । ( अस्याः पर्य्यायो यथा,—
"रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
पाठा । इति राजनिर्घण्टः ॥

**रंह**, तु क गतौ । इति कविकल्पद्रुमः ॥ ( अदन्त चुरा०-पर०-सक०-सेट् । ) रंहयति रंहा-पयति । इति दुर्गादासः ॥

**रंहः**, [ स् ] क्ली, ( रम+"रमेश्च ।" उणा० ४ । २१३ । इति असुन् हुगागमश्च । "अहि रहिभ्यामसुन् इत्यहो रंह इति धातुप्रदीपः ।" इत्युज्ज्वलः । ) वेगः । तत्पर्य्यायः । तरः २ रयः ३ स्यदः ४ जवः ५ । इत्यमरः ॥ रंवः ६ यवनः ७ । इति तट्टीका ॥ ( यथा, रघुः । २ । ३४ ।
"न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥")

**रह**, त्यजि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । ) रहति सुखं दीनः । इति दुर्गा-दासः ॥

**रह**, इ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् । ) इ, रंह्यते । इति दुर्गा-दासः ॥

**रह**, तु क त्यागे । इति कविकल्पद्रुमः ॥ (अदन्त चुरा०-पर०-सक०-सेट् । ) रहयति शोकं धीरः । इति दुर्गादासः ॥

**रहः**, [स्] क्ली, ( रमन्तेऽस्मिन् । रह+"रंशे ह च ।" उणा० ४ । २१४ । इति असुनप्रत्ययः । हकारश्चान्तादेशः । "रह त्यागे असादसुनि रह इति धातुप्रदीपः ।" इत्युज्ज्वलः । ) निर्ज्जनम् । तत्पर्य्यायः । विविक्तः २ विजनः ३ छन्नः ४ निःशलाकः ५ रहः ६ उपांशुः ७ इत्यमरः ॥ ( यथा, रघौ । ३ । ३ ।
"तदाननं मृत्सुरभि क्षितीश्वरः
रहस्युपाघ्राय न तृप्तिमाययौ ॥")
तत्त्वम् । रतिः । गुह्यम् । इति मेदिनी ॥

**रहः**, [स्] अ, विजनम् । इत्यमरः ॥
"रहो निधुवनेऽपि स्याद्रहो गुह्ये नपुंसकम् ॥"
इति रभसश्च ॥
"देशादन्यत्र रहोऽव्ययं शब्दान्तरं वास्ति सुरत-वाचकम् ।" इत्युज्ज्वलः । ४ । २१४ ॥)

**रहस्यं**, त्रि, ( रहसि भवम् । रहस्+दिगादि-त्वात् यत् । इत्युज्ज्वलः । ४ । २१४ । ) गोप-नीयम् । रहसि भवम् । इति मेदिनी अमरश्च ॥
रहस्यरोमस्पर्शनिषेधो यथा,—
"न सर्पशस्त्रैः क्रीड़ेत खानि खानि न संस्पृशेत् ।
रोमाणि च रहस्यानि नाशिष्टेन सहा व्रजेत् ॥"
इति कौर्म्मे १५ अध्यायः ॥

**रहस्या**, स्त्री, ( रहस्य+टाप् । ) नदीभेदः । इति मेदिनी ॥ ( यथा, महाभारते ।६।९।१८।
"रहस्यां शतकुम्भां च सरयूं च नरेश्वर ! ॥")
रास्ना । पाठा । इति राजनिर्घण्टः ॥

**रहितं**, त्रि, ( रह+क्तः । ) वर्जितम् । यथा,—
"जातसूतकमादौ च अन्ते च मृतसूतकम् ।
गुरोस्तद्रहितं कृत्वा जपकर्म्म समाचरेत् ॥"
इति तन्त्रसारः ॥
अपि च ।
"दिग्घ्नोऽब्दयाश्विरहितो जन्मर्क्षाद्या भशे-षितः ।
भं भवेदब्दवेशोऽत्र योगेऽप्येवं विचिन्तयेत् ॥"
इति जातकपद्धतिः ॥

**रा** ल दाने । ग्रहणे । इति कविकल्पद्रुमः ॥ ( अदा०-पर०-सक०-अनिट् । ) ल, राति । इति दुर्गादासः ॥

**राः**, स्त्री, (रा+सम्पदादित्वात् क्विप् ।) विभ्रमः । दानम् । इत्येकाक्षरकोषः ॥ काञ्चनम् । इति शब्दरत्नावली ॥

**राः**, [ ऐ ] पुं, ( रा दाने+"रातेर्डैः ।" उणा० २ । ६६ । इति डैः । ) धनम् । ( यथा, भाग-वते । ३ । २५ । ३८ ।
"आत्मानमन्व ये चेह ये रायः पशवो
गृहाः ॥" )
स्वर्णम् । इत्यमरः ॥ शब्दः । इति शब्दरत्ना-वली ॥ ( स्त्री, श्रीः । यथा, ऋग्वेदे । १० । १११ । ७ ।
"स चन्तयद्दुषसः सूर्य्येण चित्रामस्य केतवो
रामविन्दन् ॥"
"चित्रां नानावर्णां रां रायं श्रियमविन्दन् अल-भन्त ।" इति तद्भाष्ये सायणः ॥ )

**राका**, स्त्री, ( रा दाने+"कृदाधारार्च्चिकलिभ्यः कः ।" उणा० ३ । ४० । इति कः । बहुल-वचनाद्दैव न ह्रस्वः । ) नदीविशेषः । ( सा च शाल्मलीद्वीपस्थानां नदीनामन्यतमा । यथा, भागवते । ५ । २० । १० ।
"तेषु वर्षाद्रयो नद्यश्च सप्तैवाभिज्ञाताः । सुरसः शतशृङ्गो वामदेवः कुन्दः कुमुदः पुष्पा-वर्षः सहस्रश्रुतिरिति । अनुमती सिनीवाली सरस्वती कुहू रजनी नन्दा राकेति ॥")
कच्छूरोगः । नवजातरजःस्त्री । ( रायते दीयते देवेभ्य हविर्य्यस्याम् । इति निघण्टुटीकायां देव-राजयज्वा । ५ । ५ । २१ । ) सम्पूर्णेन्दुतिथिः । इति मेदिनी ॥ ( यथा, ऋग्वेदे । २ । ३२ । ४ ।
"राकामहं सुहवां सुष्टुती हुवे
शृणोतु नः सुभगा बोधतुत्मना ॥"
"संपूर्णचन्द्रा पौर्णमासी राका ।" इति सायणः ॥
राक्षसीविशेषः । सा च खरस्य शूर्पणखायाश्च जननी । यथा, महाभारते । ३ । २७४ । १-८ ।
मार्कण्डेय उवाच ।
"पुलस्त्यस्य तु यः क्रोधादर्द्धदेहोऽभवन्मुनिः ।
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत ॥
बुबुधे तन्तु सक्रोधं पितरं राक्षसेश्वरः ।
कुवेरस्तत्प्रसादार्थं यतते स्म सदा नृप ! ॥
स राजराजो लङ्कायां निवसन्नरवाहनः ।
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ॥
ताः सदा तं महात्मानं सन्तोषयितुमुद्यताः ।
ऋषिं भरतशार्दूल ! नृत्यगीतविशारदाः ॥

यज्ञियदेशः, पुं, (यज्ञियश्चासौ देशश्चेति ।) यागकरणोपयुक्तदेशः । यथा, मनुः ।२।२३ ।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः ॥"

यज्ञियशाला, स्त्री, (यज्ञिया शाला ।) यागमण्डपम् । इति जटाधरः ॥

यज्ञीयः, पुं, (यज्ञे भवः इति । यज्ञ+"गहादिभ्यश्च ।" ४ । २ । १३८ । इति छः ।) उडुम्बरवृक्षः । इति राजनिर्घण्टः ॥ यागसम्बन्धिनि, त्रि ॥ (यथा, महाभारते । ३ । १२१ । ६ ।
"प्रशस्तेऽहनि यज्ञीये सर्व्वकामसमृद्धिमत् ।
कारयामास शर्य्यातिर्यज्ञायतनमुत्तमम् ॥")

यज्ञीयब्रह्मपादपः, पुं, (यज्ञीयश्चासौ ब्रह्मपादपश्चेति ।) विकङ्कतवृक्षः । इति राजनिर्घण्टः ॥

यज्ञेश्वरः, पुं, (यज्ञानामीश्वरः ।) विष्णुः । यथा,
"यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो
रक्षांस्यशेषाण्यसुराश्च सर्व्वे ॥"
इति श्राद्धतत्त्वम् ॥

यज्ञेष्टं, क्ली, (यज्ञे इष्टम् ।) दीर्घरोहिषकतृणम् । इति राजनिर्घण्टः ॥

यज्ञोडुम्बरः, पुं, (यज्ञोचित उडुम्बरः ।) उडुम्बरवृक्षः । यज्ञडुमुर इति भाषा ॥ तत्पर्य्यायः । हेमदुग्धी २ यज्ञफलः ३ यज्ञाङ्गः ४ हेमदुग्धकः ५ उडुम्बरः ६ जन्तुफलः ७ । इति शब्दरत्नावली ॥ अस्य गुणाः यथा, भावप्रकाशे ।
"उडुम्बरो हिमो रूक्षो गुरुः पित्तकफास्रजित् ।
मधुरस्तुवरो वर्ण्यो व्रणशोधनरोपणः ॥"

यज्ञोपवीतं, क्ली, (यज्ञार्थं उपवीतम् ।) यज्ञसूत्रम् । पैता इति भाषा । तत्पर्य्यायः । पवित्रम् २ ब्रह्मसूत्रम् ३ द्विजायनी ४ । इति त्रिकाण्डशेषः ॥ तस्य निरूपणं यथा । उपवीतमाह गोभिलः । यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव । यज्ञोपवीतं विशिष्टविन्यासधारणकर्म्मतया कुरुते । किं तत् सूत्रम् । सूत्रं विशेषयति छन्दोगपरिशिष्टम् ।
"ऊर्द्ध्वन्तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम् ।
त्रिवृतञ्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥"
वामावर्त्तवलितं तन्तुत्रयं त्रिगुणं कृत्वा दक्षिणावर्त्तवलितं कार्य्यं एवं त्रिवृतं त्रिसवं उपवीतं स्यात् । एको ग्रन्थिरिति नानात्वनिषेधार्थम् । तथा वौधायनः ।
"कौषं सौत्रं त्रिस्त्रिवृतं यज्ञोपवीतमानाभेः ॥"
कौषं कृमिकोषोद्भवं पट्टसूत्रादिमयमित्यर्थः । सौत्रं कार्पासोद्भवम् । तथा मनुः ।
"कार्पासमुपवीतं स्याद्विप्रस्योर्द्धवृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥"
त्रिस्त्रिवृतमित्युक्तत्वात् मनुवचनेऽपि त्रिवृन्मात्रं त्रिसवत्वेन विशेष्यम् । यत्तु पैठीनसिवचनम् । कार्पासमुपवीतं षट्तन्तु त्रिवृतं ब्राह्मणस्य । क्षौमं राजन्यस्य । आविकं वैश्यस्य । तत्तव-
न्त्वसम्भवे षट्तन्तुविधायकम् । नवतन्तुत्वं यत्तमाह देवलः ।
"यज्ञोपवीतं कुर्व्वीत सूत्राणि नव तन्तवः ।
एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा ॥"
एकेन ग्रन्थिना युक्त इति शेषः । द्विगुणस्त्रिगुणोऽथवेति । तन्तुबलेन द्विसवस्त्रिसवो वा कर्त्तव्यः । द्विसवत्वं त्रिसवत्वासम्भवे । गोभिले वाशब्दो विकल्पार्थः । अपिशब्दो वस्त्रकुशरज्ज्वोः सूत्रानुकल्पत्वप्रदर्शनार्थः । एवकारस्त्रिसवत्वव्यवच्छेदार्थः । द्वितीयो वाशब्दः अनुक्तमौञ्जवालादिसमुच्चयार्थः । तथा निगमपरिशिष्टम् । वाससा यज्ञोपवीतानि कुरुते तदभावे त्रिवृता सूत्रेण । कुशशणवालप्रतिसररज्जुभिर्व्वा । वालोऽत्र गोवालः । यथा देवलः ।
"कार्पासक्षौमगोवालशणवल्कतृणोद्भवम् ।
सदा सम्भवतो धार्य्यमुपवीतं द्विजातिभिः ॥"
तदभाव इति करणान्तराभावे कुशरज्जुभिरिति बोद्धव्यम् । इति आचारविवेकः ॥ * ॥ अथोपनयनदिनम् । तत्र गर्भाष्टमेऽब्दे ब्राह्मणस्योपनयनं शस्तम् । क्षत्त्रियस्य गर्भैकादशे । गर्भद्वादशे वैश्यस्य शस्तम् । तत्रासामर्थ्ये ब्राह्मणस्य षोड़शवर्षपर्य्यन्तमेव । क्षत्त्रियस्य द्वाविंशतिवर्षपर्य्यन्तम् । वैश्यस्य चतुर्व्विंशतिवर्षपर्य्यन्तं तदनुष्ठानकालः । तत्र मासाः माघफाल्गुनचैत्रवैशाखज्यैष्ठाषाढ़ा विहिताः । तत्र तिथयः द्वितीयैकादशीद्वादशीपञ्चमीदशमीतृतीया विहिताः । तत्र वाराः वृहस्पतिशुक्ररवीणां प्रशस्ताः । सामगानां मङ्गलवारोऽपि । तत्र नक्षत्राणि । स्वाती ज्येष्ठा धनिष्ठा अश्विनी अनुराधा हस्ता रेवती पुष्या चित्रा श्रवणा मृगशिरः शतभिषा पूर्व्वफल्गुनी उत्तरफल्गुनी पूर्व्वभाद्रपदा उत्तरभाद्रपदा रोहिणी पूर्व्वाषाढ़ा । तत्र लग्नानि वृषसिंहतुलाधनुर्मीनसंज्ञकानि । तत्र पक्षः शुक्लः । तच्चन्द्रादिशोभने अनध्यायादीन् परित्यज्य कर्त्तव्यम् । इति ज्योतिषतत्त्वमतम् ॥ * ॥ अथोपनयनम् । तत्र गोभिलः । गर्भाष्टमेषु ब्राह्मणमुपनयेत् गर्भैकादशेषु क्षत्त्रियं गर्भद्वादशेषु वैश्यम् । आषोड़शात् ब्राह्मणस्यानतीतः कालो भवति आद्वाविंशात् क्षत्त्रियस्य आचतुर्व्विंशात् वैश्यस्य । अत ऊर्द्ध्वं पतितसावित्रीका भवन्ति । नैतानुपनयेयुर्नाध्यापयेयुर्न एभिर्व्विवाहयेयुः ॥ आषोड़शादित्यभिविधावाङ् । तथा च विष्णुधर्म्मोत्तरम् ।
"षोड़शाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः ।
विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता ॥
सावित्री नातिवर्त्तेत अत ऊर्द्ध्वं निवर्त्तते ॥"
अत्र षोड़शवर्षाद्यासुपनयनाङ्गत्वं प्रतीयते ।
"पतिता यस्य सावित्री दश वर्षाणि पञ्च च ।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः ॥
प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः ॥"
इति यमवचनेन तदनङ्गत्वं प्रतीयते अनयोर्गर्भ-
जन्मगणनाभ्यामविरुद्धता । तथा च माण्डव्यः ।
"व्रतबन्धविवाहे च वत्सरपरिगणनमाहुराचार्य्याः ।
आधानपूर्व्वकमेके प्रसूतिपूर्व्वं महान्ते तु ॥"
यत्तु द्विजानामित्युपक्रम्य पैठीनसिवचनम् । द्वादशषोड़शविंशतिचतुर्व्विंशतीता- -अवरुद्धकाला भवन्ति । तद्वादशवर्षाद्यूर्द्ध्वं ब्राह्मणादीनां महाव्याहृतिहोमप्रायश्चित्तार्थं षोड़शवर्षोपरि गुरुप्रायश्चित्तमिति । तथा च शङ्खलिखितौ । व्रात्यश्चान्द्रायणं चरेत् गोप्रदानञ्च कुर्य्यात् । चान्द्रायणाशक्तौ धेन्वष्टकं तन्मूल्यं वा सार्द्धद्वाविंशतिकार्षापणाः गोमूल्यं कार्षापण एकः मिलित्वा सार्द्धत्रयोविंशतिकार्षापणाः देयाः । पितृमातृरहितस्य निःस्वस्य देशोपप्लवादिना पतितसावित्रीकस्य वा विषये तु मनुविष्णू ।
"येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ॥"
कृच्छ्रं प्राजापत्यम् । तदशक्तौ धेनुत्रयं तन्मूल्यं वा नव कार्षापणाः । अकृतप्रायश्चित्तं प्रत्याह नैतानित्यादि । तत्र बहुवचनं तत्कर्तृसंसर्गिणां प्रायश्चित्तप्रदर्शनार्थम् । तथा च स्मृत्यन्तरम् ।
"व्रात्याचार्य्यस्य भुक्तान्ने कृच्छ्रपादेन शुध्यति ।
यश्चोपनयते व्रात्यान् त्रिभिः कृच्छ्रैः स शुध्यति ॥"
भुजबलभीमकृत्यचिन्तामण्योः ।
"स्वातीशक्रधनाश्विमित्रकरभे पौष्ण्यश्चित्राहरि-
त्विन्द्रौ तोयपतौ भगेऽदितिसुते भाद्रद्वये सागरे ।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते चन्द्रे च तारे शुभे
कर्त्तव्यं व्रतकर्म्म मङ्गलतिथौ वाराः सितार्केज्यकाः ॥"
अदितिसुत उत्तरफल्गुनी । सागरः पूर्व्वाषाढ़ा । दीपिकायाम् ।
"जीवार्केन्दुविशुद्धौ हरिशयनबहिर्भास्करे चोत्तरस्थे
छाध्याये वेदवर्णाधिप इह शुभदे चौरिभे नादितौ च ।
शुक्रार्केज्यर्क्षलग्ने रविमदनतिथिं प्रोज्झ्य षष्ठाष्टमेन्दू
नो जीवास्तातिचारेऽर्कसितगुरुदिने कालशुद्धौ व्रतं स्यात् ॥"
रविमदनतिथिं सप्तमीं त्रयोदशीम् । षष्ठाष्टमेन्दुं लग्नापेक्षया । कृत्यचिन्तामणौ ।
"माघे द्रविणशीलाढ्यः फाल्गुने च दृढ़व्रतः
चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥
ज्यैष्ठे गहननीतिज्ञ आषाढ़े क्रतुभाजनः ।
शेषेष्वन्येषु रात्रेः स्यान्निषिद्धं निशि च व्रतम् ॥"
राजमार्त्तण्डः ।
"पुनर्व्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥"
आश्वलायनः । उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चूड़ोपनयनगोदानविवाहाः ॥ विवाहः सार्व्वकालिक इत्येके । आपूर्य्यमाणे पक्षे शुक्ले पक्षे । वृद्धगर्गः ।

कालक्रमेण तत्रापि ह्रास एव तु दृश्यते ।
केचिद्वदन्ति ते रागा: सर्व्वे सन्तीति निश्चितम् ॥
मेरोरुत्तरत: पूर्व्वे पश्चिमे दक्षिणे तथा ।
समुद्रकण्ठे ये देशास्तत्रामीषां प्रचारणा ॥"
तथा च । अङ्गवङ्गकलिङ्गतेलङ्गभूलिङ्गद्राविड़-सुरङ्गयुपलङ्गखेलाङ्गसौवीरकौरकाश्मीरनाभीरनाहीरसिन्धुजालन्धरमगममगधनिगधमलयहीहयगजाड्यमालवजालवमरुमूरुचोलोत्कलकुन्तलसिंहलहरिकेलकेरल-कोशलमल्लित्रालमल्लमल्लसौविदल्लवानकिल्लातगुर्जरातगुल्लरकालञ्जरगौड़द्राविड़ौड्रान्तर्व्वेदिकाश्वीपाञ्चालसौराष्ट्रशवरनौहावरखशकीकशवल्लपकामरूपहरिगर्भविदर्भदुर्मटवाटकीकटदेवेङ्गनटङ्गननाटभोटकवाटकरहाटकर्णाटकुन्तिकावन्तिककनकालकान्यकुब्जभोजकाम्बोजनोजतुखारविहारवलीहारवाजगेहविदेहवाह्लीकचर्षरीकत्रिगर्त्तानर्त्तादिदेशेषु रागा: प्रचरन्तीति ।
"यस्य श्रवणमात्रेण रज्यन्ते सकला: प्रजा: ।
सर्व्वानुरञ्जनाद्धेतोस्तेन राग इति स्मृत: ॥"*॥
अथ रागा: ।
"आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञित: ।
श्रीरागश्च तत: पश्चाद्वसन्तस्तदनन्तरम् ॥
हिन्दोलश्चाथ कर्णाट एते रागा: षडेव तु ।६।
षट्त्रिंशद्रागिणी तत्र क्रमश: कथिता मया ॥
धानसी मालसी चैव रामकिरी च सिन्धुड़ा ।
आशावरी भैरवी च मालवस्य प्रिया इमा: ॥६
वेलावली च पुरवी कानड़ा माधवी तथा ।
कोड़ा केदारिका चापि मल्लारदयिता इमा: ॥६
गान्धारी शुभगा चैव गौरी कौमारिका तथा ।
वेलोयारी च वैरागी श्रीरागस्य प्रिया इमा: ॥६
तुड़ी च पञ्चमी चैव ललिता पटमञ्जरी ।
गुर्ज्जरी च विभाषा च वसन्तस्य प्रिया इमा: ॥६
मायूरी दीपिका चैव देशकारी च पाहिड़ा ।
वराड़ी मोरहाटी च हिन्दोलस्य प्रिया
इमा: ॥६॥
नाटिका चाथ भूपाली रामकेली गड़ा तथा ।
कामोदा चापि कल्याणी कर्णाटस्य प्रिया
इमा: ॥६॥३६॥*॥

अथ कालनियम: ।
"विभाषा ललिता चैव कामोदा पटमञ्जरी ।
रामकौरी रामकेली वेलोयारी च गुर्ज्जरी ॥
देशकारी च शुभगा पञ्चमी च गड़ा तुड़ी ।
भैरवी चाथ कौमारी रागिण्यो दश पञ्च च ।
एता: पूर्व्वाह्णकाले तु गीयन्ते गायनोत्तमै: ॥
वराड़ी मायूरी कोड़ा वैरागी चाथ धानसी ।
वेलावली मोरहाटी सप्तैता रागयोषित: ।
गेया मध्याह्नकाले तु यथा भारतभाषितम् ॥
गान्धारी दीपिका चैव कल्याणी पुरवी तथा ।
कानड़ा शावरी चैव गौरी केदारपाहिड़ा ॥
मायूरी मालसी नाटी भूपाली सिन्धुड़ा तथा ।
सायाह्ने ताश्च रागिण्य: प्रगायन्ति चतुर्द्दश ॥
पुरुषा वसुभूषाढ्या रागास्ते मालवादय: ।
प्रदोषे चापराह्णे च रजन्यां गानगोचरा: ॥
दशदण्डात् परं रात्रौ सर्व्वेषां गानमीरितम् ।
मेघमल्लाररागस्य गानं वर्षासु सर्व्वदा ॥
श्रीपञ्चम्यां समारभ्य यावत् जन्मोत्सवं हरे: ।
तावद्वसन्तरागस्य गानमुक्तं मनीषिभि: ॥
शक्रोत्थानं समारभ्य यावद्दुर्गामहोत्सवम् ।
गीयते तद्बुधैर्नित्यं मालसी सा मनोहरा ॥
सर्व्वेषामिह रागाणां रागिणीनाञ्च सर्व्वश: ।
रङ्गभूमौ नृपाज्ञायां कालदोषो न विद्यते ॥
रागश्चालापयेदादौ तत्पत्न्यस्तदनन्तरम् ।
नान्यपत्नी प्रगानत्वा नृपाज्ञायां न दूषणम् ॥
रागा: षड़थ रागिण्य: षट्त्रिंशच्चारु-
विग्रहा: ।
आगता ब्रह्मसदनात् ब्रह्माणं समुपासते ॥"*॥
अथ ध्यानम् ।

"नितम्बिनीचुम्बितवक्त्रपद्म:
शुकद्युति: कुण्डलवान् प्रमत्त: ।
सङ्गीतशालां प्रविशन् प्रदोषे
मालाधरो मालवरागराज: ॥ १ ॥
नीलोत्पलं कर्णयुगे वहन्ती
श्यामा सुकेशी च सुमध्यभागा ।
ईषत्सहासाम्बुजरम्यवक्त्रा
सा धानसी पद्मसुचारुनेत्रा ॥ १ ॥
करे युता चाम्बुजयुग्मरम्या
इतस्ततश्चारु विलोकयन्ती ।
कण्ठस्फुरन्मौक्तिकरत्नहारा
सा मालसी संकथिता विचित्रा ॥ २ ॥
प्रतप्तचामीकरचारुवक्त्रा
कर्णावतंसं कमलं वहन्ती ।
पुष्पं धनु: पुष्पशरैर्दधाना
चन्द्रानना रामकिरी प्रदिष्टा ॥३॥
महेन्द्रनीलद्युतिरम्बुजाक्षी
प्रवादयन्ती कपिलाशयन्त्रम् ।
विचित्ररत्नाभरणा सुकेशी
सा सिन्धुड़ा कान्तसमीपसंस्था ॥४॥
जवाप्रसूनद्युतिबिम्बवक्त्रा
सकञ्चुपद्मं करयोर्दधाना ।
क्षौमांशुकाच्छादितगात्रयष्टि-
राशावरी रङ्गकिला विदग्धा ॥५॥
सरोवरस्था स्फटिकस्य मन्दिरे
वरोरुहै: शङ्करमर्च्चयन्ती ।
तालप्रयोगप्रतिरङ्गगीते
गौरीतनुर्भैरविका सतीयम् ॥"६॥*॥
अथ मल्लार: ।

"विहारशीलोऽतिसुकान्तदेह:
कान्ताप्रियो धार्म्मिकशीलयुक्त: ।
कामातुर: पिङ्गलनेत्रयुग्मो
मल्लाररागः प्रियकृत् सुवेश: ॥१॥
सङ्केतितोत्फुल्ललतानिकुञ्जे
दत्तस्थिति: कान्तसमागमाय ।
वेलावली चम्पकमौलिनी वा
बाला विचित्राभरणा निरुक्ता ॥१॥
रह:सु कान्तप्रियमाणपत्त्रं
रम्यं वहन्ती कुचकुम्भयुग्मं ।
दूर्व्वादलश्यामतनु: सकामा
पुरातनै: सा पुरवी निरुक्ता ॥२॥
अशोकवृक्षस्य तले निषण्णा
वियोगिनी वासकगाश्रिताङ्गी ।
विभूषिताङ्गी जटिलेव बाला
सा कानड़ा हेमलतेव तन्वी ॥३॥
संगृह्य संगृह्य गले दधाना
प्रसूनमाला दयितेन बाला ।
गौरी स्वकान्ताननचुम्बितास्या
सा सुन्दरी माधविका निकुञ्जे ॥४॥
सुकच्छपीं वादयति स्वभर्त्तुं-
र्गानार्थमभ्यस्यति सम्मुखेन ।
यदैव ताला विहिता च माला
कोड़ा कला तानवती मता सा ॥५॥
स्नात्वा समुत्तीर्णवती सुदेहा
केशप्रशिष्यन्दितवारिबिन्दु: ।
निष्पीड़यन्ती तिमिरांशुकान्तं
केदारिका रक्तपयोधरश्री: ॥"६॥*॥
अथ श्रीराग: ।

"लीलावतारेण वनान्तराणि
चिन्वन् प्रसूनानि वधूसहाय: ।
विलासवेशो द्युतिदिव्यमूर्त्ति:
श्रीराग एष प्रथित: पृथिव्याम् ॥१॥
सन्ध्यासुकाले गृहमध्यदेशे
प्रवादयन्ती ह पिनाकयन्त्रम् ।
धाराधराधातुविचित्रिताङ्गी
गान्धारिका गन्धसखं निधत्ते ॥ १ ॥
रसनया सुविचारकौतुकं
विदधती कविकोविदकौतुकम् ।
सुकवितान्तरभावनतत्परा
भगवती सुभगा समुदाहृता ॥२॥
पुष्पोद्याने सार्द्धमालीकलापै:
क्रीड़न्त्येवं कोकिलाकाकलीषु ।
रामा श्यामा सद्गुणानाञ्च सीमा
गौरी गौरी गौरवालोकदिष्टा ॥३॥
अट्टालिकायां स्फुटकौमुदीभि:
प्रकाशितायां रजनीविहारम् ।
अह्नाय कान्तेन समं वसन्ती
कौमारिका कामकला वहन्ती ॥४॥
गौरीपादाम्भोजमभ्यर्च्चयन्ती
गन्धोद्भूतं गन्धमाल्यं दधाना ।
नानारत्नोपायनैर्भक्तिभावै-
र्वेलोयारी कथ्यते बालिकेयम् ॥५॥
उल्लासयन्ती धम्मिल्ले रह:स्थान् प्राणबन्धुना ।
मालतीकुसुमस्रग्भिर्व्वैरागी रागिनी स्मृता ॥"
अथ वसन्त: ।

"चूताङ्कुरैरेव कृतावतंसो
विघूर्णमानारुणनेत्रपद्म: ।
पीताम्बर: काञ्चनचारुदेहो
वसन्तरागो युवति:[illegible]

पुष्पोत्कटा च राका च मालिनी च विप्रो पते।
यवीयस्त्वदियं राघवः। श्रेयस्कामा सुम ध्यमा ॥
स तासां भगवांस्तुष्टो महात्मा प्रददौ वरान्।
लोकपालोपमान् पुत्रानेकैकस्या यथेप्सितान् ॥
पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ॥
मालिनी जनयामास पुत्रमेकं विभीषणम्।
राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा॥')

राक्षस पु रक्षस्तस्मात् रक्ष रक्ष एव राक्षस। तत्पर्य्यायः। कौणप २ क्रव्यात् ३ क्रव्याद ४ असप ५ आस्रप ६ रात्रिचर ७ रात्रिचर ८ कर्बुर ९ निकषात्मज १० यातुधान ११ पुण्यजन १२ नैरृत १३ यातु १४ रक्ष १५। इत्यमरः ॥ सन्ध्याबल १६ चपाट १७ रजनीचर १८ कौलाप १९ इष्टपा २० नक्तञ्चर २१ पलाशी २२ पलाश २३ भूत २४। इति शब्दरत्नावली ॥ नीलाम्बर २५ कव्याश २६ कटप्रू २७ आशिर २८ कीलालपा २९ नरविग्रह ३०। इति जटाधरः ॥ तस्योत्पत्तिर्यथा,—
रजोमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम्।
ततः क्षुद्‌ब्रह्मणो जाता जज्ञे कोपाश्रयात्ततः ॥
क्षुत्‌क्षामानन्धकारेऽथ सोऽसृजद्भगवांस्ततः।
विरूपाः श्मश्रुला जातास्तेऽभ्यधावन्त तं प्रभुम् ॥
मैवं भो रक्ष्यतामेष तैरुक्तं राक्षसास्तु ते ॥
इति वह्निपुराणम् ॥ * ॥

अपि च।
रक्षोगणं क्रोधवशानात्मानामर्कौजसः।
स्त्रियो नियुतं तेषां भीमसेनं ऋतं चयम्॥'
इति मात्स्ये आदिसर्गे कश्यपान्वयनाम ६ अध्यायः ॥ * ॥ राक्षसभोज्यान्नानि यथा —
"उच्छिष्टान्नमुपपन्नञ्च यच्चोच्छिष्टान्वितं भवेत्।
केशावपन्नमाधूतं मारुतश्वासवद्भवेत् ॥
यानि सल्लक्षणान्नाञ्च भाग्यो वै रक्षसां भवेत्।
तस्मात् ज्ञात्वा सदा विद्वानन्नान्येतानि वर्जयेत् ॥
राक्षसा नाम ते प्रोक्तास्ते भुञ्जन्त्यघमीदृशम्।
इति वामनपुराणे १६ अध्यायः ॥ * ॥
तेषां विहारस्थानानि यथा,—
"धर्म्मोपद्रवा ये च भूतप्रेतपिशाचकाः।
ब्रह्मद्विषो रुद्रभक्ता तत्रैव चरन्ति हि ॥
नाहं विष्णुमयो यत्र वियक्तिषां सम्भूतपामनाम्।
यत्र क्वापि हि विप्रेन्द्र राक्षसा ये वसन्ति च।
न तु तत्रापि धर्म्मं ये विहरन्त्युद्धरनिष्टितौ ॥'
इति पाद्मे स्वर्गखण्डे १५ अध्यायः ॥ * ॥
(अस्माभिरधिष्ठितस्य रोगिणो लक्षणं यथा —
सक्रोधदृष्टिं भृकुटीदृढस्त्रं रक्षस्वनम्।
प्रहरन्तं प्रधावन्तं प्रलपन्तं भैरवाननम्॥
अशक्नुवन्तं बलिनं बलवन्निद्रं निशाचरम्।
निद्रालमशुचिं शूरं क्रूरं परुषभाषिणम्॥
रोषणं रक्तमाल्यस्त्रीरक्तमद्यामिषप्रियम्।
दृष्ट्वा च रक्तं मांसं वा लिहानं दशनच्छदौ।
हसन्तमन्नकाले च राक्षसाधिष्ठितं वदेत्॥'
इति वाग्भटे उत्तरस्थाने चतुर्थेऽध्याये ॥)
अष्टप्रकारविवाहान्तर्गतविवाहविशेषः। यथा
'आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः।
राक्षसो युद्धहरणात् पैशाचः कन्यकाछलात्॥"
इत्युद्वाहतत्त्वम्॥
(एतल्लक्षणान्तरञ्च यथा, मनुः। ३। ३३।
'हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते।'
राक्षसविवाहस्तु क्षत्त्रियस्यैव प्रशस्तः। यथा, तत्रैव। ३। २४
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः।
राक्षसं क्षत्त्रियस्यैकमासुरं वैश्यशूद्रयोः।'
निन्द्यप्रजोत्पत्तिजनकतया तु ब्राह्माद्यपेक्षया राक्षसादिविवाहस्य गर्हितत्वमाह तत्रैव। ३। ४१—४२।
'इतरेषु च शिष्टेषु नृशंसानृतवादिनः।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा।
निन्दितैर्निन्दिता नॄणां तस्मान्निन्द्यान् विवर्जयेत्॥ * ॥
अब्दविशेषे पुं क्लीं। यथा ऋक्संहितायाम्। ८। ४५।
इन्द्राग्निरेव दशम युग यत्
तन्नादमन्द परिधाविसद्मम्।
प्रमादयानन्दमतः परं यत्
स्याद्राक्षसं चानलसञ्ज्ञितञ्च॥ )
रक्ष समन्विते, त्रि॥

राक्षसी स्त्री (राक्षस+ङीप्।) कौणपी। राक्षसपत्नी। यथा रघुः। १२। ६१।
दृष्ट्वा विचिन्वता तेन लङ्कायां राक्षसीवृता।
जानकी विषवल्लीभिः परीतेव महौषधिः॥ )
दंष्ट्रा। दीर्घदन्ता इति यावत्। इति हेमचन्द्रः॥ चण्डा घोरनामगन्धद्रव्यमिति यावत्। इति मेदिनी॥ छायाद्वयम्। यथा —
प्रातःकाले मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्नस्ततः परम्॥
सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेत्।
राक्षसी नाम सा वेला गर्हिता सर्व्वकर्म्मसु॥"
इति तिथ्यादितत्त्वम्॥

राक्षसेन्द्र पुं (राक्षसानामिन्द्रः।) रावणः। इति त्रिकाण्डशेषः॥ (राक्षसपतिमात्रे च। यथा महाभारते। १। १५४। १८।
'किं। त्वामद्य पुरुषादे मम विप्रियकारिणम्।
पूर्व्वैर्या राक्षसेन्द्राणां सर्व्वासामयशस्करि ॥)

राक्षा स्त्री, (लाक्षा। रलयोरैक्यात् लस्य रत्वम्।) लाक्षा। इत्यमरः॥

राख ऋ शोषालमर्थयोः। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सक०-च सेट्।) शोषः खेदरहितीभावः। अलमर्थो भूषणं सामर्थ्यं निवारणञ्च। ऋ, अरराखत्। इति दुर्गादासः॥

राग, पुं (रञ्जनमिति रज्यतेऽनेनेति वा। रञ्ज+भावे करणे वा घञ्। घञि च भावकरणयोः। ६। ४। २७। इति नलोपः।) मात्सर्य्यम्। लोहितादि। (यथा कुमारे। १। ३४।
'रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलञ्चकार।')
क्लेशादि। अनुरागः। (यथा, आर्य्यासप्तशत्याम्। २७०।
सानवमेव छिन्नं परोपहितरागमदन
मघटितम्।
कर्षे इव कामिनीनां न शोभते निर्भरं प्रेम॥ )
मात्सर्य्यादि। नृपः। इति मेदिनी॥ चन्द्रः। सूर्य्यः। इति शब्दरत्नावली॥ मायादिः। (यथा, कुमारे। ३। १८।
'तस्मिन् कुरु दक्षिणेतर
चरणं निर्म्मितरागमेहि मे।')
इच्छामिति। रञ्जनम्। इति नानार्थरत्नमाला॥ प्रीतिः। यथा,—
'वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते॥
इति भगवद्गीताश्लोकटीकायां श्रीधरस्वामी॥ तस्य लक्षणं यथा —
सुखमप्यधिकं चित्ते सुखत्वेनैव रज्यते।
यतस्तु प्रयोगोत्कर्षात् स राग इति कीर्त्तितः।'
इत्युज्ज्वलनीलमणिः॥ * ॥
(अभिमतविषयाभिलाषः। स तु पञ्चक्लेशान्तर्गतः। यथा,—
'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः। रागोऽभिमतविषयाभिलाषः। इति शिशुपालवधटीकायां मल्लिनाथः। ४। ५५॥
'सुखानुशयी रागः।' इति पतञ्जलिः। गानप्राणीभूतरागा यथा। भरतमते हनुमन्मते च राग षड्विधः। तेषां नामानि यथा। भैरव १ कौशिक २ हिन्दोल ३ दीपक ४ श्रीराग ५ मेघ ६। हनुमद्दशसंगते प्रत्येकमेषां पञ्च रागिण्यः। सोमेश्वरकल्लिनाथयोर्मते प्रत्येकमेतेषां षट् रागिण्यः। एतेषां प्रत्येकमष्टौ पुत्राः एकैकपुत्रभार्य्या च। कल्लिनाथसोमेश्वरमते षड्रागा यथा। श्रीराग १ वसन्त २ पञ्चम ३ भैरव ४ मेघ ५ नटनारायण ६। इति नानाग्रन्थसंग्रहम्॥*॥
अथ रागस्य उत्पत्तिसङ्ख्यानानि।
"येस्तु चेतांसि रज्यन्ते जगत्सन्निवर्त्तिनाम्।
ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः॥
गोपीभिर्गीतमारब्धमेकैकं कृष्णसन्निधौ।
तेन जातानि रागाणां सहस्राणि तु षोडश॥
रागस्तेषु षट्त्रिंशद्रागा जगति विश्रुताः।

कालक्रमेण तत्रापि ह्रास एव तु दृश्यते ।
केचिद्वदन्ति ते रागाः सर्व्वे सन्तीति निश्चितम् ॥
मेरोरुत्तरतः पूर्व्वे पश्चिमे दक्षिणे तथा ।
समुद्रकण्ठे ये देशास्तत्रामीषां प्रचारणा ॥”
तथा च । अङ्गवङ्गकलिङ्गतैलङ्गभूलिङ्गद्राविड़-
सुरङ्गपलङ्गखिलाङ्गसौवीरकीरकाश्मीरनाभी-
रनार्व्वुरसिन्धुजालन्धरमगमगधनिषधमलयष्टी-
हयगाजाङ्गयमालवजालवमठमूठचोलोत्कलकु-
न्तलसिंहलचरिकेलकेरल-कोशलमल्लिवालमल्ल-
भल्लसौविदल्लवानकिष्णातगुर्ज्जरातगुल्लरकालञ्जर-
गौड़द्रविड़ौड्रान्तर्व्वेदिकार्य्यापाञ्चालसौराष्ट्रम-
वन्तीशावरखर्व्वकोकणनरूपकामरूपवरिराभ-
विदर्भदुर्म्मटवाटकीकटदेवेङ्गनटङ्गननाटभोटक-
वाटकरहाटकर्णाटकुन्तिकावन्तिककनकाज-
कान्यकुब्जभोजकाम्बोजनीजतुखारविहारवली-
हारवानगेहविदेहवाह्लीकचर्व्वरीकत्रिगर्त्तान-
र्त्तादिदेशेषु रागाः प्रचरन्तीति ।
“यस्य श्रवणमात्रेण रज्यन्ते सकलाः प्रजाः ।
सर्व्वानुरञ्जनाद्धेतोस्तेन राग इति स्मृतः ॥”*॥
अथ रागाः ।
“आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः ।
श्रीरागश्च ततः पश्चाद्वसन्तस्तदनन्तरम् ॥
हिन्दोलश्चाथ कर्णाट एते रागाः षडेव तु ।६।
षट्त्रिंशद्रागिणी तत्र क्रमशः कथिता मया ॥
धानसी मालसी चैव रामकिरी च सिन्धुड़ा ।
आशावरी भैरवी च मालवस्य प्रिया इमाः ॥६
वेलावली च पुरवी कानड़ा माधवी तथा ।
कोड़ा केदारिका चापि मल्लारदयिता इमाः ॥६
गान्धारी शुभगा चैव गौरी कौमारिका तथा ।
वेलोयारी च वैरागी श्रीरागस्य प्रिया इमाः ॥६
तुड़ी च पञ्चमी चैव ललिता पटमञ्जरी ।
गुर्ज्जरी च विभाषा च वसन्तस्य प्रिया इमाः ॥६
मायूरी दीपिका चैव देशकारी च पाहिड़ा ।
वराड़ी मोरहाटी च हिन्दोलस्य प्रिया
इमाः ॥६॥
नाटिका चाथ भूपाली रामकेली गड़ा तथा ।
कामोदा चापि कल्याणी कर्णाटस्य प्रिया
इमाः ॥६।३६॥*॥
अथ कालनियमः ।
“विभाषा ललिता चैव कामोदा पटमञ्जरी ।
रामकिरी रामकेली वेलोयारी च गुर्ज्जरी ॥
देशकारी च शुभगा पञ्चमी च गड़ा तुड़ी ।
भैरवी चाथ कौमारी रागिण्यो दश पञ्च च ।
एताः पूर्व्वाह्णकाले तु गीयन्ते गायनोत्तमैः ॥
वराड़ी मायूरी कोड़ा वैरागी चाथ धानसी ।
वेलावली मोरहाटी सप्तैता रागयोषितः ।
गेया मध्याह्नकाले तु यथा भारतभाषितम् ॥
गान्धारी दीपिका चैव कल्याणी पुरवी तथा ।
कानड़ा शावरी चैव गौरी केदारपाहिड़ा ॥
मायूरी मालसी नाटी भूपाली सिन्धुड़ा तथा ।
सायाह्ने चाथ रागिण्यः प्रगायन्ति चतुर्द्दश ॥
पुरुषा वसुभूपाद्या रागास्ते मालवादयः ।
प्रदोषे चापराह्णे च रजन्यां गानगोचराः ॥
दशदण्डात् परं रात्रौ सर्व्वेषां गानमीरितम् ।
मेघमल्लाररागस्य गानं वर्षासु सर्व्वदा ॥
श्रीपञ्चम्यां समारभ्य यावत् जन्मोत्सवं हरेः ।
तावद्वसन्तरागस्य गानमुक्तं मनीषिभिः ॥
शक्रोत्थानं समारभ्य यावद्दुर्गामहोत्सवम् ।
गीयते तद्बुधैर्नित्यं मालसी सा मनोहरा ॥
सर्व्वेषामिह रागाणां रागिणीनाञ्च सर्व्वशः ।
रङ्गभूमौ नृपाज्ञायां कालदोषो न विद्यते ॥
रागणालापवेदादौ नत्वग्रस्तदनन्तरम् ।
नान्यपञ्ची प्रगातव्या नृपाज्ञायां न दूषणम् ॥
रागाः षड़ेव रागिण्यः षट्त्रिंशच्चारु-
विग्रहाः ।
आगता नन्दवदनात् नन्दाख्यं समुपासते ॥”*॥
अथ ध्यानम् ।
“नितम्बिनीचुम्बितवक्त्रपद्मः
शुकद्युतिः कुण्डलवान् प्रमत्तः ।
सङ्गीतशालां प्रविशन् प्रदोषे
मालाधरो मालवरागराजः ॥ १ ॥
नीलोत्पलं कर्णयुगे वहन्ती
श्यामा सुकेशी च सुमध्यभागा ।
दरस्मितासाम्बुजरम्यवक्त्रा
सा धानसी पद्मसुचारुनेत्रा ॥ १ ॥
करे युता चाम्बुजयुग्मरम्या
स्तनस्तनाक विलोकयन्ती ।
कण्ठस्फुरन्मौक्तिकरत्नहारा
सा मालसी संकथिता विचित्रा ॥ २ ॥
प्रतप्तचामीकरचारुवक्त्रा
कर्णावतंसं कमलं वहन्ती ।
पुष्पं धनुः पुष्पशरैर्दधाना
चन्द्रानना रामकिरी प्रदिष्टा ॥३॥
महेन्द्रनीलद्युतिरम्बुजाक्षी
प्रवादयन्ती कपिलाश्रयन्त्रम् ।
विचित्ररत्नाभरणा सुकेशी
सा सिन्धुड़ा कान्तसमीपसंस्था ॥४॥
जवाप्रसूनद्युतिबिम्बवक्त्रा
मकचुपत्रं करयोर्दधाना ।
क्षौमांशुकाच्छादितगात्रयष्टि-
राशावरी रङ्गकिला विदग्धा ॥५॥
सरोवरस्था स्फटिकस्य मन्दिरे
सरोरुहैः शङ्करमर्च्चयन्ती ।
तालप्रयोगप्रतिरङ्गगीते
गौरीतनुर्भैरविका सतीयम् ॥”६॥*॥
अथ मल्लारः ।
“विहारशीलोऽतिसुकान्तदेहः
कान्ताप्रियो धार्म्मिकशीलयुक्तः ।
कामातुरः पिङ्गलनेत्रयुग्मो
मल्लाररागः प्रियकृत् सुवेशः ॥१॥
वल्लीवितोत्फुल्ललतानिकुञ्जे
दूतस्थितिः कान्तसमागमाय ।
वेलावली चम्पकमौलिनी सा
बाला विचित्राभरणा निरुक्ता ॥१॥
रहःसु कान्तप्रियमाणपत्रं
रम्यं वहन्ती कुचकुम्भयुग्मम् ।
दूर्व्वादलश्यामतनुः सकामा
पुरातनैः सा पुरवी निरुक्ता ॥२॥
अशोकवृक्षस्य तले निषण्णा
वियोगिनी वाणकणाङ्किताङ्गी ।
विभूषिताङ्गी भटितेव बाला
सा कानड़ा हेमलतेव तन्वी ॥३॥
संगृह्य संगृह्य गले दधाना
प्रसूनमाला दयितेन बाला ।
गौरी स्वकान्तागमचुम्बितास्या
सा सुन्दरी माधविका निकुञ्जे ॥४॥
सुकण्ठकण्ठी वादयति स्वभर्त्तु-
र्गानार्थमभ्यस्यति सम्मुखेन ।
तदैव ताला विहिता च माला
कोड़ा कला तानवती मता सा ॥५॥
ध्यात्वा समुत्थीयवती सुदेहा
केशप्रतिस्यन्दितवारिबिन्दुः ।
निष्पीड़यन्ती तिमिरांशुकान्तं
केदारिका रक्तपयोधरश्रीः ॥”६॥*॥
अथ श्रीरागः ।
“लीलावतारेण वनान्तराले
चिन्वन् प्रसूनानि वधूसहायः ।
विलासवेशो धृतिदिव्यमूर्त्तिः
श्रीराग एष प्रथितः पृथिव्याम् ॥१॥
सन्ध्यासुकाले शयमध्यदेशे
प्रवादयन्ती च पिनाकयन्त्रम् ।
धाराधराधातुविचित्रिताङ्गी
गान्धारिका गन्धसखं निधत्ते ॥ १ ॥
रसनया सुविचारकौतुकं
विदधती कविकोविदकौतुकम् ।
सुकवितान्दलभावगतत्परा
भगवती सुभगा वसुदाहृता ॥२॥
पुष्पोद्याने सार्द्धमालीकलापैः
क्रीड़न्तीयं कोकिलाकाकलीषु ।
रामा श्यामा सद्गुणानाञ्च सीमा
गौरी गौरी गौरवालोकदिष्टा ॥३॥
अट्टालिकायां स्फुटकौमुदीभिः
प्रकाशितायां रजनीविहारम् ।
अङ्गाय कान्तेन समं वसन्ती
कौमारिका कामकला वहन्ती ॥४॥
गौरीपादाम्भोजमभ्यर्च्चयन्ती
गन्धोद्भूतं गन्धमाल्यं दधाना ।
नानारत्नोपायनैर्भक्तिभावै-
र्वेलोयारी कथ्यते वालिकेयम् ॥५॥
उल्लासयन्ती धम्मिल्ले रहःस्थान् प्राणबन्धुना ।
मालतीकुसुमस्रग्भिर्व्वैरागी रागिणी स्मृता ॥”*॥
अथ वसन्तः ।
“चूताङ्कुरेणैव कृतावतंसो
विघूर्णमानारुणनेत्रपद्मः ।
पीताम्बरः काञ्चनचारुदेहो
वसन्तरागो युवतिप्रियश्च ॥१॥

एतेषां विजयं कृत्वा कार्य्यं भृत्यजयं ततः ।
कृत्वा भृत्यजयं सर्व्वं राजा जनपदं जयेत् ॥
कृत्वा तु विजयं तेषां शत्रून् बाह्यांस्ततो जयेत् ।
बाह्याश्च त्रिविधा ज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः ॥
गुरवस्ते यथापूर्व्वं तेषु यत्नपरो भवेत् ।
पितृपैतामहं मित्रममित्रञ्च तथा रिपोः ॥
कृत्रिमञ्च महाभाग मित्रं त्रिविधमुच्यते ।
तथापि च गुरुः पूर्व्वं भवेत्तत्रापि चादृतः ॥
स्वाम्यमात्यौ जनपदो दुर्गं सैन्यन्तथैव च ।
कोषो मित्रञ्च धर्म्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥
सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्त्तितः ।
तन्मूलत्वात्तथाङ्गानां राजा रक्ष्यः प्रयत्नतः ।
षडङ्गरक्षा कर्त्तव्या तथा तेन प्रयत्नतः ॥
अङ्गेभ्यो यस्त्वथैकस्य द्रोहमाचरतेऽल्पधीः ।
वधस्तस्य तु कर्त्तव्यः शीघ्रमेव महीक्षिता ॥
न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते ।
न भाव्यं दारुणेनापि तीक्ष्णादुद्विजते जनः ॥
काले मृदुर्यो भवति काले भवति दारुणः ।
राजा लोकद्वयापेक्षी तस्य लोकद्वयं भवेत् ॥
भृत्यैः सह महीपाल परिहासं विवर्ज्जयेत् ।
भृत्याः परिभवन्तीह नृपं हर्षवशं गतम् ॥
व्यसनानि च सर्व्वाणि भूपतिः परिवर्ज्जयेत् ।
लोकसंग्रहणार्थाय कृतकव्यसनो भवेत् ॥
शौटीरस्य नरेन्द्रस्य नित्यमुद्रिक्तचेतसः ।
जना विरागमायान्ति सदा दुःसेव्यभावतः ॥
स्मितपूर्व्वाभिभाषी स्यात् सर्व्वस्यैव महीपतिः ।
वध्येष्वपि महाभाग भ्रुकुटीं न समाचरेत् ॥
भाव्यं धर्म्मभृतां श्रेष्ठ स्थूललक्ष्येण भूभुजा ।
स्थूललक्ष्यस्य वशगा सर्व्वा भवति मेदिनी ॥
अदीर्घसूत्रश्च भवेत् सर्व्वकर्म्मसु पार्थिवः ।
दीर्घसूत्रस्य नृपतेः कर्म्महानिर्ध्रुवं भवेत् ॥
रागे दर्पे च माने च द्रोहे पापे च कर्म्मणि ।
अप्रिये चैव कर्त्तव्ये दीर्घसूत्रः प्रशस्यते ॥
राज्ञा संवृतमन्त्रेण सदा भाव्यं द्विजोत्तम ।
तस्यासंवृतमन्त्रस्य ज्ञेयाः सर्व्वापदो ध्रुवाः ॥
कृतान्येव तु कार्य्याणि ज्ञायन्ते यस्य भूपतेः ।
नारब्धानि महाभाग तस्य स्याद्वसुधा वशे ॥
मन्त्रमूलं सदा राज्यं तस्मान्मन्त्रं सुरक्षितम् ।
कर्त्तव्यं पृथिवीपालैर्मन्त्रभेदभयात् सदा ॥
मन्त्रवित् साधितो मन्त्रः संपदानां सुखावहः ।
मन्त्रच्छलेन बहवो विनष्टाः पृथिवीक्षितः ॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥
न यस्य कुशलस्तस्य वशे सर्व्वा वसुन्धरा ।
भवतीह महीभर्त्तुः सदा पार्थिवनन्दन ॥
नैकस्तु मन्त्रयेन्मन्त्रं न राजा बहुभिः सह ।
नारोहेद्विषमां नावं नापरीक्षितनाविकाम् ॥
ये चास्य भूमिं जयतो भवेयुः परिपन्थिनः ।
तानानयेद्वशे सर्व्वान् सामादिभिरुपक्रमैः ॥
यथा न स्यात् कृशीभावः प्रजानामनपेक्षया ।
तथा राज्ञा प्रकर्त्तव्यं स्वराष्ट्रपरिरक्षणम् ॥
मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनपेक्षया ।
सोऽचिराद्भ्रश्यते राज्यात् जीवितात्त्र सबान्धवः ॥
भृतो वत्सो जातबलः कर्म्मयोग्यो यथा भवेत् ।
तथा राष्ट्रं महाभाग भृतं कर्म्मसहं भवेत् ॥
यो राष्ट्रमनुगृह्णाति राज्यं स्वं परिरक्षति ।
संजातमुपजीवेत्तु विन्दते स महत् फलम् ॥
राष्ट्राद्धिरण्यं धान्यञ्च महीं राजा सुरक्षिताम् ।
महता तु प्रयत्नेन स्वराष्ट्रस्य च रक्षिता ॥
नित्यं स्वेभ्यः परेभ्यश्च यथा माता यथा पिता ।
गोपितानि सदा कुर्य्यात् स विभागी प्रियाणि च ॥
अजस्रमुपयोक्तव्यं फलं तेभ्यस्तथैव च ।
धर्म्मकर्म्मेदमायत्तं विधाने दैवमानुषे ।
तयोर्दैवमचिन्त्यं हि पौरुषे विद्यते क्रिया ॥
एवं महीं पालयतोऽस्य भर्त्तु-
र्लोकानुरागः परमो भवेच्च ।
लोकानुरागप्रभवा च लक्ष्मी-
र्लक्ष्मीवतश्चैव परा च कीर्त्तिः ॥"
इति मात्स्ये २०० अध्यायः ॥

राजपुत्त्रिका, स्त्री, ( राजपुत्त्री+संज्ञायां कन् । ) शरारिपक्षी । शराली इति भाषा ॥ यथा,—
"शरारिराटिराडिश्च हापुत्त्री राजपुत्त्रिका ॥"
इति जटाधरः ॥
राजकन्या च ॥ ( यथा, हरिवंशे । २५ । ४६ ।
"उत्पादयामास ततः पुत्त्रं वै राजपुत्त्रिका ॥" )

राजपुत्त्री, स्त्री, ( राज्ञः पुत्त्रीव । ) कटुतुम्बी । रेणुका । जाती । राजरीतिः । छुछुन्दरी । इति राजनिर्घण्टः ॥ मालती । यथा,—
"अतिमुक्तश्चाथ जातिर्मालती सुमना अपि ॥"
राजपुत्त्री मनोज्ञा——॥" इति जटाधरः ॥
राजकन्या च ॥ ( यथा, महाभारते ।१।७३।१।
"सुव्यक्तं राजपुत्त्री त्वं यथा कल्याणि ! भाषसे ।
भार्य्या मे भव सुश्रोणि ! ब्रूहि किं करवाणि ते ॥" )

राजपुष्पः, पुं, (पुष्पाणां राजा । राजदन्तादित्वात् परनिपातः ।) नागकेशरपुष्पवृक्षः । यथा,—
"चाम्पेयः केशरो नागकेशरः कनकाह्वयः ।
महौषधं राजपुष्पः फलकः खरवातनः ॥"
इति शब्दचन्द्रिका ॥

राजपुष्पी, स्त्री, ( राजप्रियं पुष्पमस्याः । ङीप् । ) करुणीवृक्षः । इति राजनिर्घण्टः ॥

राजप्रिया, स्त्री, ( राज्ञः प्रिया । ) करुणीवृक्षः । इति राजनिर्घण्टः ॥

राजफणिज्झकः, पुं, (राजते इति । राज्+अच् । राजो दीप्तिशाली फणिज्झकः । ) नागरङ्गवृक्षः । इति शब्दमाला ॥

राजफलं, क्ली, ( राजाभिधेयं फलम् । ) पटोलम् । इति त्रिकाण्डशेषः ॥

राजफला, स्त्री, (राजप्रियं फलमस्याः ।) जम्बूः । इति राजनिर्घण्टः ॥

राजबदरं, क्ली, ( राज्ञो बदरमिव प्रियत्वात् । ) रक्तामलकम् । लवणम् । इति मेदिनी ॥

राजबदरः, पुं, ( बदराणां राजा । राजदन्तादित्वात् परनिपातः । ) उत्तमकोलिः । तत्पर्य्यायः । नृपश्रेष्ठः २ नृपबदरः ३ राजवल्लभः ४ पृथुकोलः ५ तनुबीजः ६ मधुरफलः ७ राजकोलः ८ । अस्य गुणाः । सुमधुरत्वम् । शिशिरत्वम् । दाहार्त्तिपित्तवातहरत्वम् । वृष्यत्वम् । वीर्य्यवृद्धिकरत्वत् । शोषश्रमनाशित्वञ्च । इति राजनिर्घण्टः ॥

राजबीजी, [न्] त्रि, (राजा बीजी कारणं यस्य राजवंश्यः । इत्यमरः । २ । ७ । २ ॥

राजभट्टिका, स्त्री, हापुत्त्रीपक्षी । यथा,—
"गोभण्डीरः पङ्ककीरो हापुत्त्री राजभट्टिका"
इति जटाधरः

राजभद्रकः, पुं, कुष्ठम् । निम्बः । इति राजनिर्घण्टः ॥ पारिभद्रकः । इति वाधुपाटः ॥

राजभूयं, क्ली, ( राज्ञो भावः । राजन्+भू+क्यप् । ) राजत्वम् । यथा,—
"स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं तद्वत् ।" इत्यमरकोषदर्शनात् ॥

राजभोग्यं, क्ली, ( राज्ञा भोक्तुं योग्यम् । भुज्+ण्यत् । कुत्वञ्च ।) जातीकोषम् । प्रियालवृक्षे, पुं इति शब्दचन्द्रिका ॥

राजमण्डूकः, पुं, (मण्डूकानां राजा । राजदन्तादित्वात् परनिपातः ।) वृहद्भेकः । बड़ बेङ् इति भाषा । तत्पर्य्यायः । महामण्डूकः २ पीताङ्गः ३ पीतमण्डूकः ४ वर्षाघोषः ५ महारवः ६ । इति राजनिर्घण्टः ॥

राजमल्लः, पुं, राज्ञां मल्लः । राजार माल् इति भाषा । तत्पर्य्यायः । उल्लिक्तः २ उद्धतः ३ । इति त्रिकाण्डशेषः ॥

राजमार्गः, पुं, ( राज्ञो मार्गः । ) राजपथः । तद्विवरणं यथा,—
"राजमार्गं सौधयुक्तं यः करोति पतिव्रते ।
वर्षाणामयुतं सोऽपि शक्रलोके महीयते ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २४ अध्यायः ॥
अपि च ।
"त्रिंशद्धनूंषि विस्तीर्णो देवमार्गस्तु तैः कृतः ।
विंशं धनुर्ग्राममार्गः सीमामार्गो दशैव तु ॥
धनूंषि दश विस्तीर्णः श्रीमान् राजपथः कृतः ।
नृवाजिरथनागानामसम्बाधः सुसञ्चरः ॥
धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः
त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरथ्यका ॥
जङ्घापथश्चतुष्पादस्त्रिपादञ्च गृहान्तरम् ।
वृतीपादस्त्वर्द्धपादः प्राग्वंशः पादकः स्मृतः ।
अवकरः परिवारः पादमात्रः समन्ततः ॥"
इति देवीपुराणे गोपुरद्वारलक्षणं नामाध्यायः ॥
( अत्रामेध्योत्सर्गे दण्डविधानं कर्त्तव्यम् । यथा, मनुः । ६ । २८२ ।
"समुत्सृजेत् राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्याञ्चाशु शोधयेत् ॥"
नीतिः । यथा, हरिवंशे भविष्यपर्व्वणि । ५४ । २ ।

"इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये ।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः ॥")

सार्व्वभौमः । (यथा, रामायणे ।२।८२।१४।
"प्रयाणमिति च श्रुत्वा राजराजस्य योषितः ।
हित्वा यानानि यानार्हा ब्राह्मणं पर्य्यवारयन् ॥")

सुधाकरः । इति मेदिनी । जे, ३६ ॥

राजरीतिः, स्त्री, पित्तलविशेषः । तत्पर्य्यायः । पाकतुण्डी २ राजपुत्री ३ महेश्वरी ४ ब्राह्मणी ५ ब्रह्मरीतिः ६ कपिला ७ पिङ्गला ८ । अस्या गुणाः । तिक्तत्वम् । शीतलत्वम् । लवणत्वम् । शोधनत्वम् । पाण्डुवातकृमिप्लीहपित्तनाशित्वञ्च । इति राजनिर्घण्टः ॥

राजर्षिः, पुं, (राजा ऋषिरिव श्रेष्ठत्वात् ।) ऋतपर्णादिराजः । इति त्रिकाण्डशेषः ॥ तस्य स्मरणं कलिनाशनम् । यथा,—
"कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥"
इति महाभारतम् ॥

राजलक्ष्मा, [न्] पुं, (राज्ञो लक्ष्म चिह्नं यत्र ।) युधिष्ठिरः । इति धनञ्जयकोषः ॥ (राजचिह्नयुक्ते, त्रि ॥)

राजलक्ष्मीः, स्त्री, (राज्ञो लक्ष्मीः ।) राजश्रीः । यथा, ज्योतिषतत्त्वे ।
"मन्त्रप्रभावनिपुणः प्रमदाविलासः
श्वेतातपत्रनृपपूजितदेशलाभः ।
हस्त्यश्वलाभधनपूर्णमनोरथः स्यात्
शौक्री दशा भवति निश्चलराजलक्ष्मीः ॥"

राजवंश्यः, त्रि, (राजवंशे भवः । राजवंश + यत् ।) राजवंशोद्भवः । तत्पर्य्यायः । राजबीजी २ । इत्यमरः । २ । ७ । २ ॥

राजवर्त्म, [न्] क्ली, (राज्ञो वर्त्म पन्थाः ।) राजपथः । तत्पर्य्यायः । घण्टापथः २ संसरणम् ३ श्रीपथः ४ उपनिष्क्रमणम् ५ उपनिष्करम् ६ महापथः ७ । इति हेमचन्द्रः । ४ । ५३ ॥

राजवला, स्त्री, (राजते शोभते इति । राज् + अच् । राजा वला इति कर्म्मधारयः ।) भद्रवला । इत्यमरः । २ । ४ । १५३ ॥ गन्धभादालिया इति भाषा ॥

राजवल्लभः, पुं, (राज्ञां वल्लभः ।) राजादनी । राजाम्रः । राजवदरः । इति राजनिर्घण्टः ॥ नारायणदासकविराजकृतद्रव्यगुणग्रन्थविशेषः । यथा,—
"श्रीनारायणदासेन कविराजेन धीमता ।
प्रतिसंस्क्रियते द्रव्यगुणोऽयं राजवल्लभः ॥"
इति तस्य द्वितीयश्लोकः ॥

नृपप्रिये, त्रि ॥ (यथा, मार्कण्डेये । ४६ । ४६ ।
"दुष्प्रायो विना चैत्रैः परभूमिचरो वली ।
ग्राम एवाक्रिमीसंज्ञो राजवल्लभसंश्रयः ॥")

राजवल्ली, स्त्री, (राजप्रिया वल्ली ।) तोयवल्ली ।

राजवान्, [त्] त्रि, (राजास्त्यस्येति । राजन् + मतुप् । मस्य वः ।) राजमात्रयुक्तदेशः । यथा,—
"सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान् ॥"
इत्यमरः । २ । १ । १३ ॥
(नृपविशिष्टः । यथा, महाभारते ।५।१।७।
"रराज सा राजवती सभाढ्या
ग्रहैरिव द्यौर्विमलैरुपेता ॥")

राजवाहः, पुं, (राजानं वहतीति । वह + अण् ।) घोटकः । इति शब्दचन्द्रिका ॥

राजवाह्यः, पुं, (राज्ञां वाह्यः ।) राजवाहकहस्ती । तत्पर्य्यायः । उपवाह्यः २ । इति हेमचन्द्रः ॥ विजयकुञ्जरः ३ । इति त्रिकाण्डशेषः ॥ राजवहनीये, त्रि ॥

राजवृक्षः, पुं, (वृक्षाणां राजा । राजदन्तादित्वात् परनिपातः ।) आरग्वधवृक्षः । इत्यमरः ॥ पियालवृक्षः । इति मेदिनी ॥ लङ्कास्थायी वृक्षः । इति शब्दचन्द्रिका ॥ लङ्कासिज् इति भाषा ॥

राजशणः, पुं, (राजा शोभमानः शणः ।) पट्टः । इति शब्दमाला ॥ पाट् इति भाषा ॥

राजशफरः, पुं, इलिशमत्स्यः । इति हारावली ॥

राजशय्या, स्त्री, (राज्ञः शय्या ।) राज्ञः शयनीयम् । तत्पर्य्यायः । महाशय्या २ । इति हेमचन्द्रः ॥

राजशाकः, पुं, (राजप्रियः शाकः । शाकानां राजा इति वा ।) वास्तूकम् । इति राजनिर्घण्टः ॥

राजशुकः, पुं, (शुकानां राजा । राजदन्तादित्वात् परनिपातः ।) पक्षिविशेषः । राजा सूगा इति हिन्दी भाषा । तत्पर्य्यायः । प्राज्ञः २ शतपत्रः ३ नृपप्रियः ४ । इति राजनिर्घण्टः ॥

राजशृङ्गं, क्ली, राजच्छत्रम् । तत्पर्य्यायः । कनकदण्डकम् २ । इति त्रिकाण्डशेषः ॥

राजशृङ्गः, पुं, मद्गुरमत्स्यः । इति हेमचन्द्रः ॥

राजसः, त्रि, (रजसो भवः । रजस् + अण् ।) रजोगुणोद्भवः । तल्लक्षणं यथा,—
"आरम्भरुचिताधैर्य्यमसत्कार्य्यपरिग्रहः ।
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥"
आरम्भरुचिता फलार्थं कर्म्मानुष्ठानशीलता ॥ *॥
संक्षेपतस्तल्लक्षणं यथा,—
"येनास्मिन् कर्म्मणा लोके ख्यातिमिच्छति पुष्कलाम् ।
न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम् ॥"
तस्माद्गतिर्यथा,—
"देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः ।
तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥"
तद्गतिप्रकारा यथा,—
"झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः ।
द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः ॥
राजानः क्षत्त्रियाश्चैव राज्ञश्चैव पुरोहिताः ।
गन्धर्व्वा गुह्यका यक्षा विबुधानुचराश्च ये ।
तथैवाप्सरसः सर्व्वा राजसीषूत्तमा गतिः ॥"
इति वामने १२ अध्यायः ॥

राजसाहारा यथा,—
"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥"

राजसयज्ञो यथा,—
"अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥"

राजसतपो यथा,—
"सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥" *॥

राजसदानं यथा,—
"यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥"
इति श्रीभगवद्गीतायाम् १७ अध्यायः ॥

राजसत्यागो यथा,—
"दुःखमित्येव यत् कर्म्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥"

राजसज्ञानं यथा,—
"पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥"

राजसकर्म्म यथा,—
"यत्तु कामेप्सुना कर्म्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥" *॥

राजसकर्त्ता यथा,—
"रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः ॥"

राजसी बुद्धिर्यथा,—
"यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥"

राजसी धृतिर्यथा,—
"यया तु धर्म्मकामार्थान् धृत्या धारयतेऽर्ज्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥"

राजससुखं यथा,—
"विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥"
इति श्रीभगवद्गीतायाम् १८ अध्यायः ॥ * ॥

राजसपुराणानि यथा,—
"ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोधत ॥" ॥

राजसस्मृतयो यथा,—
"च्यावनं याज्ञवल्क्यञ्च आत्रेयं दाक्षमेव च ।
कात्यायनं वैष्णवञ्च राजसाः स्वर्गदा मताः ॥"
इति पाद्मोत्तरखण्डे ४३ अध्यायः ॥

राजसदनं, क्ली, (राज्ञः सदनम् ।) राजगृहम् । तत्पर्य्यायः । सौधः २ । इत्यमरः । २ । २ । १० ॥ भूपालभवनम् ३ सुधामयम् ४ । इति शब्दरत्नावली ॥ तद्भेदा यथा,—

"इत्युक्त्वा सपदि हितं प्रियं प्रियार्हैं
धाम स्वं गतवति राजराजभृत्ये ।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः ॥")
सार्व्वभौमः । ( यथा, रामायणे ।२।६२।१२।
"प्रयाणमिति च श्रुत्वा राजराजस्य योषितः ।
हित्वा यानानि यानार्हा ब्राह्मणं पर्य्यवारयन् ॥")
सुधाकरः । इति मेदिनी । जे, ३६ ॥
राजरीतिः, स्त्री, पित्तलविशेषः । तत्पर्य्यायः ।
पाकतुण्डी २ राजपुत्त्री ३ महेश्वरी ४ ब्रह्माणी ५
ब्रह्मरीतिः ६ कपिला ७ पिङ्गला ८ । अस्या
गुणाः । तिक्तत्वम् । शीतलत्वम् । लवणत्वम् ।
शोधनत्वम् । पाण्डुवातक्रिमिप्लीहपित्तनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥
राजर्षिः, पुं, ( राजा ऋषिरिव श्रेष्ठत्वात् । )
ऋतपर्णादिराजः । इति त्रिकाण्डशेषः ॥ तस्य
स्मरणं कलिनाशनम् । यथा,—
"कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥"
इति महाभारतम् ॥
राजलक्ष्मा, [ न् ] पुं, (राज्ञो लक्ष्म चिह्नं यत्र ।)
युधिष्ठिरः। इति धनञ्जयकोषः ॥ ( राजचिह्न-
युक्ते, त्रि ॥ )
राजलक्ष्मीः, स्त्री, ( राज्ञो लक्ष्मीः । ) राजश्रीः ।
यथा, ज्योतिषतत्त्वे ।
"मल्लप्रभावनिपुणः प्रमदाविलासः
श्वेतातपत्रनृपपूजितदेशलाभः ।
हस्त्यश्वगोधनपूर्णमनोरथः स्यात्
प्रोक्ते दशा भवति निश्चलराजलक्ष्मीः ॥"
राजवंश्यः, त्रि, ( राजवंशे भवः । राजवंश+
यत् । ) राजवंशोद्भवः । तत्पर्य्यायः । राज-
बीजी २ । इत्यमरः । २ । ७ । २ ॥
राजवर्त्म, [ न् ] क्ली, (राज्ञो वर्त्म यस्याः ।) राज-
पथः । तत्पर्य्यायः । घण्टापथः २ संसरणम् ३
श्रीपथः ४ उपनिष्क्रमणम् ५ उपनिष्करम् ६
महापथः ७ । इति हेमचन्द्रः । ४ । ५३ ॥
राजवला, स्त्री, ( राजते शोभते इति । राज्+
अच् । राजा वला इति कर्म्मधारयः । )
भद्रवला । इत्यमरः । २ । ४ । १५३ ॥ गन्ध-
भादालिया इति भाषा ॥
राजवल्लभः, पुं, ( राज्ञां वल्लभः । ) राजादनी ।
राजाम्रः । राजवदरः । इति राजनिर्घण्टः ॥
नारायणदासकविराजकृतद्रव्यगुणग्रन्थविशेषः ।
यथा,—
"श्रीनारायणदासेन कविराजेन धीमता ।
प्रतिष्ठं क्रियते द्रव्यगुणोऽयं राजवल्लभः ॥"
इति तस्य द्वितीयश्लोकः ॥
नृपप्रिये, त्रि ॥ ( यथा, मार्कण्डेये । ४६ । ४६ ।
"इष्टशायी विना चैतैः परभूमिचरो वली ।
याम एवाक्रमीसंज्ञो राजवल्लभसंश्रयः ॥" )
राजवल्ली, स्त्री, ( राजप्रिया वल्ली । ) तोयवल्ली ।
इति रत्नमाला ॥ उच्छा इति भाषा ॥

राजवान्, [त्] त्रि, ( राजास्त्यस्येति । राजन्+
मतुप् । मस्य वः । ) राजमात्रयुक्तदेशः ।
यथा,—
"सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राज-
वान् ॥"
इत्यमरः । २ । १ । १३ ॥
( शुभविशिष्टः । यथा, महाभारते ।५।१।७।
"रराज सा राजवती सभाद्या
ग्रहैरिव द्यौर्विमलैरुपेता ॥")
राजवाह्यः, पुं, (राजानं वहतीति । वह्+अण् ।)
घोटकः । इति शब्दचन्द्रिका ॥
राजवाह्यः, पुं, ( राज्ञां वाह्यः । ) राजवाहक-
हस्ती । तत्पर्य्यायः । उपवाह्यः २ । इति
हेमचन्द्रः ॥ विजयकुञ्जरः ३ । इति त्रिकाण्ड-
शेषः ॥ राजवहनीये, त्रि ॥
राजवृक्षः, पुं, (वृक्षाणां राजा । राजदन्तादित्वात्
परनिपातः । ) आरग्वधवृक्षः । इत्यमरः ॥
पियालवृक्षः । इति मेदिनी ॥ लङ्कास्थायी वृक्षः ।
इति शब्दचन्द्रिका ॥ लङ्कासिज् इति भाषा ॥
राजशणः, पुं, ( राजः शोभमानः शणः । ) पट्टः ।
इति शब्दमाला ॥ पाट् इति भाषा ॥
राजशफरः, पुं, इल्लिशमत्स्यः । इति हारावली ॥
राजशय्या, स्त्री, ( राज्ञः शय्या । ) राज्ञः शय-
नीयम् । तत्पर्य्यायः । महाशय्या २ । इति
हेमचन्द्रः ॥
राजशाकः, पुं, ( राजप्रियः शाकः । शाकानां
राजा इति वा । ) वास्तूकम् । इति राज-
निर्घण्टः ॥
राजशुकः, पुं, (शुकानां राजा । राजदन्तादित्वात्
परनिपातः । ) पक्षिविशेषः । राजा सूगा
इति हिन्दी भाषा । तत्पर्य्यायः । प्राज्ञः २
शतपत्रः ३ नृपप्रियः ४ । इति राजनिर्घण्टः ॥
राजशृङ्गं, क्ली, राजच्छत्रम् । तत्पर्य्यायः । कनक-
दण्डकम् २ । इति त्रिकाण्डशेषः ॥
राजशृङ्गः, पुं, मद्गुरमत्स्यः । इति हेमचन्द्रः ॥
राजसः, त्रि, ( रजसो भवः । रजस्+अण् । )
रजोगुणोद्भवः । तल्लक्षणं यथा,—
"आरम्भरुचिताधैर्य्यमसत्कार्य्यपरिग्रहः ।
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥"
आरम्भरुचिता फलार्थं कर्म्मानुष्ठानशीलता ॥*॥
संक्षेपतस्तल्लक्षणं यथा,—
"येनास्मिन् कर्म्मणा लोके ख्यातिमिच्छति
पुष्कलाम् ।
न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम् ॥"
तस्माद्गतिर्यथा,—
"देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः ।
तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥"
तद्गतिप्रकारा यथा,—
"झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः ।
द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः ॥
राजानः क्षत्त्रियाश्चैव राज्ञश्चैव पुरोहिताः ।
वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥
गन्धर्व्वा गुह्यका यक्षा विबुधानुचराश्च ये ।
तथैवाप्सरसः सर्व्वा राजसीषूत्तमा गतिः ॥"
इति वामने १२ अध्यायः ॥
राजसाहारा यथा,—
"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥"
राजसयज्ञो यथा,—
"अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥"
राजसतपो यथा,—
"सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥"*॥
राजसदानं यथा,—
"यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥"
इति श्रीभगवद्गीतायाम् १७ अध्यायः ॥
राजसत्यागो यथा,—
"दुःखमित्येव यत् कर्म्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥"
राजसज्ञानं यथा,—
"पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्-
विधान् ।
वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥"
राजसकर्म्म यथा,—
"यत्तु कामेप्सुना कर्म्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥"*॥
राजसकर्त्ता यथा,—
"रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः ॥"
राजसी बुद्धिर्यथा,—
"यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥"
राजसी धृतिर्यथा,—
"यया तु धर्म्मकामार्थान् धृत्या धारयते-
ऽर्ज्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥"
राजससुखं यथा,—
"विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥"
इति श्रीभगवद्गीतायाम् १८ अध्यायः ॥ * ॥
राजसपुराणानि यथा,—
"ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोधत ॥"
राजसस्मृतयो यथा,—
"च्यावनं याज्ञवल्क्यञ्च आत्रेयं दाक्षमेव च ।
कात्यायनं वैष्णवञ्च राजसाः स्वर्गदा मताः ॥"
इति पाद्मोत्तरखण्डे ४३ अध्यायः ॥
राजसदनं, क्ली, ( राज्ञः सदनम् । ) राजगृहम् ।
तत्पर्य्यायः । सौधः २ । इत्यमरः । २ । २ । १० ॥
भूपालभवनम् ३ सुधामयम् ४ । इति शब्द-
रत्नावली ॥ तद्वेरा यथा,—
"सौधोऽस्त्री राजसदनमुपकार्य्योपकारिका ।

ब्रह्मपुराणम् ।
"दिवारात्रौ च सन्ध्यायां गङ्गायाञ्च प्रसङ्गतः ।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः ॥"
रात्रिचराधिकारमुपक्रम्य आदिपर्व्वणि ।
"अतो रात्रौ प्रभवतो बलं मन्त्रविदो जनाः ।
गर्हयन्ति जनान् सर्व्वान् वनस्थान् शयितानपि ॥"
तत्रार्ज्जुनस्य प्रतिवचनम् ।
"सलुद्रे हिमवत्पार्श्वे गङ्गायाञ्च दुर्म्मते ।
रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः ॥"
देवलः ।
"महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।
तस्यां स्नानं न कुर्व्वीत काम्यनैमित्तिकादृते ॥"
अतएव कल्पतरुः । न नक्तं स्नायादिति बौधायनवचनं रात्रिस्नानविषयम् । एवञ्च गङ्गास्नानस्य दिवारात्रिकर्त्तव्यताविशेषात् तथाविनिमित्ततिथिविशेषस्यापि दिवारात्रिसम्बन्धित्वाविशेषः । इति प्रायश्चित्ततत्त्वम् ॥
(रात्रिकृत्यनियमाः यथा,—
"रात्रौ च भोजनं कुर्य्यात् प्रथमप्रहरान्तरे ।
किञ्चिदूनं समश्नीयात् दुर्ज्जरं तत्र वर्ज्जयेत् ॥
शरीरे जायते नित्यं देहिनः सुरतस्पृहा ।
अयत्नापात्येऽप्येदोषः शिथिलता तनोः ॥
बालेति गीयते नारी यावद्वर्षाणि षोड़श ।
ततस्तु तरुणी ज्ञेया द्वात्रिंशत् वत्सरावधि ॥
तदूर्द्ध्वमधिरूढ़ा स्यात् पञ्चाशद्वत्सरावधि ।
वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्ज्जिता ॥"
अधिरूढ़ा प्रौढ़ा ।
"निदाघशरदोर्बाला हिता विषयिणो मता ।
तरुणी शीतसमये प्रौढ़ा वर्षावसन्तयोः ॥
नित्यं बाला सेव्यमाना नित्यं वर्द्धयते बलम् ।
तरुणी ह्रासयेच्छक्तिं प्रौढ़ा जनयते जराम् ॥
सद्यो मांसं नवञ्चान्नं बाला स्त्री क्षीरभोजनम् ।
घृतमुष्णोदकं स्नानं सद्यः प्राणकराणि षट् ॥
पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥"
प्राणशब्दोऽत्र बलवाचकः । बालार्कः कन्यार्कः ।
"वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् ।
वयोऽधिकां स्त्रियं गत्वा तरुणः स्थविरायते ॥
आयुष्मन्तो मन्दजरा वपुर्व्वर्णबलान्विताः ।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥
सेवेत कामतः कामं बलाद्वाजीकृतो हि मे ।
त्र्यहात्तु निषेवेत मैथुनं शिशिरागमे ॥
वर्षावसन्तशरदोः पक्षाद्ग्रीष्मनिदाघयोः ॥"
सुश्रुतस्तु ।
"त्रिभिस्त्रिभिरहोभिर्हि समेयात् प्रमदान्नरः ।
सर्व्वेष्वृतुषु घर्म्मेषु पक्षात् पक्षाद्व्रजेद्बुधः ॥"
समेयात् सङ्गच्छेत् घर्म्मे ग्रीष्मे ।
"शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवानिशि ।
वर्षासु वारिदध्वाने शरत्सु सरसः स्मरः ॥
उपेयात् पुरुषो नारीं सन्ध्ययोर्न च पर्व्वसु ।
गोसर्गे चार्द्धरात्रे च तथा मध्यदिनेऽपि च ॥
विहारं भार्य्यया कुर्य्याद्देशेऽतिश्रमसंवृते ।
रम्ये यथाङ्गनागारे सुगन्धे सुखमारुते ॥
देशे गुरुजनावासे विवृतेऽतिप्रकारे ।
श्रूयमाणे यथाशीतुरुपर्ने न रमेत ना ॥
स्नातश्चन्दनलिप्ताङ्गः सुगन्धः सुमनोऽन्वितः ॥
भुक्तवृष्यः सुवसनः सुवेशः समलङ्कृतः ।
ताम्बूलवदनः पत्न्यामनुरक्तोऽधिकः स्मरः ॥
पुत्रार्थी पुरुषो नारीमुपेयात् शयने शुभे ।
अत्याशितोऽधृतिः क्षुद्वान् व्यथिताङ्गः पिपासितः ॥
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् ॥"
रोगी मैथुनसंवर्ज्जनीयरोगयुक्तः ।
"भार्य्यां रूपगुणोपेतां तुल्यशीलां कुलोद्भवाम् ।
अतिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृताम् ॥
सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः ।
रजस्वलामकामाञ्च मलिनामप्रियान्तथा ॥
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीड़िताम् ।
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम् ॥
सगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि ॥
नाभिगच्छेत् पुमान्नारीं भूरिरोगभयात्तथा ॥"
"स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम् ।
घातो मांसरसः स्वप्नः सुरतान्ते हिता अमी ॥
शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयः ।
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः ॥
रात्रौ जागरणं रूक्षं कफदोषविषापहम् ।
निद्रा तु सेविता काले धातुसाम्यमतन्द्रितम् ॥
पुष्टिवर्णबलोत्साहं वह्निदीप्तिं करोति च ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
तद्वैदिकपर्य्यायः । श्यावी १ क्षपा २ शर्व्वरी ३ अक्तुः ४ ऊर्म्या ५ राम्या ६ यम्या ७ नम्या ८ दोषा ९ नक्ता १० तमः ११ रजः १२ असिक्नी १३ पयस्वती १४ तमस्वती १५ घृताची १६ शिरिणा १७ मोकी १८ शोकी १९ ऊधः २० पयः २१ हिमा २२ वस्वी २३ । इति त्रयोविंशती रात्रिनामानि । इति वेदनिघण्टौ । १ । ७ ॥ (क्रौञ्चद्वीपस्थनदीविशेषः । यथा, मात्स्ये । १२२ । ८७ ।
"श्रुतास्त्वेव नद्यस्तु प्रतिवर्षं गताः शुभाः ।
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ॥")
रात्रिकरः, पुं, ( रात्रिं करोतीति । कृ+टः । ) चन्द्रः । इति हेमचन्द्रे निशाकरशब्ददर्शनात् ॥ ( कर्पूरः । इत्यमरः । २ । ६ । १३० ॥ )
रात्रिचरः, पुं, ( रात्रौ चरतीति । "चरेष्टः ।" ३।२।१६। इति टः । "रात्रेः कृति विभाषा ।" ६ । ३ । ७२ । इति पक्षे मुमभावः ।) राक्षसः । इत्यमरः । १।१।६३ ॥ रात्रौ गमनकर्त्तरि, त्रि ॥
रात्रिचरी, स्त्री, ( रात्रिचर+टित्वात् ङीप् । ) राक्षसी । यथा, भट्टिः । २ । २३ ।
"तं विप्रदर्शं कृतघातयत्नां
यान्तं वने रात्रिचरी डुढौके ।
जिघांसवेदं धृतभासुरास्त्रं
तां ताड़काख्यां निजघान रामः ॥"
रात्रिजलं, क्ली, ( रात्रेर्जलम् । ) कुज्झटिका । इति शब्दमाला ॥
रात्रिजागरः, पुं, ( रात्रौ जागर्त्तीति । जागृ+अच् । ) कुक्कुरः । इति हेमचन्द्रः ॥ रात्रौ जागरणकर्त्तरि, त्रि ॥
रात्रिजागरदः, पुं, ( रात्रौ जागरं जागरणं ददातीति । दा+कः । ) मशकः । इति राजनिर्घण्टः ॥
रात्रिञ्चरः, पुं, ( रात्रौ चरतीति । चर्+टः । "रात्रेः कृति विभाषा ।" ६।३।७२। इति मुम् ।) राक्षसः । इत्यमरः । १।१।६३ ॥ (स्त्रियां ङीप् । रात्रिञ्चरी ॥ ) रात्रौ गमनकर्त्तरि, त्रि ॥
रात्रिपुष्पं, क्ली, (रात्रौ पुष्प्यति विकाशते इति । पुष्प्+अच् ।) उत्पलम् । इति राजनिर्घण्टः ॥
रात्रिमटः, पुं, ( रात्रौ अटतीति । अट्+अच् । "रात्रेः कृति विभाषा ।" ६ । ३ । ७२ । इति मुम् । ) राक्षसः । इति त्रिकाण्डशेषः ॥ रात्रौ गमनकर्त्तरि, त्रि ॥
रात्रिमणिः, पुं, ( रात्रेर्मणिरिव । ) चन्द्रः । इति हारावली । १३ ॥
रात्रिवासः, [ स् ] क्ली, ( रात्रेर्वासो वस्त्रमिव ।) अन्धकारः । इति शब्दमाला ॥ रात्रौ शयनकालीनपरिधेयवस्त्रम् । यथा । नाशो मुहूर्त्ते उत्थाय मुक्तस्वापः रात्रिवासस्त्यक्त्वा शिरसि सहस्रदलकमलावस्थितं श्वेतवर्णं द्विभुजं वराभयकरं श्वेतमाल्यानुलेपनं स्वप्रकाशरूपं स्ववामस्थितरक्तशक्त्या स्वप्रकाशरूपया सहितं गुरुं विभाव्य मानसोपचारैराराध्य नमस्कुर्य्यात् । इति तन्त्रसारः ॥ अपि च ।
"शयनवास्यकारे च रात्रिवासो दिने तथा ।
स्नानाम्बरं कुवेशञ्च वर्ज्जयेत् शुष्कभोजनम् ॥"
इति कर्म्मोपचरितम् ॥
रात्रिविगमः, पुं, ( रात्रेर्विगमो यत्र । ) प्रभातम् । इति शब्दमाला ॥
रात्रिविश्लेषगामी, [ न् ] पुं, ( रात्रौ विश्लेषं विच्छेदं गच्छतीति । गम्+णिनिः । ) चक्रवाकः । इति राजनिर्घण्टः ॥
रात्रिवेदः, पुं, ( रात्रिं रात्रिशेषं वेदयति स्वरेणेति । विद्+णिच्+अच् । ) कुक्कुटः । इति शब्दरत्नावली ॥
रात्रिवेदी, [ न् ] पुं, ( रात्रिं रात्रिशेषं वेदयति स्वरेणेति । रात्रि+विद्+णिच्+णिनिः । ) कुक्कुटः । इति त्रिकाण्डशेषः ॥
रात्रिहासः, पुं, ( रात्रेर्हास इव शुभ्रत्वात् । रात्रौ [illegible] विकाशो यस्य इति वा । ) श्वेतोत्पलम् । इति शब्दरत्नावली ॥
रात्रिहिण्डकः, पुं, ( रात्रौ हिण्डति अन्तःपुरमध्ये भ्रमतीति । हिण्ड गतौ+ण्वुल् ।) अन्तःपुररक्षकः । इति शब्दरत्नावली ॥
रात्री, स्त्री, ( रात्रि+कृदिकारादिति ङीष् । ) निशा । इत्यमरटीकायां भरतः ॥ ( यथा, ऋग्वेदे । १० । १२७ । १ ।

ब्रह्मपुराणम् ।
"दिवारात्रौ च सन्ध्यायां गङ्गायाञ्च प्रसङ्गत: ।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलै: ॥"
रात्रिचराधिकारमुपक्रम्य आदिपर्व्वणि ।
"अतो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जना: ।
गर्हयन्ति जनान् सर्व्वान् वनस्थान् नृपतीनपि ॥"
तत्रार्ज्जुनस्य प्रतिवचनम् ।
"समुद्रे हिमवत्पार्श्वे नद्यामस्याञ्च दुर्म्मते ।
रात्रावहनि सन्ध्यायां कस्य गुप्त: परिग्रह: ॥"
देवल: ।
"महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।
तस्यां स्नानं न कुर्व्वीत काम्यनैमित्तिकादृते ॥"
अतएव कल्पतरु: । न नक्तं स्नायादिति बौधायनवचनं रागप्राप्तस्नानविषयम् । एवञ्च गङ्गास्नानस्य दिवारात्रिकर्त्तव्यत्वाविशेषात् तत्तन्निमित्ततिथिविशेषस्यापि दिवारात्रिसम्बन्धित्वेनाविशेष: । इति प्रायश्चित्ततत्त्वम् ॥
(रात्र्युक्तनियमा: यथा,—
"रात्रौ च भोजनं कुर्य्यात् प्रथमप्रहरान्तरे ।
किञ्चिदूनं समश्नीयात् दुर्ज्जरं तत्र वर्ज्जयेत् ॥
शरीरे जायते नित्यं देहिन: सुरतस्पृहा ।
अव्यवायाच्छ्लेष्ममेदोवृद्धि: शिथिलता तनो: ॥
बालेति गीयते नारी यावद्वर्षाणि षोडश ।
ततस्तु तरुणी ज्ञेया द्वात्रिंशत् वत्सरावधि ॥
तदूर्द्ध्वमधिरूढ़ा स्यात् पञ्चाशद्वत्सरावधि ।
वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्ज्जिता ॥"
अधिरूढ़ा प्रौढ़ा ।
"निदाघशरदोर्बाला हिता विषयिणी मता ।
तरुणी शीतसमये प्रौढ़ा वर्षावसन्तयो: ॥
नित्यं बाला सेव्यमाना नित्यं वर्द्धयते बलम् ।
तरुणी ह्रासयेच्छक्तिं प्रौढ़ोद्भावयते जराम् ॥
मद्यं मांसं नवान्नं बाला स्त्री क्षीरभोजनम् ।
घृतमुष्णोदके स्नानं सद्य: प्राणकराणि षट् ॥
पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्य: प्राणहराणि षट् ॥"
प्राणशब्दोऽत्र बलवाचक: । बालार्क: कन्यार्क: ।
"वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् ।
वयोऽधिकां स्त्रियं गत्वा तरुण: स्थविरायते ॥
आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विता: ।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयता: ॥
सेवेत कामत: कामं बलाद्वाजीकृतो हि मे ।
प्रकामन्तु निषेवेत मैथुनं शिशिरागमे ॥
त्र्यहाद्वसन्तशरदो: पक्षाद्वृष्टिनिदाघयो: ॥"
सुश्रुतस्तु ।
"त्रिभिस्त्रिभिरहोभिर्हि समेयात् प्रमदान्नर: ।
सर्व्वेष्वृतुषु घर्म्मेषु पक्षात् पक्षाद्व्रजेद्बुध: ॥"
समेयात् गच्छेत् घर्म्मे ग्रीष्मे ।
"शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवानिशि ।
वर्षासु वारिदध्वाने शरत्सु सरस: स्मर: ॥
उपेयात् पुरुषो नारीं सन्ध्ययोर्न च पर्व्वसु ।
गोसर्गे चार्द्धरात्रे च तथा मध्यदिनेऽपि च ॥
विहारं भार्य्यया कुर्य्याद्दिष्टेऽतिशयसंवृते ।
रम्ये यथाङ्गनागाने सुगन्धे सुखमारुते ॥
देशे गुरुजनासन्ने विहितेऽतिमनाकरे ।
श्रूयमाणे यथाहेतुवचने न रमेत ना ॥
स्नातश्चन्दनलिप्ताङ्ग: सुगन्ध: सुमनोऽन्वित: ॥
भुक्तवृष्य: सुवसन: सुवेश: समलङ्कृत: ।
ताम्बूलवदन: पत्न्यामनुरक्तोऽधिक: स्मर: ॥
पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे ।
अत्याशितोऽक्षुधित: क्षुद्वान् व्यथिताङ्ग: पिपासित: ॥
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् ॥"
रोगी मैथुनसंवर्द्धनीयरोगयुक्त: ।
"भार्य्यां रूपगुणोपेतां तुल्यशीलां कुलोद्भवाम् ।
अतिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृताम् ॥
सेवेत प्रमदां युक्त्या वाजीकरणबृंहित: ।
रजस्वलामकामाञ्च मलिनामप्रियान्तथा ॥
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीड़िताम् ।
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम् ॥
सगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि ॥
नाभिगच्छेत् पुमान्नारीं भूरिवैगुण्यशङ्कया ॥"
"स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम् ।
वातो मांसरस: स्वप्न: सुरतान्ते हिता अमी ॥
मूत्रकासज्वरश्वासकार्श्यपाण्ड्वामयक्षय: ।
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादय: ॥
रात्रौ जागरणं रूक्षं कफदोषविषार्त्तिजित् ।
निद्रा तु सेविता काले धातुसाम्यमतन्द्रितम् ॥
पुष्टिवर्णबलोत्साहं वह्निदीप्तिं करोति च ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
तद्वैदिकपर्य्याय: । श्यावी १ क्षपा २ शर्व्वरी ३ अक्तु: ४ ऊर्म्या ५ राम्या ६ यम्या ७ नम्या ८ दोषा ९ नक्ता १० तम: ११ रज: १२ असिक्नी १३ पयस्वती १४ तमस्वती १५ घृताची १६ शिरिणा १७ मोकी १८ शोकी १९ ऊध: २० पय: २१ हिमा २२ वस्वी २३ । इति त्रयोविंशती रात्रिनामानि। इति वेदनिघण्टौ। १ । ७ ॥ ( क्रौञ्चद्वीपस्थनदीविशेष: । यथा, मात्स्ये । १२२ । ८७ ।
"श्रुतास्तत्रैव नद्यस्तु प्रतिवर्षं गता: शुभा: ।
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ॥")

रात्रिकर:, पुं, ( रात्रिं करोतीति । कृ+ट: । ) चन्द्र: । इति हेमचन्द्रे निशाकरशब्ददर्शनात् ॥ ( कर्पूर: । इत्यमर: । २ । ६ । १३० ॥ )

रात्रिचर:, पुं, ( रात्रौ चरतीति । "चरेष्ट: ।" ३।२।१६। इति ट: । "रात्रे: कृति विभाषा ।" ६ । ३ । ७२ । इति पक्षे मुमभाव: ।) राक्षस: । इत्यमर: । १।१।६३ ॥ रात्रौ गमनकर्त्तरि, त्रि ॥

रात्रिचरी, स्त्री, ( रात्रिचर+टित्वात् ङीप् । ) राक्षसी । यथा, भट्टि: । २ । २३ ।
"तं विप्रदर्शं कृतघातयत्नां
यान्तं वने रात्रिचरी डुढौके ।
चिखांसवेदं हुतभासुराक्ष-
न्तां ताड़काख्यां निजघान राम: ॥"

रात्रिजलं, क्ली, ( रात्रेर्जलम् । ) कुज्झटिका । इति शब्दमाला ॥

रात्रिजागर:, पुं, ( रात्रौ जागर्त्तीति । जागृ+अच् । ) कुक्कुर: । इति हेमचन्द्र: ॥ रात्रौ जागरणकर्त्तरि, त्रि ॥

रात्रिजागरद:, पुं, ( रात्रौ जागरं जागरणं ददातीति । दा+क: । ) मशक: । इति राजनिर्घण्ट: ॥

रात्रिञ्चर:, पुं, ( रात्रौ चरतीति । चर्+ट: । "रात्रे: कृति विभाषा ।"६।३।७२। इति मुम् ।) राक्षस: । इत्यमर: ।१।१।६३ ॥ (स्त्रियां ङीप् । रात्रिञ्चरी ॥ ) रात्रौ गमनकर्त्तरि, त्रि ॥

रात्रिपुष्पं, क्ली, (रात्रौ पुष्प्यति विकाशते इति । पुष्प्+अच् ।) उत्पलम् । इति राजनिर्घण्ट: ॥

रात्रिमट:, पुं, ( रात्रौ अटतीति । अट्+अच् । "रात्रे: कृति विभाषा ।" ६ । ३ । ७२ । इति मुम् । ) राक्षस: । इति त्रिकाण्डशेष: ॥ रात्रौ गमनकर्त्तरि, त्रि ॥

रात्रिमणि:, पुं, ( रात्रेर्मणिरिव । ) चन्द्र: । इति हारावली । १३ ॥

रात्रिवास:, [ स् ] क्ली, ( रात्रेर्वासो वस्त्रमिव ।) अन्धकार: । इति शब्दमाला ॥ रात्रौ शयनकालीनपरिधेयवस्त्रम् । यथा । ब्राह्मे मुहूर्त्ते उत्थाय मुक्तस्वाप: रात्रिवासस्त्यक्त्वा शिरसि सहस्रदलकमलावस्थितं श्वेतवर्णं द्विभुजं वराभयकरं श्वेतमाल्यानुलेपनं स्वप्रकाशरूपं स्ववामस्थितरक्तशक्त्या स्वप्रकाशरूपया सहितं गुरुं विभाव्य मानसोपचारैराराध्य नमस्कुर्य्यात् । इति तन्त्रसार: ॥ अपि च ।
"शयनस्यान्धकारे च रात्रिवासो दिने तथा ।
स्नानाम्बरं कुवेशञ्च वर्ज्जयेत् शुष्कभोजनम् ॥"
इति लक्ष्मीचरित्रम् ॥

रात्रिविगम:, पुं, ( रात्रेर्विगमो यत्र । ) प्रभातम् । इति शब्दमाला ॥

रात्रिविश्लेषगामी, [ न् ] पुं, ( रात्रौ विश्लेषं विच्छेदं गच्छतीति । गम्+णिनि: । ) चक्रवाक: । इति राजनिर्घण्ट: ॥

रात्रिवेद:, पुं, ( रात्रिं रात्रिशेषं वेदयति रवेणेति । विद्+णिच्+अच् । ) कुक्कुट: । इति शब्दरत्नावली ॥

रात्रिवेदी, [ न् ] पुं, ( रात्रिं रात्रिशेषं वेदयति स्वरेणेति । रात्रि+विद्+णिच्+णिनि: । ) कुक्कुट: । इति त्रिकाण्डशेष: ॥

रात्रिहास:, पुं, ( रात्रेर्हास इव शुभ्रत्वात् । रात्रौ हासो विकाशो यस्य इति वा । ) श्वेतोत्पलम् । इति शब्दरत्नावली ॥

रात्रिहिण्डक:, पुं, ( रात्रौ हिण्डति अन्त:पुरमध्ये भ्रमतीति । हिण्ड गतौ+ण्वुल् ।) अन्त:पुररक्षक: । इति शब्दरत्नावली ॥

रात्री, स्त्री, ( रात्रि+कृदिकारादिति ङीष् । ) निशा । इत्यमरटीकायां भरत: ॥ ( यथा, ऋग्वेदे । १० । १२७ । १ ।

इत्यनेनैवेद' सिद्धे इदनुवन्धो वदम्बारम्भेदार्थं ।
इति दुर्गादासः ।
यत्र, व्य, यस्मिन् । स्थाने इति भाषा । यच्छब्दात्
सप्तम्यास्त्रल्प्रत्ययेन निष्पन्नम् । इति सिद्धान्त
कौमुदी । यथा श्रीमद्भगवद्गीतायाम् ।
"यत्र यत्र मनो देही धारयेत् सकलं धिया ।
स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ।" )

यथा, व्य, सादृश्यम् । साम्यम् । तत्पर्यायः । वत् २
वा ३ तथा ४ एव ५ एवम् ६ । इत्यमरः । ३ ।
४ । ६ ॥ ( यथा उत्तररामचरिते । २ । ४ ।
"वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति च ।
भवति च तयोर्भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ।")

यथाकामी [ न् ] त्रि ( यथा कामयते इति ।
कामि + णिनि । यद्वा, काममनतिक्रम्य प्रवृत्ति
रस्यास्तीति । यथाकाम + अत इनिठनाविति
इनि ।) स्वेच्छाचारी । तत्पर्यायः । स्वरुचिः २
स्वच्छन्दः ३ स्वैरी ४ यथाकृत ५ स्वतन्त्रः ६
निरवग्रहः ७ । इति हेमचन्द्रः । ३ । ९८ ।
नियन्त्रणः ८ । इति जटाधरः । ( यथा,
याज्ञवल्क्यसंहितायाम् । १ । ८१ ।
"यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ।")

यथाक्रम, व्य क्ली क्रमानुरूपम् । क्रममनतिक्रम्येति
व्याकरणम् । ( यथा रघुवंशे । ३ । १० ।
'यथाक्रमं पुंसवनादिकाः क्रियाः
धृतेश्च धीरः सदृशीर्व्यधत्त सः ।")
अपि च ।
"यथाक्रमेण पुत्त्रेण कार्य्या प्रेतक्रिया सदा ।
पतितापतिता वापि एकोद्दिष्टविधानतः ।"
इति श्राद्धतत्त्वम् ।

यथाजात त्रि, ( यथा न जातः इति यथा
जातः । जातोऽपि पुत्त्रादिरजात इव प्रतीयते
विद्यया शौर्य्येण वा न केनापि विदितत्वात् । )
मूर्खः । इत्यमरः । ३ । १ । ४८ ॥ नीचः । इति
जटाधरः ।

यथातथ, व्य, क्ली, ( यथा वर्त्तते तथानतिक्रम्य
इति अव्ययीभावः । अव्ययीभावश्च ।
२ । ४ । १८ । इति नपुंसकत्वम् । "ह्रस्वो
नपुंसके प्रातिपदिकस्य ।" १ । २ । ४७ । इति
ह्रस्वः । "नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।" २ ।
४ । ८३ । इति प्रथमाविभक्तेरमादेशः । )
यथार्थम् । इति शब्दरत्नावली । ( यथा, श्रीमद्भाग
वते । ६ । १ । ४१ ।
"एवं सधर्माण्यात्मनो भावा इव सतमोमयाः ।
पूर्व्वजन्मक्रियारूपैर्विभाव्यन्ते यथातथम् ।")

यथापूर्व्व, व्य, क्ली, ( पूर्व्वमनतिक्रम्य इत्यव्ययी
भावः ।) पूर्व्वादिमदेशकालानुरूपम् । यथा,—
"प्रकृतायां प्रतिष्ठायां प्राप्तायां प्रतिमासु
च ।
यथापूर्व्वं यथा भावः खङ्गादीनां न विच्युतः ।"
इति तिथ्यादितत्त्वधृतकालिकापुराणवचनम् ।

यथामुखीन त्रि ( यथामुख + "यथामुखसंमु
खस्य दर्शनः खः ।" ५ । २ । ६ । इति खः । )
मुखप्रतिबिम्बाश्रयः । मुखस्य सदृशं यथामुखं
प्रतिबिम्बं निपातनात् सादृश्येऽव्ययीभावः ।
यथामुखं दर्शनः यथामुखीनः । इति सिद्धान्त
कौमुदी । अपि च ।
"ततः सुवर्णरत्नाढ्यो हेमरत्नमयो मृगः ।
यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ।"
इति भट्टिः ।
मुखस्य सदृशं यथामुखं दर्पणादिस्थप्रतिबिम्ब
मुच्यते । सादृश्यार्थेऽव्ययीभावः । इति भरतः ।
निर्म्मलत्वात् सीतायाः अग्रतो यथामुखीन
प्रतिबिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमति स्म इव
शब्दलोपो द्रष्टव्यः । इति जयमङ्गला ।

यथायथ, व्य क्ली, ("यथास्वे यथायथम् ।" ८ ।
१ । १४ । योऽयमात्मा यच्चात्मीयं तद्यथास्वम् ।
तस्मिन् यथाशब्दस्य द्वित्वं क्लीवत्वञ्च निपा
त्यते । यथायथं ज्ञाता यथास्वभावमित्यर्थः यथा
त्मीयमिति वा । इति सिद्धान्तकौमुदी ।) यथा
स्वम् । इत्यमरः । ३ । ४ । १५ ॥ (अनुरूपम् ।
यथा श्रीमद्भागवते । १० । १८ । १६ ।
'तत्रोपाहूय गोपालान् कृष्णः प्राह विहार
वित् ।
हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम् ।"
'यथायथं वयोवयाद्यनुरूपम् ।" इति तट्टी-
कायां श्रीधरस्वामी । यथा च,—
"लिङ्गमव्यक्तमल्पत्वात् व्याधीनां तद्यथा
यथम् ।"
इति वाग्भटे निदानस्थाने प्रथमोऽध्याये ।
"यथायथं यस्य व्याधेर्यद्रूपं तदेवाव्यक्तम् ।"
इति तद्व्याख्याने विजयरक्षितः ।)

यथार्थ व्य, क्ली यथातथम् । इत्यमरः ।१।४।१५।
"द्वे अव्यभिचारिणि । अर्थमनतिक्रान्तं यथार्थं
यथास्वरूपं यथातथं उभयत्र अव्ययीभावः ।
यथार्थमेवेदम् । यथातथं वक्ति सभाहं विद्वान् ।"
इति भरतः । तत्पर्य्यायः ।
"सत्यं सम्यक् समीचीनमृतं तथ्यं यथातथम् ।
यथास्थितञ्च सद्भूतेऽलीके तु वितथानृते ।"
इति हेमचन्द्रः ।
( यथा, महाभारते । १३ । ६ । १८ ।
"कृतञ्चाप्यकृतं किञ्चित् कृते कर्म्मणि सिध्यति ।
सुकृतं दुष्कृतं कर्म्म न यथार्थं प्रपद्यते ।" )

यथार्ह व्य, क्ली, ( अर्हं योग्यमनतिक्रम्य इत्य
व्ययीभावः । ) यथायोग्यम् । यथा —
"कृत्वा तु तौ यथान्यायं यथार्हंस्तैश्च सत्कृतम् ।
उपविष्टौ कथां काञ्चिच्चक्रतुर्व्वृषपार्थिवौ ।"
इति देवीमाहात्म्यम् ।

यथार्हवर्ण, पु ( यथार्हं यथायोग्यं वर्णयतीति ।
वर्ण + अच् ।) चरः । इत्यमरः । २ । ८ । १३ ।
यथायोग्यमन्तर्ब्बृत्तं वर्णयति ।

यथाशक्ति, व्य, क्ली, शक्त्यनुसारेण । शक्तिमनति
क्रम्य । इति मुग्धबोधव्याकरणम् । ( यथा,
श्रीमद्भागवते । ६ । १२ । १६ ।
"पश्य मां निर्जितं शक्र ! वृक्णायुधभुजं मृधे ।
घटमानं यथाशक्ति तव प्राणजिहीर्षया ।')

यथाशास्त्र व्य, क्ली, शास्त्रानुसारेण । शास्त्रमनति
क्रम्य । यथा, मलमासतत्त्वे ।
'यथाशास्त्रञ्च निर्णीतो यथायाचि चिकित्
सितः ।
न शमं याति यो व्याधिः स ज्ञेयः कर्म्मजो बुधैः ।"

यथास्थित, त्रि, सत्यम् । इति हेमचन्द्रः ।२।१७६।

यथास्व, व्य, क्ली ( स्वमनतिक्रम्येत्यव्ययीभावः । )
यथावाञ्छितम् । इत्यमरः । ( यथा, सुश्रुते
चिकित्सास्थाने ८ अध्याये ।
'बन्धं ततोऽनुकुर्व्वीत परिषेकन्तु सर्पिषा ।
तृतीये दिवसे मुक्ता यथास्वं शोधयेद्भिषक् ।")

यथेप्सित व्य, क्ली, (ईप्सितमनतिक्रम्येति ।) यथा
वाञ्छितम् । ( यथा, भट्टिकाव्ये । २ । २८ ।
'तान् प्रत्यवादीदथ राघवोऽपि
यथेप्सितं प्रस्तुतकर्म्म धर्म्म्याम् ।
नपा मरुद्भिर्भवतां पुरापि
समुद्यतां नोऽरिषमिन्वनन्नु ।")
तत्पर्य्यायः । कामम् २ प्रकामम् ३ पर्य्याप्तम् ४
निकामम् ५ इष्टम् ६ । इत्यमरः । ३ । ६ । १५७ ।
षट् इष्टानतिक्रमे स्वच्छन्दप्रवृत्तौ कामादीनि
प्रायः क्रियाविशेषणानि क्रियाविशेषणत्वात्
क्लीवत्वमेषाम् । ईप्सितस्यानतिक्रमो यथेप्सित
मित्यव्ययीभावः । इति भरतः ।

यथेष्ट, व्य, क्ली, इष्टमनतिक्रम्य । यथेप्सितम् ।
यथा —
'कुर्य्याद्यथेष्टं तत् सर्व्वमीशास्ते स्वधनस्य वै ।'
इति दायभागः ।

यथेष्टचारी, [ न् ] पु, ( यथेष्टं चरतीति । चर +
णिनि । ) पक्षी । इति शब्दचन्द्रिका ।

यथेष्टाचरण, त्रि, ( यथेष्टं आचरणं यस्य । )
यथेष्टाचारी । यथा,—
"क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्मरणान्तमशौचकम् ।"
यथेष्टाचरणस्य दूरतेषान्याससक्तस्य । इति
शुद्धितत्त्वम् ।

यथेष्टाचारी [ न् ] पु, स्वेच्छाचारी । यथेष्ट-
माचरितुं शीलमस्य इत्यर्थे इनप्रत्ययेन निष्पन्नः ।

यथोचित, व्य, क्ली, ( उचितमनतिक्रम्येति । )
यथायोग्यम् । यथाप्राप्तम् । यथा । "अंशो
धर्म्मो यथोचितात् ।' इत्यमरः । २।८।२१ ।
( यथा च श्रीमद्भागवते । ४ । २२ ।५० ।
"कर्म्माणि च यथाकालं यथादेशं यथाबलम् ।
यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतम् ।"
त्रि, यथोचितमस्यास्तीति । अर्श आद्यच् ।
यथार्हः । यथा, मार्कण्डेये । १६ । २८ ।
"प्रथमाप्यायिता मर्त्त्यभागैर्यथोचितैः ।
दद्यात् कामनुयच्छंसो मत्यान् शस्यादिसिद्धये ।")

यथोदितं, व्य, क्ली, ( उदितं कथितमनतिक्रम्य इत्यव्ययीभावः ।) यथोक्तम् ॥ यथा,—
"यथोदितन्ते पितृभिः कुरु दारपरिग्रहम् ॥"
इति मार्कण्डेयपुराणे रुचिस्तोत्रम् ॥

यदा, व्य, (यस्मिन् काले इति । यद्+"सर्व्वैकान्यकिंयत्तदः काले दा ।"५।३।१५। इति दा ।) यस्मिन् काले । यथा,—
"यदा यदा सतां हानिर्व्वेदमार्गानुसारिणाम् ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥"
इति तिथ्यादितत्त्वधृतवचनम् ॥

यदि, व्य, पक्षान्तरम् । सम्भावना । तत्पर्य्यायः । चेत् २ यद्वा ३ । यथा,—
"यदीच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥"
इति मलमासतत्त्वम् ॥
"अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥"
इति श्रीभगवद्गीता ॥
"यद्युवाल्पतरसम्भारः स्यादपि पशुनैव कुर्य्यात् इति । यद्युवेति निपातसमुदायो यद्यर्थे ।" इति तिथ्यादितत्त्वम् ॥

यदीयं, त्रि, ( यस्येदमिति । यद्+"वृद्धाच्छः ।" ४ । २ । ११४ । इति छः ।) यत्सम्बन्धि । यथा,
"यदीयहलतो विलोक्य विपदं
कलिन्दतनया जलोद्धतगतिः ।
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम् ॥"
इति छन्दोमञ्जर्य्यां द्वितीयस्तवकः ॥

यदुः, पुं, (यजते इति । यज्+उः । पृषोदरादित्वात् जस्थाने दकारः ।) देवयान्यां जातो ययातेर्ज्येष्ठपुत्त्रः । तस्य वंशे पितृशापात् राजा चक्रवर्त्ती नासीत् । तद्वंशे द्वापरयुगस्यान्ते श्रीकृष्णोऽवतीर्णः । इति श्रीभागवतमतम् ॥ तस्य मातुलकन्याविवाहकारणं यथा,—
"जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव ह ।
पुत्त्रं ज्येष्ठं वरिष्ठञ्च यदुमित्यब्रवीद्वचः ॥
त्वं यदो ! प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा संप्रतिपत्स्यामि पाप्मानं जरया सह ॥
यदुरुवाच ।
सितश्मश्रुधरो दीनो जरया शिथिलीकृतः ।
वलीसन्ततगात्रश्च दुर्द्दर्शो दुर्ब्बलः कृशः ॥
अशक्तः कार्य्यकरणे पापभूतश्च यौवने ।
सहोपजीविभिश्चैव तां जरां नैव कामये ॥
सन्ति ते बहवः पुत्त्रा मत्तः प्रियतरा नृप ! ।
जरां ग्रहीतुं धर्म्मज्ञ ! पुत्त्रमन्यं वृणीष्व वै ॥
ययातिरुवाच ।
यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
मातामातुलसम्बन्धात् प्रजा वै ते भविष्यति ॥"
इति मात्स्ये ३१ अध्यायः ॥ ० ॥
( हर्य्यश्वराजपुत्त्रः । यथा, हरिवंशे । ९३।४४ ।
"तस्यैवं सुप्रवृत्तस्य पुत्त्रकामस्य धीमतः ।
मधुमत्यां सुतो जज्ञे यदुर्नाम महायशाः ॥" )

यदुनाथः, पुं, ( यदूनां नाथः । ) श्रीकृष्णः । इति हेमचन्द्रः । २ । १३३ ॥

यदुपतिः, पुं, (यदूनां पतिः ।) श्रीकृष्णः । यथा—
"यदुपतेः क्व गता मथुरापुरी
रघुपतेः क्व गतोत्तरकोशला ।
इति विचिन्त्य कुरुष्व मनः स्थिरं
न सदिदं जगदित्यवधारय ॥"
इति रूपसनातनगोस्वामिनौ ॥

यदृच्छा, स्त्री, स्वातन्त्र्यम् । तत्पर्य्यायः । स्वैरिता २ । इत्यमरः ।३।२।२॥ स्वरिता ३ । इति तट्टीका ॥ (यथा, गीतायाम् । २ । ३२ ।
"यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्त्रियाः पार्थ ! लभन्ते युद्धमीदृशम् ॥")

यद्युवा, व्य, यदि । यथा । "यद्युवाल्पतरसम्भारः स्यादपि पशुनैव कुर्य्यात् । यद्युवेति निपातसमुदायो यद्यर्थे । अपि च । यद्युवा उभयं चिकीर्षेद्धौत्रं ब्रह्मत्वञ्च इति तेनैव कल्पेन छत्त्रमुत्तरासङ्गं सोदकं कमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्यावृत्यान्यच्चेष्टेत् ।" इति तिथ्यादितत्त्वम् ॥

यद्वा, स्त्री, बुद्धिः । इति संक्षिप्तसारोणादिवृत्तिः ॥ पक्षान्तरञ्च ॥

यन्ता, [ऋ] पुं, (यम्+तृच् ।) सारथिः । (यथा, रघौ । ७ । ४४ ।
"प्रहारमूर्च्छापगमे रथस्था
यन्तॄनुपालभ्य निवर्त्तिताश्वान् ।
यैः सादिता लक्षितपूर्व्वकेतून्
तानेव सामर्षतया निजघ्नुः ॥ )
हस्तिपकः । इत्यमरः । ३ । ३ । ५९ ॥ ( यथा, माघे । ५ । ४२ ।
"सेव्योऽपि सानुनयमाकलनाय यन्त्रा
नीतेन वन्यकरिदानकृताधिवासः ।
नाभाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतः सहन्ते ॥" )
विरतिकारके, त्रि ॥

यन्त्रं, क्ली, (यच्छत्यनेनेति । यम+"गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ।" उणा० ४ । १६६ । इति त्रः । ) देवाद्यधिष्ठानम् ॥ ( यथा, देवीभागवते । ३ । २६ । २१ ।
"अर्च्चाभावे तथा यन्त्रं नवार्णमन्त्रसंयुतम् ।
स्थापयेत् पीठपूजार्थं कलसं तत्र पार्श्वतः ॥")
पात्रभेदः । नियन्त्रणम् । इति हेमचन्द्रः ॥ अयियन्त्रम् । इति महाभारतटीकायां नीलकण्ठः ॥ कामान् बन्दूक इत्यादि भाषा ॥ * ॥ वाद्यम् । यथा,—
"यन्त्रस्य गुणदोषौ न विचार्य्यौ मधुसूदन ! ।
अहं यन्त्रं भवान् यन्त्री न मे दोषा न मे गुणाः ॥"
इति महाभारतम् ॥
दारुयन्त्रादि । कल इति भाषा । यथा,—
"ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन ! तिष्ठति ।
भ्रामयन् सर्व्वभूतानि यन्त्रारूढ़ानि मायया ॥"
इति श्रीभगवद्गीतायाम् । १८ । ६१ ॥
अस्यार्थः ।"सर्व्वभूतानां हृन्मध्ये ईश्वरोऽन्तर्यामी तिष्ठति । किं कुर्व्वन् सर्व्वाणि भूतानि मायया निजशक्त्या भ्रामयंस्तत्तत्कर्म्मसु प्रवर्त्तयन् यथा दारुयन्त्रमारूढ़ानि कृत्रिमाणि भूतानि सूत्रधारो लोके भ्रामयति तद्वदिति । यद्वा यन्त्राणि शरीराणि आरूढ़ानि भूतानि देहाभिमानिनो जीवान् भ्रामयन्नित्यर्थः ।" इति श्रीधरस्वामी ॥
अथ पूजाधारयन्त्रम् । तत्र नारदीये ।
"आपोऽग्निर्हृदयं चक्रं विष्णोः चैत्रसमुद्भवम् ।
यन्त्रञ्च प्रतिमास्थानमर्च्चने सर्व्वदा हरेः ॥"
गौतमीये ।
"शालग्रामे मणौ यन्त्रे प्रतिमामण्डलेषु च ।
नित्यं पूजा हरेः कार्य्या न तु केवलभूतले ॥"
योगिनीतन्त्रे ।
"लिङ्गस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च ।
मण्डलस्थां महामायां यन्त्रस्थां प्रतिमासु च ।
जलस्थां वा शिलास्थां वा पूजयेत् परमेश्वरीम् ॥"
एतत् सर्व्वं यन्त्राभावे । कौलावलीये ।
"यत्रापराजितापुष्पं जवापुष्पञ्च विद्यते ।
करवीरे शुक्लरक्ते द्रोणं वा यत्र तिष्ठति ।
तत्र देवी वसेन्नित्यं तद्यन्त्रे चण्डिकार्च्चनम् ॥"
एतत् सर्व्वंयन्त्राभावे । तथा च ।
"यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतैव हि ।
देहात्मनोर्यथा भेदो यन्त्रदेवतयोस्तथा ॥"
तथा ।
"आदौ लिखेद्यन्त्रराजं देवतायाश्च विग्रहम् :
कामक्रोधादिदोषोत्थसर्व्वदुःखनियन्त्रणात् ॥
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ।
विना यन्त्रेण पूजायां देवता न प्रसीदति ॥
दुःखनियन्त्रणाद्यन्त्रमित्याहुस्तन्त्रवेदिनः ॥"
इति यन्त्रपूजाप्राधान्यम् ॥ * ॥
अथ धारणयन्त्राणि । तत्रादौ भुवनेश्वरीयन्त्रम् । शारदायाम् ।
"आलिख्याष्टदिगर्गलान्युदरगां पाशादिकं
चाधरं
कोष्ठेष्वङ्गमनून् परेषु विलिखेदष्टार्णमन्त्रद्वयम् ।
अच्पूर्व्वापरषट्कयुग् लववरान् योमास-
नानर्गले-
ष्वालिख्येन्द्रजलाधिपादिगुणशः पंक्तिद्वयात्तत्-
परम् ॥
कोष्ठेष्वष्टयुगार्णमात्मवह्नितां युग्मस्वरान्तर्गतां
मायां केशरगां दलेषु विलिखेन्मन्त्रं त्रिपंक्ति-
क्रमात् ।
त्रिः पाशाङ्कुशदेष्टितञ्च लिपिभिर्व्वीतं क्रमाद्-
युत्क्रमात्
पद्मस्थेन घटेन पङ्कजसरस्वनावाष्टतं वद्वहिः ॥"
घटार्गलमिदं यन्त्रं मन्त्रिणां श्रीप्रदं महत् ।
पाशश्रीशक्तिकन्दर्पकामशक्तीन्दिराङ्कुशाः ॥
प्रथमोऽष्टाक्षरो मन्त्रस्तव कामिनि रञ्जिनि ।
स्वाहान्तोऽष्टाचरः वह्निरपरः परिकीर्त्तितः ।

ॐ सद्योजाताय नमः ॐ वामदेवाय नमः। इति पञ्चमन्त्रान् प्रागादिक्रमेण लिखेत्। तद्बहिरष्टदलानि रचयित्वा तद्दलेषु मातृका-वर्णान् लिखेत्। तद्बहिर्वृत्तं त्र्यम्बकेन वेष्टयेत्। एतद्यन्त्रं जपहोमादिना सम्पूज्य धारयेत्। आयुरारोग्यैश्वर्य्यादिसिद्धिर्भवति ॥ * ॥ अथ मृत्युञ्जयस्य यन्त्रम्।

"मध्ये साध्याक्षराढ्यं भुवनमभिविलिखेन्मध्यमं दिग्दलेषु

कोणेष्वन्त्यं मनोस्तत् क्षितिभुवनमथो दिक्षु चन्द्रं विदिक्षु।

टान्तं यन्त्रं तदुक्तं सकलभयहरं चेड्भूतापमृत्यु-व्याधिव्यामोहदुःखप्रशमनमुदितं श्रीप्रदं कीर्त्तिदायि ॥" * ॥

जयकालीयन्त्रम्। यामले।

"आद्यं बीजं सबाध्यं प्रथमवसुदले तद्बहिः षट्कोणे

पूर्व्वाद्यं चाष्टबीजं तदनु वसुगदद्वन्द्वके बीजषट्कम्।

विन्यस्तं तत् स्वराढ्यं वसुदलविवरे साधया बीजषट्कं

कूर्चाभ्यामेव वीतं क्षितिपुरयुगयोरन्तरे यन्त्रराजम् ॥

देवीबीजत्रयं तत् प्रतिदिशमपरं शक्तिबीज-द्वयं तत्

कोणे कोणे लिखेद्यज्जगति च गुरुः शङ्करस्यापि विष्णोः ॥"

अथ शान्तिकादौ ताराधारणयन्त्रम्। तदुक्तं फेत्कारीये।

"योनियुग्मे लिखेन्मन्त्रं मन्त्री हेमशलाकया।

क्लीवहीनान् दीर्घवर्णान् षट्कोणे विलिखेत्ततः ॥

अष्टपत्रेष्वष्टवर्गान् तद्बहिर्भूपुरद्वयम्।

अष्टवज्रं भूपुरे च विलिख्य साधकोत्तमः ॥

सुवर्णपट्टे भूर्ज्जे वा रूप्ये वा साधु सुव्रते।

विलिखेद्धेमलेखन्या गन्धाष्टकसमन्वितम् ॥

दूर्व्वाकाण्डेन वा लिख्य कुशमूलेन वा पुनः ॥"

एकवीराकल्पे।

"वेष्टितं पीतवस्त्रेण जतुना परिवेष्टयेत् ॥

बध्नीयात् पट्टसूत्रेण शिशूनां कण्ठभूषणम्।

स्त्रीणां वामभुजे चैवमन्येषां दक्षिणे भुजे।

वन्ध्यापि लभते पुत्रं निर्धनो धनवान् भवेत् ॥

इमां रक्षां पुरा बध्वा ज्ञानार्थं गौतमादिभिः।

प्रीत्यर्थं पार्थिवैश्चान्यैः संग्रामे जयकाङ्क्षिभिः ॥"

अस्यार्थः। योनियुग्मे षट्कोणे। तस्य मध्ये हेमशलाकादिना भूर्ज्जपत्रादौ कुङ्कुमरोचना-रक्तचन्दनजटामांसीनां समांशं विधाय पङ्क्ति-क्रमेण मूलमन्त्रं लिखित्वा तस्य ह्रल्लेखारेफ-मध्ये अमुकस्य रक्षां कुरु कुरु अमुकीनां शुभं पुत्रमुत्पादयेति वा अस्य ज्ञानं कुरु कुरु इत्यादि वा साध्यसहितं विलिख्य षट्कोणे क्लीवभिन्नान् दीर्घवर्णान् आ ई ऊ ऐ औ अः इत्येकैकं लिखेत्। तदुक्तम्।

"स्वराणां मध्यगं यच्च तच्चतुष्कं नपुंसकमिति।" अष्टपत्रेष्वष्टवर्गान्। ऐं ह्रीं ॐ ऐं ह्रीं फट् स्वाहेति लिखेत्। तदुक्तम्।

"वाग्भवं कुलदेवीश तारकं वाग्भवं तथा।

ह्रल्लेखा चास्त्रमन्तान्ते वह्निजायावधिर्मनुः ॥

षडक्षरो मनुः प्रोक्तो मन्त्राणां सार ईरितः ॥"

अथ यन्त्रलिखनद्रव्यम्।

"काश्मीररोचनालाक्षाकस्तूरीमदचन्दनैः।

विलिखेद्धेमलेखन्या यन्त्राण्येतानि देशिकः ॥

भूमिस्पृष्टं शवस्पृष्टं यन्त्रं निर्म्माल्यलङ्घनम्।

निर्व्वीर्यं लङ्घितं मन्त्री यन्त्रं नैव च धारयेत् ॥

सौवर्णे राजते पात्रे भूर्ज्जे वा सम्यगालिखेत्।

अथवा ताम्रपट्टे वा गुटिकां कृत्य धारयेत् ॥

यावज्जीवं सुवर्णे स्यात् रौप्ये विंशतिवार्षिकम्।

भूर्ज्जे द्वादश वर्षाणि तदर्द्धं ताम्रपट्टके ॥"

इति तन्त्रसारः ॥ * ॥

अन्यत् कालिकापुराणे ७७।७८।७६ अध्यायेषु द्रष्टव्यम् ॥ * ॥ अथ यन्त्रसंस्कारः। वामके-श्वरतन्त्रे।

"स्नात्वा संकल्पयेन्मन्त्री गुरोरर्च्चनमाचरेत्।

पञ्चगव्यं ततः कृत्वा शिवमन्त्रेण मन्त्रितम् ॥

तत्र यन्त्रं क्षिपेन्मन्त्री प्रणवेन समाकुलम्।

तदुद्धृत्य ततश्चक्रं स्थापयेत् स्वर्णपात्रके ॥

पञ्चामृतेन दुग्धेन शीतलेन जलेन च।

चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमेन च ॥

पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात्।

तोयधपान्तरैः कुर्य्यात् पञ्चामृतविधिं बुधः ॥

घटकैः कलसैर्व्वाप्यष्टभिर्व्वारिपूरितैः।

कषायजलसम्पन्नैः कारयेत् स्नानमुत्तमम् ॥

स्नानं समाप्य तां देवीं स्थापयेत् स्वर्णपाटके।

यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रं प्रचोदयात् ॥

स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत्।

अष्टोत्तरशतं देवि! देवताभावसिद्धये ॥

आत्मशुद्धिं ततः कृत्वा षडङ्गैर्द्देवतां यजेत्।

तत्रावाह्य महादेवीं जीवन्यासञ्च कारयेत् ॥

उपचारैः षोडशभिर्दशसंख्यादिभिः सदा।

फलताम्बूलनैवेद्यैर्देवीं तत्र समर्च्चयेत् ॥

पट्टसूत्रादिकं दद्यात् वस्त्रालङ्कारमेव च।

अगुरुं चामरं घण्टां यथायोग्यं महेश्वरि!।

सर्व्वमेतत् प्रयत्नेन दद्यादात्महिते रतः ॥

ततो जपेत् सहस्रञ्च सकलेप्सितसिद्धये।

बलिदानं ततः कृत्वा प्रशमेच्चक्रराजकम् ॥

अष्टोत्तरशतं हुत्वा सम्पाताज्यं विनिःक्षिपेत्।

होमकर्म्मण्यशक्तश्चेत् द्विगुणं जपमाचरेत् ॥

धेनुमेकां समानीय स्वर्णस्रगाद्यलङ्कृताम्।

गुरवे दक्षिणां दद्यात् ततो देया विसर्ज्जनम् ॥"

अस्य प्रयोगः। कृतनित्यक्रियः स्वस्तिवाचन-पूर्व्वकं सङ्कल्पं कुर्य्यात्। आद्येत्यादि अमुक-गोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवतायाः पूजार्थं अमुकयन्त्रसंस्कारमहं करिष्ये। इति संकल्प्य पञ्चगव्यमानीय ह्रौमितिमन्त्रेणाष्टोत्तर-शतं आमन्त्र्य प्रणवेन यन्त्रं तत्र क्षिपेत्। तत उत्तोल्य स्नापयेत्। ततः शीतलजलचन्दन-गन्धकस्तूरीकुङ्कुमैः स्नापयित्वा पञ्चगव्यमानीय ह्रौमिति मन्त्रेणाष्टोत्तरशतमभिमन्त्र्य प्रणवेन पूर्व्ववत् शोधयित्वा स्नापयेत्। तत्र क्रमः। प्रथमं क्षीरेण स्नापयित्वा धूपं दद्यात्। एवं दध्ना घृतेन मधुना शर्करया च। ततोऽष्टभिः कलसैः कुङ्कुमगोरोचनाचन्दनमिश्रितैस्तोयैः स्नापयेत्। सर्व्वत्र स्नानं मूलमन्त्रेण ततो यन्त्रमुत्तोल्य कुशाग्रेण तत् स्पृष्ट्वा यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रं प्रचो-दयात्। इत्यष्टोत्तरशतमभिमन्त्र्य प्राणप्रतिष्ठां कुर्य्यात्। अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णु-महेश्वरा ऋषय ऋग्यजुःसामानि छन्दांसि चैतन्यं देवता प्राणप्रतिष्ठायां विनियोगः। तद्यथा। आं ह्रीं क्रों यं रं लं वं शं षं सं ह्रौं हंसः अमुकदेवतायाः प्राणा इह प्राणाः। एवं आमित्यादि अमुकदेवतायाः जीव इह स्थितः। एवं आमित्यादि अमुकदेवतायाः सर्व्वे-न्द्रियाणि। एवं आमित्यादि अमुकदेवताया वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति प्राणान् प्रतिष्ठाप्य तत्र प्रकृतदेवतामावाह्य षोडशोपचारैः पञ्चोप-चारैर्व्वा पूजयेत्। ततः पट्टसूत्रादिकं दत्त्वा अष्टोत्तरशतं जप्त्वा शक्तश्चेत् बलिं दद्यात्। ततोऽष्टोत्तरशतहोमं कृत्वा प्रत्याहुतिसम्पातं दद्यात्। होमाभावे द्विगुणजपः कार्य्यः। ततो दक्षिणां दत्त्वा अच्छिद्रावधारणं कुर्य्यात्। इति तन्त्रसारः ॥ * ॥ औषधपाकार्थयन्त्राणि यथा,—

"भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके।

कूपिकाकण्ठपर्य्यन्तं वालुकाभिश्च पूरिते ॥

भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते।

वालुकायन्त्रमेतद्धि यन्त्रतत्त्वबुधैः स्मृतम् ॥"

इति वालुकायन्त्रम् ॥

"निबद्धमौषधं सूतं भूर्ज्जे तत्त्रिगुणाम्बरे।

रसपोटलिकां काष्ठे दृढं बद्ध्वा गुणेन हि ॥

सन्धानपूर्णकुम्भान्तः सावलम्बनसंस्थितम्।

अधस्ताज्ज्वालयेदग्निं तत्तत्कल्पक्रमेण हि।

दोलायन्त्रमिदं प्रोक्तं स्वेदनाख्यं तदेव हि ॥"

सन्धानं काञ्जिकादि। इति दोलायन्त्रम् ॥ * ॥

"साम्बुस्थालीमुखे बद्धे वस्त्रे स्वेद्यं निधाय च।

पिधाय पच्यते यत्र तद्यन्त्रं स्वेदनं स्मृतम् ॥"

इति स्वेदनयन्त्रम् ॥

"अधःस्थाल्यां रसं क्षिप्त्वा निदध्यात्तन्मुखोपरि।

स्थालीमूर्द्ध्वमुखीं सम्यक् निरुध्य मृदुमृत्स्नया ॥

ऊर्द्ध्वस्थाल्यां जलं क्षिप्त्वा चुल्ल्यामारोप्य यत्नतः ॥

अधस्ताज्ज्वालयेदग्निं यावत् प्रहरपञ्चकम्।

स्वाङ्गशीतं ततो यन्त्रादुद्धरेत् सूतमुत्तमम्।

विद्याधराभिधं यन्त्रमेतत्तज्ज्ञैरुदाहृतम् ॥"

इति विद्याधरयन्त्रम् ॥

"वालुकाच्छ समस्ताङ्गं गर्त्ते क्षारचान्विता।

"यातुर्यातना पीड़ा।" इति सायणः॥ कर्म्मनाशकरी हिंसा। यथा, तत्रैव। ५। १२। २।

"नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः।"

"यातुं कर्म्मणां नाशकरीं हिंसाम्।" इति तद्भाष्ये सायणः॥)

यातु, त्रि, यातीति। या+"कमिमनीति।" उणा० १। ७३। इति तुः।) गन्ता। इत्युणादिकोषः॥ क्रियापदं चेत् गच्छतु॥

यातुघ्नः, पुं, (यातु हन्तीति। हन्+"अमनुष्यकर्त्तृके च।" ३। २। ५३। इति टक्।) गुग्गुलुः। इति राजनिर्घण्टः॥

यातुधानः, पुं, (यातूनि रक्षांसि दधाति पुष्णातीति। धा+बहुलमन्यत्रापीति युच्। स्वजातिपोषकत्वात्तथात्वम्।) राक्षसः। इत्यमरः। १। १। ६३॥ (यथा, भट्टिकाव्ये। २। २६।

"दृष्टिप्रपादिष्टां क्षतमार्त्तिजीने-
स्तद्यातुधानेष्वचिते प्रवर्षत्॥")

यात्तकः, पुं, (यातैवेति। यात+स्वार्थे कन्।) पान्थः। इति शब्दरत्नावली॥

यात्यं, त्रि, यतितव्यम्। यतनीयम्। यतधातोः कर्म्मणि घ्यण्प्रत्ययेन निष्पन्नम्॥

यात्रा, स्त्री, (या+"हुयामाश्रुभसिभ्यस्त्रन्।" उणा० ४। १६७। इति त्रन्। टाप्।) विजिगीषोः प्रयाणम्। तत्पर्य्यायः। व्रज्या १ अभिनिर्य्याणम् २ प्रस्थानम् ३ गमनम् ४ गमः ५। इत्यमरः। २। ८। ९५॥ प्रस्थितिः ७ यानम् ८ प्रायणम् ९। इति शब्दरत्नावली॥ यापनम्॥ (यथा, भागवते। १०। ८६। १५।

"यात्रामात्रं त्वहरहर्द्दैवादुपनमत्युत॥")

उत्सवः। इति मेदिनी। रे, ७८॥ (यथा, कथासरित्सागरे। १०। ८७।

"यात्रामुपवने द्रष्टुं जगाम सखिभिः सह॥"

व्यवहारः। यथा, गीतायाम्। ३। ८।

"शरीरयात्रापि च ते न प्रसिद्ध्येदकर्म्मणः॥"

"शरीरयात्रा देहव्यवहारः।" इति तत्र नीलकण्ठः॥) उपायः। इति विश्वः॥*॥ अथ यात्रादिनम्। भाद्रपौषचैत्रेतरमासेषु दूरयात्रा कर्त्तव्या। पूर्व्वस्यां दिशि रविशुक्रवारस्य प्राशस्त्यम्। दक्षिणस्यां मङ्गलवारस्य प्राशस्त्यम्। पश्चिमायां सोमशनिवारस्य प्राशस्त्यम्। उत्तरस्यां बृहस्पतिवारस्य प्राशस्त्यम्। पूर्व्वस्यां दिशि सोमशनिवारे न गन्तव्यम्। दक्षिणस्यां बृहस्पतिवारे केषाञ्चिन्मते बुधवारे च न गन्तव्यम्। पश्चिमायां रविशुक्रवारे। एवं उत्तरस्यां बुधमङ्गलवारे न गन्तव्यम्। द्वितीया तृतीया सप्तमी पञ्चमी दशमी एकादशी त्रयोदशी च एता यात्रायां प्रशस्ताः। अथोत्तमनक्षत्राणि। अश्विनी अनुराधा रेवती मृगशिरा मूला पुनर्व्वसु पुष्या हस्ता ज्येष्ठा। मध्यमनक्षत्राणि। रोहिणी पूर्व्वात्रयं चित्रा स्वाती शतभिषा श्रवणा धनिष्ठा। अधमनक्षत्राणि। उत्तरात्रयं विशाखा मघा आर्द्रा भरणी कृत्तिका अश्लेषा। तत्र नक्षत्रशूलकथनम्। स्वात्यां ज्येष्ठायाञ्च पूर्व्वदिग्गमनं निषिद्धम्। एवं पूर्व्वभाद्रपदे अश्विन्याञ्च दक्षिणदिग्गमनं पुष्ये रोहिण्याञ्च पश्चिमदिग्गमनं उत्तरफल्गुन्यां हस्तायाञ्च उत्तरदिग्गमनं निषिद्धम्। तत्रानुक्तकरणानि। गरं वणिजं विष्टिः। गरमपि केचिच्छस्तं मन्यते। अथ उत्तमलग्नानि। सिंहवृषकुम्भकन्यामिथुनानि। तत्र योगिनीनिर्णयः। प्रतिपदि नवम्याञ्च प्राच्यां योगिनी। तृतीयायां एकादश्याञ्चाग्निकोणे। पञ्चम्यां त्रयोदश्याञ्च दक्षिणे। द्वादश्यां चतुर्थ्याञ्च नैरृतकोणे। षष्ठ्यां चतुर्द्दश्याञ्च पश्चिमे। सप्तम्यां पूर्णिमायाञ्च वायुकोणे। द्वितीयायां दशम्याञ्च उत्तरदिशि। अष्टम्याममावास्यायाञ्च ईशानकोणे। तां दक्षिणे सम्मुखे च कृत्वा न गन्तव्यम्। पापयोगव्यहस्पर्शमासदग्धादिषु यात्रा न कर्त्तव्या। वारवेलाकालवेलाकुलिकवेलाविष्टिभद्रादिषु च यात्रा न कर्त्तव्या। द्विरागमनदिनं नववधूशब्दे द्रष्टव्यम्॥*॥ अथ गोयात्राप्रवेशक्रियाः। तत्र तिथयः। अमावस्याष्टमीचतुर्द्दशीविष्टिभिन्नाः। तत्र नक्षत्राणि। रोहिणी पूर्व्वफल्गुनी पूर्व्वाषाढ़ा पूर्व्वभाद्रपत् उत्तरफल्गुनी उत्तराषाढ़ा उत्तरभाद्रपत् श्रवणा भरणी चित्रा एतद्व्यतिरिक्तानि। योगाः। व्यतीपातभिन्नाः। वाराः। क्रूरभिन्नाः॥*॥ अथ नौकायात्रा। तत्र विहितनक्षत्राणि। अश्विनीहस्तापुष्यमृगशिरःपूर्व्वफल्गुनी-पूर्व्वाषाढ़ा-पूर्व्वभाद्रपदनुराधाधनिष्ठा-श्रवणाः। वाराः शुभग्रहाणाम्। तत्र लग्नं शोभनम्। तत्र शोभनश्चन्द्रः। तारा च शोभना विहिता। इति ज्योतिस्तत्त्वम्॥*॥

अथ यात्रायां शुभजनकद्रव्यदर्शनादि यथा,—

"धेनुर्व्वत्सप्रयुक्ता वृषगजतुरगा दक्षिणावर्त्तवह्नि-
र्दिव्यस्त्रीपूर्णकुम्भा द्विजनृपगणिकाः पुष्पमाला पताका।
सद्योमांसं घृतं वा दधि मधु रजतं काञ्चनं शुक्लधान्यं
दृष्ट्वा श्रुत्वा पठित्वा फलमिह लभते मानवो गन्तुकामः॥"

इति समयप्रदीपः॥

तत्राशुभजनकदर्शनं यथा,—

"सम्मुखे रजकं पश्चात् क्षुरिणं यदि पश्यति।
न गन्तव्यं तदा तस्मात् तैलवाप्यशोऽशुभः॥
अणो लुण्ठति गौः काको क्षुतं वा कुरुते नरः।
पश्यन् यात्रा न कर्त्तव्या क्लीवं पश्यति वाग्रतः॥"

इति ज्योतिराकरः॥

यात्राकाले विशेषदर्शनफलं यथा,—

"मृगाहिकपिमार्ज्जारश्वानः शूकरपक्षिणः।
नकुलो मूषिकश्चैव यात्रायां दक्षिणे शुभाः॥
विप्रकन्या शवो वन्दशङ्खभेरीवसुन्धराः।
जम्बुकोऽग्रखरादाश्च यात्रायां वामके शुभाः॥
धेनुस्त्रीपूर्णकुम्भानां यात्रायां दर्शनं शुभम्॥"

यात्राकाले अशुभलक्षणं यथा,—

"कार्पासौषधतैलञ्च पक्काङ्गारभुजङ्गमाः।
मुक्तकेशी रक्तमाल्यं नग्नाद्यशुभलक्षणम्॥"*॥

यात्राकाले छिक्कायाः फलं यथा,—

"छिक्काया लक्षणं वक्ष्ये लभेत् पूर्व्वे महाफलम्।
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात्॥
नैरृत्ये शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो भवेत्।
ईशाने मरणं प्रोक्तं प्रोक्तं छिक्काफलाफलम्॥"

अथ यात्रायां दिग्विशेषे विशेषनक्षत्राणि।

"कृत्तिकादौ तु पूर्व्वस्यां सप्त ऋक्षाणि वै व्रजेत्।
मघादौ दक्षिणे गच्छेदनुराधादि पश्चिमे॥
प्रशस्ता चोत्तरे यात्रा धनिष्ठादिषु सप्तसु।
अश्विनीरेवतीचित्राधनिष्ठाः सदलङ्कृताः।
मृगाश्विचित्रापुष्याश्च मूलहस्तौ शुभौ सदा॥"

यात्रादौ लग्नादिषु ग्रहस्थितिफलं यथा,—

"कन्याप्रदाने यात्रायां प्रतिष्ठादिषु कर्म्मसु।
शुक्रचन्द्रौ च लग्नस्थौ शुभदौ च द्वितीयगौ॥
शशिज्ञशुक्रजीवाश्च राशौ चाथ तृतीयके;
भौममन्दशशाङ्काकौ बुधः श्रेष्ठश्चतुर्थके॥
शुक्रजीवौ पञ्चमौ च श्रेष्ठौ बह्विवराहृतौ।
मन्दार्केन्दुज्ञना: षष्ठे गुरुचन्द्रौ च सप्तमे॥
शुक्रज्ञावष्टमे श्रेष्ठौ नवमस्थौ गुरुः शुभः।
चार्क्किचन्द्रा दशमे एकादशेऽखिला ग्रहाः॥
बुधोऽथ द्वादशे चैव भार्गवः सुखदो भवेत्॥"

इति गारुडे ६०। ६१ अध्यायौ॥*॥

अथ राजयात्रा।

"इदानीं सर्व्वधर्म्मज्ञ धर्म्मशास्त्रविशारद!।
यात्राकालविधानं मे कथयस्व महीक्षिताम्॥
यदा मन्येत नृपतिराक्रन्देन बलीयसा।
पार्ष्णिग्राहाभिभूतोऽरिस्तदा यात्रां प्रयोजयेत्।
योधास्तुष्टाः प्रभूताश्च प्रभूतञ्च बलं मम;
मूलरक्षासमर्थोऽस्मि तदा यात्रां प्रयोजयेत्॥
अशुद्धपार्ष्णिर्नृपतिर्न तु यात्रां प्रयोजयेत्।
पार्ष्णिग्राहाधिकं सैन्यं मूले निःक्षिप्य वा व्रजेत्॥
चैत्रं वा मार्गशीर्षं वा यात्रां यायान्नराधिपः।
चैत्री नश्यति नैदाघं हन्ति पुष्टिञ्च शारदी॥
एतदेव विपर्य्यस्तं मार्गशीर्षं नराधिपः।
शत्रोर्व्वा व्यसने यायात् कालः स तु सुदुर्लभः॥
दिव्यान्तरीक्षक्षितिजैरुत्पातैः पीड़ितं परम्।
षड्ऋक्षपीड़ावर्त्तमं पीड़ितञ्च तथा ग्रहैः।
ज्वलन्तीव तथैवोल्का दिशं यस्य प्रपद्यते।
भूकम्पोल्का दिशं यान्ति याञ्च केतुः प्रसूयते॥
निर्व्वातश्च पतेद्यत्र तं यायाद्वसुधाधिपः।
सव्वलव्यसनोपेतं तथा दुर्भिक्षपीड़ितम्॥
सम्भूतान्तरकोपञ्च क्षिप्रं यायादरिं नृपः।
यूकमाक्षीकबहुलं बहुपङ्कं तथाविलम्॥
नास्तिकं भिन्नमर्य्यादं तथामङ्गलवादिनम्।
अपेतप्रकृतिञ्चैव निरापञ्च तथा जयेत्॥
विद्विष्टनायकां सेनां तथा भिन्नां परस्परम्।
व्यसनासक्तनृपतिं बलं राजाभियोजयेत्॥

यात्रा
यात्रा

मैत्रं मृगशिरो हस्ता यात्रायामुत्तमाः स्मृताः ॥
भरणी कृत्तिकाश्लेषा विशाखा चोत्तरात्रयम् ।
मघा पशुपतिश्चैव यात्रायां मरणप्रदाः ॥
पूर्व्वे कुबेरे दहने निशाटे
यमे जलेशे पवने महेशे ।
त्याज्यं नरस्य प्रतिपत्क्रमेण
युग्मं तिथीनां प्रवदन्ति तज्ज्ञाः ।
स्यात् सम्मुखे यानमसुक्षयाय
पश्चाद्भवेत् सर्व्वशुभाय पुंसाम् ॥
सूर्य्यः शुक्रः कुजो राहुर्मन्दश्चन्द्रो गुरुर्बुधः ।
अग्रतः शोभना यात्रा पृष्ठतो मरणं ध्रुवम् ॥
पूर्व्वेणेन्द्रं दक्षिणे याम्यमार्द्रं
रोहिण्यं तथार्य्यमाप्याञ्च शूलम् ।
कामं यायात् साम्परायेषु कार्य्ये-
ष्वन्यत्रापि प्रेक्ष्य शूलानि भानि ॥"
तत्र दिक्शूलम् ।
"षष्ठाष्टमी चतुर्थी च नवमी द्वादशी तथा ।
चतुर्द्दशी कुहूश्चान्या यात्रायामशुभप्रदाः ॥
प्रायो जगुः सहजशत्रुदशाय संस्थाः
पापाः शुभाः सविलग्नं परिहृत्य खस्थम् ।
सर्व्वत्रगाः शुभफलं जनयन्ति सौम्या-
स्त्वष्टारिसंस्थममरारिगुरुं जिगीषोः ।
नाकालवर्षविद्युत्स्तनितेष्विदं कथञ्चिदपि यानम् ।
आसप्ताहात् दिव्यान्तरीक्षभौमैस्तथोत्पातैः ॥"
तत्र क्रमः ।
"राज्ञां यात्राविधिं वक्ष्ये जिगीषूणां पराजनीम् ।
नीराजनाविधिं कृत्वा सैनिकाश्चानयेत्ततः ।
गजानश्वान् रथानन्यानिति यात्राक्रमो मतः ॥"
तत्र नीराजनाविधिः ।
"वर्षान्तेऽभ्युदिते शुक्रे चन्द्रे पूर्णे शुभत्रये ।
अश्वनीराजनं कुर्य्यात् यथोक्तान्यपि सत्तमैः ॥
उदीचीं प्रस्थिते भानौ संक्रान्त्यां वा शुभे दिने ।
गजनीराजनं कुर्य्यात् महीपालो जिगीषिवान् ॥
वृश्चिकस्थे रवौ कुर्य्यात् पत्तिनीराजनाविधिम् ।
नौकानीराजनं कुर्य्यात् दक्षिणाशां प्रतिष्ठति ॥
अन्येषाञ्चैव यानानां विजयादशमीतिथिम् ।
ध्वजादीनाञ्च सर्व्वेषां शक्रोत्थाने नीराजनम् ॥
छत्रस्य नवदण्डस्य तथा सिंहासनस्य च ।
गृहस्य नगरस्यापि महाविषुवसंक्रमे ॥
आत्मनो युवराजस्य महिष्या मन्त्रिणान्तथा ।
स्वजन्मदिवसे राजा कुर्य्यान्नीराजनाविधिम् ॥
अभिषेकदिनं प्रोक्तमेषां जन्मदिनं मया ॥"
तद्यथा,—
"अश्वानां भास्करो देवो रेवन्तमिति संज्ञया ।
गजानां देवता शक्रः पत्तीनां कालिका मता ॥
नौकानां वरुणो देवो यानानान्तु जयन्तकः ।
अस्त्राणां देवता रामो यमः खड्गस्य पूज्यते ॥
ध्वजानां हनुमान् पूज्यो वृहस्पतिरिति क्रमात् ।
तान् पूजयित्वा विधिवद्देवान्नीराजयेन्नृपः ॥
द्वादशमहिषैः पुष्टैश्चामरघण्टास्वनादिभूषाढ्यैः ।
छागलैर्महिषद्विगुणैः पुरुषैस्तद्विगुणैश्चारुदीपि-
काभिः ॥
अथ वा सहस्रांशुदिने नीराजयेद्राजा ।
द्वादशवार्षैः रुचिरैः साङ्गोपाङ्गैरतोऽर्द्धतश्चोर्द्धैः ॥
तस्मार्द्धेतो आर्द्रैर्गजशतनीराजनं सम्भवति ।
छागलशतं वृषभशतं शतञ्च मेषाणाम् ॥
तुरगा दश कृष्णाङ्गा याज्ञाः पञ्च द्विपश्चैकः ।
मल्लुका हि कुक्कुटाश्चैकैकाः पत्तिलक्षणस्य ॥
नौकाशतकं चाज्ञं नवदशकं काचनादिनि-
घटितम् ।
चतुःशतमपि जन्तूनां नौकानीराजने राज्ञाम् ॥
यदा द्विपदं यानं सर्व्वेषामिष्यते तुरगैः ।
तुदशावचरवसितैर्योग्याङ्गैर्योग्यवर्णैश्च ॥
अष्टाभिर्धातुभिः कुर्य्याद्दण्डनीराजनाविधिम् ।
गजाश्वनरनौकाभिर्द्विगुणाभिर्यथोत्तरम् ।
रत्नैर्नानाविधैरन्यैर्धातुभिर्वसनैस्तथा ॥
सिंहासनैश्च योग्यैश्च कुर्य्यान्नीराजनाविधिम् ।
गृहनीराजनाद्वित्तं नरस्याथ निगद्यते ॥
श्वभिः खरैः शृगालैश्च आविकैश्छागयोधतैः ।
पुरं नीराजयेद्राजा चिरस्थायिसिद्धये ॥
श्वा दशाश्वस्तदर्द्धेन नरश्चैव तदर्द्धतः ।
चाम्रादीनां तथैवैकं रत्नं नानाविधन्तथा ॥
अस्त्राणि धातवश्चैव वस्त्राणि च फलानि च ।
वनजाः स्थलजाश्चैव जलजाश्चैव जन्तवः ॥
नवग्रहाश्च स्वर्णाद्याः शैलाः सप्त घटास्तथा ।
योग्यधातुसमुद्भूता नौकाखड्गत्रयन्तथा ॥
निजदेहमितं स्वर्णं रजतं ताम्रमेव वा ।
आत्मनीराजने दद्यादृत्विग्भिरसंस्थितिम् ॥
अस्त्रैर्नानाविधैः कुर्य्याद्युवराजनीराजनम् ।
अलङ्कारैश्च विविधैर्द्देवीनीराजनं मतम् ॥
मन्त्रिनीराजनं राजा धनेनैव समाचरेत् ॥
अमात्यानां सैनिकानां विप्राणां धनिनान्तथा ।
वस्त्रैर्नीराजनं कुर्य्यादिति भोजस्य सम्मतम् ॥
नीराजनाया वस्तूनि न पश्येत् पुनः स्पृशेत् ।
सप्तकृत्वः परिभ्राम्य कुर्य्यान्नीराजनाविधिम् ॥
न्यसेद्वा पर्व्वतेषु गहने वा जलेऽपि वा ।
दैवज्ञवैद्यदीनेभ्यः प्रयच्छेद्वा यथायथम् ॥
इति संक्षेपतः प्रोक्तो मया नीराजनाविधिः ।
अनेन विधिना राजा सुचिरं सुखमश्नुते ॥"
तथा हि गर्गः ।
"नीराजना महीन्द्राणां निघ्नन्ति विपदोऽखिलाः ।
सैव सन्नहनं राज्ञां कञ्चुकेनेव संयतः ॥
नीराजनावन्दितानां न भयं विद्यते क्वचित् ।
नीराजनाविहीनानां नश्येयुः सर्व्वसम्पदः ॥"
तथा च वात्स्यः ।
"ये भूमिपालाः प्रतिवत्सरान्ते
कुर्व्वन्ति नीराजनकर्म्म सम्यक् ।
तेषां न लक्ष्मीः क्षयतामुपैति
साम्राज्यलक्ष्मीः करगैव तेषाम् ॥
एवं नीराजनं कृत्वा राजा प्रस्थानमाचरेत् ॥"
इति नीराजनाविधिः ॥ * ॥
अथ यात्रा ।
"गुणातिशयसम्पन्नः शत्रुं यायाज्जिगीषया ।
यदि पश्चात् प्रकोपो न यदि राष्ट्रे न कण्टकाः ॥
संस्थायान्यत्र यायाद्वा पार्ष्णिग्राहेण प्रभुणा ॥
रात्रावुलूको निगिरन्ति काकान्
काकोऽप्युलूकान् रजनीव्यपाये ।
इति स्वकालं समुदीक्ष्य यायात्
कार्य्ये फलन्तीह समीहितानि ॥
प्रबलशकुनोपेतं दुर्भिक्षादिप्रपीडितम् ।
सम्भूतान्तरकोपितं न यायात् पृथिवीपतिः ॥
निजदेशानुकूल्ये हि प्रातिकूल्ये परस्य च ।
यायान्नृपो यतो दैवं बलमेतत् परं मतम् ॥"
अन्यत्र तु ।
"निरातङ्के निरुत्पाते निरुद्विग्ने निरामये ।
विपक्षे प्रतिगच्छन्ति राजानो विजिगीषवः ॥"
इति युक्तिकल्पतरुः ॥
युद्धयात्रायामशुभदर्शनं यथा,—
"तस्य निर्गच्छतो गेहात् स्थाणोऽस्थि तुखलो-
ऽभवत् ।
ध्वजे चरोह कापोतः शिवा श्यामा च
दक्षिणा ॥
पिङ्गला चटुर्गोधा च शूकरी केरली तथा ।
गजवानरसैनाजशिरश्छिन्नाच पामनः ॥
पथं विभिन्दते सर्पः कुम्भोदकं चर्म्मान्वितः ।
ररास वानरो भग्नो मार्ज्जारो ध्वनिभैरवम् ॥
तैलतक्रदधिकेशतुषाभ्रकादिदर्शनम् ।
[illegible] रवम् ॥
तुषकार्पासधान्यानां लिङ्गस्यास्य च दर्शनम् ।
रक्ताम्बरधरो नग्नः पङ्काङ्गश्च तथा नरा ॥
जटाटं शङ्कु चाप उल्कापातश्च तारकाः ।
दिशां दाहश्च भूकम्पाः खरभः कलुषं नभः ॥
निस्तेजस्तपते भानुर्नद्यः प्रतिमुखावहाः ।
उष्णोदकं महाकूपं दृश्यं दीर्घिकासु च ॥
अकालविस्तृतिः पुष्पफलानामभूत्तदा ।
शीत उष्णविपर्य्यासा मेघनादाश्च दारुणाः ॥
आरण्यसत्त्वा ग्रामेषु ग्रामजारण्यवासिनः ।
क्रोष्टृसर्पचकूटाश्च शशस्थानः पिपीलिकाः ॥
श्येनाद्या मधुतो चेटा गृहागाश्च तथैव च ।
एते च पुरप्राकारे निपतन्त्युत्पतन्ति च ॥
दुर्गन्धः शार्करो वायुर्दीना योधा हतप्रभाः ।
प्रभूतमूत्रासुपातानि गजा अश्वाः प्रचक्रिरे ।
ध्वजच्छत्रपताकानां स्फुटनं दण्डभिन्दनम् ।
कलङ्कमसि चक्रे च हता दुन्दुभिरेव च ॥
ज्यातलाकूटनञ्चापि नाराचानाञ्च कुब्जता ।
गदानां मुद्गराणाञ्च शीर्य्यता शूलभिन्दता ॥
शुष्कप्ररोहण्यथाकैवाङ्गपातस्तथैव च ।
प्रतिमारुदितं स्वेदो मृतकानाञ्च जल्पनम् ॥
गवां रासभमारोहः स्त्रीणाञ्च वक्रपक्षता ।
स्त्रीरुते अविच्छायादि स्त्राणावि शिशुशोभनम्
बालानां पातनं युद्धे निस्त्रिंशाः सकलाः प्रजाः ।
मक्षिकादंशमण्डूकवहुगोनासदर्शनम् ॥
निस्तेजा न वहेद्वह्निः सधूमः स्फुटते मुहुः ॥
एवंविधान् तथोत्पातान् दृष्ट्वा घोरेण वासव
पप्रच्छ नारदं सोऽथ किमेतदिति तं द्विज ! ॥"
इत्यादि देववतारे घोरवधाध्यायः ॥

अथ द्वादशयात्रा।

प्रणम्य जगतां नाथं कलिकल्मषनाशनम्।
द्वादशयात्रातत्त्वानि वक्ति श्रीरघुनन्दन॥

तत्रादौ द्वादशयात्राकालस्य मुख्योपादेयत्वात् आदौ स एव निरूप्यते। तद्यथा स्कन्दपुराणे

इन्द्रद्युम्न उवाच।

वैशाखादिषु मासेषु यात्रापूजाविधिं मुने।
श्रोतुमिच्छामि देवस्य यथावद्वक्तुमर्हसि॥

जैमिनिरुवाच।

वैशाखादिषु मासेषु देवदेवस्य शार्ङ्गिणः।
या या द्वादश यात्राः स्युस्ता हि वक्ष्यामि ते शृणु॥

वैशाखे चान्दनी यात्रा ज्यैष्ठे स्नापनपौर्णिमा।
आषाढ़े रथयात्रा स्यात् श्रावणे शयनी तथा॥
भाद्रे दक्षिणपार्श्वीया आश्विने वामपार्श्विका।
उत्थानी कार्त्तिके मासि छादनी मार्गशीर्षके
पौषे पुष्याभिषेकः स्यान्माघे शाल्योदनी तथा।
फाल्गुने दोलयात्रा स्याच्चैत्रे मदनभञ्जिका॥
एकैका मुक्तिदा सर्व्वा धर्म्मकामार्थसाधना॥

अथ यात्राविधिः। स्कान्दे

वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता
तत्र मां लेपयेद्गन्धलेपनैरतिशोभनैः
वैशाखस्यामले पक्षे तृतीया पापनाशिनी।
स्वयमाविष्कृता चैषा प्राजापत्यर्क्षसंयुता॥
यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम्।
वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम्॥
वैष्णवा जयशब्देश्च पूजयित्वा तथा हरिम्
नानाशक्तोपभिष्टैर्विविधैश्च वस्तुभिश्च॥
वसुधीयादिनादैश्च तथा नानोपचारकैः।
सन्तोषयन् जगन्नाथं तृतीयादौ विलेपयेत्॥
वैशाखस्य तृतीयायां जलमध्ये विशेषतः।
लपने मण्डपे कुम्भमण्डले वा हृदहने॥
चन्दनागुरुह्रीवेर कुष्ठकुङ्कुमरोचना
जटामांसी मुरा चैव विष्णोर्गन्धाष्टकं विदुः॥
एतैर्गन्धैर्यथान्येश्च विष्णोर्गात्राणि लेपयेत्।
एतच्च तुलसीकाष्ठं कुर्य्याल्लेपनकर्म्मणि॥ १॥

अथ स्नानयात्रा। स्कन्दपुराणे।

ज्येष्ठामक्षयावत्तीयस्तस्य पूर्व्वं जन्मवासरम्
मत्स्नाय स्नापनं कार्य्यं महास्नानविधानतः।
तस्मात् प्रातः स्नानकाले प्रजया सहितस्य माम्।
राम सुभद्रां सम्प्राप्य मम लोकमवाप्नुयात्॥

तथा।

'मासि ज्येष्ठे तु सम्प्राप्ते नक्षत्रे शक्रदैवते।
पौर्णमास्यां हरेः स्नानं सर्व्वकामफलप्रदम्॥
सर्व्वतीर्थमयं कूपमदास्ते निर्म्मलं शुचि।
सदा भोगवती तत्र प्रत्यक्षं भवति द्विजाः॥
तस्मात् ज्येष्ठ्यां समुद्धृत्य सौमाख्ये कलसैर्जलैः।
स्नापयन्ति तदा कृष्णं सततं सहलायुधम्॥
अन्यादीने हरेः स्नानमस्व प्रभाहृतम
उत्सवो वै न दृश्येत तस्मात्तद्ध्यवतचरेत्॥
जन्मना स्वयमाविरासाज्जन्मयात्रा प्रतिष्ठिता
ज्येष्ठ्यां मम स्वतो ये पश्यन्ति मुदान्विताः।
न ते भवाब्धौ मज्जन्ति यात्रायां यतमानसाः।
ज्यैष्ठे च स्नपनं कुर्य्यात् श्रीविष्णोर्जन्मवासरे॥
दैनन्दिनं हरति पापमाघर्षवर्षजम्।
ब्रह्महत्यासहस्राणि ग्रामाग्रामकृतानि च॥
स्वर्णस्तेयसुरापानगुरुतल्पयुतानि च।
कोटिकोटिसहस्राणि क्षुद्रपापानि यानि च॥
सर्व्वाण्येव प्रणश्यन्ति पौर्णमास्यां तु वासरे।
पुष्पसक्तमनलैश पात्रमाल्या तथैव च॥
नारिकेलोदकेनाथ तथा तालफलाम्बुना।
पञ्चामृते प्रीततोयेन त्वाकर्पूरवासिते॥
यवोदकेन शुद्धेन तथा पुष्पोदकेन च।
स्नापयित्वा जगन्नाथं पूजयेत् परमेश्वरम्॥
ॐ च घण्टायै नम इति घण्टावाद्यं निवेदयेत्।
य एवं कुरुते विद्वान् मानवः क्षत्रिय शुचिः।
सर्व्वपापैः प्रमुच्यते विष्णुलोकं स गच्छति।
चतुर्द्दश्यां दृढ़ं मञ्चं कारयित्वा सुशोभनम्॥
सुगन्धिधूपसुरभिं चन्दनाम्भः समुक्षितम्।
एवं मञ्चं प्रतिष्ठाप्य कलशानधिवासयेत्॥
सुवासितं जलपूर्णं पावकं कलसं भवेत्।
जयशब्देश्च स्तुतिभिर्न्नीयते जगदीश्वरः॥
जयस्व राम कृष्णेति जयभद्रेति चोदिते।
नीयते मञ्चदेशं तु निर्घोषैर्वाद्यवादिभिः॥'

अथ रथयात्रा। स्कन्दपुराणे।

"गुण्डिकाख्यां महायात्रां प्रकुर्व्वीयाः क्षितीश्वर॥
आषाढ़स्य सिते पक्षे द्वितीया पुष्यसंयुता।
तस्यां रथे समारोप्य रामं मां भद्रया सह।
यात्रोत्सवं प्रवर्त्ताथ प्रीणयेच्च द्विजान् बहून्॥
ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम।
अथाह सरित्तीरे मम यात्रा भविष्यति।
अष्टमे दिवसे सर्व्वान् रथान् मार्ज्जेविभूषयेत्।
नवम्यामानयेद्देवांस्तेषु प्रीतः स्वहृदिदान्॥
दक्षिणाभिमुखी यात्रा विष्णोरेषा सुदुर्लभा।
यथा पूर्व्वा तथा चैव ते हि मुक्तिप्रदायिके॥
ब्रह्महे विरजेऽकृत्य तद्दर्शनं तु पार्थिवम्॥"

इतिवत् तिथिना एकाशी बोद्धव्य।
'तिथिनैकेन दिवसेनाक्रमेनेन कीर्त्तितः॥'

इति विष्णुधर्म्मोत्तरात्॥

यत्तु।

'आषाढ़स्य सिते पक्षे भद्रा वा पुष्यसंयुता।
यात्रोत्सवं प्रकुर्व्वीयास्तदभावे पुष्य एव हि॥'

इति ईश्वरसंहितायां वचनान्तरम्॥

तद्वैकल्पिकप्रयोगान्तरविधायकम्। पाद्मे।

आषाढ़स्य द्वितीयायां रथं कुर्य्याद्विशेषतः।
आषाढ़शुक्लैकादश्यां जपहोममहोत्सवम्॥
ततः परं हि कृष्णस्य यात्रान्तरमपेक्षते।
अत्र स्वयं त्रिलोकेशः स्पन्दनेन कुतूहलात्॥
नाशयन् सर्व्वपापानि वर्षे वर्षे व्रजेद्धरौ।
रथस्थितं व्रजन्तं तं महावेदीमहोत्सवे॥
ये पश्यन्ति मुदा भक्त्या वासस्तेषां हरेः पदे।
रथं वत् पुनः सद्य प्रतिग्रात द्विजोत्तमाः॥
भास सैव पदो विष्णोरव्ययं शाश्वतम्
रथयात्रैव यात्राणां मुख्येत्याह प्रजापतिः॥
महावेदीं व्रजन्तं तं रथस्थं पुरुषोत्तमम्।
बलभद्रं सुभद्राञ्च दृष्ट्वा मुक्तिर्न चान्यथा॥
आषाढ़स्य सिते पक्षे निर्विष्णो शुभप्रदे।
प्रतिष्ठाप्य स्वहृद्दैन विधिना पूर्व्ववद्द्विजाः॥
रथं नरो हरेः कुर्य्यात् स्वाश्वं सुपरिष्कृतम्।
भूषयेद्विविधैर्भक्त्या वस्त्रालङ्कारमाल्यकैः॥
ध्वजच्छत्रपताकैश्च मेरोटकादयस्तथा।
नन्दनकमुखाश्च मायया बहवस्तथा॥
वेश्या यौवनसम्पन्ना रूपालङ्कारभूषिताः।
ध्वजाश्च बहवस्तत्र पताकाधिष्ठितानराः॥
गरुड़ध्वजं कुर्य्यात् रक्तचन्द्रनिमिश्रितम्।
दीर्घनासं पीतदवं कुण्डलाभ्यां विभूषितम्॥
चतुर्भुजं सुसंस्थं सर्व्वालङ्कारभूषितम्।
तथा पद्मध्वजं कुर्य्यात् पद्मकाञ्चविनिर्म्मितम्॥
सप्तच्छत्रमयं कुर्य्याच्छौरिणो लाङ्गलध्वजम्।
सारथिं वाजिनश्चैव बलं बलसमन्वितम्॥
दीरकमञ्जलैर्न्नित्यैर्विविधैः सुशोभनम्।
रथं न्यघटितं तत्र रथं देवपथस्य च॥
अरुणोदयवेलायां देवं तस्मात् प्रपूजयेत्।
ब्राह्मणैर्विधिवत् साढ़्ं यतिभिश्च तपस्विभिः॥
विष्णुपार्श्वद्देवैर्यात्रायै स कृताञ्जलिः।
तत्र कर्पूरधूपैश्च सुमनोभिरवाकिरन्॥
पथि शोभनसूक्तानि प्रपठन्ति द्विजातयः।
कश्चिच्च मङ्गलगाथाच कश्चिच्च जयेति च॥
जितन्ते इति मन्त्रं वै कश्चित् पुष्पे प्रणम्य च
सूतमागधसंख्याश्च कीर्त्तिं कार्य्यौ मुदा युताः॥
शर्बरीशरुरीवेणुवीणामापुरिकाश्च।
शब्दायन्ते सुमधुरं गोविन्दविजयान्तरे॥
एवं प्रवृत्ते समये कृष्णं रामपुरं परम्।
नयन्ति विप्रा भद्राश्च क्षत्रियाश्च विशस्तथा॥
करे धृत्वा जगन्नाथं भ्रामयित्वा रथत्रयम्।
रामं भद्राञ्च जगाच्च रथमध्ये निवेशयेत्॥
पूजयेदुपचारैस्तैः श्रद्धाभक्तिसमन्वितः।
रथच्छायां समाक्रम्य ब्रह्महत्यां व्यपोहति॥
तद्देशस्य सक्ततुरुधमदे पापसहतिम्।
धनाभुर्व्विलिप्तेन स्वगङ्गास्नानजं फलम्॥
ये प्रणामं प्रकुर्व्वन्ति तेऽपि मोक्षमवाप्नुयुः।
शतसमृच्छन्ति ये कृष्णं ते देवतुल्यविग्रहाः॥
वेदैः स्तुवन्ति वदतां वक्तारो मोक्षभागिनः।
प्रतिष्ठापुराणाद्यैः स्तोत्रैर्व्वापि सुसंस्कृतैः॥
स्तुवन्ति पुण्डरीकाक्षं ये वै विगतकल्मषाः।
ते वै जयन्ति पापानि जयशब्दैः स्तुवन्ति ये॥
नर्त्तनं कुरुते वापि गायत्यथ नरोत्तमाः।
वैष्णवोत्तमसंसर्गान्मुक्तिं प्राप्नोत्यसंशयम्॥
नामानि कीर्त्तयिष्यन्ति न ते यान्ति यमालयम्॥
जयस्व रामकृष्णेति जयभद्रेति यो वदेत्।
न मातृगर्भे वासोऽस्य स च देवत्वमाप्नुयात्॥
धामरेवनने पुण्ये स्ववकैर्वनवल्कैः।
रथस्याग्रे स्थितो यो वै वीजयेत् पुरुषोत्तमम्॥
सदौव्यमाभो धरोभिर्द्देवगन्धर्व्वयोषिताम्।
भुक्त्वैव तु भोगानखिलान् यावदाभूतसम्प्लवम्॥

नातः परतरो लोके महावेदीमहोत्सवात् ।
सर्व्वपापहरो योगः सर्व्वतीर्थफलप्रदः ॥
कृष्णमुद्दिश्य ये तत्र दानं ददति वै नराः ।
यत्किञ्चिदक्षयफलं मेरुदानेन संमितम् ॥
गुण्डिकामण्डपे यान्तं महाहार्म्यं सहाग्रजम् ।
तत्रातपश्रान्तगात्रं दर्पणेष्वभिवीक्षयेत् ॥
पश्चात्तैः शीततोयैः पुष्पकर्पूरवासितैः ।
नारिकेलजलेनाथ तथा तालफलाम्बुना ॥
रम्भोदकेन शुद्धेन तथा पुष्पोदकेन च ।
सर्व्वाङ्गमनुलिम्पेच्च चन्दनेन्दुरसद्रवैः ॥
सुगन्धिमाल्याभरणैश्चीनचेलैः सुशोभनैः ।
चामरैश्च जलाभैश्च शीतलैर्व्यजनैस्तथा ॥
वीजयेत् पुण्डरीकाक्षं सुभद्रां बलमेव च ।
सिताभिः पानकैर्द्दधैस्तथा खण्डविकारकैः ॥
खर्ज्जूरैर्नारिकेलैश्च नानारम्भाफलादिभिः ।
तथा क्षीरविकारैश्च पनसैरिक्षुभिस्तथा ॥
वासितैः शीततोयैश्च गन्धताम्बूलपत्रकैः ।
सकर्पूरलवङ्गाद्यैः पूजयेत् परमेश्वरम् ॥
रथत्रयस्थितं देवत्रयं ये पुरुषर्षभाः ।
प्रदक्षिणं प्रकुर्व्वन्ति त्रिचतुःसप्त एव च ॥
ततोऽपराह्ने देवेशं दक्षिणानिलवीजितम् ।
शनैः शनैर्नयेद्विष्णुं मण्डपस्य च मध्यमे ॥
एवं व्रजति देवेशे सूर्य्यश्चास्तं गतोऽभवत् ।
दीपकानां सहस्राणि ज्वालितानि नरैस्ततः ॥
मण्डपे वासयेद्देवान् गुण्डिकाख्ये मनोहरे ।
चारुचन्द्रातपे चारुमाल्यचामरभूषिते ॥
पूजयित्वा जगन्नाथं तोषयेत् गीतनृत्यकैः ।
उपहारादिभिस्तत्र सप्ताहानि जनार्द्दनम् ॥
सप्ताहं ये प्रपश्यन्ति गुण्डिकामण्डपे स्थितम् ।
मां च रामं सुभद्राञ्च विष्णुसायुज्यमाप्नुयात् ॥
दिवा तद्दर्शनं पुण्यं रात्रौ दशगुणं भवेत् ।
यत्किञ्चित् कुरुते कर्म्म कोटिकोटिगुणं भवेत् ॥
सर्व्वं मेरुसमं दानं सर्व्वे व्याससमा द्विजाः ।
महावेद्यां गते कृष्णे योगोऽयं खलु दुर्लभः ॥
अर्द्धोदयादयो योगाः स्कन्देन परिभाषिताः ।
महावेद्याख्ययोगस्य कलां नार्हन्ति षोडशीम् ॥
अष्टाहे च पुनः कृत्वा दक्षिणाभिमुखान् रथान् ।
दक्षिणाभिमुखी यात्रा विष्णोरेषा प्रकीर्त्तिता ॥
कार्य्या प्रयत्नतः सा हि भुक्तिमुक्तिप्रदा भवेत् ।
दक्षिणाभिमुखं यान्तं कृष्णं पश्यन्ति ये नराः ॥
न तेषां पुनरावृत्तिः सत्यमेतन्न संशयः ।
पुराविदो वदन्त्येतां यात्रां नवदिनात्मिकाम् ॥
तस्याः संकीर्त्तनादेव निर्म्मलो जायते नरः ।
यावतीयं महायात्रा यो यथा कर्त्तुमिच्छति ॥
सोऽपि विष्णुप्रभावेन वैकुण्ठभवनं व्रजेत् ।
उद्धृत्य सप्तपुरुषान् पापावलिसमन्वितान् ॥"४॥
अथ शयनयात्रा । स्कान्दे ।
"आषाढ़े शुक्लद्वादश्यां कुर्य्यात् स्वापमहोत्सवम् ।
मण्डले रचयेत्तत्र शयनागारमुत्तमम् ॥
देवस्य पुरतः शय्यां रत्नादिनिर्म्मितोपरि ।
स्वास्तीर्य्य तूलवेत्रादि तदुपरीनोत्तरच्छदाम् ॥
कर्पूररङ्गविच्छित्तिं साधुचन्द्रातपां शुभाम् ।
पुष्पगन्धयुतां मुक्तारञ्जितां चन्दनाङ्किताम् ॥
साधुद्वारां शुभां स्निग्धां नानाचित्रोपशोभिताम् ।
एवं स्वापगृहं कृत्वा निशीथे स्वापयेद्विभुम् ॥
संपूज्य भावयेदैक्यं तेषां कृष्णादिभिः सह ।
एह्येहीति च संप्रार्थ्य स्वापार्थं परमेश्वरम् ॥
नयेच्छय्यागृहद्वारं वासयेत् घटिकात्रयम् ।
पश्चात्तैः स्नापयेत्तान् पृथक्पलशताधिकैः ॥
सुगन्धिचन्दनैर्लिप्तान् वस्त्रालङ्करणादिभिः ।
पूजयित्वा यथान्यायं प्राञ्जलिर्मन्त्रमुच्चरेत् ॥"
जगद्वन्द्य इत्यादि ।
"सुदृढ़ं कारयेद्द्वारं विष्णोः शयनवेश्मनः ।
स्वापयित्वा जगन्नाथं लभते सुखमुत्तमम् ॥"५॥
अथ पार्श्वपरिवर्त्तनयात्रा ।
"अथ ते संप्रवक्ष्यामि पार्श्वस्य परिवर्त्तनम् ।
नभस्यविमले पक्षे संप्राप्ते हरिवासरे ॥
विष्णोः स्वापगृहद्वारं शनैर्गत्वा प्रविश्य च ।
नमस्कृत्य जगन्नाथं पर्य्यङ्कशयितं मुदा ॥
अवघाट्य शनैर्द्वारं पूजयेदुपचारकैः ।
प्रणम्य भक्त्या तत्पादौ स्वापयेदुत्तरामुखम् ॥"
मन्त्रमेनं पठेत् ।
"ॐ देवदेव ! जगन्नाथ ! कल्याणं परिकल्पय ।
परिदृष्टमिदं सर्व्वं यथा स्थावरजङ्गमम् ॥
यत् दृष्टा चेष्टितैरेव जाग्रत्स्वप्नसुषुप्तिभिः ।
जगद्धिताय सुप्तोऽसि पार्श्वेन परिवर्त्तय ॥
परिवर्त्तनकालोऽयं जगतः पालनाय ते ।
त्वदम्बुजोऽयं शक्रोऽपि ध्वजे तिष्ठन् समुत्सुकः ॥
इदं त्वत्पादकमलं विमृष्य मूर्द्ध्नि तज्जलम् ।
महीं जलं स्रावयति प्रजापालनहेतुकम् ॥
इति संप्रार्थ्य देवेशं विनयात्तोषयेत्ततः ।
व्यजनैश्चामरैश्चैव वीजयेत् परमेश्वरम् ॥
सुगन्धिचन्दनैरस्य सर्व्वाङ्गं परिलेपयेत् ।
स्वादूनि भक्ष्यद्रव्याणि पायसादीनि दापयेत् ॥
शय्यागृहद्वारि विभोः शनैर्भक्त्या निवेदयेत् ।
देवमुद्दिश्य यत् कुर्य्यात् सर्व्वमक्षयतां व्रजेत् ॥
पार्श्वे च पूर्व्वदिवसे उपवासपरो भवेत् ॥"
एवं आश्विनशुक्लैकादश्यां पूर्व्वोक्तविधानेन श्रीकृष्णस्य वामपार्श्वपरिवर्त्तनं कार्य्यम् ॥
मतान्तरे ।
"शुभे चैवाश्विने मासि महामायां प्रपूजयेत् ।
सौवर्णीं राजतीं वापि विष्णुमायां महेश्वरीम् ।
हिंसा चैव न कर्त्तव्या कदाचिद्विष्णुपूजके ॥"६॥
अथोत्थानयात्रा ।
"एकादश्यान्तु कार्त्तिक्यां शुक्लायां पृथिवीपते ।
कृष्णमुत्थापयेद्भक्त्या पूजयित्वा जगद्गुरुम् ।
पूर्व्ववत् पूजयित्वा तु प्रातर्मन्त्रं समुच्चरेत् ॥"
मन्त्रस्तु ।
"ॐ उत्तिष्ठ देवदेवेश ! तमाराध्य जगत्पते ! ।
वीक्षैतत् सकलं देव ! प्रसन्नं तव मायया ॥
प्रफुल्लपुण्डरीकाक्ष ! श्रीहरे ! शयनेन हे
त्वया दृष्टं जगदिदं परमं सुखमेष्यति ॥
ये ते स्वाप्ताः क्रियाः सर्व्वाः प्रवर्त्तन्ते ततो ध्रुवम् ।
इत्युत्थाप्य जगन्नाथं वेणुवीणादिनिःस्वनैः ॥
जयशब्दैस्तथा देवं नयेयुर्नृत्यमण्डपम् ॥
तैलेनाभ्यज्य तोयेन स्नापयेत् पुरुषोत्तमम् ।
पश्चात्तैर्नारिकेलरसैः फलरसैस्तथा ॥
सुगन्धामलकेनाथ यवकल्केन लेपयेत् ।
घर्षयेत्तुलसीचूर्णैर्लेपयेद्गन्धचन्दनैः ॥
पुष्पवासिततोयैश्च कुशगन्धोदकैस्तथा ।
स्नापयित्वा चयेत् पापं बहुजन्मोपपादितम् ॥
महोपचारैः संपूज्य विष्णुं नीराजयेत्ततः ।
कृताञ्जलिपुटो भूत्वा प्रार्थयेत् परया मुदा ॥"७॥
अथ प्रावरणयात्रा ।
"मार्गशीर्षे सिते पक्षे कुर्य्यात् प्रावरणोत्सवम् ।
कृत्वा दृष्ट्वा नरो भक्त्या वैष्णवं लोकमाप्नुयात् ॥
वासोऽधिवासं कुर्व्वीत पञ्चम्यां निशि कर्म्मवित् ।
प्रभाते मण्डलं कुर्य्यात् पद्ममष्टदलान्वितम् ॥
दिक्पालान् पूजयेद्दिक्षु क्षेत्रपालं गणाधिपम् ।
चण्डप्रचण्डौ च बहिश्चतुर्द्दिक्षु प्रपूजयेत् ॥
तन्मध्ये स्थापयेद्यन्त्रं क्षालयेदुष्णवारिणा ।
पूजयित्वा जगन्नाथं गन्धतैलेन दीपकम् ॥
दत्त्वा कृष्णाय भक्त्या तु गीतवाद्यैर्नयेन्निशाम् ।
प्रातः प्रपूजयेद्देवं नानाद्रव्यैः सुशोभनैः ॥
वस्त्रैः सप्तभिर्द्देवान् वासोभिः परिवेष्टयेत् ।
सुखवर्णेषु सर्व्वाङ्गे शीतप्रावरणैर्द्विजाः ॥
दूर्व्वाक्षतैः प्रपूज्याथ कुर्य्यान्नीराजनां विभोः ।
भगवन्तं समुद्दिश्य ब्राह्मणेभ्यः प्रदापयेत् ॥
गुरुभ्यश्चान्यदेवेभ्यो दीनानाथेभ्य एव च ।
शीतप्रावरणं दद्यात् सक्तुन् परमया मुदा ॥
ददाति भगवान् प्रीतस्तस्मै वरमनुत्तमम् ॥"८॥
अथ पुष्यस्नानयात्रा ।
"पुष्यस्नानोत्सवं वक्ष्ये यथोक्तं ब्रह्मणा पुरा ।
पुष्यर्क्षेण च संयुक्ता पौर्णमासी यदा भवेत् ।
पौषे मासि तु तत् कुर्य्यात् पुष्यस्नानोत्सवं हरेः ॥
चतुर्द्दशीनिशायान्तु कुम्भानामधिवासनम् ।
रात्रौ जागरणं कृत्वा प्रातर्वह्निं प्रकीरयेत् ॥
ब्रह्मविष्णुशिवेभ्यश्च प्रत्येकं समिधं क्रमात् ।
जुहुयात् पूजयित्वा तु तदन्ते पुरुषोत्तमम् ॥
पूजयेदुपचारैस्तु आदर्शे प्रतिबिम्बितम् ।
ततः पुरुषसूक्तेन कुम्भांस्तानभिमन्त्रयेत् ।
क्रमात् देवस्य शिरसि स्नापयेद्विधिवत्ततः ॥"
सूक्तमुच्चरन् ।
"ततः पश्चात्तेनैव वासुदेवञ्च चालयेत् ।
लक्ष्म्या युक्तं पुनर्विप्र उपचारैः प्रपूजयेत् ॥
दूर्व्वाङ्कुराद्यैः स्तुतिभिर्व्वाद्यैः संपूज्य केशवम् ।
समन्ताद्विकिरेद्देवं कर्पूराद्यैः सतण्डुलान् ॥
नीराजयेज्जगन्नाथं कर्पूररत्नवर्त्तिभिः ।
ततः प्रदक्षिणं कृत्वा दण्डवत् प्रणमेत् क्षितौ ॥
पुष्यस्नानोत्सवं पुण्यं ये पश्यन्ति मुदान्विताः ।
सर्व्वसम्पन्नकामास्ते प्रयेयुर्व्वैष्णवं पदम् ॥"९॥
अथ नवशस्ययात्रा ।
"कुर्य्यादयनसंक्रान्त्यां नवशस्यमहोत्सवम् ।
संक्रान्तेः पूर्व्वदिवसे नवं शालिं सुकृष्टिमम् ।
प्रासादपूर्व्वदेशे तु स्थापयित्वाधिवासयेत् ॥"

तथा च माघे।
"संक्रान्तौ माघमासस्य माधवासिततण्डुलान्।
निवेद्य विष्णवे भक्त्या इमं मन्त्रमुदीरयेत्॥
त्वयि तुष्टे जगत् सर्व्वमनेन प्रभविष्यति।
इदं सर्व्वं जगन्नाथ! शुक्लानां पिष्टकं शुभम्॥
ब्राह्मणान् भोजयेत् भक्त्या देवदेवपुरःस्थितान्॥"
अन्यथा भगवद्भक्तानित्यादि॥
"नवेन वासमानेन दूर्व्वासर्षपपुष्पकैः।
पूजयित्वाभिमन्त्रेण काण्डस्थामभिरक्षतु॥
पुनः प्रभाते देवेशं प्रलिपेद्गन्धचन्दनैः।
वस्त्रालङ्कारमाल्यैश्च पूजयित्वा यथाविधि॥
नीराजयित्वा देवेशं तण्डुलानधिवासितान्।
स्थालीषु पाकपात्रेषु मधुखण्डाज्यमिश्रितान्॥
षट्स्त्रियः स्थापयेदग्रे गन्धपुष्पाक्षतान्वितान्।
सपूपं पायसं कृत्वा दद्याद्वै पञ्चपात्रके।
इक्षुखण्डकपिष्टञ्च विष्णोः प्रियतरं परम्॥
ॐ औदनं सर्व्वभूतानां जनकस्त्वं जगद्गुरो!।
तण्डुलाः शालिनो ह्येते त्वयैव जनिताः प्रभो!॥
लोकानुग्रहणार्थाय गृहीत्वा शिवविग्रहम्।
मम प्रीत्यै तवानेतान् गृहाण परमेश्वर!॥
त्वयि तुष्टे जगत् सर्व्वमनेन प्रभविष्यति।
स्वाहाकारस्वधाकारवषट्कारा दिवौकसाम्॥
आप्यायिता भविष्यन्ति तेनैवाप्यायितं जगत्।
इत्थं सर्व्वं जगन्नाथ! मत्कृतं सचराचरम्॥
इति संप्रार्थ्य देवेशं ब्राह्मणान् विनिवेदयेत्॥"१०॥
अथ दोलयात्रा।
"फाल्गुने मासि कुर्व्वीत दोलारोहणमुत्तमम्।
यत्र क्रीडति गोविन्दो लोकानुग्रहणाय वै॥
प्रथमं देवदेवस्य गोविन्दाख्यां तु कारयेत्।
चलमूर्त्तिं प्रकुर्व्वीत यथाशक्ति नवानि वा।
फाल्गुन्याः पूर्व्वतो विप्राश्चतुर्दश्यां निशामुखे।
महोत्सवं प्रकुर्व्वीत दोलमण्डपपूर्व्वतः॥"
माघे।
"पौर्णमास्यां समारभ्य पञ्चम्यान्तु समापयेत्॥"११॥
अथ मदनभञ्जिका यात्रा।
"फाल्गुनिकां समासाद्य यात्रां मदनभञ्जिकाम्।
यस्यां कृतायां हृदयः प्रीयाति पुरुषोत्तमः॥
चैत्रशुक्लत्रयोदश्यामाचरेत्तु मङ्गलम्।
दिवसार्द्धे विरचिते मन्दिरे माधवाश्रिते॥"१२॥
इति यात्रातत्त्वम्॥
देवाः षोड़शप्रकारोऽपि। यथा,—
"वैशाखे गन्धयात्रा च चन्दनानुविलेपना।
ज्यैष्ठे महास्नानयात्रा अमृताचौदिनत्रयम्॥
आषाढ़े रथयात्रा च दिग्दिनयापिनी परा।
श्रावणे जलयात्रा च वस्त्रभूषणसादरैः॥
भाद्रे यात्रा धनयात्रा वलियात्रा दिनत्रयम्।
आश्विने च महापूजा यात्रा ध्वजविभूषिता॥
कार्त्तिके दीपयात्रा च नवान्नपक्वदायिनी।
पौषे चाङ्गरागयात्रा वस्त्रालङ्कारभूषणैः॥
माघे मासि महादेवी दशमी च चतुर्दशी।
दोलाकेलिः फाल्गुने च चैत्रे यात्रा चतुष्टयी।
दूतीयात्रा रासयात्रा वासन्ती मौलयात्रिका।
एवं यात्रा मया प्रोक्ता षोड़शी भवमोचनी॥"
इति वामकेश्वरतन्त्रे ५६ पटलः॥
(रोगिदर्शनार्थं भिषजां यात्राविवरणम्। यथा,
"इदानीं निर्गमे पुत्र! प्रवेशे वा गृहस्य च।
शुभाशुभानि सर्व्वाणि वक्ष्यामि शकुनानि च॥
राजा गजो द्विजमयूरकखञ्जरीटा-
श्चाषः प्रफुल्लरक्षः सितवस्त्रयुक्तः।
पुत्रान्विता च युवती गणिका च कन्या
श्रेयः सुखाय यशसां प्रतिदर्शयन्ति॥
नटाश्वाश्वौ भासहारीतचक्रौ
भारद्वाजोच्छिकरस्तामसंज्ञः।
एते श्रेष्ठा दक्षिणे त्राय सर्व्वे
वैद्यावेशो निर्गमे श्रेयसे च॥
सर्पोलूकौ वानरः शूकरश्च
गोधा श्वा च शकलाशः शशश्च।
एते दिष्टा निर्गमे वा प्रवेशे
कार्य्याघाता नोपकारेषु शस्ताः॥
मृगो वा पिङ्गलो वापि प्रशस्ता दक्षिणे सदा।
निर्गमे वा प्रवेशे च दक्षिणाः शुभदायकाः॥
एको वा त्रीणि वा पञ्च सप्त वा नवसंख्यया।
भाग्यकाले नराणान्तु मृगा यान्ति प्रदक्षिणाः॥
श्रीरिक्षपाश्वगोधारासभौ भङ्गराजौ
सुस्वरपिककपोतौ पोतकौ सूकरी वा।
तदनु विहगराजो मङ्गलाशंसिनः स्यु-
र्वदति शकुनवेत्ता वामतो निर्गमे वः॥
तित्तिरिः कुररः क्रौञ्चः सारसाभासशूकरः।
वामे तु शुभशंसी च निर्गमे कार्य्यसिद्धये॥
काको दक्षिणतः श्रेष्ठो निर्गमे शुभदायकः।
प्रवेशे गदितं श्रेष्ठो वामतः क्षयदायकः॥
आलक्षो हि प्रशस्तोऽपि कर्कटो-
कोलंकश्च गदितं न सुखाय।
न शुभदर्शना अमी भवेयुः
सर्पगोधाशकलाशविडालाः॥
दर्शनं हितकरं प्रवदन्ति
खञ्जरीटमरालद्विजराणाम्।
वामतः शुभकराः प्रवदन्ति
दर्व्वाघाटवराटकशुकश्च॥
इति शुभाशुभशकुनानि।"
इति हारीते द्वितीयस्थाने सप्तमोऽध्यायः॥ ७॥
तथा च।
"ध्वजकाष्ठपताकानां शुष्काणां पथि सङ्गताः।
शैथल्ये पतितासन्नदीनाम्बरितवस्त्रया॥
स्नुघोषोऽनुकूलश्च सुगन्धिश्चानिलः शुभः।
रूक्षोऽविषमश्च प्रतिलोमश्च गर्हितः।
पश्चार्द्धादिषु यदा दैवमस्त्रश्च पूजितः।
शिवपुरन्दरगुर्व्वीश भैरवमन्त्रयेव च॥
रक्तपित्तातिसारेषु वहमन्दः प्रशस्यते।
एवं कार्य्यविदिष्टेषु विमिश्रणद्धारयेत्॥
नपेत्राङ्कुटदाकदमाकन्दवादिनमताः।
दर्शो वाद्यदूरीयानां प्रभवो ये गर्भोद्यमी॥
प्रतिविद्धं तथा भग्नं च्युतं स्खलितमाहतम्।
दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न प्रशस्यते॥"
इति सुश्रुते सूत्रस्थाने २९ अध्यायः॥)

यादईशः, पुं, (यादसां जलजन्तूनां वा ईशः।) समुद्रः। इति हेमचन्द्रः। ४। १३९॥

यादः, [स्] क्ली, (याति वेगेनेति। या + असुन्। बाहुलकात् दागमश्च।) जलजन्तुः। इत्यमरः। १।१०।२०॥ (यथा, भगवद्गीतायाम्।१०।२९।
"अनन्तश्चास्मि नागानां वरुणो यादसा-
महम्॥"
जलम्। इति निघण्टुः। १। १२॥)

यादःपतिः, पुं, (यादसां पतिः।) समुद्रः। इत्यमरः।१।१०।२०॥ वरुणः। इत्यजयपालः॥

यादवः, पुं, (यदोरपत्यम्। यदु + अण्।) श्रीकृष्णः। इति शब्दरत्नावली॥ (यथा, भगवद्गीतायाम्।११।४१।
"सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण! हे यादव! हे सखेति।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि॥")
ययातेर्ज्येष्ठपुत्रो यदुस्तस्य वंशः। यथा,—
"ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ।।"
इत्युपक्रम्य।
"माधवा वृष्णयो राजन् यादवाश्चेति संज्ञिताः॥"
इति श्रीभागवते ९ स्कन्धे २३ अध्यायः॥
(यदुसम्बन्धिनि, त्रि। यथा, भागवते।११।१।२।
"मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं
यद्यादवं कुलमहो अविषह्यमास्ते॥")

यादवी, स्त्री, (यदोरियमिति। यदु + अण्। ङीप्।) दुर्गा। इति त्रिकाण्डशेषः॥ (यदुवंशीयस्त्रीसामान्ये। यथा, महाभारते।१।९५।१९।
"प्राचीन्वान् खल्वश्मकीमुपयेमे यादवीं मर्य्या-
मस्य जज्ञे संयातिः॥")

यादसांनाथः, पुं, (यादसां जलजन्तूनां नाथः। षष्ठ्या अलुक्।) वरुणः। इति हलायुधः॥

यादसांपतिः, पुं, (यादसां जलजन्तूनां पतिः। षष्ठ्या अलुक्।) समुद्रः। इत्यमरः।१।१।६४॥ वरुणः। इति मेदिनी। तै, २४२॥ (यथा, देवीभागवते।३।९।३५।
"अश्विनौ वसवस्त्वष्टा कुबेरो यादसांपतिः॥"
क्वचित् विभक्त्यलुगपि। यथा, मार्कण्डेये।२२।११।
"यावद्दमार्णवे देवं वरुणं यादसांपतिम्॥")

यादृक्, [श्] त्रि, (य इव दृश्यते। दृश् + "त्यदादिषु दृशोऽनालोचने कञ्च।" ३।२।६०। इति चकारात् क्विन्। "आ सर्व्वनाम्नः।" ६।३।९१। इत्याकारादेशः।) य इव दृश्यते सः। इति मुग्धबोधव्याकरणम्॥ येमन इति भाषा। (यथा, भागवते।४।२९।६४।
"नानुभूतं क्वचानेन देहेनादृष्टमश्रुतम्।
कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि॥")

यादृक्षः, त्रि, (य इव दृश्यते यमिव पश्यति वा। दृश् + "दृशेः क्सश्च वक्तव्यः।" ३।२।६०। इति

वार्त्तिकोक्तेः वः । "व्यासर्व्वनाम्नः ।"६।३।६१।
इत्यत्र "दृचे चेति वक्तव्यम् ।" इत्यात्वम् । )
य इव दृश्यते सः । इति मुग्धबोधव्याकरणम् ॥
येमन इति भाषा ॥

यादृशः, त्रि, ( य इव दृश्यते । दृश् + "त्यदादिषु दृशः इति ।" ३।२।६० । इति कञ् । "आसर्व्वनाम्नः ।" ६।३।६१ । इत्याकारादेशः । ) य इव दृश्यते सः । इति मुग्धबोधव्याकरणम् ॥ येमन इति भाषा । ( यथा, मनुः । ४ । २५४ ।
"यादृशोऽस्य भवेदात्मा यादृशञ्च चिकीर्षितम् ।
यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥"
स्त्रियां यादृशी ॥ )

यादोनाथः, पुं, ( यादसां नाथः । ) समुद्रः । इति राजनिर्घण्टः ॥ ( वरुणः । इति यादसांनाथशब्ददर्शनात् ॥ )

यादोनिवासः, पुं, ( यादसां निवासः । ) जलम् । इति हेमचन्द्रः । ४ । १३५ ॥

यानं, क्ली, ( या + ल्युट् । अर्द्धर्चादित्वात् पुंलिङ्गमपि । ) राज्ञां सन्ध्यादिषड्गुणान्तर्गतगुणविशेषः । तत्तु उपचितशक्तेः कृतमूलरक्षस्य शत्रोरास्कन्दनाय यात्रा । इति भरतः ॥ ( यथा, देवीभागवते । ५ । ४ । ११ ।
"यानमप्यधुना नैव कर्त्तव्यं सहसा पुनः ॥"
यात्यनेनेति । या + ल्युट् ।) हस्त्यश्वरथदोलादि । तत्पर्य्यायः । वाहनम् २ युग्यम् ३ पत्त्रम् ४ धोरणम् ५ । इत्यमरः ।२।८।५८॥ विमानम् ६ चक्रम् ७ यापनम् ८ गतिमित्रकम् ९ । इति शब्दरत्नावली ॥ ( यथा, मनुः । ३ । ६४-६५ ।
"शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम् ।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥")
अथ चतुष्पदयानोद्देशः ।
"ये ब्रह्मजात्यादिविभेदतोऽमी
मया निरुक्ता इह वाजिमुख्याः
दिशानया सर्व्वचतुष्पदानां
भेदो विधेयो विदुषादरेण ॥
तथा यथाश्वादिकपोषणेन
यानेन वा दोषगुणौ भवेताम् ।
तथा तथैवान्यचतुष्पदानां
प्रकीर्त्तितौ दोषगुणौ बुधेन ॥
वरमयानमपोषणमेव वा
वरमिवान्यशरीरमपोषणम् ।
न खलु दोषयुतं च चतुष्पदं
स्पृशति पश्यति शोभनचेतनः ॥
सुराविन्दुर्दूषयति पयोघटशतं यथा ।
तथा सर्व्वं दूषयति दोषदुष्टश्चतुष्पदः ॥"
इति चतुष्पदयानोद्देशः ॥ * ॥
अथ द्विपदयानोद्देशः ।
"मानुषैः पक्षिभिर्व्वापि तथान्यैर्द्विपदैरपि ।
यानं स्याद्द्विपदं नाम तस्य भेदो ह्यनेकधा ॥
सामान्यश्च विशेषश्च तस्य भेदो द्विधा भवेत् ॥"
तत्र सामान्यं यथा,—
"यानं यद्द्विपदाभ्यां स्यात् तद्दोलादिकमुच्यते ।
चतुर्भिर्युक्तिसंयुक्तैर्दण्डधातुगुणाम्बरैः ।
दोलेति कथ्यते तेषां नियमोऽयं प्रदर्श्यते ॥"
तत्र सम्मतः ।
"उपेन्द्रमल्लाद्विशवाग्निवर्णं
शक्रेन्दुतारातिथियोगलग्ने ।
शुचिक्रमापुत्त्रयमाह्ववर्ज्जं
दोलादिकारोहणमाद्यमिष्टम् ॥
दण्डकाष्ठस्य नियमे नियमश्चन्द्रदण्डवत् ।
कनकं रजतं ताम्रं लौहं धातुचतुष्टयम् ॥
चतुर्व्विधानामुद्दिष्टं ब्रह्मादीनां यथाक्रमम् ।
सुराणामसुराणाञ्च चातुर्व्वर्ण्यमुदाहृतम् ॥
त्रिहस्तसम्मितौ मध्ये तरङ्गौ पार्श्वयोर्द्वयोः ।
विजया नाम दोलेयं विजयाय महीक्षिताम् ॥
विजया मङ्गला क्रूरा शिवा क्लेशा शुभा क्रमात् ।
वितस्त्येकैकसंवृद्ध्या दोलाः षट् स्युः सुखप्रदाः ॥
कुम्भश्च पद्मकोषश्च शङ्खः पर्व्वत एव च ।
चतुर्व्विधानां दोलासु कल्याणाय चतुष्टयम् ॥
हंसः केकी शुको भृङ्गश्चतुष्टयमिदं क्रमात् ।
कुम्भादयो निधातव्यं चतुर्व्विधमहीक्षिताम् ॥
अत्रापि वर्णविन्यासो विधेयो नवदण्डवत् ॥"
भोजस्तु ।
"गजः प्रस्थानदोलायां रणदोलासु केशरी ।
खगो भ्रमणदोलायां क्रीडादोलासु षट्पदः ॥
भुजङ्गमः प्रभुराज्ये वृषभो दानकर्म्मणि ।
दोलोपर्य्युपरि न्यस्तो बहुभिर्मुनिशासनम् ॥
यदवक्रदण्डं यानं स्यात् तत् पर्य्यङ्कमिति स्मृतम् ।
त्रिहस्तसम्मितो यानस्तदर्द्धपरिणाहवान् ।
पर्य्यङ्कः क्षेमनामायं भर्त्तुः सर्व्वार्थसाधकः ॥
क्षेमो मृत्युर्जयो दुःखश्चत्वारस्ते यथाक्रमम् ।
वितस्त्येकैकसंवृद्ध्या यथा चाशुगं संज्ञिनः ॥
मणिधातुगुणादीनां नियमः पूर्व्ववन्मतः ।
विशेषमथ वक्ष्यामि पर्य्यङ्कस्य यथाक्रमम् ॥
शुक्तिश्च गजदन्तश्च स्फाटिकं शृङ्गमेव च ।
अनूपादिकजातानां पर्य्यङ्केषु न्यसेत् क्रमात् ॥
पद्मशङ्खगजाश्वालिहंसकौकसूकान् क्रमात् ।
आदित्यादिदशानामां मणिरूपेण विन्यसेत् ॥
महीन्द्राणां विशेषेण सिंहमानेव शस्यते ।
निर्म्मितो शुक्तिदण्डाश्च राज्यभोगसुखप्रदाः ॥
तदेवावक्रदण्डन्तु खट्टायानमिति स्मृतम् ।
अत्रापि पूर्व्ववन्मानमणिधात्वादिनिर्णयः ॥
विशेषस्तस्योच्छ्रायः परिणाहार्द्धसम्मितः ।
तदेव चेन्निश्चरणं पीठयानमिति स्मृतम् ॥
तस्य भेदो द्विधा दण्डवक्रावक्रप्रभेदतः ।
मानादिकं पूर्व्वतुल्यं विशेषाच्चतुरस्रता ॥
एवमन्यानि शिल्पानि यानानि विविधानि च ।
सामान्याख्यानि जानीयात् शिल्पिभिर्निर्म्मितानि वै ॥
मनोहरत्वं लघुता दृढ़तेति गुणत्रयम् ।
प्रोक्तं द्विपदयानानां सहजं भोजभूभुजा ॥
इति सामान्यद्विपदयानकथनम् ॥"
इति युक्तिकल्पतरुः ॥ * ॥ विशेषद्विपदयानन्तु चतुर्दोलशब्दे निष्पदयानोद्देशस्तु नौकाशब्दे द्रष्टव्यम् ॥ (फलप्राप्तिहेतौ, त्रि । यथा, ऋग्वेदे । १० । ११० । २ ।
"तनूनपात् पथ ऋतस्य यानान्
मध्वा समञ्जन् स्वदयासुजिह्व ॥"
"यानान् फलप्राप्तिहेतून् पथो मार्गान् ।" इति तद्भाष्ये सायणः ॥ या + भावे ल्युट् । गतिः । यथा, वाभटे शारीरस्थाने षष्ठेऽध्याये ।
"यानं खरोष्ट्रमार्ज्जारकपिशार्द्दूलसूकरैः ।
यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्त्तते मुखे ॥")

यानपात्रं, क्ली, (यानसाधनं पात्रम् । शाकपार्थिववत् समासः । ) निष्पदयानविशेषः । जाहाज इति भाषा ॥ तत्पर्य्यायः । वहित्रकम् २ वोहित्थम् ३ वहनम् ४ पोतः ५ । इति हेमचन्द्रः । ३ । ५३९ ॥ समुद्रयानम् ६ । इति वराहपुराणम् ॥ ( यथा, हरिवंशे । १४५।६३ ।
"समुद्भूतैः क्षितौ पोतैः यानपात्रैस्तथैव च ।
नौभिश्च क्षिल्लिकाभिश्च शुशुभे वरुणालयः ॥")

यानमुखं, क्ली, ( यानस्य मुखम् पुरोभागः । ) रथादेः पुरोभागः । तत्पर्य्यायः । धूः २ । इत्यमरः । २ । ८ । ५५ ॥

यापनं, क्ली, ( या + णिच् + ल्युट् । ) वर्त्तनम् । कालक्षेपणम् ॥ ( यथा, कामन्दकीये ।१७।३१।
"पूर्व्वसेनापतिर्नीचः कालयापनमाश्रितः ॥" )
निरसनम् । इति मेदिनी । ने, ११२ ॥ ( यापयतीति । या + णिच् + ल्युः । प्रापके, त्रि । यथा, भागवते । ३ । २२ । ३३ ।
"अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ॥")

यापा, स्त्री, घटा । इति भूरिप्रयोगः ॥

याप्यः, त्रि, (यापि + यत् ।) अधमः । निन्दितः । इत्यमरः ।३।१।५४॥ (यथा, बृहत्संहितायाम् । १९ । २२ ।
"यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः
शुभफलमपि चैवं याप्यमन्योऽन्यतायाम् ॥")
यापनीयः । ( यथा, सुश्रुते निदानस्थाने प्रथमेऽध्याये ।
"शोणितं तदसाध्यं स्यात् याप्यं संवत्सरोत्थितम् ॥")
क्षेपणीयकालादिः । इति मेदिनी । ये, ४८ ॥
व्याधिविशेषः । यथा,—
"साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥
याप्यलक्षणमाह ।
यापनीयन्तु तं विद्यात् क्रियां धारयते हिताम् ।
क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति ॥
प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम् ।
प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥

अक्रियावतो चिकित्सारहितावाम ।’ इति भावप्रकाशः ॥

याप्ययान क्ली (याप्य अधम यानम ।) शिविका । इत्यमर । २ । ८ । ५३ ॥

याभ पुं (यभ्यते इति । यभ+घञ ।) मैथुनम । यथा । इयाभ्ययोयाभेऽर्थे सन् । इति लिधुपादे बोपदेव । ८४६ ॥ (यथा भागवते । ८ । १९ । ६ ।

पीवान प्रसृप्त प्रेष्ठ मीढांस याभकोविदम ।
स एकोऽजवस्तासां बह्वीनां रतिवर्द्धक ॥
रेमे कामग्रहग्रस्त आत्मानं नाववुध्यत ॥ )

याम पुं (याति यायते वा । या+“अर्त्तिस्तुसुहुस्वृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।” उणा० १ । १४० । इति मन् । यम्+घञ वा ।) दिवारात्रोश्चतुर्थभागैकभाग । तत्पर्याय । प्रहर २ । इत्यमर । १ । ४ । ६ ॥ (यथा मनौ । ७ । १४५ ।

उत्थाय पश्चिमे यामे कृतशौच समाहित ।
हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत स शुभां सभाम् ॥ )

संयम । इति मेदिनी । मे २४ ॥ (गमनम् यथा ऋग्वेदे । १ । ४८ । ४ ।

“उषो ये ते प्र यामेषु युञ्जते ।

यामेषु गमनेषु इति तद्भाष्ये सायण ॥ गमनसाधन । यथा ऋग्वेदे । ४ । ५१ । ४ ।

“कुवित्स देवी सनयो नवो वा
यामो बभूयादुषसो वो अद्य ॥”

यामो गमनसाधन स रथ । इति सायण ॥ देवगणभेद यथा मार्कण्डेयपुराणे १५ । १८

यज्ञस्य दक्षिणायान्तु पुत्रा द्वादश जज्ञिरे ।
यामा इति समाख्याता देवा स्वायम्भुवेऽन्तरे ॥ )

यामघोष पुं (यामे प्रतियामे घोष रवोऽस्य प्रतिप्रहर रवकरणादेवास्य तथात्वम् ) कुक्कुट । इति शब्दमाला ॥

यामघोषा स्त्री (यामे यामे घोषोऽस्या । यामान् प्रहरान् घोषति शब्दायते इति वा । घुष+अच टाप ) यन्त्रविशेष । घडी इति भाषा तत्पर्याय नाली २ घटी ३ यामनालि ४ यमेरुका ५ जल्पाका ६ । इति त्रिकाण्डशेष ॥

यामनाली स्त्री (यामस्य नालीव ) यामघोषा । इति त्रिकाण्डशेष ॥

यामनेमि पुं इन्द्र । इति त्रिकाण्डशेष ॥

यामल क्ली युगलम् । इति हेमचन्द्र । ६ । ६० ॥ तन्त्रशास्त्रविशेष तस्य लक्षण यथा —

“सृष्टिश्च ज्योतिष ख्यान नित्यकृत्यप्रदीपनम् ।
क्रमसूत्र वर्णभेदो जातिभेदस्तथैव च ।
युगधर्मश्च सख्यातो यामलस्याष्टलक्षणम् ॥

तच्च षड्विधम् आदियामलम् १ ब्रह्मयामलम् २ विष्णुयामलम ३ रुद्रयामलम् ४ गणेशयामलम् ५ आदित्ययामलम ६ । इति वाराहीतन्त्रम् ॥ एषा श्लोकसख्या तन्त्रशब्दे द्रष्टव्य

यामवती स्त्री (याम प्रहर अस्त्यस्यामिति । याम+मतुप । मस्य व ङीप ।) रात्रि । इति राजनिघण्ट ॥

यामाता [ऋ] पुं (जामाता पृषोदरादित्वात् । जस्य य ।) जामाता । दुहितु पति । इत्यमरटीका शब्दरत्नावली च ॥ यामातुर्विष्णुतुल्यत्व तस्य गृहे कन्यादातुर्दौहित्रजननात प्राक भोजननिषेधश्च यथा कामधेनावादित्यपुराणम ।

विष्णु यामातर मन्ये तस्य मन्यु न कारयेत ।
अप्रजायान्तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥

इत्युद्वाहतत्त्वम् ॥

यामार्द्ध क्ली (यामस्यार्द्धम ।) प्रहरस्यार्द्धम । तस्याधिपा यथा —

वारेशाद्द्वयामेषु रात्रावह्नो पञ्च षट्क्रमात ।
अधिपा स्युस्त्रयस्तत्र ययाकाह्वे भवन्ति हि ॥
रवीन्दुभृगुसौम्यार्य्यशनिचरवयो दिवि ।
रविशुक्रशराधीशमनीज्यकुजभास्करा ॥
निशि तद्वा परेष्वेवं तन्नाधिपाश्चतुग्रहा ।
पापदण्डे भवेद्विघ्न शुभदण्डे शुभ भवेत ॥
शुभग्रहस्य दण्डे तु कर्म्मारम्भाच्छुभ भवेत् ।
आरम्भात पापदण्डे तु कर्म्म निष्फलतां व्रजेत् ॥
यस्याद्धयामस्यैव प्रागदण्ड समुदाहृत ।
षट षट परीत्य दण्डाश्च त्रयो रात्रौ मतास्तथा ॥
यामार्द्धाधिपमख्यातो द्वितीयस्तु तदर्द्धत ।
तन्द्वात्तृतीय स्यात्तन्द्वात्तु तुरीयक ॥
चन्द्राभावे तु राहु स्यात्तन्द्रो वसुसज्ञक ।
भमाङ्कस्य परित्यागाद्विवारदण्डाधिपा यथा ॥

इति ज्योतिषतत्त्वम् ॥

यामि स्त्री (याति कुलात् कुलान्तरमिति । या+बाहुलकात् मि ।) स्वसा । कुलस्त्री । इत्यमर । २ । ६ । १४२ ॥ स्वसा भगिनी । कुलस्त्री कुलवधू । प्रहरे संयमे यामो यामि स्वसृकुलस्त्रियोरित्यन्त स्यादौ रभस ॥ त्रिकस्तु कुटिले जिन्ह्म जामि स्वसृकुलस्त्रियोरिति चवर्गतृतीयादावजय इति भरतमुकुटौ ॥ यथा जामयो यानि गेहानि शपन्त्यप्रतिपूजिता ॥ इति स्मार्त्ता । जे चये बाहुलकान्मि । यदा जमु अदन बाहुलकादिण जामिरिति । अन्त स्यादौ या प्रापणे धातुर्बोध्य । इति रामाश्रम ॥ (यथा मनौ । ४ । १८३ ।

यामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवा ॥ )

यामिनी । इति शब्दरत्नावली ॥ धर्म्मस्य पत्नी । तस्या कन्या नागवीथी । यथा —

अरुन्धती वसुर्य मिलम्बा भानुमरुत्वती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च नामत ।
धर्म्मपत्न्यो दश त्वेतास्तास्वपत्यानि मे शृणु ।
लम्बायाश्चैव घोषोऽसौ नागवीथी तु यामिजा ॥”

इति वह्निपुराणे कश्यपीयप्रजासर्ग ॥

यामिकभट पुं (यामे यामे नियुक्त । याम+ठक । स चासौ भटश्चेति ) प्राहरिक । चौकीदार इति भाषा । यथा —

“उत्पातामुन्नगरेषु निमान्मतमम प्रभवत्स्वसलक्षे काले जाग्रदुदग्रयामिकभटप्रारब्धकोलाहले । कथमप्यासुहृदर्शनामुवदवावद्वियदन्न पुरा दायाताद्रि यदम्बराग्नि । तनक मनो भय योषिताम् ॥”

इति कयाट ॥

यामित्र क्ली लग्नात सप्तमराशि । यथा —

धीमान पञ्चम शीय यामित्र सप्तम स्मृतम ।
द्युन त्वन तथास्ताख्य षटकोश रिपुमन्दिरम् ॥”

यामित्रवेधो यथा —

“पापात सप्तमगे शशी यदि भवेत् पापेन युक्तोऽथवा
यत्नेनाशु विवर्ज्जयेत्तु नियमो दोषोऽप्यथ कथ्यते ।
यात्रायां विपदो गृहे सुतवध चौरेषु रोगोद्भवो
ऽप्युद्वाहे विधवा व्रते तु मरण शूलञ्च पुंस्कर्म्मणि ॥
रविमन्दकुजाक्रान्त स्याद्यत्र सप्तम त्यजेत् ।
विवाहयात्राचूडासु गृहकर्म्मप्रवेशने ॥

इति यामित्रवेध ॥ ० ॥

अस्य प्रतिप्रसवो यथा ।

“मूलत्रिकोणनिजमन्दिरगोऽथ पूर्णो
मित्रगृही शुभगोऽथ सशोभिनो वा ।
यामित्रवेधविहितानपहृत्य दोषान्
दोषाकर सुखमनेकविध विधत्ते ॥”

इति ज्योतिस्तत्त्वम् ॥

यामिनी स्त्री (यामा सन्त्यस्याम् । याम+इनि । ङीप ।) रात्रि ॥ (यथा महाभारत । १२ । ५३ । १

तत शयनमाविश्य प्रसुप्तो मधुसूदन ।
याममात्रार्द्धशेषायां यामिन्यां प्रत्यबुध्यत ॥”)

हरिद्रा । इत्यमर । १ । ४ । ४ ॥ (कश्यपपत्नी यथा भागवते । ६ । ६ । २१ ।

ताक्ष्यस्य विनता कद्रु पतङ्गी यामिनीति च ।
पतङ्गयसूत पतगान् यामिनी शलभानथ ॥

प्रह्लादस्य द्वितीया तनया । यथा कथासरित्सागरे । ४६ । ७२ ।

प्रह्लादो यामिनीं नाम द्वितीयां तनयां ददौ ॥ )

यामिनीपति पुं (यामिन्या पति ।) चन्द्र । इति शब्दरत्नावली ॥ (यथा भागवते । १० । ३५ । २५ ।

“यदुपतिर्द्विरदराजविहारो
यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्त
मोचयन् व्रजगवा दिनतापम् ॥”)

कर्पूरम् । इत्यमर ॥

याम्मी स्त्री (यमस्येयम् । यमो देवतास्या इति वा । यम+अण् । ङीप ) दक्षिणदिक । इति राजनिघण्ट ॥ (यथा ज्योतिषे

———याम्यां गुरौ न व्रजेत ।

यामि+ङीष ।) कुलस्त्री । इति शब्दरत्नावली ॥ (यथा मनौ । ४ । १८० ।

मातापितृभ्यां यामीभिर्भ्रात्रा पुत्रेण भार्य्यया ।
दुहित्रा दासवर्गेण विवाद न समाचरेत ॥

सर्व्वनामयुष्मच्छब्दः। तस्य त्रिषु लिङ्गेषु समानि रूपाणि। ( एकविंशतिविभक्तिषु तस्य रूपाणि।) यथा। त्वम् १ युवाम् २ यूयम् ३। त्वाम् ४ युवाम् ५ युष्मान् ६। त्वया ७ युवाभ्याम् ८ युष्माभिः ९। तुभ्यम् १० युवाभ्याम् ११ युष्मभ्यम् १२। त्वत्१३ युवाभ्याम् १४ युष्मत्१५। तव १६ युवयोः १७ युष्माकम् १८। त्वयि१९ युवयोः २० युष्मासु २१। ( द्वितीयाचतुर्थी-षष्ठीनामेकवचनद्विवचनबहुवचनविभक्तिषु तस्य रूपान्तराणि यथा। द्वितीयैकवचने त्वा। चतुर्थीषष्ठ्योरेकवचने ते। आसां द्विवचने वाम्। आसां बहुवचने वः। श्लोकपादे वाक्यादौ च-वा-हा-ह-एव-शब्दयोगे अदर्शनार्थदृशधातुयोगे च न स्युः।) इति व्याकरणम् ॥ यथा,—

"युष्मनृकृते खञ्जनगञ्जनाक्षि !
शिरो मदीयं यदि याति यातु।
नीतानि नाशं जनकात्मजार्थे
दशाननेनापि दशाननानि ॥"

इति तुल्तिवादे गदाधरः ॥ )

यः, स्त्री, यूपः। इति हेमचन्द्रः। ३। ६८ ॥

यूकः, पुं, ( यौतीति। यु+"अशियुधूनीभ्यो दीर्घश्च।" उणा॰ ३। ४७। इति कन् दीर्घश्च।) मत्कुणः। इति जटाधरः ॥ ( यथा, सुश्रुते सूत्रस्थाने ३१ अध्याये।

"यूका ललाटमयान्ति वलिं नाश्नन्ति वायसाः।
येषां वापि रतिर्नास्ति यातास्ते यमसादनम् ॥")

यूका, स्त्री, ( यूक+स्त्रियां टाप्।) मत्कुणः। यूणी इति उकुण इति च भाषा। तत्पर्य्यायः। केशकीटः २ स्वेदजः ३ षट्पदः ४। इति राजनिर्घण्टः ॥ पाली ५ वालक्रमिः ६। इति जटाधरः ॥ ( यथा, मनौ। १। ४५।

"स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम्।
ऊष्मणश्चोपजायन्ते यच्चान्यत् किञ्चिदीदृशम् ॥"

क्रिमिविशेषः। तद्यथा,—

"नामतो विंशतिविधा वाह्यास्तत्र मलोद्भवाः।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥
बहुपादाश्च सूक्ष्माश्च यूका लिख्याश्च नामतः।
द्विधा ते कोठपिडकाः कण्डूगण्डान् प्रकुर्व्वते ॥"

इति माधवकरसंगृहीतरुग्विनिश्चये क्रिम्यधिकारे ॥

"क्रिमयो द्विविधाः प्रोक्ता वाह्याभ्यन्तरसम्भवाः।
वाह्या यूकाः प्रसिद्धाः स्युः किञ्चुलूकास्तथा-
न्तराः ॥
सप्तधा हि भवेद्बाह्याः षड्धा चान्तःसमुद्भवाः।
तेषां वक्ष्यामि संभूतिं वाह्यानाभ्यन्तरे नृणाम् ॥
रूक्षादति वलात् स्वेदाच्चिन्तया शोषणादपि।
कफधातुसमुद्भूतास्तीव्रा यूका भवन्ति हि ॥
यूकाः कृष्णाः पराः श्वेतास्तृतीयाश्चर्म्मणि
स्थिताः।
कृष्णासितविकटा कृष्णाश्चर्म्माभाश्चर्म्मयूकिकाः ॥
चतुर्थी विष्कुली नाम वर्त्तुला मूत्रसम्भवा।
मत्कुणाख्याश्च पञ्चम्यो वाह्योपद्रवकारिणः ॥
यूका मस्तकसंस्थाने श्वेता वस्त्रनिवासिनी।
चर्म्मयूका नेत्रचर्म्मे कृष्णा रोमणि षट्पिका ॥"

इति हारीते चिकित्सितस्थाने पञ्चमेऽध्याये ॥ यूकानाशकौषधं यथा, कामरत्ने।

"विड़ङ्गगन्धोत्पलकल्कयोगात्
गोमूत्रसिद्धं कटुतैलमेतत्।
अभ्यङ्गयोगेन शिरोरुहाणां
यूकादिलीक्षाप्रचयं निहन्ति ॥
गोमूत्रेण धनाम्लेपो यूकानिवारणः।
पारदं मर्द्दयेन्निम्बकृष्णधुस्तूरजद्रवैः ॥
नागवल्लीद्रवैश्चाथ वस्त्रखण्डं प्रलेपयेत्।
तद्वस्त्रं वेष्टयेन्मौलौ धार्य्यं यामत्रयं तथा ॥
यूका पतन्ति निःशेषाम्मत्कुणाश्च संशयः।
द्विनिशानवनीतेन लेपाच्छीर्षे प्रकल्पयेत्
नीलोत्पलं तिलं यष्टि सर्षपं नागकेशरम्।
धात्रीफल समं पिष्ट्वा लेपो यूकाविनाशनः ॥
निशागन्धकगोमूत्रं विड़ङ्गकटुतैलकम्
पारदेन समं मर्द्द्य लेपो यूकानिवारणः ॥"

इति केशस्य यूकादिनिवारणम् ॥

परिमाणभेदः। यथा, मार्कण्डेये। ४९। ३७।

"परमाणुः परं सूक्ष्मं त्रसरेणुर्महीरजः।
वालाग्रञ्चैव लिक्षाश्च यूका चाथ यवोदरम् ॥")

यूतिः, स्त्री, ( यु+"ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च।" ३।३।९७। इति क्तिन् निपातनाद्दीर्घत्वञ्च।) मिश्रणम्। इति मुग्धबोधव्याकरणम् ॥ ( यथा, भट्टिकाव्ये। ७। ६९।

"करोमि वो यद्यियूतीन् प्रियाद्यं पाणिभि-
र्द्दृशः ॥" )

यूथं, क्ली, (यु मिश्रणे+"तिथपृष्ठगूथयूथप्रोथाः।" उणा॰ २। १२। इति थक्प्रत्ययेन निपातितम्।) सजातीयसमूहः। इत्यमरः।२।५।४१॥ (यथा, रामायणे। २। ५४। ३१।

"तत्र कुञ्जरयूथानि मृगयूथानि चैव हि।
विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव ! ॥")

यूथनाथः, पुं, ( यूथस्य नाथः।) वन्यकरिणां समूहस्य ईश्वरः। तत्पर्य्यायः। यूथपः २। इत्यमरः। २। ८। ३५ ॥

यूथपः, पुं, ( यूथं पातीति। पा+कः।) अरण्यहस्तिनां प्रधानम्। इति शब्दरत्नावली ॥ ( यथा, श्रीमद्भागवते। ९। १५। २८।

"घोरमादाय परशुं सतूणं वर्म्मकार्म्मुकम्।
अन्वधावत दुर्म्मर्षो मृगेन्द्र इव यूथपम् ॥"

प्रधानमात्रे च। यथा, महाभारते। १।११८।५।

"राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते।
चरन् मैथुनधर्म्मस्थं ददर्श मृगयूथपम् ॥")

यूथभ्रष्टः, पुं, ( यूथाद्भ्रष्टश्चलितः।) यूथात् पलायितहस्ती। इति शब्दमाला ॥ ( यूथभ्रष्टमात्रे, त्रि। यथा, श्रीमद्भागवते। ४। २८। ४६।

"यदा नोपलभेताङ्घ्रावुष्माणं पत्युरर्च्चती।
आसीत् संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥")

यूथिका, स्त्री, (यूथं पुष्पवृन्दमस्या अस्तीति। यूथ+ठन्। टाप्।) पाठा। इति राजनिर्घण्टः। अम्बष्ठकः। इति मेदिनी। के, १४४ ॥ पुष्पविशेषः। युँइ फुल इति भाषा ॥ ( यथा, मेघदूते। १। २८।

"विश्रान्तः सन् व्रज वननदीतीरजातानि सिञ्चन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि ॥")

तत्पर्य्यायः। गणिका २ अम्बष्ठा ३ मागधी ४। सा पीता चेत् हेमपुष्पिका। इत्यमरः। २। ४। ७१ ॥ यूथी५ प्रचुरवर्णा६। इति त्रिकाण्डशेषः ॥ शिखण्डिनी ७ बालनी ८। इति रत्नमाला ॥ बालपुष्पिका ९ बहुगन्धा १० भृङ्गानन्दा ११। अस्या गुणाः। स्वादुत्वम्। शिशिरत्वम्। शर्कराग्निपित्तदाहव्रणनानात्वग्दोषनाशित्वञ्च। इति राजनिर्घण्टः ॥ अपि च।

"यूथीयुगं हिमं तिक्तं कटुपाकं चरं लघु।
मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम्।
व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम् ॥"

इति भावप्रकाशः ॥

( तथा च सुश्रुते उत्तरतन्त्रे ४५ अध्यायः।

"पटोलशैलूसुनिषस्रयूथिका
वटातिमुक्ताङ्कुरसिन्धुवारजम् ॥" )

यूथी, स्त्री, ( यूथ+अर्शआद्यच्। ततो ङीष्।) यूथिका। इति शब्दरत्नावली ॥

यूथीनः, पुं, ( यूथं पातीति। यूथ+खः।) यूथपः। इति शब्दचन्द्रिका ॥

यूनिः, स्त्री, योगम्। मिश्रणम्। इति सिद्धान्तकौमुदी ॥

यूनी, स्त्री, ( युवन्+ङीप्। "श्वयुवमघोनामतद्धिते।" ६। ४। १३३। इति वस्य उत्वम्।) युवती। इति शब्दरत्नावली ॥ ( यथा,—

"यूनी काममयी दुनोति हृदयं वैधव्यभावा-
द्वधूः।"

इति कलापे श्वयुवमघोनामतद्धिते सूत्रे कुलचन्द्रः॥)

यूपः, पुं क्ली, ( यौति मिश्रयतीति। यूयते युज्यतेऽस्मिन्निति ऋग्भाष्ये सायणः। १। ५१। १४। यद्वा, यु+"कुयुभ्यां च। उणा॰ ३।२७। इति पः दीर्घत्वञ्च।) यज्ञे पशुबन्धनकाष्ठम्। इत्यमरः। २। ७। ४१ ॥ तस्य परिमाणादिर्यथा। स्मृतौ।

"चतुर्हस्ता भवेद्यूपो यज्ञदण्डसमुद्भवः।
वर्त्तुलः शोभनः स्थूलः कर्त्तव्यो द्यमौलिकः ॥"

भविष्ये।

"विल्वस्य वकुलस्यैव कृतो यूपः प्रशस्यते।"

इति सामवेदिवृषोत्सर्गतत्त्वम् ॥

यूपः, पुं, (यु+पः। दीर्घश्च।) जयस्तम्भः। यागस्तम्भः। इत्युणादिकोषः ॥ (यथा, रघुवंशे।६।३८।

"संग्रामनिर्व्विष्टसहस्रबाहु-
रष्टादशद्वीपनिखातयूपः।
अनन्यसाधारणराजशब्दो
बभूव योगी किल कार्त्तवीर्य्यः ॥")

प्रमार्जितो।" इति हेमचन्द्रः॥ ( यथा, महा-
भारते । ३ । ११ । ३८ ।
"ततो भीमो महाबाहुरारुह्य तरसा द्रुमम् ।
व्यायाममयोदिष्टं नियत्नमकरोत् तदा ॥" )
ानं, क्ली, (वि + आ + यम + ल्युट् ।) यामः ।
इति त्रिकाण्डशेषः ॥
मिश्रं, त्रि, ( वि + आ + मिश्र + घञ् । )
संमिलितम् । भिन्नविषयाणामेकीभावकरणम् ।
यथा,—
"व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥"
इति श्रीभगवद्गीतायाम् । ३ । २ ॥
क्वचित् कर्म्मप्रशंसा क्वचित् ज्ञानप्रशंसा इत्येवं
व्यामिश्रं सन्देहोत्पादकमिव यद्वाक्यं तेन मे
मतिमुभयत्र दोलायितां कुर्व्वन् मोहयसीव ।
इति तट्टीकायां श्रीधरस्वामी ॥
यतं, त्रि, ( विशेषेण आयतम् । ) व्यापृतम् ।
दैर्घ्यम् । ( यथा, शाकुन्तले । २ ।
"अपचितमपि गात्रं व्यायतत्वादलक्ष्यं ।
गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥")
दृढम् । अतिशयः । इति मेदिनी ॥
याम:, पुं, (वि + आ + यम + घञ् ।) पौरुषः ।
( यथा, महाभारते । ४ । ३८ । ७ ।
"व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्व्वायुधमहामात्रं शत्रुसंबाधकारकम् ॥")
श्रमः । ( यथा, महाभारते । १ । १७६ । ६ ।
"व्यायामकर्षितः सोऽथ मृगलिप्सुः पिपासितः ।
आजगाम नरश्रेष्ठ वशिष्ठस्याश्रमं प्रति ॥" )
विषमः । दुर्गसञ्चारः । इति मेदिनी ॥ यामः ।
इति हेमचन्द्रः ॥ मल्लक्रीड़ा । कुस्ती इति
पारस्य भाषा । (यथा, महाभारते ।१२।२१।७।
"अन्ये साम प्रशंसन्ति व्यायाममपरे जनाः ॥")
अस्य गुणादि यथा,—
"व्यायामो हि सदा पथ्यो बलिनां स्निग्ध-
भोजिनाम् ।
स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥
सर्व्वेष्वृतुषु सर्व्वैर्हि नृभिरात्महितार्थिभिः ।
बलस्यार्द्धेन तु कर्त्तव्यो व्यायामो हन्त्यतो यथाम् ॥
हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते ।
कक्षा ललाटे ग्रीवायां यदा घर्म्मः प्रवर्त्तते ।
बलार्द्धं तं विजानीयाद्दायतो पृष्ठमेव च ॥
लाघवं कर्म्मसामर्थ्यं स्थैर्य्यं क्लेशसहिष्णुता ।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥
व्यायामं कुर्व्वतो नित्यं विरुद्धमपि भोजनम् ।
विदग्धमविदग्धं वा निर्द्दोषं परिपच्यते ॥
न च व्यायामसदृशमन्यत् स्थौल्यापकर्षणम् ।
न च व्यायामिनं मर्त्त्यं मर्द्दयन्त्यरयो बलात् ॥
न चैनं सहसाक्रम्य जरा समधिगच्छति ॥
व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्त्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥
रक्तपित्ती क्षयी शोषी कासी श्वासी क्षतातुरः ।
भुक्तवान् स्त्रीषु च क्षीणो व्यायामं परिवर्जयेत् ॥
वातपित्तामयी बालो वृद्धोऽजीर्णी च संत्यजेत् ।
अतिव्यायामतः कासो रक्तपित्तं प्रजायते ॥
श्रमः क्लमः क्षयस्तृष्णा ज्वरश्छर्द्दिश्च जायते ॥"
इति राजवल्लभः ॥
व्यायोगः, पुं, ( वि + आ + युज + घञ् । ) दश-
विधरूपकान्तर्गतरूपकविशेषः । यथा,—
"स्यान्नाटकं प्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगः समवाकारो वीथ्यङ्केहामृगा इति ॥
अभिनेयप्रकाराः स्युर्भाषाः षट् संस्कृतादिकाः ॥"
इति हेमचन्द्रः ॥
( तल्लक्षणं यथा, साहित्यदर्पणे । ६ । ५२४ ।
"ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।
हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः ॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।
कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥")
व्यालः, पुं, ( विशेषेण आसमन्तात् अलतीति ।
अल पर्य्याप्तौ + अच् । ) सर्पः । श्वापदः ।
इत्यमरः ॥ ( यथा, मनुः । १ । ४३ ।
"पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः ।
रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥")
दुष्टगजः । इति मेदिनी ॥ (यथा, माघे ।१२।२८।
"व्यालद्विपा यन्तृभिरुन्मदिष्णवः
कथञ्चिदारादपथेन निन्यिरे ॥")
चित्रकः । व्याघ्रः । इति राजनिर्घण्टः ॥ राजा ।
इत्यमरटीकायां मथुरेशः ॥
व्यालः, त्रि, ( वि + आ + अल + अच् । ) शठः ।
धूर्त्तः । इति जटाधरः ॥
व्यालकः, पुं, ( व्याल एव । स्वार्थे कन् । ) दुष्ट-
गजः । तत्पर्य्यायः । गम्भीरवेदी २ अङ्कुश-
दुर्द्धरः ३ व्यालकः ४ । इति त्रिकाण्डशेषः ॥
( श्वापदः । यथा, महाभारते ।१३।११६।८५।
"जायते व्यालकश्चापि मांसं तस्मात्तु मानुषः ॥")
व्यालखड्गः, पुं, व्यालनखः । इति राजनिर्घण्टः ॥
व्यालगन्धा, स्त्री, ( व्यालस्येव गन्धो यस्याः । )
नाकुली । इति राजनिर्घण्टः ॥
व्यालग्राहः, पुं, ( व्यालं गृह्णातीति । व्याल +
ग्रह + अण् । ) व्यालग्राही । इत्यमरटीकायां
भरतः ॥ ( यथा, मनुः । ८ । २६० ।
"व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः ॥")
व्यालग्राही, [न्] पुं, ( व्यालं गृह्णातीति । ग्रह +
णिनिः । ) भिक्षार्थं सर्पधारी । सर्पखेलकः ।
सापुड़िया इति वादिया इति च भाषा ।
तत्पर्य्यायः । अहितुण्डिकः २ । इत्यमरः ॥
जाङ्गुलिः ३ जाङ्गलिः ४ आहितुण्डिकः ५
व्यालग्राहः ६ गारुड़िकः ७ विषवैद्यः ८ ।
इति शब्दरत्नावली ॥
व्यालजिह्वा, स्त्री, ( व्यालस्य जिह्वेव आकृति-
र्यस्याः । ) महासमङ्गा । इति राजनिर्घण्टः ॥
( व्यालजिह्वा च ॥ )
व्यालदंष्ट्रः, पुं, (व्यालस्य दंष्ट्रेव आकृतिर्यस्य ।)
गोक्षुरः । इति राजनिर्घण्टः ॥
व्यालनखः, पुं, (व्यालस्य नख इव आकृतिर्यस्य ।)
गन्धद्रव्यविशेषः । बघनहा इति हिन्दी भाषा ।
तत्पर्य्यायः । कूटस्थः २ चक्रनायकः ३ चक्री ४
चक्रनखः ५ व्यासफलः ६ व्याघ्रनखः ७ द्वीपि-
नखः ८ खपुरः ९ व्यालपाणिजः १० व्याला-
युधः ११ व्यालबलः १२ व्यालखड्गः १३ ।
अस्य गुणाः । तिक्तत्वम् । उष्णत्वम् । कषा-
यत्वम् । कफवातकुष्ठकण्डूव्रणनाशित्वम् । वर्ण्य-
त्वम् । सौगन्ध्यप्रदत्वञ्च । इति राजनिर्घण्टः ॥
व्यालपत्रा, स्त्री ( व्यालानि तीक्ष्णानि पत्राणि
यस्याः । ) एर्व्वारुः । इति राजनिर्घण्टः ॥
व्यालबलः, पुं, व्यालनखः । इति राजनिर्घण्टः ॥
व्यालमृगः, पुं, ( व्यालो हिंस्रो मृगः पशुः । )
चित्रव्याघ्रः । चिता बाघ इति भाषा । इति
महाभारते राजधर्म्मः ॥ ( यथा, महाभारते ।
३ । १६६ । ३ ।
"रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत ! ।
पृथक् व्यालमृगाणाञ्च पक्षिणामिव सर्व्वशः ॥")
व्यालम्बः, पुं, ( विशेषेण आलम्बते इति । वि +
आ + लम्ब + अच् । ) रक्तैरण्डः । इति वैद्य-
कम् ॥ ( लम्बमाने, त्रि । यथा महाभारते ।
७ । ८८ । १० ।
"व्यालम्बहस्तान् सच्छिन्नान् सपक्षानिव पर्व्व-
तान् ॥")
व्यालायुधं, क्ली, (व्यालस्यायुधं नख इव आकृति-
र्यस्य । ) नखीनामगन्धद्रव्यम् । इत्यमरटीकायां
मथुरेशः ॥
व्यालायुधः, पुं, ( व्यालस्यायुधमिवाकृतिर्यस्य । )
व्यालनखः । इति राजनिर्घण्टः ॥
व्यावक्रोशी, स्त्री, ( वि + अव + क्रुश + "कर्म्म-
व्यतिहारे णच् स्त्रियाम् ।" ३ । ३ । ४३ । इति
णच् । ततः "णचः स्त्रियामञ् ।" ५।४।१४। इति
स्वार्थे अञ् । "न कर्म्मव्यतिहारे । ७ । ३ ।
६ । इति ऐच्-प्रतिषेधः । स्त्रियां ङीप् । ) पर-
स्पराक्रोशनम् । इति स्त्रीलिङ्गसंग्रहटीकायां
भरतः ॥
व्यावभाषी, स्त्री, ( वि + अव + भाष + णच् ।
स्वार्थे अञ् । ङीप् । ) व्यावक्रोशी । इत्यमर-
टीकायां रायमुकुटः ॥
व्यावर्त्तः, पुं, ( वि + आ + वृत् + अच् । ) नाभि-
कण्टकः । इति शब्दरत्नावली ॥ तत्र आव-
र्त्तकोऽपि पाठः ॥
व्यावहारी, स्त्री, (वि + अव + हृ + णच् । स्वार्थे
अञ् । ङीप् । ) परस्परहरणम् । इत्यमर-
टीकायां भरतः ॥
व्यावहासी, स्त्री, ( वि + अव + हस + णच् ।
स्वार्थे अञ् । ङीप् । ) परस्परहसनम् । इत्य-
मरटीकायां भरतः ॥
व्यावृत्तः, त्रि, ( वि + आ + वृत् + क्तः । ) वृतः ।
यथा । वृते तु वृतव्यावृत्तौ । इति हेमचन्द्रः ॥
व्यावृत्तश्च ॥ ( प्रतिनिवृत्तः । यथा, रघुः ।१।२७।
"व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥"

ओङ्कारस्तत्परं ब्रह्म सावित्री स्यात्तदक्षरम् ।
एष मन्त्रो महाभाग सारात्सार उदाहृतः ॥”
इति कौर्म्मे उपविभागे १३ अध्यायः ॥

( बाक्यम् । यथा, कुमारसम्भवे । ३ । ६३ ।
“न हीश्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम् ॥” )

व्युतः, त्रि, ( वि + वे + क्तः । ) स्यूतम् । इति भरतद्विरूपकोषः ॥

व्युतिः, स्त्री, ( वि + वे + क्तिन् । ) ऊतिः । तन्तुसन्ततिः । इति भरतद्विरूपकोषः ॥

व्युत्क्रमः, पुं, ( वि + उत् + क्रम + घञ् । ) क्रमविपर्य्ययः । व्यतिक्रमः । तत्पर्य्यायः । उत्क्रमः २ व्यक्रमः ३ । इति हेमचन्द्रः ॥ (यथा, साहित्यदर्पणे । १० ।
“पश्येत् कश्चिच्चल चपल रे का त्वराहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ॥”)

व्युत्थानं, क्ली, (वि + उत् + स्था + ल्युट् ।) स्वातन्त्र्यकृत्यम् । विरोधाचरणम् । इति मेदिनी ॥
( यथा, महाभारते । १४ । ७६ । १६ ।
“एवं ते द्रविडाभीरा पुण्ड्राश्च शबरैः सह ।
वृषलत्वं परिगता व्युत्थानात् क्षत्रधर्म्मिणः ॥”)
प्रतिरोधनम् । समाधिपारणम् । इति हेमचन्द्रः ॥ नृत्यभेदः । इति शब्दरत्नावली ॥ विशेषेणोत्थानञ्च ॥ ( चित्तस्यावस्थाविशेषः । इति पातञ्जलदर्शनम् ॥ )

व्युत्पत्तिः, स्त्री, (वि + उत् + पद् + क्तिन् ।) विशेषेणोत्पत्तिः । संस्कारः । इति व्युत्पन्नशब्दार्थदर्शनात् । यथा । शरत्कालबोधनीयत्वेन शारदापदव्युत्पत्तेस्तत् पदं सालम्यादि सारं ददातीति व्युत्पत्तिस्तु काल्पनिकी । इति तिथ्यादितत्त्वम् ॥ शक्तिज्ञानम् । यथा । व्यवहारादिबाधकं विना विवरणादपि व्युत्पत्तेः । बाधकं विना स्वसाध्यस्य बाधकं यद्विशेष्यं तदभाववत्त्वविशेष्यकत्वप्रकारेण व्युत्पत्तेः व्युत्पत्तिसम्भवात् शक्तिग्रहसम्भवादिति यावत् । इति आख्यातवादस्य माथुरी टीका ॥

व्युत्पन्नः, त्रि, (वि + उत् + पद + क्तः ।) संस्कृतः । इति हेमचन्द्रशब्दरत्नावल्यौ ॥ व्युत्पत्तियुक्तः । यथा । व्याकरणव्युत्पन्नशब्दज्ञानाधीनं शास्त्रान्तरज्ञानं तदधीना च वैदिकक्रिया तत्फलं स्वर्गादि । इति मुग्धबोधटीकायां दुर्गादासः ॥

व्युत्पादकः, त्रि, ( विशेषेणोत्पादयति ज्ञानम् । वि + उत् + पद + णिच् + ण्वुल् । ) व्युत्पत्तिजनकः । यथा । शब्दव्युत्पादकशास्त्रारम्भे शब्दैरेव मङ्गलं कार्य्यम् । इति मुग्धबोधटीकायां दुर्गादासः ॥

व्युदासः, पुं, (वि + उत् + अस + घञ् ।) निरासः । परित्यागः । यथा । तदेवेत्येवकारश्रवणात्तिथिद्वैधे खण्डविशेषो नियम्यते कर्म्मणि खण्डान्तरव्युदासाय । इत्यमावास्याश्राद्धकालनिरूपणे तिथ्यादितत्त्वम् ॥ (यथा च महाभारते । १२ । १६ । १८ ।
“अथैकान्तव्युदासेन शरीरे पाञ्चभौतिके ॥”)

व्युष्टं, क्ली, ( वि + वस् + क्तः । ) फलम् । दिनम् । प्रभातम् । ( यथा, माघे । १२ । ४ ।
“व्युष्टं प्रयाणाच्च वियोगवेदना
विदूननारीकमभूत् समन्ततः ॥”)
पर्य्युषितम् । इति हेमचन्द्रः ॥ (प्रभातार्थे क्वचित् पुंलिङ्गोऽपि । स तु दोषायाः पुत्त्रः । यथा, भागवते । ४ । १३ । १४ ।
“प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः ।
व्युष्टः सुतं पुष्करिण्यां सर्व्वतेजसमादधे ॥”)

व्युष्टः, त्रि, ( वि + वस + क्तः । ) उषितः । (यथा, महाभारते । ३ । ६६ । २८ ।
“सा व्युष्टा रजनीं तत्र पितुर्वेश्म विभाविनी ।”)
दग्धः । इति मेदिनी ॥

व्युष्टिः, स्त्री, (वि + वस् + क्तिन् ।) फलम् । (यथा, महाभारते । १२ । २२८ । ४ ।
“महतस्तपसो व्युष्ट्या पश्यलोकौ परावरौ ॥”)
समृद्धिः । इति मेदिनी ॥ स्तुतिः । इति हेमचन्द्रः ॥ (प्रकाशः । यथा, ऋग्वेदे ।१।१७१।५।
“व्युष्टिषु शवसा शश्वतीनाम् ॥”
“व्युष्टिषु सतीषु प्रकाशेषु सत्सु ।” इति तद्भाष्ये सायणः ॥ )

व्यूढः, त्रि, (विशेषेण ऊढ़तेस्म । वि + वह + क्तः ।) विन्यस्तः । संहतः । इत्यमरः । ३ । १ । ४४ ॥ (व्यूहरचनयाधिष्ठितः । यथा, गीतायाम् ।१।२।
“दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्य्योधनस्तदा ।
आचार्य्यमुपसंगम्य राजा वचनमब्रवीत् ॥”)
पृथुलः । इति मेदिनी ॥ ( यथा, रघुः । १।१३।
“व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।
आत्मकर्म्मक्षमं देहं क्षात्त्रो धर्म्म इवाश्रितः ॥”)

व्यूढकङ्कटः, त्रि, ( व्यूढः कङ्कटः सन्नाहो येन । ) सन्नद्धः । इत्यमरः ॥

व्यूढिः, स्त्री, ( वि + वह + क्तिन् । ) विन्यासः । संहतिः । पृथुलता । इति व्यूढशब्दार्थदर्शनात् ॥

व्यूतं, त्रि, ऊतम् । तन्तुसन्ततम् । विपूर्व्ववेञ्धातोः क्तप्रत्ययेन निष्पन्नमेतत् ॥

व्यूतिः, स्त्री, (वि + वे अथ वा + क्तिन् । “ऊतियूतिजूतीति ।” ३ । ३ । ९७ । इति निपातितः । ) वस्त्रादिवयनक्रिया । तत्पर्य्यायः । वाणिः २ । इत्यमरः ॥ व्युतिः ३ । इति तट्टीका ॥ वाणी ४ । इति शब्दरत्नावली ॥

व्यूहः, पुं, (वि + ऊह + घञ् ।) समूहः । निर्म्माणम् । तर्कः । इति मेदिनी ॥ देहः । ( यथा, भागवते । ११ । ६ । १० ।
“यः सात्वतैः समविभूतय आत्मवद्भि-
र्व्यूहेऽर्च्चितः सवनशः स्वरतिक्रमाय ॥”)
सैन्यः । इति त्रिकाण्डशेषः ॥ ( परिणामः । लिङ्गम् । यथा, भागवते । ४ । २९ । ७० ।
“यावद्बुद्धिमनोऽक्षार्थगुणव्यूहो ह्यनादिमान् ॥”)
युद्धार्थसैन्यरचना । तत्पर्य्यायः । बलविन्यासः २ । इत्यमरः ॥ “युद्धार्थं सैन्यस्य देशविशेषे विभज्य दुर्लङ्घत्वनिमित्तं स्थापनं व्यूहः । ऊह वितर्के विपूर्व्वात् घञ् । युद्धे दण्डादयो भेदा विशेषा व्यूहस्येत्यर्थात् आदिना भोगमण्डलसंहतानां ग्रहः । यथाह कामन्दकिः ।
तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगोऽन्वावृत्तिरेव च ।
मण्डलं सर्व्वतो वृत्तिः पृथग्वृत्तिरसंहतः ॥ इति ॥
एषां चतुर्णाञ्च बहवो भेदाः क्रौञ्चचक्रादयो ग्रन्थगौरवभयान्नोक्ताः ।” इति भरतः ॥ अपि च ।
“समग्रस्य तु सैन्यस्य विन्यासः स्थानभेदतः ।
स व्यूह इति विख्यातो युद्धेषु पृथिवीभुजाम् ॥
व्यूहभेदास्तु चत्वारो दण्डो भोगोऽथमण्डलम् ।
असंहतश्च निर्णीता नीतिसारादिसम्मताः ॥
अन्येऽपि प्रकृतिव्यूहाः क्रौञ्चचक्रादयः क्वचित् ।
तिर्य्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च ॥
मण्डलं सर्व्वतो वृत्तिः पृथग्वृत्तिरसंहतः ।
सैन्यानां नीतिसारादौ व्यूहभेदाः समीरिताः ।
क्रौञ्चचक्रादिभेदानां लक्षणं भारतादिषु ॥”
इति शब्दरत्नावली ॥

( यथा च कामन्दकीयनीतौ ।१९।२९—५७ ।
“सर्व्वव्यूहविधानज्ञा युद्धकर्म्मसु कर्म्मठाः ॥
उरः कक्षे च पक्षौ च मध्यं पृष्ठं प्रतिग्रहः ।
कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह इष्यते ॥
उरश्च कक्षपक्षौ च व्यूहोऽयं सप्रतिग्रहः ।
गुरोरेष च शुक्रस्य कक्षाभ्यां परिवर्ज्जितः ॥
अभेद्याः कुलजा मेध्या लब्धलक्ष्याः प्रहारिणः ॥
सेनाङ्गपतयः कार्य्या हव्ययुद्धप्रतिक्रियाः ॥
प्रवीरपुरुषैरेतैस्तिष्ठेयुः परिवारिताः ।
अभेदेन च युद्धेरन् रक्षेयुश्च परस्परम् ॥
फल्गु सैन्यस्य यत्किञ्चिन्मध्ये व्यूहस्य तद्भवेत् ।
युद्धवस्तु च यत्किञ्चित्प्रायस्तज्जघने भवेत् ॥
युद्धार्थं युद्धकुशलं चण्डानीकं प्रयोजयेत् ।
युद्धं हि नायकप्रायं हन्यते तदनायकम् ॥
व्यूहोऽसुपृष्ठमचलः पत्त्यश्वरथदन्तिभिः ।
तथाप्रतिहतो ज्ञेयो हस्त्यश्वरथपत्तिभिः ॥
मध्ये देशे हयानीकं रथानीकं तु कक्षयोः ।
पक्षयोश्च गजानीकं व्यूहोऽन्तभिदयं स्मृतः ॥
रथस्थाने हयान्दद्यात्पदातींश्च हयाश्रये ।
रथाभावे तु मतिमान्नागानेव प्रकल्पयेत् ॥
विभज्य प्रक्षिपेन्मध्ये पत्त्यश्वरथकुञ्जरान् ।
मध्ये कुर्व्वीत नागेन्द्रान् पत्त्यश्वरथवारितान् ॥
धनुः क्षपी च दण्डश्च शकटो मकरध्वजः ॥
इत्यादयो महाव्यूहास्तदाकारान् प्रकल्पयेत् ॥
यदि स्याद्दण्डबाहुल्यं तदा नागः प्रकीर्त्तितः ।
मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः ॥
कथिताः प्रकृतिव्यूहा भेदास्तेषां प्रकीर्त्तिताः ।
यः स तं व्यूह्य मतिमान् काले स्थाने प्रकल्पयेत् ॥
तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगोऽन्वावृत्तिरेव च ।
प्रदरो दृढकोऽसह्यश्चापो वै तद्विपर्य्ययः ॥
प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसञ्जयौ ।
विशालविजयः स्थूणा स्थूणाकर्णचमूमुखः ॥

सुखाख्यो वलयश्चैव दण्डभेदास्तु दुर्ज्जय ।
अतिक्रान्त प्रतिक्रान्त कक्षाभ्यामेकपक्षतः ।
अतिक्रान्तश्च पक्षाभ्यां त्रयोऽन्यस्तु विपर्य्यय ।
स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्द्ध्वग ।
द्विगुणान्तस्त्वतिक्रान्तपक्षोऽन्योऽस्य विपर्य्यय ।
द्विचतुर्द्दण्ड इत्येव ज्ञेया लक्षणतः क्रमात् ।
गोमूत्रिकाहिसञ्चारी शकटो मकरस्तथा ।
भोगभेदाः समाख्यातास्तथा परिपतन्तक ।
दण्डपक्षो युगोरस्य शकटस्तद्विपर्य्यय ।
मकरो व्यतिकीर्णश्च शेष कुञ्जरराजिभि ।
मण्डलव्यूहभेदौ च सर्व्वतोभद्रदुर्ज्जयौ ।
अष्टानीको द्वितीयस्तु प्रथम सर्व्वतोमुख ।
अर्द्धचन्द्रक उद्धारो वज्रो भेदास्तु संहत ।
तथा कर्कटशृङ्गी च काकपादी च गोधिका ।
त्रिचतु पञ्चसैन्यानां ज्ञेया आकारभेदत ।
इति व्यूहा समाख्याता व्यूहभेदप्रयोक्तृभि ।
एते सनद्ध प्रोक्ता दण्डव्यूहाश्च पञ्चधा ।
तथा व्यूहद्वयश्चैव मण्डलस्य प्रकीर्त्तितम् ।
असंहतास्तु षड्व्यूहा भोगव्यूहाश्च पञ्चधा ।
व्यूहश्चैतु प्रयोक्तव्या युद्धकाले उपस्थिते ।
पक्षादीनामनीकेन हत्वा शेष परिक्षिपेत् ।
उरसा च समाहत्य कोटिभ्यां परिवेष्टयेत् ।
परकोटिमुपक्रम्य पक्षाभ्यामप्रतिग्रह ।
कोटिभ्यां जघने हन्यादुरसा च प्रपीडयेत् ।
एव व्यूहप्रयत्नेन यत्नवानवनीपति ।
विनाशयेद्रिपुबलं वनेच्छ स्थिरतामलम् ।')

व्यूहन, क्ली, ( वि+ऊह+ल्युट । ) सैन्यसंस्थानम् । विपूर्व्वोहधातोरनट्प्रत्ययेन निष्पन्नमिदम् । (मेलनम् । यथा भागवते ।३।२६।३६।
'चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयो ।'
"व्यूहन मेलन हस्तादे । इति तट्टीकायां स्वामी । चोभक त्रि । यथा, हरिवंशे । १७८ । ३८ ।
"पर सुयौध पृथिवीभरक्षम
यस्य ऋद्ध व्यूहन कालरूपम् ।"
"व्यूहन जगतक्षोभकम् ।" इति तट्टीकायां नीलकण्ठ ।)

व्यूहपार्ष्णि पुं ( व्यूहस्य पार्ष्णि । ) व्यूहपश्चाद्भाग । तत्पर्य्याय । प्रतिग्रह २ । इत्यमर । प्रग्रामर ३ । इति तट्टीका । व्यूहस्य पश्चाद् व्यूहान्तरम् । इति कश्चित् । इति भरत । व्यूहपृष्ठम् । इति शब्दरत्नावली ।

व्ये, ञ य वृतौ । इति कविकल्पद्रुम । ( भ्वा० उभ० सक० अनिट् । ) ञ, व्ययति व्ययते । ये, वीयात् । इति दुर्गादास ।

व्योकार पुं लोहकार । इत्यमर ।

व्योम [ न् ] क्ली ( व्ये ञ वृतौ + "नामन् सीमन् व्योमन्" इति । उणा० ४ । १५१ । इति निपातनात् साधु । यद्वा "विपूर्व्वादवतेरौणादिके मनिन् । इति सर्व्वेन मनिन्प्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च । इत्यूठि गुणे । अवति आप्नोति सर्वं जगत् । यद्वा अवतिर्गत्यर्थे भावे मन् व्योम । अवनं गमनं विविधमस्मिन् विद्यते । यद्वा रक्षणार्थे विशेषेणावति प्राणिनोऽवकाशप्रदानेन । उणादौ तु नामन् सीमन् व्योमन् इत्यादिना वेञ् धातोरित्यस्मान्मनिन् उत्व निपात्यते । वीयते तद्वायुना व्योम । तथाच निरुक्तम् व्योमेत्यन्तरिक्ष महाभवयत परिव्रातो वायुना इति ।" इति निघण्टुटीका । १ । ३ । ३ ।) आकाशम् । इत्यमर । (यथा रघु । ४।२९ ।
"रजोभि स्यन्दनोद्धूतैर्गजैश्च घनसन्निभै ।
भुवस्तलमिव व्योम कुर्व्वन् व्योमेव भूतलम् ।')
जलम् । भास्करस्यार्च्चनाश्रय । इति मेदिनी । अभ्रकम् । इति राजनिर्घण्ट ।

व्योमकेश पुं ( व्योम एव केशा यस्य । विराट्मूर्त्तित्वादस्य तथात्वम् । ) शिव । इत्यमर । ( यथा, महाभारते । ७ । २०० । १२८ ।
"सूर्य्याचन्द्रमसौ लोके प्रकाशन्ते रुचश्च या ।
ते केशमंशवस्ताचे व्योमकेश इति स्मृत ।" )

व्योमकेशी [ न् ] पुं महादेव । गङ्गाधारणकाले व्योमव्यापिन केशा अस्य सन्तीति व्योमकेशशब्दात् इन्प्रत्ययेन निष्पन्नमेतत् ।

व्योमचारिपुर, क्ली, ( व्योमचारि आकाशगामि पुरम् । ) सौभपुरम् । इति भूरिप्रयोग ।

व्योमचारी, [ न् ] पुं ( व्योम्नि चरतीति । चर+णिनि । ) देवता । पक्षी । इति मेदिनी । चिरजीवी । द्विजाति । इति विश्व । (आकाशचारिणि त्रि । यथा, कथासरित्सागरे । २२ । ५६ ।
"अस्ति पूर्व्वमह व्योमचारी विद्याधरोऽभवम् ।")

व्योमधूम, पुं ( व्योम्न धूम । ) मेघ । इति त्रिकाण्डशेष ।

व्योमनासिका, स्त्री भारतीपक्षी । इति त्रिकाण्डशेष ।

व्योममञ्जर क्ली (व्योम्न मञ्जरमिव ।) पताका । इति त्रिकाण्डशेष ।

व्योममण्डल क्ली, ( व्योम्न मण्डलम् । ) पताका । इति शब्दरत्नावली । आकाशश्च ।

व्योममुद्गर पुं ( व्योम्न मुद्गर इव । ) निर्घात । इति हारावली ।

व्योमयान क्ली (व्योमगामि यानम् ।) विमानम् । इत्यमर ।

व्योमस्थली स्त्री भूमि । इति भूरिप्रयोग । ( व्योम्न स्थली । ) देवस्थानञ्च ।

व्योमाभ पुं, (व्योम्ना शून्येन आभातीति । आ+भा+क ।) बुद्ध । इति त्रिकाण्डशेष ।

व्योमोदक, क्ली, (व्योम्न उदकम् ।) दिव्योदकम् । इति राजनिर्घण्ट ।

व्योषं क्ली ( विशेषेण ओषतीति । उष दाहे + पचाद्यच ।) त्रिकटु । इत्यमर । (यथा सुश्रुते । १ । ३४ ।
"व्योष त्रिजातक मुस्ता विडङ्गामलके तथा ।")

व्रज, गतौ । इति कविकल्पद्रुम । ( भ्वा० पर० सक० सेट । ) व्रजति । इति दुर्गादास ।

व्रज क संस्कृतौ । गतौ । इति कविकल्पद्रुम । ( चुरा० पर० सक० सेट । ) क व्राजयति । विरेफौ तौ । तौ एतौ विरफौ रेफरहितौ च स्मानाम् । इति दुर्गादास ।

व्रज, स्त्री व्रजनम् गमनम् । व्रज गतौ इत्यस्मात् क्यप्प्रत्ययेन निष्पन्नमिदम् । इति सिद्धान्तकौमुदी ।

व्रज, पुं ( व्रज गतौ+"गोचरसञ्चर ।" ३ । ३ । ११९ । इति घप्रत्ययेन निपातनात् साधु ।) समूह । इत्यमर । ( यथा, महाभारते । १ । १४८ । ८२ ।
"तत प्रताप सुमहान् शब्दश्चैव विभावसो ।
प्रादुरासीत् तदा तेन बुबुधे स जनव्रज ।")
गोष्ठम् । ( यथा माघे । २ । ६४ ।
"निरुद्धवीवधासारप्रसारा गा इव व्रजम् ।
उपरुन्धन्तु दाशार्हीं पुरीं माहिष्मतीं द्विष ।" )
पन्था । इति मेदिनी । अयञ्च मथुरोपचत् प्रान्तवर्त्तिदेश । अस्य विवरण यथा माद्ये ।
'व्रजमण्डलभूभाग शृणु भामिनि चारुम् ।
क्रमशश्च महाश्रेष्ठ सर्व्वेशो मध्यसंस्थितम् ।
तस्योपरि स्थित लोक सर्व्वस्थान महाफलम् ।
अव्यक्तकाविकाराथ सुस्थानविराजितम् ।
चतुरष्टकक्षोभन परिपूर्णविराजितम् ।
अस्य प्रदक्षिणीकुर्व्वन् धनधान्यसुख लभेत् ।
दानार्द्धायामतो लोको विष्णुलोकमवाप्नुयात् ।
आवासानुक्रियते चेह पुनर्जन्म न विद्यते ।
पुण्यं तत्पुण्य सख्या तत्रास्मिन् व्रजमण्डले ।
सर्व्वेन निर्म्मितास्तीर्थां साह्नेषु वह्नसङ्ख्यका ।"
तत्रादौ वनोपवनप्रतिवनाधिवनान्युक्तधारिवत् तानि चतुरष्टकाशपरिमाणस्थितानि चतुर्भागशोऽभ्यन्तरस्थितानि क्रमश आह । माद्ये ।
"वनानि द्वादशान्याहुर्यमुनोत्तरदक्षिणे ।
महावन महाश्रेष्ठ १ इय काम्यवन शुभम् २ ।
कोकिलाख्य तृतीयञ्च ३ तूर्य्यं तालवन तथा ४ ।
पञ्चम कुमुदाख्यञ्च ५ षष्ठ भाण्डीरसञ्ज्ञकम् ६ ।
नाम्ना वृन्दावन श्रेष्ठ सप्तम परिकीर्त्तितम् ७ ।
अष्टम खदिर प्रोक्त ८ नवम लोहज वनम् ९ ।
नाम्ना भद्रवन श्रेष्ठ दशम बहुपुण्यदम् १० ।
एकादश समाख्यात बहुलावनसञ्ज्ञकम् ११ ।
नाम्ना बिल्ववन श्रेष्ठ द्वादश कामनाप्रदम् १२ ।
इति द्वादशसङ्ख्यानि वनानि शुभदानि च ।"
इति द्वादशवनानि ।

अथ द्वादशोपवनान्याह वाराहे ।
"आदौ मधुवन नाम १ द्वितीयं मथुरावनम् २ ।
तृतीय निर्ह्वल नाम ३ कदम्बाख्य चतुर्थकम् ४ ।
नाम्ना सङ्केतक श्रेष्ठ पञ्चम परिकीर्त्तितम् ५ ।
सुरभीवननामाथ षष्ठमाह्लादवर्द्धनम् ६ ।
श्रेष्ठ प्रेमवन नाम सप्तमं शुभद शुभम् ७ ।

मधुवननामानमष्टमं परिकीर्त्तितम् ८ ॥
मानेङ्गितवनं श्रेष्ठं नवमं मानवर्द्धनम् ९ ।
शेषशायिवनं श्रेष्ठं दशमं पापनाशनम् १० ॥
एकादशं समाख्यातं नारदाख्यं शुभोदितम् ११ ।
द्वादशं परमानन्दवनं सर्व्वार्थदायकम् १२ ॥
इति द्वादशसंज्ञानि वनान्युपवनानि च ॥”
इति द्वादशोपवनानि । ७ ॥

अथ द्वादशप्रतिवनानि । भविष्ये ।
“आदौ रङ्गवनं श्रेष्ठं परमंज्ञाविराजितम् १ ।
वार्त्तावनं द्वितीयञ्च २ करहाख्यं तृतीयकम् ३ ।
चतुर्थं काम्यनामानं वनं कामप्रदं नृणाम् ४ ।
वनमञ्जननामानं पञ्चमं श्रीशुभप्रदम् ५ ॥
नाम्ना कर्णवनं श्रेष्ठं षष्ठं स्वप्नवरप्रदम् ६ ।
कृष्णक्षिपणकं नाम वनं सप्तममीरितम् ७ ॥
नन्दप्रेक्षणकृष्णाख्यं वनं नन्दनमष्टमम् ८ ।
वनमिन्द्रवनं नाम नवमं शक्रपूजितम् ९ ॥
शिक्षावनं शुभं प्रोक्तं दशमं नन्दभाषितम् १० ।
चन्द्रावलीवनं श्रेष्ठमेकादशमुदाहृतम् ११ ॥
गाम्भा लोहवनं श्रेष्ठं द्वादशं शुभदं नृणाम् १२ ।
इति प्रतिवनान्याहुर्मार्गे याने च दक्षिणे ।
इति द्वादशसंख्यास्ते देवायागफलप्रदाः ॥”
इति द्वादश प्रतिवनानि । ८ ॥

अथ द्वादशाधिवनानि । विष्णुपुराणे ।
“मथुरा प्रथमं नाम १ राधाकुण्डं द्वितीयकम् २ ।
नन्दग्रामं तृतीयञ्च ३ गड्स्थानं चतुर्थकम् ४ ।
पञ्चमं ललिताग्रामं ५ वृषभानुपुरञ्च षट् ६ ।
सप्तमं गोकुलं स्थानं ७ अष्टमं बलदेवकम् ८ ॥
गोवर्द्धनवनं श्रेष्ठं नवमं कामनाप्रदम् ९ ।
वनं जाववटं नाम दशमं परिकीर्त्तितम् १० ॥
सुवृन्दावनं श्रेष्ठमेकादशं प्रकीर्त्तितम् ११ ।
सङ्केतवटकं स्थानं वनं द्वादशं कीर्त्तितम् १२ ॥
इति द्वादशसंज्ञानि वनान्यधिवनानि च ।
वनानामधिपाः प्रोक्ता व्रजमण्डलमध्यगाः ॥
एषां नैव विलोकेन वनयात्रा च निष्फला ।
एषाञ्च दर्शनेनैव वनयात्रा शुभप्रदा ॥
आदौ लीलां यदा पश्येद्वनयात्रां ततश्चरेत् ।
सर्व्वान् कामानवाप्नोति विष्णुलोकमवाप्नुयात् ।
सर्व्वत्र विजयी भूयाद्वनयात्राप्रभावतः ॥”
इति व्रजभक्तिविलासे १ अध्यायः ॥

व्रजकः, पुं, तपस्वी । इति शब्दरत्नावली ॥

व्रजकिशोरः, पुं (व्रजस्य किशोरः ।) श्रीकृष्णः । स तु द्वादशाधिवनान्तर्गतललिताग्रामाधिवनाधिपो देवः । “अथ ललिताग्रामाधिपव्रजकिशोरमन्त्रः । यथा श्रीधरोपनिषदि । ॐ श्रीं ललिताग्रामाधिवनाधिपतये व्रजकिशोराय नमः । इत्येकविंशाक्षरो व्रजकिशोरमन्त्रः । अनेन मन्त्रेण प्राणायामः । अस्य मन्त्रस्य विभाण्डक ऋषिर्व्रजकिशोरो देवता गायत्री छन्दः मम सकलपापक्षयद्वारा युगलकृष्णदर्शनार्थे विनियोगः । शिरसि विभाण्डकऋषये नमः मुखे व्रजकिशोराय नमः हृदि गायत्रीच्छन्दसे नमः । अथ ध्यानम् ।
‘ललितासंवृतं श्यामं सर्व्वैस्तु सखिभिर्वृतम् ।
ध्यायेत्त्रिवेणिकूपस्थं महारासकलोत्सवम् ॥’
इति ध्यात्वा यथाशक्ति जपं कृत्वा गुह्यातीत्यादिना जपं समर्पयेत् । इति ललिताग्रामाधिपव्रजकिशोरमन्त्रः ।” इति व्रजभक्तिविलासे १ अध्यायः ॥

व्रजनाथः, पुं, (व्रजस्य नाथः ।) श्रीकृष्णः । इति पुराणम् ॥

व्रजभूः, पुं, (व्रजे भूरुत्पत्तिर्यस्य ।) केलिकदम्बः । इति शब्दचन्द्रिका ॥ (व्रजस्य भूर्भूमिः ।) व्रजभूमौ, स्त्री । व्रजजाते, त्रि ॥

व्रजमण्डलं, क्ली, (व्रजस्य मण्डलम् ।) व्रजभूमिः । यथा, मात्स्ये ।
“व्रजमण्डलभूगोलं शेषनागफणं वरम् ।
कुमुदाख्यं महाश्रेष्ठं सर्व्वेषां मध्यसंस्थितम् ॥”
इति व्रजविलासे १ अध्यायः ॥

व्रजमोहनः, पुं, (व्रजान् व्रजवासिनो मोहयतीति । मुह + णिच् + ल्युः ।) श्रीकृष्णः । इति पुराणम् ॥

व्रजवरः, पुं, (व्रजे वरः श्रेष्ठः ।) श्रीकृष्णः । स तु द्वादशाधिवनान्तर्गतजाववटाधिवनाधिपो देवः । “अथ जाववटाधिवनाधिपव्रजवरमन्त्रः । शौनकीये ।
‘वटावृतः समन्तात् सवनं वनमास्थितम् ।
तमेवाधिवनं ख्यातं वटसेवापरायणम् ॥
तन्मिमध्ये वटं श्रेष्ठं कृष्णक्रीडावरप्रदम् ।
वटावृक्षैरनेकैर्जातं मध्ये चैव वटं स्मृतम् ॥
वटं वृक्षं स्थितं तत्र वटसंज्ञं विधीयते ।
वटभावानुसारेण वटलिङ्गानि दर्शयेत् ॥’
वटस्थानलिङ्गम् । ॐ ठः चौं वटाधिवनाधिपतये व्रजवराय नमः । इत्येकोनविंशाक्षरो जाववटाधिवनाधिपव्रजवरमन्त्रः । अनेन मन्त्रेण प्राणायामः । अस्य मन्त्रस्य यशोक ऋषिर्जाववटाधिपो व्रजवरो देवता पङ्क्तिश्छन्दः मम सकलसौभाग्यसम्पत्फलप्राप्त्यर्थे जपे विनियोगः । न्यासं पूर्व्ववत् । अथ ध्यानम् ।
‘नानाशृङ्गारभूषाढ्यं राधाकृष्णं मनोहरम् ।
ध्यायेद्युगलमूर्त्तिञ्च वनयात्रावरप्रदम् ॥’
इति ध्यात्वा यथाशक्ति जपं कृत्वा गुह्यातीत्यादिना जपं समर्पयेत् । इति जाववटाधिवनाधिपव्रजवरमन्त्रः ।” इति व्रजभक्तिविलासे १ अध्यायः ॥

व्रजवल्लभः, पुं, (व्रजानां व्रजवासिनां वल्लभः प्रियः ।) श्रीकृष्णः । इति पुराणम् ॥

व्रजाङ्गना, स्त्री, (व्रजस्य अङ्गना ।) गोपी । यथा, छन्दोमञ्जर्याम् ।
“विलासवंशस्यविलं सुखानिलैः
प्रपूर्य्य यः पञ्चमरागमुद्गिरन् ।
व्रजाङ्गनानामपि गानशालिनां
जहार मानं स हरिः पुनातु वः ॥”

व्रज्या, स्त्री, (व्रजनमिति । व्रज गतौ + “व्रजयजोर्भावे क्यप् ।” ३ । ३ । ९८ । इति क्यप् ।) पर्य्यटनम् । जिगीषोः प्रयाणम् । गमनम् । इत्यमरः ॥ वर्गः । इति मेदिनी ॥ (सजातीयानामेकत्र सन्निवेशः । यथा, साहित्यदर्पणे । ६ । ५६५ ।
“कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोहरः ॥”)
रङ्गः । इति धरणिः ॥

व्रण, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) व्रणति । इति दुर्गादासः ॥

व्रण, त क अङ्गचूर्णे । इति कविकल्पद्रुमः ॥ (अदन्त चुरा०-पर०-सक०-सेट् ।) अङ्गचूर्णः अङ्गभेदः । व्रणयति गात्रं वाणेन भटः । इति दुर्गादासः ॥

व्रणः, पुं क्ली, (व्रणयति गात्रमिति । व्रण अङ्गचूर्णे + पचादित्वात् अच् ।) क्षतम् । तत्पर्य्यायः । ईर्म्मम् २ अरुः ३ । इत्यमरः ॥ ईर्मः ४ । इति तट्टीका ॥ (यथा, रघुः । १२ । ५५ ।
“स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम् ।
आत्मनः सुमहत् कर्म्म व्रणैरावेद्य संस्थितः ॥”)
अथ व्रणाधिकारः ।
“व्रणो द्विधा परिज्ञेयो दोषजागन्तुभेदतः ।
दोषजो दुष्टदोषैः स्यादन्यः शस्त्रादिसम्भवः ॥”
तत्र वातिकस्य लक्षणमाह ।
“स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः ।
तुद्यते स्फुटतिस्रावो व्रणो मारुतसम्भवः ॥”
स्तब्धः अचलः ॥ * ॥ पैत्तिकमाह ।
“तृष्णामोहज्वरक्लेददाहदुःखावदारणैः ।
व्रणं पित्तकृतं विद्यात् स्रावैर्गन्धैश्च पूतिकैः ॥”
क्लेद आर्द्रता । दुःखं यथारूपम् । अवदारणं व्रणे विदारणवत् पीड़ा ॥ * ॥ श्लैष्मिकमाह ।
“बहुपिच्छो गुरुः स्निग्धस्तिमितो मन्दवेदनः ।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः ॥”
बहुपिच्छः बहुपिच्छिलः । अल्पसंक्लेद ईषदार्द्रः ॥ * ॥ रौधिरं द्वन्द्वजं सान्निपातिकमाह ।
“रक्तो रक्तस्रुती रक्ताद्विजिजः स्यात्तदन्वयः ।”
तदन्वयः द्वित्रिदोषलिङ्गसम्बन्धः ॥ * ॥ शुद्धव्रणलिङ्गमाह ।
“जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः ।
सुव्यवस्थो निरस्रावः शुद्धव्रण इति स्मृतः ॥”
जिह्वातलाभः तलशब्दोऽत्र स्वरूपार्थः । तेन जिह्वावद्रक्तः । सुव्यवस्थः उच्चनतारहितः ॥ दुष्टव्रणलिङ्गमाह ।
“पूतिपूयादिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितिः ।
दुष्टव्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्य्ययः ॥”
उत्सङ्गी कोटरवान् । अतिगन्धादिः आदिशब्देन स्राववेदनाविवर्णतादयः संगृह्यन्ते ॥ * ॥ संरोहव्रणस्य लिङ्गमाह ।
“कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ।
स्थिराश्च पिड़कावन्तो रोहतीति तमादिशेत् ॥’

"यथास्वमेतानि विभावयेच
लिङ्गानि मर्म्मस्वपि ताडितेषु ।"
यथास्वं शिरादीनां विद्धानां एतानि लिङ्गानि पृथगुक्तानि लिङ्गानि चकारात् भ्रमप्रलापादीनि च मर्मस्वपि शिरादिषु ताडितेषु विद्धेषु। विभावयेत् जानीयात् ॥ * ॥ सर्व्वव्रणानामुपद्रवानाह ।
"विसर्पपक्षघातश्च शिरास्तम्भोऽपतानकः ।
मोहोन्मादौ व्रणे पीड़ा ज्वरस्तृष्णा हनुग्रहः ॥
कासश्छर्द्दिरतीसारो हिक्का श्वासः सवेपथुः ।
षोड़शोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ॥"
अथाग्निदग्धस्य निदानमाह ।
"तत्राग्निर्द्विविधो ज्ञेयः स्नेहरूक्षः समाश्रितः ।
स्नेहस्तत्र तु तैलादि रूक्षं लौहादि कथ्यते ॥"
अग्निदग्धं चतुर्व्विधमाह ।
"अग्निदग्धं चतुर्द्धा स्यात् प्लुष्टं दुर्दग्धमेव च ।
सम्यग्दग्धं तथा तीव्रदग्धञ्च परिकीर्त्तितम् ॥"
तेषां लक्षणमाह ।
"यद्विवर्णमतिप्लुष्टं तत् प्लुष्टमभिधीयते ।
तीव्रदाहो यथावन्तो यत्र स्फोटा भवन्ति हि ।
चिरेण ते प्रशाम्यन्ति तद्दुर्द्दग्धमुदाहृतम् ॥
ताम्रवर्णमगाम्भीरं दाहपीड़ासमन्वितम् ।
सुसंस्थितञ्च कथितं सम्यग्दग्धं भिषग्वरैः ॥
त्वङ्मांसं यत्र दग्धं स्याद्विश्लेषो वपुषस्तथा ।
शिरास्नाय्वस्थिसन्धीनां तं वदन्त्यतिदग्धकम् ॥
अत्यर्थं वेदना दाहो ज्वरस्तृण्मूर्च्छया सह ।
स्याद्व्रणस्तु चिराद्दग्धेऽपि रूढ़ो याति विवर्णताम् ॥"* ॥

अथ व्रणस्य चिकित्सा ।
"आदौ शोथहरो लेपस्ततस्तु परिषेचनम् ।
विम्लापनमसृङ्मोक्षस्ततः स्यादुपनाहनम् ॥
पाचनं भेदनं पश्चात् पीड़नं शोधनं तथा ।
रोपणं वर्णकरणं व्रणस्यैते क्रमाः स्मृताः ॥"
क्रमाश्चिकित्साः । सुश्रुतेषु व्रणस्य षष्टिरुपक्रमा लिखिताः सन्ति । ते सर्व्वेऽत्र विस्तरभयान्न लिखिताः ॥ * ॥ तत्रादौ शोथहरं लेपमाह ।
"यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम् ।
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजम् ॥
बीजपूरजटाहिंस्रा देवदारु महौषधम् ।
रास्नाग्निमन्थौ लेपोऽयं वातशोथविनाशनः ॥*
मधुकं चन्दनं दूर्व्वा नलमूलन्तु पद्मकम् ।
उशीरं वालकं पद्मं लेपोऽयं पित्तशोथहा ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
सर्पिष्कैः प्रदेहः स्याच्छोथे पित्तसमुद्भवे ॥*॥
आगन्तुजे रक्तजे च लेप एषोऽभिपूजितः ।
अजगन्धाजशृङ्गी च मञ्जिष्ठा सरलस्तथा ।
एकैकिकाश्वगन्धा च लेपोऽयं श्लेष्मशोथहा ॥"
अजशृङ्गी मेढ़शृङ्गी । एकैकिका श्यामनिसोतः
"कृष्णा पुराणपिण्याकं शिग्रुत्वक् शिकता शिवा ।
मूत्रपिष्टः सुखोष्णोऽयं प्रलेपः श्लेष्मशोथहा ॥*॥

न रात्रौ लेपनं दद्याद्दत्तं च पतितं तथा ।
न च पर्युषितं शुष्यमाणं तत्रैव धारयेत् ॥"
दत्तं दत्तमेव पुनर्न दद्यात् । पतितं दीयमानं यदङ्गात् पतितम् । पर्य्युषितं लेपनद्रव्यकल्कीकृतं यत् पर्य्युषितम् ।
"तमसा पिहितो ह्युष्मा रोमकूपमुखे स्थितः ।
विना लेपेन निर्याति रात्रौ नालेपयेदतः ॥
रात्रावपि प्रलेपस्तु विधातव्यो विचक्षणैः ।
अपाकिशोथे गम्भीरे रक्तपित्तसमुद्भवे ॥"* ॥
अथ परिषेचनमाह ।
"यथाम्बुभिः सिच्यमानः शान्तिमग्निर्हि गच्छति।
दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥"
तद्यथा,—
"वातघ्नौषधनिक्वाथैस्तैलैर्मांसरसैर्घृतैः ।
उष्णैः संसेचयेत् शोथं वातिकं काञ्जिकेन तु ॥
पित्तरक्ताभिघातोत्थं शोथं सिञ्चेत्तु शीतलैः ।
क्षीराज्यमधुखण्डेक्षुरसैः पित्तहरैः शृतैः ॥
कफघ्नौषधनिःक्वाथैरशीतैः परिषेचयेत् ।
तैलक्षाराम्बुमूत्रैश्च शोथं श्लेष्मसमुद्भवम् ॥"*॥
अथ विम्लापनमाह ।
"रुजतः कठिनस्यास्य कार्य्यं विम्लापनं शनैः ।"
अथ शोथस्य विम्लापनस्य विधिमाह । सुश्रुतः ।
"अभ्यज्य स्वेदयित्वा तु वेणुनाड्या शनैः शनैः ।
विमर्द्दयेद्भिषङ्मन्दं तलेनाङ्गुष्ठकेन वा ॥"
वेणुनाड्या स्वेदयित्वा उष्णस्वेदं कृत्वा ॥ * ॥
रक्तमोक्षणमाह ।
"वेदनोपशमार्थाय तथा पाकशमाय च ।
अचिरोत्पतिते शोथे शोणितस्रावणञ्चरेत् ॥"
चरेत् कुर्य्यात् ।
"एकतस्तु क्रियाः सर्व्वा रक्तमोक्षणमेकतः ।
रक्तं हि वेदनामूलं तच्छिन्नास्ति न चापि रुक् ॥
विवर्णे कठिने श्यावे व्रणे चात्यन्तवेदने ।
सविशेषे विशेषेण जलौकोभिः पदैरपि ॥"
शोणितस्रावणञ्चरेदित्यनेनान्वयः ॥ * ॥
अथोपनाहस्वेदमाह । तस्य विधिर्भेषजसाधनप्रकरणे कथित एवास्ति ।
"रुजावतां दारुणानां कठिनानां तथैव च ।
शोथानां स्वेदनं कार्य्यं ये चाप्येवं विधा व्रणाः ॥"
शोथानां सामान्यानां व्रणाः व्रणशोथाः तेषामपि स्वेदनं कार्य्यम् ।
"शोथयोरुपनाहन्तु दद्यादामविदग्धयोः ।
प्रशाम्यत्यविदग्धस्तु विदग्धः पाकमेति च ॥"
अविदग्धः आमः । विदग्धः पाकोन्मुखः । स यथा,—
"दशमूली बला रास्ना वाजिगन्धा प्रसारिणी ।
मूलं फलञ्च वातारिसिन्धुवारपुनर्नवाः ॥
शोभाञ्जनः कणा चापि सैन्धवं विश्वभेषजम् ।
शणकार्पासयोर्बीजमतसी च कुलत्थिका ॥
तिला यवाश्च सिद्धार्थः कुठेरो मूलकं मिषिः ।
यथाप्राप्तैरमीभिस्तु द्रवैरम्लेन संयुतैः ॥
कल्कीकृतैः सुखोष्णैश्च स्वेदयेद्विधिवच्छनैः ।
अनेन प्रशमं याति वातशोथो न संशयः ॥"

दशमूल्यादिरूपमाह ।
"पुनर्नवा दारु शुण्ठी शिग्रुः सिद्धार्थ एव च ।
अम्लपिष्टः सुखोष्णोऽयं प्रलेपः सर्व्वशोथहा ॥"
पुनर्नवादिः ॥ * ॥
अथ पाचनमाह ।
"न प्रशाम्यति यः शोथः प्रलेपादिविधानतः ।
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ॥"
पाचनद्रव्याण्याह ।
"शणकमूलशिग्रूणां फलानि तिलसर्षपाः ।
अतसीसक्तवः किण्वमुष्णद्रव्यञ्च पाचनम् ॥"
शणफलादीनामतस्यन्ताः सक्तवः कर्त्तव्याः ।
किण्वं सुराबीजम् । यवगोधूमधान्यादिप्रकारः
अन्यच्चोष्णद्रव्यं व्रणस्य पाचनं भवति ॥ * ॥
अथ भेदनमाह ।
"अन्तःपूयेषु वक्त्रेषु तथैवोत्सङ्गवत्स्वपि ।
गतिमत्स्वथ रोगेषु भेदनं संप्रयुज्यते ॥"
उत्सङ्गवत्सु कोटरवत्सु । गतिमत्सु नाड़ीव्रणेषु । भेदनं शस्त्रमौषधकर्म्म च ॥ * ॥ तत्र शस्त्रेण भेदनमाह ।
"रोगे यथनसाध्ये तु यथादेशं प्रमाणतः ।
शस्त्रं विधाय दोषस्तु स्रावयेत् कथितं यथा ॥"
क्वचिच्छस्त्रनिषेधापवादमाह ।
"बालवृद्धासहक्षीणभीरूणां योषितामपि ।
व्रणेषु मर्म्मजातेषु भेदनं द्रव्यलेपनम् ॥"
तत्र भेदमाह ।
"चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः ।
कपोतकङ्कगृध्राणां मलं लेपेन दारणम् ॥"
चिरविल्वः करञ्जः । अग्निकः भल्लातकः ।
"भल्लातकासहत्वे तु रक्तचन्दनमिष्यते ॥"
हयमारकः करवीरः । दारणं भेदनम् ।
"क्षारद्रव्यं तथा क्षारो दारणः परिकीर्त्तितः ॥"
क्षारद्रव्यं अपामार्गादि । क्षारः स्वर्जिका यवक्षारादिः ।
"हस्तिदन्तो जले पिष्टो बिन्दुमात्रः प्रलेपतः ।
अत्यन्तकठिने शोथे कथितो भेदनः परः ॥"*॥
अथ पीड़नमाह ।
"पूयगर्भानणूद्वारान् व्रणान् मर्म्मगतानपि ।
यथोक्तैः पीड़नद्रव्यैः समन्तात् परिपीड़येत् ॥"
पीड़नद्रव्याण्याह ।
"द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीड़येत् ।
यवगोधूममाषाणां चूर्णानि च समासतः ॥
शुष्यमाणमुपेक्षेत प्रलेपं पीड़नं प्रति ।
न चापि सुखमालिम्पेत्तथा दोषः प्रसिच्यते ॥"
पीड़नं प्रति पीड़नद्रव्यलेपं प्रति । पीड़नद्रव्यलेपे शुष्यन्तमपि धारयेदित्यर्थः । तथा व्रणस्य मुखे लेपं विना प्रसिच्यते स्रवति ॥ * ॥
अथ शोधनमाह ।
"व्रणस्य त्वविशुद्धस्य क्वाथः शुद्धिकरः परः ।
पटोलनिम्बपत्रस्य सर्व्वदैव प्रयुज्यते ॥
वातिके दशमूलानां क्षीरिणां पैत्तिके व्रणे ।
आरग्वधादेः कफजे कषायः शोधने हितः ॥

"जात्यर्कसम्पाककरञ्जदन्ती-
सिन्धूत्थसौवर्चलयावशूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाडीं
स्नुक्क्षीरपिष्टा सह चित्रकेण ।
नाड्याः शस्त्रेण वदनं द्रुहत् कृत्वा प्रवेशयेत् ।
कुशलो वस्तिविधिना तैलं जात्यादिसंधितम् ॥
एवमन्यच्च यत्तैलं घृतं वा क्षरणं तथा
यत्तैलं यद्घनं पक्वं क्षरणं वा तदेव च"

इति वाग्भटः ॥

"नाड्या अभ्यन्तरे वैद्यो लघुहस्तः प्रवेशयेत् ।
कर्पूरकरहैस्तैलं विद्धार्धकमयं भिषक् ।
पचेत् सिन्दूरकल्केन नाडीदुष्टव्रणापहम् ।
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितम् ।
अक्षप्रमाणां गुटिकां खादेच्छीताम्बुनाऽऽतुरः ॥
नाडीदुष्टव्रणं शूलमुदावर्त्तभगन्दरम् ।
गुल्मञ्च गुदजान् हन्यात् पश्चिराट् पन्नगान् ॥"
सप्ताङ्गो गुग्गुलुः । इति नाडीव्रणाधिकारः ॥

भगन्दरस्य निदानं चिकित्सा च भगन्दरशब्दे द्रष्टव्यम् । उपदंशस्य निदानादुपदंशशब्दे द्रष्टव्यम् ॥ * ॥ अथोपदंशस्य चिकित्सा ।
"उपदंशेषु सर्व्वेषु स्निग्धस्विन्नस्य देहिनः
मेढ्रमध्ये शिरां विध्येत् पातयेद्वा जलौकसः
सद्यो निर्हृतदोषस्य रुक्शोथावुपशाम्यतः
पाको निवार्य्यो यत्नेन शिश्नक्षयकरः स यः
वटप्ररोहार्ज्जुनजम्बुलोध्र-
पथ्याहरिद्रारचितः प्रलेपः ।
यथा तथा शोथमपाकरोति
सर्व्वोपदंशेषु ततो हितोऽयम् ॥
उपदंशेषु पक्वेषु व्रणप्रक्षालनं हितम् ।
त्रिफलायाः कषायेण भृङ्गराजरसेन वा ॥
नीलोत्पलं सुकुसुदं पद्मं सौगन्धिकं तथा ।
एष चूर्णं धूलनार्थं प्रलेपश्चात्र शस्यते ॥
बब्बूलदलचूर्णेन रजसा दाडिमत्वचः ।
गुण्ठनान्तद्व्रणे कुर्य्यात्लेपं पूगफलेन वा ॥
दहेत् कटाहे त्रिफला तन्मषी मधुसंयुता ।
प्रलेपेनोपदंशस्य व्रणः सद्यः प्ररोहयेत् ॥
पटोलनिम्बत्रिफलाकिरात-
क्वाथं पिवेद्वा खदिरासनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्व्वोपदंशापहरः प्रयोगः ॥
भूनिम्बनिम्बत्रिफलापटोल-
करञ्जधात्रीखदिरासनानाम् ।
कषायकल्कैः घृतमाशु पाच्यं
सर्व्वोपदंशापहरं प्रदिष्टम् ॥

इति भूनिम्बादिघृतम्

"घृतानि यानि प्रोक्तानि कुष्ठे नाडीव्रणे व्रणे
उपदंशे प्रयोज्यानि सेकाभ्यञ्जनभोजने ॥
धारच्छेदेन संछिन्न लिङ्गवर्त्तिमशेषतः ।
दहेच्च तान्ततस्ताभ्यां चिकित्सां व्रणवच्चरेत्

इत्युपदंशाधिकारः ॥ * ॥

शूकदोषाधिकारः शूकदोषशब्दे द्रष्टव्यः । भावप्रकाशः ॥ * ॥ अथ व्रणनाशकतैलम् ।

"उडुम्बरं वटप्लक्षं जम्बुद्वयमथार्ज्जुनम् ।
पिप्पलञ्च कदम्बञ्च पलाशं लोध्रतिन्दुकम् ॥
मधूकमाम्रसर्ज्जञ्च वदरं पद्मकेशरम् ।
शिरीषबीजं कतकमेतत् क्वाथेन साधितम् ।
तैलं हन्ति व्रणान् सर्व्वानचिरकालभवानपि ॥"

इति गारुडे १६८ अध्यायः ॥

व्रणकृत्, पुं, ( व्रणं करोतीति । कृ + क्विप् । तुगागमश्च । ) भल्लातकः । इति रत्नमाला ॥ क्षतकारके, त्रि ॥

व्रणकेतुघ्नी, स्त्री, (व्रणकेतुं हन्तीति । हन + टक् । ङीप् । ) दुग्धफेनीक्षुपः । इति राजनिर्घण्टः ॥

व्रणद्विट्, [ष्] पुं, ( व्रणस्य द्विट् शत्रुः । ) नागवल्लिका । इति शब्दचन्द्रिका ॥ व्रणद्वेषके, त्रि ॥

व्रणहः, पुं, (व्रणं हन्तीति । हन + डः ।) एरण्डवृक्षः । इति शब्दचन्द्रिका ॥ व्रणघातके, त्रि ॥

व्रणहा, स्त्री, ( व्रणं हन्तीति । हन + डः । स्त्रियां टाप् । ) गुडूची । इति शब्दचन्द्रिका ॥

व्रणहृत्, पुं, ( व्रणं हरतीति । हृ + क्विप् । तुक् च । ) कलिकारीवृक्षः । इति राजनिर्घण्टः ॥

व्रणारिः, पुं, ( व्रणस्य अरिः शत्रुः । ) बोलम् । अगस्त्यवृक्षः । इति राजनिर्घण्टः ॥

व्रतं, क्ली पुं, भक्षणम् । इत्युणादिकोषः ॥ ( व्रियते इति । वृञ् वरणे + बाहुलकात् अतच् । स च कित् । ) पुण्यजनकोपवासादि । तत्पर्य्यायः । नियमः २ पुण्यकम् ३ । इत्यमरः ॥ नियामः ४ संयमः ५ । इति शब्दरत्नावली ॥ अथ व्रतविधिः । तदारम्भप्रतिष्ठयोर्व्वर्ज्यकालमाह ज्योतिषे । गुरोर्भृगोरस्तवाल्ये वार्द्धके सिंहगे गुरौ इति । वृद्धौ वाल्ये दिनत्रयमित्यन्तम् । मठप्रतिष्ठातत्त्वादावनुसन्धेयम् ॥ * ॥ बुधाष्टमीव्रते विशेषो राजमार्त्तण्डोक्तो यथा,—
"द्विजेन्द्रसुतसंयुक्ता पूर्णा या च सिताष्टमी ।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥
पतङ्गे मकरे याते देवे जाग्रति माधवे ।
बुधाष्टमीं प्रकुर्व्वीत वर्ज्जयित्वा तु चैत्रकीम् ॥
प्रसुप्ते च जगन्नाथे सन्ध्याकाले मधौ तथा ।
बुधाष्टमीं न कुर्व्वीत कृता हन्ति पुराकृतम् ॥"
अथ व्रतानुष्ठानम् । तत्र देवलः ।
"अभुक्त्वा प्रातराहारं स्नात्वा चैव समाहितः ।
सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् ॥
ब्रह्मचर्य्यं तथा शौचं सत्यमामिषवर्ज्जनम् ।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥"
अत्र प्रातरित्यस्याभुक्त्वेत्यत्र नान्वयः । किन्तु व्रतमित्यनेनान्वयोऽभ्यर्हितत्वात् । 'प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम् । नापराह्णे न मध्याह्ने पितृकालो हि तौ स्मृतौ ॥' इति वराहपुराणैकवाक्यत्वाच्च । व्रतचाभुक्त्वा प्रातराहारमिति । 'मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः ॥'

इति छन्दोगपरिशिष्टादेकाहारं पूर्व्वदिने कृत्वा परदिने स्नात्वाचम्य सूर्य्यादिदेवेभ्यो निवेद्य । ॐ सूर्य्यः सोमो यम इत्यादिमन्त्रेण सान्निध्यं प्रार्थ्य व्रतमाचरेत् । ततः सङ्कल्पयेत् । यद्वा सूर्य्यादिदेवेभ्यो निवेद्य पूजनीयद्रव्यादि दत्त्वा व्रतमाचरेत् व्रतं कुर्य्यात् । तद्विधानञ्च शान्तिपर्व्वणि ।
"गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयात् यद्वा वाच्यैव धारयेत् ॥" * ॥
कर्म्मादौ सूर्य्यपूजामाह ब्रह्मपुराणम् ।
"यावन्न दीयते चार्घ्यं भास्कराय महात्मने ।
तावन्न पूजयेद्विष्णुं शङ्करं वा महेश्वरीम् ॥"
नवग्रहपूजामाह मत्स्यपुराणम् ।
"नवग्रहमखं कृत्वा ततः कर्म्म समारभेत् ।
अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ॥"
आदित्यादिपूजामाह पद्मपुराणम् ।
"आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम् ।
नारायणं विशुद्धाख्यं अन्ते च कुलदेवताम् ॥"
यत्तु ।
"देवतादौ यदा मोहात् गणेशश्च न पूज्यते ।
तदा पूजाफलं हन्ति विघ्नराजो गणाधिपः ॥"
इत्यनेन गणेशपूजनस्यादित्यमुक्तं तत् सूर्य्यपूजेतरपरम् । कुलदेवतेत्यत्र कुलादुपलक्षणम् ।
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥"
तत्र विशेषयति मत्स्यपुराणम् ।
"गर्भिणी सूतिका नक्तं कुमारी च रजस्वला
यदाशुद्धा तदान्येन कारयेत् क्रियते सदा ॥
उपवासाशक्तौ तु नक्तं भोजनं कुर्व्वीत ।
"उपवासेष्वशक्तानां नक्तं भोजनमिष्यते ।"
इति वचनान्तरात् अशुद्धा चेत् पूजां कारयेत् । कायिकञ्चोपवासादिकं सदा शुद्धया अशुद्धया वा स्वयं क्रियते । अत्यन्तासामर्थ्ये पुत्रादिप्रतिनिधिद्वारा उपवासः कार्य्यः । तदभावेऽनुकल्पः । गारुडपुराणम् ।
"भार्य्या भर्त्तृव्रतं कुर्य्यात् जायायास्तु पतिस्तथा ।
असामर्थ्यात् द्वयोस्ताभ्यां व्रतभङ्गो न जायते ॥
पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् ॥"
आरब्धव्रतस्यासमाप्तौ मरणेऽपि तत्फलप्राप्तिमाहाङ्गिराः ।
"यो यदर्थं चरेद्धर्म्मं न समाप्य मृतो भवेत् ।
स तत्पुण्यफलं प्रेत्य प्राप्नुयान्मनुरब्रवीत् ॥"
प्रेत्य परलोके । शाम्बपुराणम् ।
"लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो यदा भवेत् ।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम् ॥"
मोहो भ्रमः । प्रमादोऽनवधानता । वाशब्दः समुच्चये तेन मुण्डनञ्च कार्य्यं मुण्डनाकरणे द्विगुणं प्रायश्चित्तम् । उपवासत्रयाशक्तौ चतुर्विंशतिपणा देयाः । पद्मपुराणम् ।

"विष्कम्भः प्रीतिरायुष्मान् सौभाग्यः शोभन-
स्तथा ।
अतिगण्डः सुकर्म्मा च धृतिः शूलस्तथैव च ॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ।
वज्रः सिद्धिर्व्यतीपातो वरीयान् परिघः शिवः ।
सिद्धः साध्यः शुभः शुक्लो ब्रह्मेन्द्रो वैधृतिस्तथा ॥"
तेषां वर्ज्जनीयभागा यथा,—
"परिघस्य त्यजेदर्द्धं शुभकर्म्म ततः परम् ।
त्यजादौ पञ्च विष्कम्भे सप्त शूले च नाड़िकाः ॥
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः ।
वैधृतिव्यतिपातौ च समस्तौ परिवर्ज्जयेत् ॥
शेषा यथार्थनामानो योगाः कार्य्येषु शोभनाः ॥"
अथ विष्कम्भादियोगानयनक्रमः ।
"रवीन्दुयोगलिप्ताभ्यो योगा भभोगभाजिताः ।
गतगम्याश्च षष्टिघ्ना नाड्यो भुक्त्यन्तरोद्धृताः ॥"
इति सूर्य्यसिद्धान्तः ॥
विष्कम्भादिसप्तविंशतिसंख्यकयोगविशेषः । तत्-
साधनमाह ।
"ग्रहकलाः सरवीन्दुकलाहृताः
खखगजैश्च भयोगमितौ क्रमात् ।
अथ हृता खगतैष्यविलिप्तिका
निजजवेन गतागत नाड़िकाः ॥"
इति भास्करीयसिद्धान्तशिरोमणौगणिता-
ध्यायः ॥ * ॥ यस्य ग्रहस्य नक्षत्रं ज्ञातु-
मिष्यते तस्य कलाः कार्य्याः । तथा चन्द्रार्कयो-
र्योगस्य कलाः कार्य्याः । उभयत्र शताष्टकेन
हृते प्रथमस्थाने गतभानि । द्वितीयस्थाने गत-
योगाः । अथ यान्यवशिष्टानि गतानि खख-
ष्टाच्युतानि गम्यानि स्युः तेषां गतानां सम्ब-
न्धिन्यो विकलाः स्वस्वगतिभिर्भाज्याः । यल्लभ्यते
ता गतनाड़िका भवन्ति । यच्छिष्यायां विकला
भक्तास्तदैष्या घटिका भवन्ति । इति मिता-
क्षरानाम्नी तत्कृतटीका ॥ आनन्दयोगो
यथा । भीमपराक्रमे ।
"अश्विनी सह सूर्य्येण सोमे न्मृगशिरस्तथा ।
अश्लेषा भौमवारेण बुधे हस्तः प्रकीर्त्तितः ॥
अनुराधा गुरोर्वारे विश्वदेवस्तु भार्गवे ।
वारुणं शनिसंयुक्तमानन्दोऽयं प्रकीर्त्तितः ॥"
योगवरा यथा । दीपिकायाम् ।
"भूमिपुत्त्रार्कयोरह्नि नन्दा मघा-
द्वारुणार्द्रान्त्यचित्राश्विमूलाश्विभिः ।
भार्गवेणाङ्कयोरह्नि भद्रा
भवेत् फल्गुयुग्मोडुसंयुता ॥
सोमपुत्त्रस्य वारे जया स्यान्मृगो-
पेन्द्रगुर्व्विन्द्रयाम्याभिजिद्राशिभिः ।
गीष्पतेरह्नि रिक्ता च युक्ता यदा
विश्वशक्राश्विकृत्पित्रादित्यमुभिः ॥
सूर्य्यसुतस्य दिने यदि पूर्णा
ब्रह्मदिनाधिपतिद्रविणैः स्यात् ।
योगवराश्चिभिरेव समेताः
सर्व्वसमीहितसिद्धिनियुक्ताः ॥"
अयमेव अमृतयोगः ॥ * ॥ अथामृतयोगः ।

"ध्रुवमृदुकरमूलापौष्णभान्यर्कवारे
हरियुगविधियुग्मे फल्गुनी भानुयुग्मे ।
दिवसकरतुरङ्गौ सर्व्वरीनाथवारे
गुरुयुगनववालोपान्त्यपौष्णानि कौजे
दहनविधिशताख्यामैत्रभं सौम्यवारे
मरुददितिभपुष्यामैत्रभं जीववारे ।
भयुगलयुगाभ्यो विष्णुमैत्रे सिताह्रे
श्रवणकमलयोनी शौरिवारेऽमृतानि ॥
यदि विष्टिव्यतीपातौ दिनं चाप्यशुभं भवेत् ।
हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥
सर्व्वदेशाविशेषेण फलं स्याच्छुभयोगजम् ॥
अमृतं सिद्धियोगश्च यस्मिन् कस्मिन् दिने भवेत् ।
तद्दिनन्तु भवेद्दुष्टं मधुसर्पिर्यथा विषम् ॥" * ॥
अथ सिद्धिदग्धपापयमघण्टयोगाः । यथा,—
"नन्दाद्याः सिद्धियोगा भृगुजबुधकुजार्कोण्य-
वारैः प्रशस्ताः ।
सूर्य्यैशाशाम्निषड्डङ्गमुनिमितितिथयोऽर्कादि-
वारैः प्रदग्धाः ॥"
राजमार्त्तण्डे ।
"मासा रुद्रादिशो रामा षट्पञ्चसुनयस्तथा ।
दहन्ति तिथयः सप्त रव्यादिग्रहभिर्यदि ॥"
अपि च ।
"द्वादश्यर्कयुता भवेदशुभदा सोमेन चैकादशी
भौमे चापि युता तथैव दशमी नेष्टा तृतीया
बुधे ।
षष्ठी नेष्टफलप्रदा सुरगुरौ शुक्रे द्वितीया तथा ।
सर्व्वारम्भविनाशविघ्नजननी सूर्य्यात्मजे सप्तमी ॥
पापोऽर्काह्ने विशाखात्रयमसदुपस्थाह्नि
चित्राचतुष्कं
तोयं विश्वाभिजिद्वं त्यज कुजदिवसे स्वत्रयं
विश्वदस्रौ ।
ज्ञाह्ने मूला विशाखा यमधनतुरगान्त्यानि जैवे-
ऽह्नि पित्र्यं
रोहिण्यार्द्रा यमेन्दूशतभमघ भृगोरह्नि पुष्या-
श्वनेन्द्रौ ॥
सौराह्ने हस्तयुग्माश्विमयमकलयुक्पौष्णपुष्या-
धनानि
षष्टोऽखण्डसंयुक्ते स्वपृष्टपतिदिने सौम्यवारे
ऽर्य्यमापि ॥" * ॥
अथोत्पातादियोगाः ।
"रव्यादिदिवसैर्युक्ता विशाखादिचतुश्चतुः ।
उत्पाता मृत्यवः काणा अमृतानि यथा-
क्रमम् ॥"
अथ करकचायोगः ।
"वाजिचित्रोत्तराषाढ़ा मूलपाशीण्यभान्तकाः ।
सूर्य्यादिवारसंयुक्ता योगाः करकचाः स्मृताः ॥"
अथ म्टत्युयोगः ।
"आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः ।
बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा ॥"
अथ यमघण्टादीनां वर्ज्यकालनिर्णयः ।
"यमघण्टे त्यजेदष्टौ मृत्यौ द्वादश नाड़िकाः ।
अन्येषां पापयोगानां मध्याह्नात् परतः शुभम् ॥"

अथ शुभचन्द्रेण करकचादिशान्तिः ।
"अयोगेषु च सर्व्वेषु पूर्व्वयामं परित्यजेत् ।
अयोगाश्च विनश्यन्ति चन्द्रशुद्धिहता इमे ॥
करकचा मृत्युयोगाश्च दिनं दग्धं तथा परे ।
शुभे चन्द्रे प्रणश्यन्ति वृषा वज्रहता इव ॥" * ॥
विरुद्धयोगानां देशविशेषे प्रतिप्रसवो यथा ।
श्रीपतिः ।
"विरुद्धसंज्ञास्तिथिवारयोगा
नक्षत्रवारप्रभवाश्च ये वै ।
हूणाङ्गवङ्गेषु खशेषु वर्ज्याः
शुभेषु देशेषु न ते विरुद्धाः ॥"
इति ज्योतिस्तत्त्वम् ॥ ७ ॥
अथ क्रियायोगः । तत्र व्यासः ।
"दुःखाम्बुमग्नाः पुरुषाः प्राप्य नश्च महाशयम् ।
उत्तरेयुर्भवाम्भोधिं तथा त्वमनुचिन्तय ॥
इत्युक्तः स तदा प्राह क्रियायोगं महात्मनाम् ।
नराणामुपकाराय दुःखविच्छित्तिकारकम् ॥
वह्निरुवाच ।
आराधयध्वं विश्वेशं जगतां कारणं परम् ।
केशवन्तमिरापेच्चा इत्युक्तं शवास्तथ ॥
इष्टा पूजानमस्कारैः शुश्रूषाभिरहर्निशम् ।
व्रतोपवासैर्विविधैर्ब्राह्मणानाञ्च तर्पणैः ॥
तेस्तैश्चात्मवितैः कामैर्यं स्वर्पतन्ति बुधिदाः ।
भवेयुरपरिच्छेदादाराधयत केशवम् ॥
तन्निष्ठास्तद्गतधियस्तत्कर्म्माणस्तदाश्रयाः ।
तद्दृष्टयस्तन्मनसः सर्व्वस्मिन् स इति स्थिताः ॥
समस्तान्यथ कर्म्माणि तत्र सर्व्वात्मनात्मनि ।
संन्यस्यध्वं स दः कर्त्ता समस्तावरणक्षयः ॥
परः पराणां परमः स एको
नरोत्तमो यस्य पदन्न भिन्नम् ।
चराचरं विश्वमिदं समस्ता-
दचिन्त्यरूपन्तपरिग्रहं यत् ॥
तमाराध्य जगन्नाथं क्रियायोगेन वाड़वाः ।
अग्नी मोक्षं परं जग्मुस्तस्मात्मोक्षकारणम् ॥
संसारार्णवमग्नानां विषयाक्रान्तचेतसाम् ।
विष्णुपोतं विना नान्यत् किञ्चिदस्ति परायणम् ॥
उत्तिष्ठंश्चिन्तय हरिं व्रजंश्चिन्तय केशवम् ।
भुञ्जंश्चिन्तय गोविन्दं स्वपंश्चिन्तय माधवम् ॥
यूयमेकाग्रचित्ता हि संश्रिता मधुसूदनम् ।
जन्ममृत्युजराग्राहं संसारं सन्तरिष्यथ ॥
क्रियायोगपराणीश मुक्तिकार्य्याण्यनेकशः ।
समाराध्य जगन्नाथं रामानो मोक्षमाप्नुयुः ॥"
इति वह्निपुराणम् ॥ * ॥
अथ योगसाधनम् । केशिध्वज उवाच ।
"योगस्वरूपं खाण्डिक्य ! श्रूयतां गदतो मम
यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः,
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धस्य विषयासङ्गि मुक्तेर्निर्व्विषयं तथा ॥
विषयेभ्यः समाहृत्य विज्ञानात्मा मनो मुने ।
चिन्तयेन्मुक्तये तेन ब्रह्मभूयं परेश्वरम् ॥
आत्मभावं नयत्येवं तद्ब्रह्मध्यायिनं मुने ।
विकार्य्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥

तथा शङ्खलिखितौ ।
"वाप्य केशनखान् पूर्व्वं घृतं प्राश्य वहिर्निशि ।
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् ॥
प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत् ।
एकवासार्द्रवासा वा लघ्वाशी स्थण्डिलेशयः ॥
स्नानी वीरासनी मौनी मौञ्जी दण्डकमण्डलुम् ।
भैक्षचर्य्याभिकार्य्यञ्च कुष्माण्डैर्जुहुयाद्घृतम् ॥"
प्रत्येकं नियतं कालमिति व्रतसंख्या सङ्कल्प-वाक्ये उल्लेखनीया इत्यर्थः । वीरासनी भित्त्या-द्यनाश्रितः । दण्डकमण्डलुं आमेत्वात् मतुपो लोपेन तेनैतद्युक्त इत्यर्थः । कुष्माण्डैर्यद्देवा देवहेलनमित्यादिमन्त्रैः । मनुः ।
"महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्व-हम् ।
अहिंसासत्यमक्रोधमार्ज्जवञ्च समाचरेत् ।
त्रिरह्नस्त्रिर्निशायाश्च सवासा जलमाविशेत् ॥"
त्रिरह्नस्त्रिर्निशायाश्च इति षट्स्नानविषयमिदम् ।
पिपीलिकामध्यचान्द्रायणादितप्तकृच्छ्रवर्ज्जं फला-तिशयार्थं बहुषु त्रिसवनविधानात् । तथा ।
"स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ।
स्थानासनाभ्यां विहरेदशक्तोऽधःशयी भवेत् ॥
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्च्चकः ।
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः ॥
सर्व्वेषु च व्रतेष्वेवं प्रायश्चित्तार्थमादृतः ॥"
ब्रह्मचारी मैथुनवर्ज्जी व्रती छत्रोपानद्माल्या-नुलेपनगन्धादिवर्ज्जी । शूद्रेण सावित्रीजपस्थाने नारायणादिमन्त्रजपः कार्य्यः । अन्यद्वारा वा कारयितव्यः । एवमन्यत्रापि । यथा वराह-पुराणम् ।
"अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥"
जावालः ।
"आरम्भे सर्व्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शाखाग्नौ जुहुयाद्व्याहृतीः पृथक् ॥
श्राद्धं कुर्य्याद्व्रतान्ते च गोहिरण्यादिदक्षि-णाम् ।
गृहे गृही वसन् कुर्व्वन् ब्रह्मलोके महीयते ॥
स्त्रीणां होमो न कर्त्तव्यः पञ्चगव्यान्तमेव च ।
शूद्राणां पापिनाञ्चैव संवादं न च कारयेत् ॥
संवादस्तु न कर्त्तव्यस्त्रिवर्णैश्च कदाचन ।
ब्राह्मणेनैव वक्तव्या उत्पन्ने प्राणसंशये ॥"
श्राद्धमिति शुद्ध्यर्थं श्राद्धं दर्शितम् । स्त्रीभि-र्होमो न कर्त्तव्यः पञ्चगव्यपानञ्च स्त्रीणां कर्त्तरि षष्ठीति षष्ठी । प्रारब्धव्रतपीड़या प्राण-संशये । अन्ये वर्णा न प्रष्टव्या ब्राह्मण एव प्रष्टव्यः । व्रतं मौनं पूर्व्वोक्तं । तत्र विशेषमाह आपस्तम्बः । तत्र मौनमुक्तं चेद्विपद्यहे मूत्रनिमि-रन्धेरार्ग्निभिर्म्लेच्छुरैर्न्धैरेतैर्न् सन्ध्यायान्त-र्मुख एव यावदर्थमर्थं भाषते न मन्त्रलोपो भवतीति विज्ञायते । मन्त्रलोपो व्रतलोपः । बालवृद्धादिभिरशक्तैर्हीनमपि व्रतं कार्य्यमित्याह विष्णुः ।

"असंस्कृतो निरुत्साहो रोगी नवतिजीवकः ।
यथाशक्ति प्रकुर्व्वीत व्रतं स्त्रीषु न लुप्यते ॥"
अशक्तावन्यद्वारापि कार्य्यमिति उक्तञ्च ब्रह्म-पुराणे ।
"रोगी वृद्धस्तु पौगण्डः कुर्व्वन्नन्यैर्व्रतं सदा ।
चतुर्थाद्दत्तसरादूर्द्ध्वमशमं यावदेव हि ॥
शिशोर्व्रतं प्रकुर्व्वीरन् गुरुसम्बन्धिवान्धवाः ।
गुर्व्विणी वालवत्सा च रोगी व्यसनपरायणः ॥
एते नक्तेषु भुञ्जन्ति बाला मध्याह्न एव च ।
व्रतस्थः प्राणरक्षार्थं कदाचिदुदकं पिबेत् ॥
फलमूले तथा क्षीरं यज्ञशिष्टं तथा हविः ।
व्रतमध्ये तु रोगार्त्तो वैद्यप्रोक्तमथौषधम् ॥
करोति च गुरोर्वाक्यं व्रतस्थस्तत्फलादपि ।
ब्राह्मणस्याभिलषितं साधयेदविचारयन् ॥
एतान्यष्टौ व्रतस्यानामव्रतघ्नानि कुत्रचित् ।
व्रतेष्वेतेषु देवांस्तान् व्रतस्थस्तु प्रपूजयेत् ॥"
पौगण्डो बालः । व्यसनपरायणः कुटुम्बी द्रव्या-र्जनपालनपरः सम्भिलर्थः । बौधायनः ।
"अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्व्वचनमौषधम् ॥"
हारीतधर्म्मः ।
"वलयश्चोपहारश्च हवींषि चरवस्तथा ।
निर्व्विशङ्केन भोक्तव्यं व्रतमस्य न लुप्यते ॥"
वलिर्व्वैश्वदेवादिदेवताभ्यो दत्तः । उपहारो नैवेद्यम् । चरुः पार्व्वणस्थालीपाकादि । अत्र चैषां दत्तावशिष्टं भक्षणीयमिति । देवलः ।
"उपवासो विनश्येत दिवास्वप्नात्मैथुनैः ।
अत्यये जलपानेन नोपवासः प्रणश्यति ॥"
वृद्धशातातपः ।
"गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥"
अलङ्कारवस्त्रसिन्दूरादि उपवासेन हेतुना इत्यर्थः । तथा ।
"स्त्रीणां सम्प्रेक्षणात् स्पर्शात् ताभिः संकथना-दपि ।
ब्रह्मचर्य्यं विपद्येत न दारसङ्गमादपि ॥"
संप्रेक्षणात् संकथनात् इति अत्र सरागत्वं संप्रश्नस्यार्थः । इति प्रायश्चित्तविवेकः ॥ * ॥
प्रायश्चित्तात्मकव्रतानि यथा । विश्वामित्रः ।
"कृच्छ्रचान्द्रायणादीनि शुद्ध्याभ्युदयकारणम् ।
प्रकाशे च रहस्ये च संशयेऽशुक्लकेऽस्फुटे ॥
प्राजापत्यः सान्तपनः शिशुकृच्छ्रः पराककः ।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः ॥
महासान्तपनः शुद्धो तप्तकृच्छ्रस्तु पावनः ।
जलोपवासकृच्छ्रस्तु ब्रह्मकूर्चस्तु शोधकः ॥
एते व्यस्ताः समस्ता वा प्रत्येकमेकशोऽपि वा ।
पातकादिषु सर्व्वेषु पापकेषु प्रयत्नतः ॥
कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये ।
शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा ॥
यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति ।
उपवासस्त्रिरात्रन्तु मासः पञ्चदशाहकम् ॥
षड्द्वादशाहमासादि कार्य्यं शुद्धिफलार्थिना ।

उपपातकयुक्तानामनादिष्टेषु चैव हि ॥
प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया ।
जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं तथा ।
अनुबन्धादिकं दृष्ट्वा सर्व्वं कार्य्यं यथाक्रमम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
द्वादशवार्षिकादिव्रतं प्रायश्चित्तविवेकादौ द्रष्ट-व्यम् ॥

व्रततिः, स्त्री, ( प्र+तन विस्तारे+क्तिच् । पृषोदरादित्वात् पस्य वः । ) विस्तारः । लता । इत्यमरः ॥ ( यथा, ऋग्वेदे । ८ । ४० । ६ ।
"अपि वृश्च पुराणवद्व्रततेरिव
गुष्पितमोजो दासस्य दम्भय ॥"
"व्रततेरिव यथा लतायाः गुष्पितं निर्गतां शाखां वृश्चति ।" इति तद्भाष्ये सायणः ॥)

व्रतती, स्त्री, ( व्रतति+पक्षे ङीष् । ) विस्तारः । लता । इति भरतद्विरूपकोषः ॥ ( यथा, रघुः । १४ । १ .
"अपश्यतां दाशरथी जनन्यौ
छेदादिवोपघ्नतरोर्व्रतत्यौ ॥" )

व्रतभिक्षा, स्त्री, ( व्रते उपनयनकाले भिक्षा । ) उपनयनकालीनभिक्षा । तस्या विधिर्यथा । अथ भैक्षचरति । अथ शब्दस्तूष्णीमादित्योप-स्थानमग्निप्रदक्षिणञ्च शंसति ।
"प्रतिगृह्येप्सितं दण्डमुपस्थाप्य च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेत् भैक्षं यथाविधि ॥"
इति मनुवचनात् ॥
भिक्षासमूहं भैक्षं चरति आचरति इत्यर्थः । मातरमेवाग्रे ये चान्ये सुहृदो यावत्यो वा सन्निहिताः स्युः । याचते इत्यध्याहार्य्यम् । सुहृदे स्निग्धहृदये स्वसादौ । तथा च मनुः ।
"मातरं वा स्वसारं वा मातुर्व्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमां या चैनं नावमानयेत् ॥"
सन्निहितास्तद्देशस्थाः न तु प्रतिगृहं गत्वा । भवति भिक्षां देहीति ब्राह्मणभिक्षाप्रयोगः । तथा च मनुः ।
"भवत्पूर्व्वं चरेत् भैक्ष्यमुपनीतद्विजोत्तमः ।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्ष्यचर्य्या यथाक्रमम् ॥"
इति याज्ञवल्क्यवचनाच्च ॥ इति संस्कारतत्त्वम् ॥

व्रतसंग्रहः, पुं, ( व्रतस्य संग्रहः । ) दीक्षा । इति हेमचन्द्रः ॥

व्रतादेशः, पुं, (व्रतस्यादेशः ।) उपनयनम् । यथा,
"आदन्तजननात् सद्य आचूड़ादेकरात्रकम् ।
त्रिरात्रमाव्रतादेशात् दशरात्रमतः परम् ॥"
इति शुद्धितत्त्वम् ॥

व्रती, [न्] पुं, ( व्रतमस्यास्तीति । व्रत+इनिः । ) यजमानः । इत्यमरः ॥ ( ब्रह्मचारी । यथा, मनुः । २ । १८८ ।
"भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥" )

देशे देशे शूकधान्येषु संज्ञा
ज्ञातुं शक्या नैव तैर्द्दैवतैर्वा ।
अस्मादेषां येषु भोगोपभोगा-
स्तान्यस्माभिर्व्याक्रियन्ते कियन्ति ॥
शालयः कलमा रक्ता व्रीहिश्रेष्ठा नृपप्रियाः ।
धान्योत्तमाश्च विज्ञेयाः केदाराः सुकुमारकाः ॥
राजान्नषष्टिकसितेतररक्तसुखण्ड-
स्थूलाणुगन्धतिरियादिकशालिसंज्ञाः ।
व्रीहिस्तथेति दशधा भुवि शायनाः स्यु-
स्तेषां क्रमेण गुणनामगणं ब्रवीमि ॥
व्रीहिर्गौरो मधुरशिशिरः पित्तहारी कषायः
स्निग्धो वृष्यः कृमिकफहरस्तापरक्तापहश्च ।
पुष्टिं दत्ते श्रमशमनकृद्वीर्य्यवृद्धिं विधत्ते
रुच्योऽत्यन्तं जनयति मुदं वातकृद्भेदकोऽन्यः ॥”
इति राजनिर्घण्टः ॥
अपि च ।
“वार्षिकाः काण्डिताः शुक्ला व्रीहयश्चिर-
पाकिनः ।
कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि ॥
शालमुखो जतुमुख इत्याद्या व्रीहयः स्मृताः ।
कृष्णव्रीहिः स विज्ञेयो यत्कृष्णतुषतण्डुलाः ॥
पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते ।
कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते ॥
शालमुखः कृष्णशूकः कृष्णतण्डुल उच्यते ।
लाक्षावर्णमुखं तस्य ज्ञेयो जतुमुखस्तु सः ॥
व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः ।
अल्पाभिष्यन्दिनो बद्धवर्च्चस्काः षष्टिकैः समाः ।
कृष्णव्रीहिर्व्वरस्तेषां तस्मादल्पगुणाः परे ॥”
इति भावप्रकाशः ॥
तस्य यज्ञीयत्वं यथा,—
“यज्ञार्थं तत्तु भूतानां भक्ष्यमित्येव वै श्रुतिः ।
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ।
एते पञ्च महायज्ञा ब्रह्मणा निर्म्मिताः पुरा ।
ब्राह्मणानां हितार्थाय इतरेषां च तन्मुखाः ॥
इतरेषां तु वर्णानां ब्राह्मणैः कारिताः शुभाः ।
एवं कृत्वा नरो मुक्तास्माद्दरिद्रि । विशुध्यति ॥
अन्यथा व्रीहयोऽप्येते एकैके स्मगपाचिणः ।
मन्तया दात्भोक्तॄणां महामांसं तु तत्
स्मृतम् ॥”
इति वाराहे आदिकृतवृत्तान्ताध्यायः ॥
तेन पितृतृप्तिर्यथा । मनुः ।
“तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥”
व्रीहिः शरत्पक्वधान्यम् । याज्ञवल्क्यः ।
“हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनिच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तैनेह पितामहाः ॥”
हविष्यान्नेन शालिव्रीह्यन्नेन । इति । अमा-
वास्यास्तिस्रोऽष्टका माघी प्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयो-
दशी व्रीहियवपाकौ च ।
“एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-
पतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥”
इति विष्णुवचनं नवान्नागमश्राद्धस्यैव व्रीहि-
यवोभयप्राप्तिविषयकत्वेन विधायकं शेषादि-
धान्यव्युदासाय । शालिधान्यस्य तु प्राप्तिः ।
“शरद्वसन्तयोः केचित् नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥”
इति छन्दोगपरिशिष्टे व्रीह्यप्राप्त्या नवशस्येऽष्टौ-
शालिविधानात् यज्ञतुल्यन्यायात् श्राद्धेऽपि तथा
कल्पनात् । इति च श्राद्धतत्त्वम् ॥ * ॥ नवान्न-
श्राद्धकालो यथा । विष्णुः । अमावस्यास्तिस्रो-
ऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्टपद्यूर्द्ध्वं कृष्ण-
त्रयोदशी व्रीहियवपाकौ च ।
“एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥
व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तावाद्यौ महाराज विना श्राद्धं कथञ्चन ॥”
इति मलमासतत्त्वम् ॥
तेन यागकरणं यथा,—
व्रीहिभिर्यजेत यवैर्यजेत इति श्रूयते ॥ नन्न
“व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः ।
अप्रतीतयवाप्रामाण्यकल्पनम् ।” इत्येकादशी-
तत्त्वम् ॥ * ॥ व्रीह्यप्राप्तौ शालिधान्येन कर्म्म-
करणं यथा,—
“यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥”
इति तिथ्यादितत्त्वम् ॥
व्रीहिकः, त्रि, ( व्रीहिरस्यास्तीति । व्रीहि +
“व्रीह्यादिभ्यश्च ।” ५ । २ । ११६ । इति ठन् ।
धान्यविशिष्टः । इति सिद्धान्तकौमुदी ॥
व्रीहिकाञ्चनः, पुं, ( व्रीहिः काञ्चनमिव । अभि-
धानात् पुंस्त्वम् ।) मसूरः । इति त्रिकाण्डशेषः ॥
व्रीहिपर्णी, स्त्री, ( व्रीहेः पर्णमिव पर्णमस्याः ।
ङीष् । ) शालपर्णी । इति राजनिर्घण्टः ॥
व्रीहिभेदः, पुं, ( व्रीहेर्भेदः । ) धान्यविशेषः ।
चिना इति ख्यातः । तत्पर्य्यायः । अणुः २ ।
इत्यमरः ॥
व्रीहिमयः, पुं, (व्रीहेः पुरोडाशः । व्रीहि + “व्रीहेः
पुरोडाशे ।” ४ । ३ । १४८ । इति मयट् । )
व्रीहिनिर्म्मितपुरोडाशः । इति सिद्धान्तकौमुदी ॥
( व्रीह्यात्मके, त्रि । यथा, महाभरते । १३ ।
११५ । ५६ ।
“श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥”)
व्रीहिराजकः, पुं, (व्रीहीणां राजा । टच् समासे ।
ततः कन् ।) कङ्गुधान्यम् । चीनकधान्यम् ।
इति मेदिनी ॥
व्रीहिश्रेष्ठः, पुं, ( व्रीहिषु श्रेष्ठः ) शालिधान्यम् ।
इति राजनिर्घण्टः ॥
व्रीही, [ न् ] त्रि, (व्रीहिरस्यास्तीति । व्रीहि +
“व्रीह्यादिभ्यश्च ।” ५ । २ । ११६ इति इनिः ।)
व्रीहियुक्तक्षेत्रादि । इति सिद्धान्तकौमुदी ॥
व्रीह्यगारं, क्ली, (व्रीहीणामगारम् ।) धान्यगृहम् ।
तत्पर्य्यायः । कुसूलः २ । इति त्रिकाण्डशेषः ॥
व्रुड, शि संवृतिसंहत्योः । मज्जे । इति कविकल्प-
द्रुमः ॥ (तुदा०-कुटा०-पर०-सक०-अकश्च-सेट् ।)
रेफयुक्तः । शि, व्रुडति अव्रुडीत् वुव्रोड ।
मज्जो मज्जनम् । इति दुर्गादासः ॥
व्रूस, कि वधे । इति कविकल्पद्रुमः ॥ ( चुरा०-पक्षे
भ्वा०-सक०-सेट् । ) रेफयुक्तो दीर्घो । कि,
व्रूसयति व्रूसति । इति दुर्गादासः ॥
व्रैहः, त्रि, ( व्रीहेरवयवो विकारो वा । व्रीहि +
“बिल्वादिभ्योऽण् ।” ४ । ३ । १३६ । इत्यण् ।)
व्रीहिनिर्म्मितः । इति सिद्धान्तकौमुदी ॥
व्रैहेयः त्रि, ( व्रीहीणां भवनं क्षेत्रम् । व्रीहि +
“व्रीहिशाल्योर्ढक् ।” ५ । २ । २ । इति ढक् ।)
आशुधान्योपयुक्तभूम्यादिः । इत्यमरः ॥
व्ली, श शि गतिवृत्योः । इति कविकल्पद्रुमः ॥
( क्र्या०-प्या०-पर०-सक०-अनिट् ।) अन्तःस्थ-
तृतीयोपधः । शि, व्लिनाति । व्लीनः व्लीनिः ।
इति दुर्गादासः ॥

ड्जं योगपीठन्तु पद्मं पद्मे विचिन्तयन् ।
ादीन्यासनानीह चत्वार्य्यपि विचिन्तयेत् ॥
पीठं पृथग्ध्यात्वा मण्डलेन सहैकताम् ।
ध्यात्वा ततः पश्चात् पूजयेदासनं ततः ॥
नेन योगपीठस्य ध्यात्वा यद्दीयते जलम् ।
ापुष्पधूपादि तत् स्वयञ्चोपनिष्ठते ॥
ं देवाः सगन्धर्व्वाः सचराचरगुह्यकाः ।
न्तिताः पूजिताश्च स्युर्योगपीठस्य पूजने ॥"

इति कालिकापुराणे ५६ अध्यायः ॥

ाया, स्त्री, ( योग एव माया । ) भगवती ।
च विष्णुमाया । यथा, —

"ततश्च शौरिर्भगवत्प्रचोदितः
सुतं समादाय स सूतिकागृहात् ।
यदा बहिर्गन्तुमियेष तर्ह्यजा
या योगमायाजनिनन्दजायया ॥"

इति श्रीभागवते १० स्कन्धे ३ अध्यायः ॥

ङ्गः, पुं, (योगेन रङ्गो रागो ऽस्य ।) नारङ्गः ।
ते राजनिर्घण्टः ॥ ( नारङ्गशब्देऽस्य विशेषो
यः ॥ )

ाजगुग्गुलुः, पुं, (योगराजाख्यो गुग्गुलुः ।)
तरोगादीनामौषधविशेषः । यथा,—

ागरं पिप्पलीमूलं चव्यं मूषकचित्रकम् ।
ं हिङ्गुजमोदा च सर्षपौ जीरकद्वयम् ॥
ण्रेन्द्रयवौ पाठा विड़ङ्गं गजपिप्पली ।
टुकातिविषा भार्गी वचा मूर्व्वा च पत्रकम् ॥
वदारु कणा कुष्ठं रास्ना मुस्ता च सैन्धवम् ।
ला त्रिकण्टकः पथ्या धान्यकञ्च विभीतकम् ॥
ञ्ची च त्वगुशीरञ्च यवक्षारोऽखिलान्यपि ।
तानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥
ावन्त्येतानि चूर्णानि तावद्देयात्र गुग्गुलुः ।
मर्द्दी सर्पिषा पश्चात् सर्व्वं संमिश्रयेच्च तत् ॥
कं पिण्डं ततः कुर्य्यात् धारयेत् घृतभाजने ।
टिकाष्टकमात्रास्तु खादेत्ताश्च यथोचितम् ॥
यथोचितमिति दोषकालानलाद्यपेक्षया ॥
रिभाषा च ।
ादौ शाणोन्मितं खादेत् ततः कर्षार्द्ध-
माषकम् ।
ततः कर्षमितं खादेत् गुग्गुलुं क्रमतो नरः ॥
दिनानां सप्तके पूर्व्वे गुग्गुलोः शाणमाहरेत् ।
द्वितीये कर्षमर्द्धन्तु पूर्णं कर्षं ततः परम् ॥
गुग्गुलुर्योगराजोऽयं महाम्भुक्तो रसायनः ।
मैथुनाहारपानानां नियमो नात्र विद्यते ॥
सर्व्वान् वातामयान् हन्यात् आमवातमप-
स्मृतिम् ।
वातरक्तं तथा कुष्ठं तथा दुष्टव्रणानपि ॥
अर्शांसि ग्रहणीरोगं प्लीहगुल्मोदराण्यपि ।
आनाहं मन्दमग्निञ्च श्वासं कासमरोचकम् ॥
प्रमेहं नाभिशूलञ्च क्रिमिं क्षयसुरोग्रहम् ।
शुक्रदोषं रजोदोषमुदावर्त्तं भगन्दरम् ॥ * ॥
रास्नादिक्वाथसंयुक्तः सर्व्ववातामयान् हरेत् ।
काकोल्यादिश्रितात् पित्तं कफमारग्वधादिना ॥
दार्व्वीश्रितेन शोथांश्च गोमूत्रेण च पाण्डुताम् ।
मधुना मेदसो वृद्धिं कुष्ठं निम्बशृतेन च ॥
छिन्नाक्वाथेन वातास्रं शोथं शूलकणान्
हतात् ।
पाटलाक्वाथसहितो विषं मूषकसम्भवम् ॥
त्रिफलाक्वाथसंयुक्तो दारुणां नेत्रवेदनाम् ।
पुनर्नवादेः क्वाथेन हन्ति सर्व्वोदरानपि ॥ * ॥
अत्र रास्नादिक्वाथो यथा,—
रास्ना पुनर्नवा शुण्ठी गुड़ूचीरण्डजं शृतम् ।
सप्तधातुगते वाते सामे सर्व्वाङ्गगे पिबेत् ॥
इति योगराजो गुग्गुलुः ॥" इति भावप्रकाशः ॥

योगरूढ़ः, पुं, ( योगार्थप्रतिपादको रूढ़ः । )
योगार्थसहभावेन रूढ़ार्थबोधकशब्दः । यथा,
"योगरूढ़ाश्च रूढ़ाश्च यौगिकाश्चेति ते त्रिधा ॥"
"ते शब्दाः पुनस्त्रिधा भवन्ति । योगरूढ़ाः
पङ्कजादयः । पङ्कजनिडप्रत्ययैः पङ्कजनिकर्त्तृमभि-
धाय केन योगेनापि पदार्थ एव प्रतिपाद्यते
न कुसुमाद्यर्थ इति । योगार्थपुरस्कारेणापि
रूढ़ार्थ एवेति योगरूढ़ः । एवं ईश्वरसङ्केत-
महिम्ना झटिति पद्मस्यैव स्मृतेः ।" इत्यलङ्कार-
कौस्तुभे २ किरणः ॥ ("योगरूढ़ं नाम लक्षयति ।
'स्वान्तर्निविष्टशब्दार्थस्वार्थयोर्बोधकृन्मिथः ।
योगरूढ़ं न यन्नैकं विनान्यस्याक्ति शाब्दधीः ॥'
यन्नाम स्वावयववृत्तिलभ्यार्थेन समं स्वार्थस्या-
न्वयबोधकृत् तन्नाम योगरूढ़ं यथा पङ्कजक्षण्या-
सर्पाधर्म्मादि तद्धि शान्तर्निविष्टानां पङ्कादि-
शब्दानां वृत्तिलभ्येन पङ्कजनिकर्त्रादिना समं
स्वशक्यस्य पद्मादेरन्वयानुभावकं पङ्कजमित्या-
दितः पङ्कजनिकर्त्तृ पद्ममित्यनुभवस्य सर्व्वसिद्ध-
त्वात् । इयांस्तु विशेषो यद्रूढ़मपि मण्डपरथ-
कारादिपदं योगार्थविनाकृतस्य रूढ़ार्थस्यैव
रूढ़ार्थविनाकृतस्यापि योगार्थस्य बोधकं मण्डपे
शेते इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव
मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेर-
योग्यत्वेनान्वयाबोधात् । योगरूढ़न्तु पङ्कजादि-
पदमवयववृत्त्या रूढ़ार्थमेव समुदायशक्त्या
चावयवलभ्यार्थमेवानुभावयति नत्वन्यं व्युत्पत्ति-
वैचित्र्यात्तथैव साकाङ्क्षत्वात् । अतएव पङ्कजं
कुमुदमित्यत्र पङ्कजनिकर्त्तृत्वेन भूमौ पङ्कज-
मुत्पन्नमित्यादौ च पद्मत्वेन पङ्कजपदस्य लक्षण-
यैव कुमुदस्थलपद्मयोर्बोध इति वार्त्तिकम् । ननु
पुष्पं पङ्कजेत्यादौ पङ्कजादेरन्वयस्याबोधात्
बोधाच्च पङ्कजपुष्पमित्यादौ निर्विभक्तिकेन पङ्क-
जादिपदेनोपस्थाप्यार्थस्यान्वयधीसामान्यं प्रत्येव
तादृशपङ्कजादिपदोत्तरशब्दोपस्थाप्यत्वं तन्त्रम्
एवं पुष्पं पङ्कजमित्यादौ अन्वयबोधदर्शनात्तदनु-
रोधेन सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वय-
बोधं प्रति स्वसमानविभक्तिकपदोपस्थाप्यत्वञ्च
अतस्तदुपस्थापितस्य पङ्कजातादेः कथं पदा-
न्तराद्युपस्थापितं पद्मादावन्वय इति चेदपङ्कज-
वृत्तिः सत्त्वेत्यादौ च व्यभिचाराद्दुरव्युत्पत्तेः
'स्खलदचरसंश्रोभि तदयमासुखपङ्कजम् ।'
इत्यादौ सङ्कोचेनेति दृष्टाय । नच धेनुपदस्य
धानकर्म्मत्वविशिष्टायां गवीवपङ्कजादिपदस्यापि
पङ्कजातत्वादिविशिष्टपद्मादौ रूढ़िरेवास्तु न तु
योगरूढ़िरिति साम्प्रतं अन्यत्र क्लृप्तशक्तिभ्यः
पङ्कजन्यादिपदेभ्य एवाकाङ्क्षादिसाचिव्येन पङ्कज-
निकर्त्तृत्वादेर्लाभसम्भवे तद्विशिष्टस्य पद्मस्य
गुरोः समुदायाशक्यत्वादनन्यलभ्यस्यैव शब्दार्थ-
त्वात् । यद्यपि कर्त्तृवाचकडप्रत्यये एव पद्मत्व-
विशिष्टस्य लक्षणया लाभसम्भवान्न पङ्कज-
भागस्य तत्र शक्तिरुचिता प्रकारान्तरालभ्यस्यैव
शब्दशक्यत्वमित्युक्तत्वात् अतिवर्त्तमानत्वयोरि-
वैकपदार्थयोरपि कर्त्तृपद्मयोर्मिथोऽन्वयस्य
सम्भवित्वात् तथाप्यवयवानां शक्तेरग्रहे ग्रहेऽपि
वा पद्मादौ तदर्थस्यान्वयधीविरोधिधीदशायां
पङ्कजमस्तीत्यादितः पद्ममस्तीत्याद्यनुभवार्थ-
मवश्यं पद्मत्वादिविशिष्टे पङ्कजादिभागस्य
रूढ़िरपेक्षा इतरथा प्रकृत्यर्थावच्छिन्नस्यैव प्रत्य-
यार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया डप्र
त्ययोपस्थापितस्यापि पद्मस्यास्तित्वादिना सहा-
न्वयानुपपत्तेः । अतएव पङ्कजादिपदागृहीत-
शक्तिकस्य पुंसः पङ्कजमस्तीत्यादितो जात्वपि
कर्त्तास्तीत्याकारको नान्वयबोधः प्रत्ययमात्रोप-
स्थाप्यस्य कर्त्तुरन्यत्रान्वये निराकाङ्क्षत्वादिति
वक्ष्यते । किञ्चैवमेकाक्षरकोषावधृतशक्तिकानां
कखादिप्रत्येकवर्णानामेव निरूढ़लक्षणया तत्त-
दर्थानुभावकत्वसम्भवाद्धकनखादिसमुदायस्यापि
तत्तदर्थे शक्तिर्व्विलीयेत कादिप्रत्येकवर्णस्य शक्ति-
ग्रहं विनापि वकादिशब्दाद्बकादेरनुभवार्थं तत्र
समुदाये शक्तिरिति तु प्रकृतेऽपि समानं डादि-
प्रत्ययमात्रस्य पद्मादौ वृत्तिमत्त्वाग्रहेऽपि पङ्क-
जादिसमुदायात् पद्मादेरनुभवस्य सर्व्वसिद्ध-
त्वात् । नचैवं चित्रगुरित्यादावपि चित्रगोस्वा-
म्यादौ समुदायस्य शक्तिप्रसङ्गः समासत्वस्या-
विशिष्टत्वादिति वाच्यम् अगृहीतावयववृत्तिकस्य
पुंसस्ततोऽर्थानधिगमेनावयवानां शक्तेरवश्या-
पेक्षायां तेषामेव तथाविधार्थबोधकत्वौचित्यस्य
वक्ष्यमाणत्वादिति ।

पङ्कजादिपदेभ्यः केवलस्यैव योगार्थस्य रूढ़ा-
र्थस्य वा बोधव्युदासायैतादृशार्थयोर्मिथः
साकाङ्क्षत्वनियमो न कल्प्यते परन्तु रूढ़ार्थभिन्ने
योगार्थस्य बोधं प्रति रूढ़िविषयः प्रतिबन्धकत्वं
तेन रूढ़ेरप्रतिसन्धानदशायामवयवशक्त्यैव
पङ्कजं कुमुदमित्यादौ पङ्कजनिकर्त्तृत्वादिना
कैरवादेरवगमस्तथावयवशक्तेरनुपस्थितौ समु-
दायशक्त्यैव भूमौ पङ्कजमुत्पन्नमित्यादौ पद्मत्व-
प्रकारेण स्थलपद्मादेरतएव च तैलपदं योगेन
तिलप्रभवं रूढ़्या विलक्षणद्रवपर्य्यवसितं बोधं
बोधयेद्योगरूढ़मपि तैलं पत्रमित्यादौ सर्षपस्य
तैलमित्यादौ च शक्त्यैव प्रत्येकस्य बोधकमिति
मीमांसकानाम्मतमुपन्यस्यति
'रूढ़्यर्थभिन्ने योगार्थबुद्धौ रूढ़ेर्विरोधिताम् ।
वदन्ति केचिदेकैकबुद्धिस्तैः क्वचिदिष्यते ॥'
क्वचित्समुदायावयवयोरेकमानस्य शक्तिप्रति-

सन्धानस्थले यद्यपि पद्मान्यधर्म्मिकपङ्कजातत्वान्वयधीसामान्यं प्रति पङ्कजपदं पद्मशक्तमित्येव रूढिज्ञानत्वेन न विरोधित्वं तादृशधीत्वेऽपि कुमुदादिशब्देभ्यस्तादृश्येव कैरवादेरवगमात् नापि पङ्कजपदजन्यतादृशबोधं प्रत्येव तथा विरोधित्वं रूढिज्ञानदशायामपि समुदायस्य लक्षणया शक्तिभ्रमेण वा पङ्कजपदात् पङ्कजातत्वेन कुमुदबोधस्य सर्व्वैरुपगमात् तथाप्यवयवशक्त्या पङ्कजपदजन्यपद्मान्यधर्म्मिकपङ्कजातत्वान्वयबोधं प्रत्येव रूढिज्ञानत्वेन प्रतिबन्धकत्वम्। न च कुमुद एव पद्मत्वेन रूढिभ्रमदशायां तादृश्येव कुमुदस्य बोधो न स्याद्विरोधिन्या रूढिधियः सत्त्वादिति वाच्यं पद्मान्यधर्म्मिकत्वेन पद्मत्वानवच्छिन्नविशेष्यताकत्वस्योक्तत्वात्। पद्मस्येव कुमुदस्यापि समुदायशक्यत्वधीदशायामवयवशक्त्या पङ्कजात कुमुदमित्याकारकधीस्वीकारे तु कुमुदादिशक्तत्वज्ञानजन्यत्वेनापि प्रतिबध्यं विशेषणीयम्। न च यत्र तात्पर्य्यादिधीविरहादयोग्यताभ्रमादिना प्रतिबन्धाद्वा रूढ्योपस्थिते पद्मे योगार्थस्य पङ्कजनिकर्त्तुरनन्वयस्तत्रावयवशक्त्या पङ्कजातत्वेन कुमुदादिबोधो न स्यात् विरोधिनो रूढिज्ञानस्य सत्त्वादिति वाच्यं मीमांसकानामिष्टत्वात् ते हि मण्डपं भोजयेदित्यादावपि यदानीं रूढिधीसत्त्वे मण्डपादिपदानामवयवशक्त्या मण्डपानकर्त्रादेर्न मन्यन्ते बोधं अमत्वा यद्दानात्कस्मिंस्तस्यैव रूढ्यर्थगोचरतदयोग्यताज्ञानादभावविशिष्टस्यैव रूढिज्ञानस्य विरोधितायाः सुवचत्वाच्च। यदि च समुदाय एव पद्मत्वेन पङ्कजानकर्त्तृत्वेन च शक्तिः प्रमाणमाभ्यां पङ्कजात पद्ममित्याकारको बोधः प्रामाणिकस्तदानीं च पङ्कजनिकर्त्तृत्वेन कुमुदस्य नान्वयधीः तदावयवशक्त्यत्वपक्षात् पङ्कजपदघटकशब्दशक्तीति प्रतिबन्धकत्वं निवेशनीयं तद्रूपत्वस्येह तद्विषयिताव्यापकविषयिताकत्वमात्र तदवयव एव तत्राप्यविशिष्टम्। यत्तु स्वावयवशक्त्या पङ्कजपदजन्यपङ्कजकर्त्तृत्वेनान्वयबोधं प्रति पद्मत्व एतुमान कार्य्यस्य विशेष्यत्व सदवच्छेदकत्व वा कारणस्य तु समवायस्वादात्म्य वा प्रत्यासत्तिरित्येतावतैव योगार्थमर्य्यादया कुमुदादेर्बोधस्योदासप्रसङ्गात् उक्तक्रमेण प्रतिबन्धकतायां मानाभाव पद्मस्य पङ्कजप्रयोगोपाधिरिति प्राचीनप्रवादस्याप्युपलक्षणम् एव पद्मपुष्पत्वादिति समुच्च पद्मायपदीसयुक्तिकस्यापि पुंस पङ्कजनिकर्त्तृत्वेनान्वयबुद्ध्या कुमुदस्य बोधानुदयप्रसङ्गात् तदव्यापत्तिरभावविरोधात् न च रूढिज्ञानकालीनमेव योगार्थस्य बोधं प्रत्युक्तरीत्या पद्मत्वस्य हेतुत्वं तथा सति रूढिधीदशायामपि तदसमानकालीनस्य पङ्कजातत्वेन कुमुदबोधस्य सामान्यसामग्रीसत्त्वेन दुर्व्वारतापत्ते रूढिज्ञानासमानकालीनत्वादसम्बन्धं प्रति विशेषतो हेतुत्वकल्पनायां क्लृप्तत्वात् तत्कल्पने चातिगौरवात्। यदपि पङ्कजनकर्तृत्व पद्मान्यपदानां शक्तिसत्त्वेऽपि पङ्कजपदात्तादृश्येव बोधः परन्तु पद्मत्वमात्रेण योगार्थमर्य्यादया पङ्कजातत्वप्रकारकबोधसामर्थ्यं प्रत्येव पद्मत्वविशिष्टे रूढिज्ञानस्य लाघवेन विरोधित्वात् पद्मान्यधर्म्मिकत्वादेर्गौरवेण प्रतिबध्यकोट्यप्रविष्टत्वादतो योगरूढं नामैव नास्ति युधिष्ठिरादिशब्दादपि रणस्थिरत्वादिकं योगार्थं परित्यज्यैव वैयात्यादिप्रकारेण कुन्तीपुत्राद्यवगमात्। यदुक्तमभियुक्तैः।

या शक्तिरजहत्स्वार्था समभ्यासोपपादिता।
जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी॥
पङ्कजं मनसादेवी पद्मनाभो युधिष्ठिरः॥

इति। तदेतद्वैयाकरणमतं पङ्कजमस्तीत्यादितः पङ्कजात पद्ममस्तीत्याद्यनुभवस्य न्यायमीमांसादिसकलतन्त्रसिद्धत्वेन गौरवस्य प्रामाणिकत्वाददोषत्वमन्यथा अवयवशक्तैरपि प्रतिबध्यतायामप्रवेशापत्तेराद्ये पङ्कजातत्वप्रकारकशाब्दसामान्यं प्रत्येव रूढिधियः प्रतिबन्धकत्वस्य सुवचत्वात्। नन्वेवं दध्नि सरसिजमस्तीत्यादितो दध्यनिष्ठं सरोजमिव दध्याभिन्ने सरसि जातं पद्ममपि प्रतीयेत नामार्थयोरभेदान्वये तन्नस्य नाम्नो समानविभक्तिकत्वस्यानपायादिति चेत् सत्यं सविभक्तिकनामार्थस्य नामान्तरार्थान्वये वृत्त्यवच्छेदकप्रत्ययेनैव समानविभक्तिकनामान्तरेण साकाङ्क्षत्वस्य तन्त्रतायाः स्वीकार्य्यत्वादिति।

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते॥

इति रूढ्यर्थयोगार्थयोर्युगपदुपस्थितौ तयोराकाङ्क्षादिसाचिव्यादाद्यत्वान्यबुद्धिस्तत्र एव योगार्थस्य रूढ्यर्थस्य वा नान्यत्रान्वयो न तु तयोरेव मिथः साकाङ्क्षत्वं अन्यत्र योगार्थस्य बोधने रूढिधियः प्रतिबन्धकत्वे वा प्रमाणाभावात् एवञ्च यत्र योगरूढिलभ्यार्थयोस्तात्पर्य्यावगत्याद्विरोधित्वमवधारणात् न प्रथममन्वयधीस्तत्र योगार्थमर्य्यादया पङ्कजातत्वेन कुमुदादेः समुदायशक्त्या च पद्मत्वेन स्थलकमलस्य बोधो भवत्येवेति मणिकृन्मतं दूषयति।

रूढ्यर्थस्यान्यत्र या यत्र यदाकाङ्क्षादिनिश्चयः।
तदैव तत्र योगार्थस्यान्वयो मणिकृन्मतः॥

समुदायशक्त्युपस्थापिते पदान्तरशक्त्युपस्थापिते वा यत्र धर्म्मिण्यवान्तरशक्तिलभ्यार्थस्य यदाकाङ्क्षानिश्चयादिस्तदैव तत्र तथान्वयबोध उत्पद्यते सम्भूतसामग्रीकत्वात् रूढ्यर्थभिन्ने योगार्थस्यान्वयबोधमुदासाय तु रूढेर्योगापहारिता प्रवादो रूढ्यर्थमात्रे योगार्थस्यान्वयबोधसामग्रीसत्त्वाभिप्रायक इति चिन्तामणिकृतां मतम्। योगरूढं विभजते।

‘सामासिकं तद्धितान्तमिति तत् द्विविधं भवेत्।
योगरूढं तदन्तस्य समासत्वं यदाश्रिते॥

तत्र योगरूढं सामासिकं समासात्मकं शब्दं यथा तद्धितान्तं वासुदेवादि। तदन्तस्य पङ्कजादियोगरूढस्य सामासिके एवान्तर्भाव इति शब्दशक्तिप्रकाशिका॥ * ॥)

योगवाह, पुं, (योगस्य वाह। योगं वाहयतीति। वह + णिच् + अण् वा।) अनुस्वारः। विसर्गः। जिह्वामूलीयः। उपध्मानीयः। इति व्याकरणम्॥

योगवाही, स्त्री (योगं वाहयतीति। वह + णिच् + अण्। ततो ङीष्।) क्षारविशेषः। यथा,—
“स्वर्जिस्तु स्वर्जिकासुर्जी योगवाही सुवर्चिका।”
इति हेमचन्द्रः॥

पारदः। (पुं, रोगविशेषे मिलितानामौषधानां प्रयोगः। यथा,—
‘योगवाहिरसः सर्व्वे सर्व्वरोगगणापहः॥’
इति वैद्यकरसेन्द्रसारसंग्रहे रक्तपित्ताधिकारे।)

योगसारः, पुं, (योगस्यौषधप्रयोगस्य सारः।) सर्व्वरोगहरणोपायः। यथा,—

धन्वन्तरिरुवाच।

“सर्व्वरोगहरं सिद्धं योगसारं वदाम्यहम्।
शृणु सुश्रुत। संक्षेपात् प्राणिनां जीवहेतवे॥
निमेषादिर्दिवि कालश्चिन्ताभिः षड्विधो भवेत्॥
कषायकटुतिक्ताम्लरूक्षाहाराद्भोजनात्।
चिन्ताव्यवायव्यायामभयशोकप्रजागरात्॥
उच्चैर्भाष्यतिभाराच्च कर्म्मयोगातिकर्षणात्।
वायुः कुप्यति पर्य्यन्ते जीर्णान्ने दिनसंक्षये॥
उष्णाम्लमलवणक्षारकटुकाजीर्णभोजनात्।
तीक्ष्णातपाग्निसन्तापमद्यक्रोधनिषेवणात्॥
विदाहकाले भुक्तस्य मध्याह्ने जलदागमे।
ग्रीष्मकालेऽर्द्धरात्रेऽपि पित्तं कुप्यति देहिनः॥
स्वाद्वम्ललवणस्निग्धगुरुशीतातिभोजनात्।
नवान्नपिच्छलानूपमांसाभिष्यन्दिसेवनात्॥
अव्यवायो दिवास्वप्नप्रत्यासनसुखादिभिः।
कफः प्रदोषे भुक्ते च वसन्ते च प्रकुप्यति॥
पारुष्यमूलसङ्कोचतोदविष्टम्भभोजनात्।
खरता मन्दता कर्षः रोमहर्षणशोषणम्॥
ध्यावत्वमङ्गविभ्रंशवचनायामवर्त्तनम्।
वायोर्लिङ्गानि तैर्युक्तं रोगं वातात्मकं वदेत्॥
दाहोष्णपादसङ्क्लेदकोपरागपरिस्रवाः।
कट्वम्लवैगन्ध्यस्वेदमूर्च्छातितृष्णभ्रमाः॥
हारिद्रं हरितत्वञ्च पित्तलिङ्गानि तैर्नर।
स्नेहापदेहमाधुर्य्यचिरकारित्वबन्धनम्॥
स्तैमित्यहर्षशीतत्वगौरवम्।
कण्डूनिद्राभियोगश्च लक्षणं कफसम्भवम्॥
हेतुलक्षणसंसर्गाद्विद्याद्व्याधिं द्विदोषजम्।
सर्व्वहेतुसमुत्पन्नं त्रिलिङ्गं सान्निपातिकम्॥
दोषधातुमलाधारो देहिनां देह उच्यते।
तेषां समत्वमारोग्यं क्षयवृद्धी विपर्य्ययः॥
रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः।
वातपित्तकफा दोषा विण्मूत्राद्या मलाः स्मृताः॥
वायुः शीतो लघुः सूक्ष्मः खरो रूक्षोऽस्थिरो बली।
पित्तमम्लं कटूष्णञ्च पक्वोऽजीर्णरोगकारणम्।
मधुरो लवणः स्निग्धो गुरुः श्लेष्मातिपिच्छिलः।

तारं मायां तथागच्छानुरागिणि मैथुनप्रिये।
वह्निभार्य्या मनुः प्रोक्तः सर्व्वसिद्धिप्रदायकः ॥
एषा मधुमती तु स्यात् सर्व्वसिद्धिप्रदा प्रिये।
गुह्यात् गुह्यतरा विद्या तव स्नेहात् प्रकी-
र्त्तिता ॥ ८ ॥

देव्युवाच।

नृनञ्च साधनं पुण्यं यक्षिणीनां सुखप्रदम्।
यस्मिन् काले प्रकर्त्तव्यं विधिना केन वा प्रभो।
अत्राधिकारिणः के वा समासेन वदस्व मे ॥

ईश्वर उवाच।

वसन्ते साधयेद्धीमान् हविष्याशी जितेन्द्रियः।
सदा ध्यानपरो भूत्वा तद्दर्शनमहोत्सुकः ॥
उत्कटे प्रान्तरे वापि कामरूपे विशेषतः।
स्थानेष्वेकतमं प्राप्य साधयेत् सुसमाहितः।
अनेन विधिना साक्षात् भविष्यति न संशयः ॥
देवाश्च सेवकाः सर्व्वे परं चात्राधिकारिणः।
तारकब्रह्मणो मन्त्रं विनाप्यत्राधिकारिणः ॥"
इति तन्त्रसारे योगिनीसाधनप्रकरणं समाप्तम् ॥
दशविधदशान्तर्गतदशाविशेषः। यथा,—
"मनश्चक्रं भुवं कृत्वा पश्च तत्र त्रिमिश्रयेत्।
मन्त्रेण हृतः शेषो मङ्गलादिविनिश्चयः ॥
मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा।
उल्का सिद्धा सङ्कटा च योगिन्यष्टौ प्रकीर्त्तिताः ॥
अन्द्रैकं मङ्गला धत्ते शेषास्त्वेकैकवर्द्धिकाः।
पुनश्चाकांशवर्षाणि चक्रवत् परिवर्त्तनात् ॥"
अपि च।
"रोहिण्यादौ त्रिरावृत्त्या मङ्गलादौ यथाक्रमम्।
उल्का सिद्धा सङ्कटा च अश्विन्यादित्रये पुनः ॥"
एतासामन्तर्दशा।
"दशावर्षन्तु षट्त्रिंशद्भागं कृत्वा विनिर्द्दिशेत्।
यत्तु यस्या हि यद्वर्षं तत्तद्भागं प्रकीर्त्तितम् ॥"
फलं यथा,—
"मङ्गला मङ्गलं धत्तेऽतुलभोगं सुखं तथा।
गीतवाद्यसहस्राणि गृहे तस्य दिने दिने ॥
पिङ्गला विविधं दुःखमङ्गचिन्तादिसम्भवम्।
ददाति नाशं शत्रुभ्यो धनधान्यगजादिकम् ॥
धन्या च सततं दत्ते सर्व्वत्र विजयादिकम्।
शत्रुभ्यो रक्षते नित्यं मातृवत् परिपालयेत् ॥
भ्रामरी विविधं दुःखमन्तःसम्भ्रमसम्भवम्।
अकस्मात्तस्य दुर्द्दैवं विधिना प्रेरितं भवेत् ॥
भद्रिका विविधान् धत्ते सम्मानादिमनोरथान्।
तुष्टा चेद्भद्रिका नित्यं दुर्गेहः सुगृहायते ॥
उल्का व्याधिकरी प्रोक्ता नित्यं नानाभयप्रदा।
उल्का यदि समायाति सुगृहो दुर्गृहायते ॥
सिद्धा च साधयेत् सर्व्वं मन्त्रारम्भधनादिकम्।
यस्य तुष्टा भवेत् सिद्धा लक्ष्मीः स्व करे स्थिता ॥
सङ्कटा सङ्कटं दत्ते शुद्धस्तिथा धनादिकम्।
सेव भार्य्या सदा नित्यं गृही लक्ष्यः फणी यथा ॥"
इत्युद्बोधचन्द्रिका ॥

योगी, [ न् ] पुं, ( योगः अस्यस्तीति। योग + इनिः। यद्वा, युज समाधौ। युजिर् योगे वा + "संपृचानुरुधेति।" ३। २।१४२। इति घिनुण्।) योगयुक्तः। तस्य लक्षणादि यथा,—
"स्वर्णे लोष्टे गृहेऽरण्ये सुरभौ चन्दने तथा।
समता भावना यस्य स योगी परिकीर्त्तितः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्यायः ॥
अपि च।
"आत्मौपम्येन सर्व्वत्र समं पश्यति योऽर्ज्जुन!।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥"
इति श्रीभगवद्गीतायाम् ७ अध्यायः ॥
अन्यच्च।

ऋषय ऊचुः।

"भगवन्! देवतारिघ्न! हिरण्याक्षनिषूदन!।
चत्वारो ह्याश्रमाः प्रोक्ता योगी नाम क
उच्यते ॥

सर्व्वकर्म्माणि संन्यस्य समाधिमचलं श्रितः।
य आस्ते निश्चलो योगी स सन्न्यासी न पञ्चमः ॥
सर्व्वेषामाश्रमाणान्तु द्वैविध्यं श्रुतिदर्शितम्।
ब्रह्मचार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्मतत्परः ॥
योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत्।
उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥
उदासीनसाधकश्च गृहस्थो द्विविधो भवेत्।
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्य्याधनादिकम् ॥
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः।
कुटुम्बभरणायत्तः साधकोऽसौ गृही भवेत् ॥
तपस्तप्यति योऽरण्ये यजेद्देवान् जुहोति च।
स्वाध्याये चैव निरतो वनस्थस्तापसो मतः ॥
तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत्।
सन्न्यासिकः स विज्ञेयो वानप्रस्थाश्रमे स्थितः ॥
योगाभ्यासरतो नित्यमारुरुक्षुर्ज्जितेन्द्रियः।
ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥
यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः।
सम्यग्दर्शनसम्पन्नः स योगी भिक्षुरुच्यते ॥
ज्ञानसन्न्यासिनः केचिद्वेदसन्न्यासिनः परे।
कर्म्मसन्न्यासिनः केचित्त्रिविधाः पारमेष्ठिकाः ॥
योगी च त्रिविधो ज्ञेयो भौतिकः सांख्य एव च।
तृतीयोऽन्त्याश्रमी प्रोक्तो योगमुत्तममास्थितः ॥"
इति कौर्म्मे २ अध्यायः ॥
( तेषां स्त्रीसङ्गनिषेधो यथा,—
"यदि सङ्गं करोत्येव बिन्दुस्तस्य विनश्यति।
आयुःक्षयो बिन्दुहीनादसामर्थ्यञ्च जायते ॥
तस्मात् स्त्रीणां सङ्गवर्ज्यं कुर्य्यादभ्यासमाद-
रात्।
योगिनोऽङ्गस्य सिद्धिः स्यात् सततं बिन्दुधार-
णात् ॥"
इति दत्तात्रेयसंहिता ॥
तेषां पथ्यं यथा, हठयोगप्रदीपिकायाम्।
"गोधूमशालियवषष्टिकशोभनान्नं
क्षीराज्यखण्डनवनीतसितामधूनि।
शुण्ठीपटोलकफलादिकपञ्चशाकं
मुद्गादिदिव्यमुदकञ्च यमीन्द्रपथ्यम् ॥"
तेषामपथ्यं यथा, तत्रैव।
"कट्वम्लतिक्तलवणोष्णहरीतशाक-
सौवीरतैलतिलसर्षपमत्स्यमद्यम्।
आजादिमांसदधितक्रकुलत्थकोल-
पिण्याकहिङ्गुलशुनाद्यमपथ्यमाहुः ॥" )

योगीश्वरः, पुं, ( योगिनामीश्वरः। ) याज्ञवल्क्य-मुनिः। ( इति हेमचन्द्रे योगेशशब्ददर्शनात्। ३। ८५१ ॥ ) यथा,—
"योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन्।
वर्णाश्रमेतराणां नो ब्रूहि धर्म्मानशेषतः ॥"
"योगिनां सनकादीनां ईश्वरः श्रेष्ठस्तं याज्ञ-वल्क्यं संपूज्य।" इति मिताक्षरा ॥ त्रि, यमिनां श्रेष्ठः। ( यथा, मार्कण्डेये। ८६। २८।
"यजन्ति यानस्तमलैर्मनोभि-
र्योगीश्वराः क्लेशविमुक्तिहेतून् ॥" )

योगीश्वरी, स्त्री, ( योगिनामीश्वरी। ) दुर्गा। यथा,—
"योगिशक्रादयो देवाः सनकान्तास्तपोधनाः।
तेषां स्वामी तथा योगी ईश्वरी प्रभुपालना ॥
आत्मेन्द्रियमनादीनां संयोगो योग उच्यते।
तेषां या योजनाद्योगी योगैश्वर्य्यविबोधना ॥"
इति देवीपुराणे ४५ अध्यायः ॥

योगेशः, पुं. ( योगस्य ईशः ईश्वरः। ) याज्ञ-वल्क्यः। इति हेमचन्द्रः। ३। ८५१ ॥ ( योगेश्वरे, त्रि। यथा, भागवते। ४। १६। ६।
"कपिलो नारदो दत्तो योगेशाः सनकादयः।
तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥" )

योगेश्वरः, पुं, ( योगानां ईश्वरः। ) श्रीकृष्णः। यथा,—
"ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्म्मवर्म्मणि।
स्वां काष्ठामधुनोपेते धर्म्मः कं शरणं गतः ॥"
इति श्रीभागवते १ स्कन्धे १ अध्यायः ॥
( शिवः। यथा, महाभारते। १३। १४। ३२३।
"नमस्ते भगवन् देव! नमस्ते भक्तवत्सल!।
योगेश्वर! नमस्तेऽस्तु नमस्ते विश्वसम्भव! ॥"
देवहोत्रतनयः। यथा, भागवते। ८। १३। ३२।
"देवहोत्रस्य तनय उपहर्त्ता दिवस्पतेः।
योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति ॥"

योगेश्वरी, स्त्री, वन्ध्याकर्कोटकी। इति भाव-प्रकाशः ॥ ( योगानामीश्वरी। दुर्गा। यथा,—
"त्वञ्च योगेश्वरी तथा—।" इति चण्डीकव-चम् ॥ योगयुक्ते, त्रि। यथा, मार्कण्डेये। ६७। ८।
"प्रजापतेः काश्यपाय सोमाय वरुणाय च।
योगेश्वरेभ्यश्च सदा नमस्यामि कृताञ्जलिः ॥" )

योगेष्टं, क्ली, ( योगे सन्धिच्छिद्रादिपूरणे इष्टम्। ) सीसकम्। इत्यमरः। २। ९। १०५ ॥ ( तथास्य पर्य्यायः।
"नागं महाबलं चीनं पिष्टं योगेष्टसीसकम् ॥"
इति वैद्यकरत्नमालायाम् ॥ )

योग्यं, क्ली, ( योज्यत इति। युज् + णिच् + यत्। ) ऋद्धिनामौषधम्। वृद्धिनामौषधम्। इत्य-मरः। २। ४। ११२ ॥

योग्यः, त्रि, ( योगाय प्रभवति। योग + "योगाद्-यच्च।" ५। १। १०२। इति यत्। ) प्रवीणः। योगार्हः। ( यथा, रघुः। ६। २९।

"कान्त्या गिरा सून्नृतया च योग्या
त्वमेव कल्याणि ! तयोस्तृतीया ॥")
उपायी । शक्तः । इति मेदिनी हेमचन्द्रश्च ॥
(यथा मार्कण्डेये । ७१ । १० ।
"अपत्नीको नरो भूप न योग्यो निजकर्म्म
णाम् ॥"
योजनसाधनभूतः । यथा ऋग्वेदे । ३ । ६ । ६ ।
"ऋतस्य वा केशिना योग्याभिः ।"
'योग्याभिर्योजनसाधनभूताभी रज्जुभिः ।' इति
सायणः । शकटादियोजनीयः । यथा, शत
पथब्राह्मणे । १।३।१ । १२ ।
"योक्त्रं च हि योग्यं युञ्जन्त्यन्ति वै पत्नी
अमेध्यं यदवाचीनम् ।"
'योग्यं योजनीयमनडुदादिकम् ।" इति
तद्भाष्यम् ।) पुष्यनक्षत्रे, पुं । इति मेदिनी ।
ये, ४६ ॥

योग्यता, स्त्री (योग्यस्य भावः । योग्य+तल् ।
टाप् ।) क्षमता । इति लोकप्रसिद्धिः ॥ (यथा
मार्कण्डेये । ११३ । ९ ।
"तथान्यान्ययोग्यानि योग्यतां यान्ति कालतः ।
योग्यान्ययोग्यतां यान्ति कालवश्या हि
योग्यता ॥")
शाब्दबोधकारणविशेषः । स तु पदार्थानां
परस्परसम्बन्धे बाधाभावः । इति साहित्य
दर्पणम् । न्यायमते तत्पदार्थे तत्पदार्थवत्ता ।
यथा,—
"पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता ।"
इति भाषापरिच्छेदः ॥
"योग्यतां निरूपयति पदार्थ इत्यादिना ।
एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता इत्यर्थः ।
तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न
शाब्दबोधः । नन्वेतस्या योग्यताया ज्ञानं
शाब्दबोधात् प्राक् सर्व्वत्र न सम्भवति वाक्यार्थ
स्यापूर्व्वत्वादिति चेन्न तत्तत्पदार्थस्मरणे सति
क्वचित् संशयरूपस्य क्वचिन्निश्चयरूपस्यापि
योग्यताया ज्ञानस्य सम्भवात् । नव्यास्तु
योग्यताज्ञानं न शब्दज्ञाने कारणं वह्निना
सिञ्चति इत्यादौ सेके वह्निकरणकत्वाभाव
रूपायोग्यताया निश्चयेन प्रतिबन्धान्न शाब्द
बोधः । तदभावनिश्चयस्य लौकिकसन्निकर्षा
जन्यदोषविशेषाजन्यज्ञानमात्रे प्रतिबन्धकत्वात्
शाब्दे प्रतिबन्धकत्वं सिद्धं योग्यताज्ञान
विलम्बाच्च शाब्दविलम्बोऽसिद्ध इति वदन्ति ।"
इति सिद्धान्तमुक्तावली ॥

योग्या स्त्री (योग्य+टाप् ।) अभ्यासः । (यथा,
रघुः । ८ । १९ ।
"अपरः प्रणिधानयोग्यया
मरुतः पञ्च शरीरगोचरान् ।"
"अपरो रघुः प्रणिधानयोग्यया समाध्य
भ्यासेन ।" इति मल्लिनाथः ॥) अर्कयोषित् ।
इति मेदिनी । ये ,९ ॥ धनुरभ्यासः । तत्
पर्य्यायः । खुरली २ श्रमः ३ अभ्यासः ४ ।
तद्दू खलूरिका । इति हेमचन्द्रः । ३ । ४५२ ।
(यथा सुश्रुते सूत्रस्थाने ९ अध्याये ।
'अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः ।
अधिगतसर्व्वशास्त्रार्थमपि शिष्यं योग्यां कार
येत् । छेद्यादिषु स्नेहादिषु च कर्म्मपथमुप
दिशेत् । सुबहुश्रुतोऽप्यकृतयोग्यः कर्म्मस्वयोग्यो
भवति । तत्र पुष्पफलालाबूकालिन्दकत्रपुष
र्व्वारुककर्कारुकप्रभृतिषु छेद्यविशेषान् दर्शये
दुत्कर्त्तनपरिकर्त्तनानि चोपदिशेत् । दृतिवस्ति
प्रसेवकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्याम् ।
सरोम्णि चर्म्मण्याततेऽवलेख्यस्य । मृतपशुशिरा
सूत्पलनालेषु च वेध्यस्य । घुणोपहतकाष्ठवेणु
नलनालीशुष्कालाबुमुखेष्वेष्यस्य । पनसबिम्बी
बिल्वफलमज्जमृतपशुदन्तेष्वाहार्य्यस्य । मधू
च्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य । सूक्ष्म
घनवस्त्रान्तयोर्मृदुचर्म्मान्तयोश्च सीव्यस्य । पुस्त
मयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धयोग्याम् । मृदु
मांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धयोग्याम् ।
मृदुषु मांसखण्डेष्वग्निक्षारयोग्याम् । उदक
पूर्णघटपार्श्वस्रोतस्यलाबूमुखादिषु च नेत्रप्रणि
धानवस्तिव्रणवस्तिपीडनयोग्यामिति । भवत
श्चात्र ।
एवमादिषु मेधावी योग्यार्हेषु यथाविधि ।
द्रव्येषु योग्यां कुर्व्वाणो न प्रमुह्यति कर्म्मसु ॥
तस्मात् कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्म्मसु ।
यस्य यत्रेह साधर्म्यं तत्र योग्यां समा-
चरेत् ॥'
(युवती । यथा,—
निदाघशरदोर्बाला प्रौढा वर्षावसन्तयोः ।
हेमन्ते शिशिरे योग्या न वृद्धा कापि शस्यते ।
योग्या युवती । इति राजवल्लभः ॥)

योजन, क्ली (युज्यते मनो यस्मिन्निति । युज+
ल्युट् ।) परमात्मा । चतुःक्रोशी । योगः । इति
मेदिनी । ने, ११३ ॥ (यथा, हरि
वंशे । १४६ । १९
'गान्धारकन्या वहने नृपाणां
रथे तथा योजनमूर्च्छितानाम् ॥")
चतुःक्रोशार्थे यथा —
'द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयम् शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रकः ॥
तच्चतुष्कं योजनं स्यादित्यादि मानशास्त्रम् ।
एतन्मते षोडशसहस्रहस्तैर्योजनं भवति ।
द्वात्रिंशत्सहस्रहस्तैरपि योजनम् । यथा,—
यवोदरैरङ्गुलमष्टसंख्यै
र्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ।
हस्तैश्चतुर्भिर्भवतीह दण्डः
क्रोशः सहस्रद्वितयेन तेषाम् ।
स्याद्योजनं क्रोशचतुष्टयेन
तथा कराणां दशकेन वंशः ॥'
इति लीलावती ॥

योजनगन्धा स्त्री (योजनं गन्धोऽस्याः । योज
नात् गन्धोऽस्या इति वा ।) कस्तूरी । सीता ।
सत्यवती । इति मेदिनी । धे, ४८ ॥ (यथा,
देवीभागवते । २ । २ । १८ ।
"इत्युक्तेन तु सा कन्या व्यासमाता भविष्यति ।
जाता योजनगन्धा तु सुरूपा च वराङ्गना ॥")

योजनगन्धिका, स्त्री, सत्यवती । इति जटाधरः ॥
कस्तूरी इत्यजयपालः ॥ सीता । योजनगन्धा
शब्दात् स्वार्थे कप्रत्ययेन जातत्वात् ॥

योजनपर्णी, स्त्री (योजनाय सन्धिस्थानादर्मिलनार्थं
पर्णं यस्याः ।) मञ्जिष्ठा । इति रत्नमाला ॥

योजनवल्लिका स्त्री (योजनवल्ली+स्वार्थे कन् ।
टाप् ।) मञ्जिष्ठा । इति राजनिर्घण्टः ॥

योजना स्त्री, योगकारणा । इति ण्यन्तयुज
धातोरनप्रत्ययेन सिद्धम् ॥

योजनवल्ली स्त्री, (योजनगामिनी अतिदीर्घा
वल्ली यस्याः सा ।) मञ्जिष्ठा । इत्यमरः । २ ।
४ । ९१ ॥ (तथास्याः पर्य्यायः ।
"मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका ।
भण्डीतकी च गण्डीरी मञ्जूषा वस्त्ररञ्जिनी ॥'
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

योजित, त्रि, कारितयोजनम् । ण्यन्तयुजधातो
कर्म्मणि क्तप्रत्ययेन निष्पन्नम् ॥ (यथा भाग
वते । ४ । २१ । २२ ।
"अहं दण्डधरो राजा प्रजानामिह
योजितः ॥")

योटक, पु योटनम् । मेलनमिति यावत् । विवाहे
राशियोटकं ग्रहयोटकं गणयोटकं नययोटकं
वर्णयोटकं योनियोटकं वर्गयोटकमादि सप्तविधो
योटकः । तत्र राशियोटके षड्‌ष्टकनवपञ्च
मद्विद्वादशविषमसप्तकयोगा निषिद्धाः । तदाह
श्रीपतिसंहितायाम् ।
'षडष्टकं त्रिकोणञ्च द्विद्वादशकमेव च ।
परस्परं जन्मराशिस्थके कन्याकुमारयोः ॥
षडष्टके भवद्दोषो वैधव्यं मृत्युरेव वा ।
त्रिकोणे पुत्रहानिः स्यात् धनहानिर्व्ययये ।
पुरुषस्याष्टमे कन्या कन्याया षष्ठके पुमान् ।
शुभं षडष्टकं प्रोक्तं नोद्वाहे दूषणं भवेत् ॥
नवपञ्चमे ।
पुत्रो यदात् सुतपदे सुतदा च कन्या
धर्म्मे स्थिता सुतवती पतिवल्लभा च ।
द्विद्वादशे धनपदे धनदा च कन्या
रिष्फे स्थिता धनवती पतिवल्लभा च ॥
योटके सप्तके मेषतुलौ युग्मधनौ तथा ।
सिंहघटौ सदा वर्ज्यौ मृतिस्त्रभामयोश्चिरम् ॥
राजयोटकमाह दीपिकायाम्
एकराशौ च दम्पत्योः शुभं स्यात् समसप्तके ।
चतुर्थदशके चैव तृतीयेकादशे तथा ॥'
इति राशियोटकविचारः ॥ * ॥
ग्रहयोटके ग्रहशत्रुयोगो निषिद्धः । कन्यावर-
राश्यधिपग्रहयोः शत्रुत्वे ग्रहशत्रुयोगः । तत्र
विवाहे रोगादि फलम् । तदाह गर्गः । मरण

भावविरोधे ग्रहरिपुभावे चाचिरेण रोगादिः ।
इति ग्रहयोटकविचारः ॥ * ॥ अन्ये योटकाः प्रपञ्चभयान्न लिखिताः । इति ज्योतिषम् ॥ ग्रन्थान्तरे जोटकशब्दस्य वर्गतृतीयादित्व ॥

योतुः, पुं, ( यूयते ज्ञायते अनेनेति । यु + बाहुलकात् तुः । ) परिमाणम् । इत्युणादिकोषः ॥

योत्रं, क्ली, ( यूयते अनेनेति । यु + "दाम्नीशस यु युजस्तु तुद सि सिच मिह-पतदंश-नहः करणे ।" ३ । २ । १८२ । इति ष्ट्रन् । ) योक्त्रम् । इत्यमरः । २ । ६ । १३ ॥ ( यथा, गो० रामायणे । २ । ४५ । २६ ।
"भरतायाभिसृष्टाः स्म योत्राय पशवो यथा ॥")

योद्धा, [ ऋ ] पुं, ( युध्यतीति । युध् + तृच् । ) युद्धकर्त्ता । तत्पर्य्यायः । भटः २ योधः ३ । इत्यमरः । २ । ८ । ६१ ॥ ( यथा, हरिवंशे भविष्यपर्व्वणि । २ । १८ ।
"बाधिष्यते पुरीं योद्धा छिद्रं यदि लभेत सः ॥")

योधः, पुं, ( युध्यतीति । युध् + अच् । ) योद्धा । इत्यमरः । २ । ८ । ६१ ॥ ( यथा, कथासरित्सागरे । १२ । २२ ।
"सङ्केतमिलितेश्चान्यैर्योधास्तैः सैनिकैः सह ।
निरुध्यैतत्स्वयं चक्रमहासेनान्तिकञ्च तत् ॥")

योधनं, क्ली, युद्धम् । ( यथा, मार्कण्डेये । १३५ । १७ ।
"योधनेषु स्वरूपेण दमो यस्य दुरात्मनः ।
स दमो वारयत्येव दम्भि तस्य रिपोर्गणम् ॥")
अस्त्रम् ॥ युधधातोर्भावे करणे चानट् ( ल्युट् ) प्रत्ययेन निष्पन्नम् ।

योधसंरावः, पुं, ( योधानां संरावः । ) अन्योन्यं योधानां युद्धायाह्वानम् । तत्पर्य्यायः । क्रन्दनम् २ । इत्यमरभरतौ ॥

योधेयः, पुं, ( युध् + भावे घञ् । योधं युद्धं करोतीति । योध + खः । ) योद्धा । योधशब्दात् ढेयप्रत्ययेन निष्पन्नः ॥

योगलः, पुं, ( यवस्य गल इव गलः काण्डोऽस्य । पृषोदरादिः । ) शस्यविशेषः । तत्पर्य्यायः । यवनालः २ जूर्णाह्वयः ३ देवधान्यम् ४ जोन्नाला ५ बीजपुष्पिका ६ । इति हेमचन्द्रः । ४ । २४४ ॥

योनिः, पुं, स्त्री, ( यौति संयोजयतीति । यु + "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।" उणा० ४ । ५१ । इति निः । ) आकरः । इति मेदिनी । ने, १६ ॥ कारणम् । ( यथा, उत्तररामचरिते । ६ ।
"अथवा राघवीमानुर्वाचस्पत्तपसम्पदयोः ।
सा योनिः सर्व्ववैराणां सा हि लोकस्य
निष्कृतिः ॥")
जलम् । इति हेमचन्द्रः । ३ । २४६ ॥ ( कुशद्वीपस्थनदीविशेषः । यथा, मार्कण्डेये । १२१ । ७१ ।
"धूतपापा नदी नाम योनिश्चैव पुनः स्मृता ।
सीता द्वितीया विज्ञेया सा चैव हि निशा-
स्मृता ॥"
तन्त्रशास्त्रविशेषः । यथा, महासिद्धसारस्वते ।
"सनत्कुमारकं तन्त्रं योनितन्त्रं प्रकीर्त्तितम् ।
तन्त्रान्तरञ्च देवेशि ! गवरत्नेश्वरं तथा ॥" )
प्राणिनामुत्पत्तिस्थानम् । इति त्रिकाण्डशेषः ॥ तत्तु चतुरशीतिलक्षप्रकारम् । यथा,—
"चतुरशीतिलक्षाणि चतुर्भेदाश्च जन्तवः ।
अण्डजाः स्वेदजाश्चैव उद्भिज्जाश्च जरायुजाः ॥
एकविंशतिलक्षाणि ह्यण्डजाः परिकीर्त्तिताः ।
स्वेदजाश्च तथैवोक्ता उद्भिज्जास्तत्प्रमाणतः ॥
जरायुजाश्च तावन्तो मनुष्याद्याश्च जन्तवः ।
सर्व्वेषामेव जन्तूनां मानुषत्वं सुदुर्लभम् ॥"
इति श्रीगरुड़पुराणे प्रेतकल्पे धर्म्मप्रकटनो नाम २ अध्यायः ॥ * ॥ अन्यच्च ।
"जलजा नव लक्षाणि स्थावरा लक्षविंशतिः ।
कृमयो रुद्रसङ्ख्याकाः पक्षिणां दशलक्षकम् ॥
त्रिंशल्लक्षाणि पशवश्चतुर्लक्षाणि मानुषाः ।
सर्व्वयोनिं परित्यज्य ब्रह्मयोनिं ततोऽभ्यगात् ॥"
इति बृहद्विष्णुपुराणम् ॥ * ॥
अपि च ।
"स्थावरास्त्रिंशल्लक्षञ्च जलजो नवलक्षकः ।
कृमिजा दशलक्षञ्च रुद्रलक्षञ्च पक्षिणः ॥
पशवो विंशलक्षञ्च चतुर्लक्षञ्च मानवाः ।
एतेषु भ्रमणं कृत्वा द्विजत्वमुपजायते ॥"
इति कर्म्मविपाकः ॥
( "भूतानाञ्चतुर्व्विधा योनिर्भवति जरायण्डस्वेदोद्भिदः । तासां खलु चतसृणामपि योनीनामेकैका योनिरपरिसङ्ख्येयभेदा भवति भूतानामाकृतिविशेषापरिसङ्ख्येयत्वात् । तत्र जरायुजानामण्डजानां प्राणिनामेते गर्भकरा भावा यां यां योनिमापद्यन्ते तस्यां तस्यां योनौ तथा तथा रूपा भवन्ति । तद्यथा कनकरजतताम्रत्रपुसीसा आसिच्यमानास्तेषु तेषु मधूच्छिष्टविम्बेषु । ते यदा मनुष्यविम्बमापद्यन्ते तदा मनुष्यविग्रहेण जायन्ते । तस्मात् समुदायात्मकः सन् गर्भो मनुष्यविग्रहेण जायते मनुष्यो मनुष्यप्रभव इत्युच्यते तद्योनित्वात् ।" इति चरके शारीरस्थाने तृतीयेऽध्याये ॥ * ॥ ) भगम् । इत्यमरः । २ । ६ । ७६ ॥ तत्पर्य्यायः । वराङ्गम् २ उपस्थः ३ स्मरमन्दिरम् ४ । इति राजनिर्घण्टः ॥ रतिगृहम् ५ जन्मवर्त्म ६ अधरम् ७ अवाच्यदेशः ८ प्रकृतिः ९ अपथम् १० स्मरकूपकः ११ अप्रदेशः १२ प्रकृतिः १३ पुष्पी १४ संसारमार्गकः १५ संसारमार्गः १६ गुह्यम् १७ स्मरागारम् १८ स्मरध्वजम् १९ रत्यङ्गम् २० रतिकुहरम् २१ कलत्रम् २२ अधः २३ । इति शब्दरत्नावली ॥ रतिमन्दिरम् २४ स्मरगृहम् २५ कन्दर्पकूपः २६ कन्दर्पसम्बाधः २७ कन्दर्पसन्धिः २८ स्त्रीचिह्नम् २९ । इति जटाधरः ॥ स तु गर्भस्थायाः सप्तभिर्मासैर्भवति । इति सुखबोधः ॥ * ॥ तस्य लक्षणं यथा,—
"शुभः कमठपृष्ठाभो गजस्कन्धोपमो भगः ।
वामोन्नतश्चेत् कन्याजः पुत्रजो दक्षिणोन्नतः ॥
आखुरोमा गूढमणिः सुश्लिष्टः संहतः पृथुः ।
तुङ्गः कमलवर्णाभः शुभोऽश्वत्थदलाकृतिः ॥
कुरङ्गखुररूपो यश्चुल्लिकोदरसन्निभः ।
रोमशो विवृतास्यश्च दृश्यनासोऽतिदुर्भगः ॥
शङ्खावर्त्तो भगो यस्याः सा गर्भमिह नेच्छति ।
चिपिटः कर्परकारः किङ्करीपददो भगः ॥
वंशवेत्रसपत्राभो गजरोमोच्चनासिकः ।
विकटः कुटिलाकारो लम्बगल्लस्तथाशुभः ॥"
इति काशीखण्डे ३७ अध्यायः ॥ * ॥
अपि च ।
"शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च
कीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥" * ॥
अथ योनिरोगाधिकारः ।
"तत्र योनिरोगाणां निदानान्याह ।
'मिथ्याहारविहाराभ्यां दुष्टैर्दोषैः प्रदूषितात् ।
आर्त्तवादीर्य्यतश्चापि दैवाद्वा स्युर्भगे गदाः ॥'
रोगिणीनां योनीनां नामान्याह ।
'उदावर्त्ता तथा वन्ध्या विप्लुता च परिप्लुता ।
वातला योनयो रुग्णा वातदोषेण पञ्चधा ॥
पञ्चधा पित्तदोषेण तत्रादौ लोहितक्षरा ।
प्रस्रंसिनी वामिनी च पुत्रघ्नी पित्तला तथा ॥
अत्यानन्दा कर्णिनी च चरणानन्दपूर्व्विका ।
अतिपूर्व्वापि सा ज्ञेया श्लेष्मजा च कफादिमाः ॥
खण्डाण्डिनी च महती सूचीवक्त्रा त्रिदोषिणी ।
पञ्चैता योनयः प्रोक्ताः सर्व्वदोषप्रकोपतः ॥'
अथ तासां लक्षणान्याह ।
'सा फेणिलमुदावर्त्ता रजःकृच्छ्रेण मुञ्चति ।
वन्ध्या नष्टार्त्तवा ज्ञेया विप्लुता नित्यवेदना ॥
परिप्लुता या भवति ग्राम्यधर्म्मे रुजा भृशम् ।
वातला कर्कशा स्तब्धा शूलनिस्तोदपीड़िता ॥
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥'
अनिलवेदनास्तोदादयः ॥ वातलायां त्वतिशयिता वातवेदना बोद्धव्या । वातला इत्यन्वयात् ॥ * ॥
'सदाहं क्षरते रक्तं यस्याः सा लोहितक्षरा ।
प्रस्रंसिनी स्रंसते च क्षोभिता दुःप्रजायिनी ॥'
क्षोभिता विमर्द्दिता स्रंसते स्वस्थानात् च्यवते दुःप्रजायिनी दुष्टप्रजननशीला ।
'सवातमुद्गिरेद्बीजं वामिनी रजसा युतम् ।
स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंस्रवात् ॥'
पुत्रशब्दोऽत्रापत्योपलक्षकः ।
'अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता ।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥
अत्यानन्दा न सन्तोषं ग्राम्यधर्म्मेण विन्दति ।
कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥
कर्णिका मांसस्य कर्णिकाकारो ग्रन्थिः ॥
'मैथुने चरणापूर्व्वं पुरुषादतिरिच्यते ।'
अतिरिच्यते रजो मुञ्चति इत्यर्थः ।
'बहुशश्चातिचरणा तयोर्व्वीजं न तिष्ठति ॥'
बहुशः वारं वारं अतिरिच्यते तयोः चरणातिचरणयोः ।
पिच्छिला योनिः कण्डूयुक्तातिशीतला ।

चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ।
अनामवाप्तनी सक्तौ खरस्पर्शा च मैथुने ।
असतनी ईषत् स्तनौ यस्यां सा अत्र सक्ता सक्तौ । अण्डिनीमाह ।
'महामेढ्रगृहीताया बालाया अण्डिनी भवेत् ।
महामेढ्रं पुरुषः तेन गृहीताया बालाया सम्यग्योनिच्छिद्राया अण्डिनी अण्डवल्लम्बमाना योनिर्भवति ।
विवृतातिमहायोनि सूचीवक्त्रातिसंवृता ।
सर्वलिङ्गसमुत्थानात् सर्वदोषप्रकोपजा ।
चतसृष्वपि चाद्यासु सर्वलिङ्गनिदर्शनम् ।
असाध्या योनीराह ।
पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः ।
अथ खण्डीप्रभृतयः ।*।
अथ योनिकन्दस्य निदानमाह ।
'दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा ।
वाताद्याः कुपिता यदा यदा निदानकुपिता वाताद्याः ।*। रूपमाह ।
'पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् ।
जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः ।"
लकुचाकृतिसन्निभं लकुचाकाराकारम् । गुरु कमल विमृश्य बोद्धव्यम् ।*। वातजादिभेदेन रूपभेदमाह ।
'रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् ।
दाहरागज्वरयुतं विद्यात् पित्तात्मकं तु तम् ।
तिलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ।
सर्वलिङ्गसमायुक्तं सन्निपातात्मकं भवेत् ।*।
अथ योनिरोगाणां चिकित्सा । तत्र वन्ध्या चिकित्सा । तस्या लक्षणमाह । वन्ध्या नष्टार्तवा ज्ञेयेति । तत्र प्रथमतो नष्टार्तवाचिकित्सा ।
'आनूपानन्न नारी मत्स्यान् सदा निषेवेत ।
काञ्जिकञ्च तिलान् माषानुदश्विच्च तथा दधि ।
इक्ष्वाकुबीजदन्तीचपलागुडमदनकिण्वयवशूकैः ।
सस्नुक्क्षीरैर्वर्तिर्योनिगता कुसुमसञ्जननी ।
इक्ष्वाकुः कटुतुम्बी । चपला पिप्पली । दन्ती मदनफलम् । किण्वं सुराबीजम् ।
पीतं ज्योतिष्मतीपत्रं राजिकोग्रासनं ब्राह्मम् ।
शीतेन पयसा पिष्टं कुसुमं जनयेद्ध्रुवम् ।
ज्योतिष्मती कटभीतिप्रसिद्धा कङ्गुनी इति लोके । पयसा दुग्धेन ।*। अथ वन्ध्या चिकित्सा ।

वचा सिता शालिवचा मधूकं
वत्सस्य शृङ्गं नवकेशरञ्च ।
एतन्मधुक्षीरघृतैर्निपीय
वन्ध्या सुपुत्रं नियतं प्रसूते ।

अश्वगन्धाकषायेण सिद्धं दुग्धं घृतान्वितम् ।
ऋतुस्नाताङ्गना प्रातः पीत्वा गर्भं दधाति हि ।
पुष्योद्धृतं लक्ष्मणाया मूलं दुग्धेन कन्यया ।
पिष्टं पीत्वा ऋतुस्नाता गर्भं धत्ते न संशयः ।
कुरण्टमूलं धातकी कुसुमानि वटाङ्कुरान् ।
नीलोत्पलं पयोयुक्तमेतद्गर्भप्रदं ध्रुवम् ।

यावता पिबति पाण्डुपिप्पलं
क्षीरकेण सहितं हिताशना ।
श्वेतया विशिखपुङ्खया युतं
सा सुतं जनयतीह नान्यथा ।"

श्वेतकुसुमया शरपुङ्खया सह ।
'पत्रैकं पलाशस्य पिष्ट्वा दुग्धेन गर्भिणी ।
पीत्वा पुत्रमवाप्नोति वीर्यवन्तं न संशयः ।
शूकरशिम्बीमूलं मधुना दधि फलस्य सपयस्कम् ।
पीत्वाथोभयलिङ्गीबीजं कन्यां न सूते क्वापि ।
पुत्रमञ्जारीमूलं विष्णुक्रान्ताशिवलिङ्गीसहिता ।
एतत् गर्भस्थिते पीत्वा कन्यां न सर्वथा सूते ।
पुत्रमञ्जारी पलाशिया तस्या मूलम् । शिवलिङ्गी पचगुरिया ।*। गर्भप्रदत्वकथनावसरे गर्भनाशकमपि भेषजमाह ।
'पिप्पलीविडङ्गटङ्कणसमचूर्णं या पिबेत् पयसा ।
ऋतुसमये नहि तस्या गर्भः सञ्जायते क्वापि ।

आरनालपरिपेषितं त्र्यहं
या जपाकुसुममत्ति पुष्पिणी ।
सत्पुराणगुडसंस्थिविनी
सा दधाति नहि गर्भमङ्गना ।*।

तासु योनिषु चाद्यासु स्नेहादिक्रम इष्यते ।
वस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम् ।
वस्तिरत्रोत्तरवस्तिः । क्रमश्चिकित्सा ।
'वचाशालाकिनीकुष्ठसैन्धवामरदारुभिः ।
तिलतैलं पचेत्तारो पिचुं तस्य विधारयेत् ।
विप्लुतायां सदा योनौ यथा तेन प्रशाम्यति ।'
नतं तगरम् ।
वातलां कर्कशां स्तब्धामल्पस्पर्शां तथैव च ।
कुम्भीस्वेदैरुपचरेदन्तर्वेश्मनि संवृते ।
धारयेद्वा पिचुं योनौ तिलतैलस्य सा सदा ।
पित्तलानाञ्च योनीनां सेकाभ्यङ्गपिचुक्रिया ।
शीता पित्तहरा कार्य्याः स्नेहनार्थं घृतानि च ।
प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत् ।
पिधाय वेशवारेण ततो बन्धं समाचरेत् ।
शुण्ठीमरिचकण्याभिधान्यकाजाजिदाडिमैः ।
पिप्पलीमूलसंयुक्तैर्वेशवारः स्मृतो बुधैः ।
धात्रीरसं सितायुक्तं योनिदाहे पिबेत् सदा ।
कर्णिकाम्लाभयं मूलं पिबेद्वा तण्डुलाम्बुना ।
योन्यास्तु पूयस्राविण्याः शोधनद्रव्यनिर्मिते ।
गवां मूत्रे कल्कवर्त्ते पिण्डे वा पूरणं हितम् ।
शोधनद्रव्याणि निम्बपत्राणि ।
'दुर्गन्धां पिच्छिलां वापि चूर्णैः पञ्चकषायजैः ।
पूरयेद्धावयेद्राजवृक्षादिक्वथिताम्बुना ।'
पञ्च कषायाः । वचवासापटोलप्रियङ्गुनिम्बाः ।
राजवृक्षादिगणचेरा ।
'पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।
वर्तिस्तुल्या प्रदेशिन्या योनौ श्लेष्मविशोधिनी ।
तुल्या प्रदेशिन्या दैर्घ्यं परिणाहेन च ।
कर्णिन्यां वर्तयो देया शोधनद्रव्यनिर्मिता ।
गुडूचीत्रिफलादन्तीक्वथितोष्णधारया ।
योनिं प्रक्षालयेत्तेन तत्र कण्डूः प्रशाम्यति ।
सन्नपुष्पं खदिरं पथ्यां जातीफलं तथा ।

निम्बीं पूगञ्च संचूर्ण्य वस्त्रपूतं विलेपयेत् ।
योनिर्भवति संकीर्णा न स्रवेच्च जलं ततः ।
कपिकच्छूभवं मूलं क्वाथयेद्विधिना भिषक् ।
योनिं सङ्कीर्णतां याति क्षालनेन धावनात् ।
क्षीरकन्दिमय छाया सुप्रवो सुरभिर्वचा ।
वासकः सैन्धवश्चापि यवक्षारो यवानिका ।
एषां चूर्णं घृतं किञ्चित् भृष्टा खण्डेन मोदकम् ।
कृत्वा खादेद्यथावह्नि योनिरोगाद्विमुच्यते ।
मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ।
मेदे पयस्या काकोली मूलञ्चैवाश्वगन्धजम् ।
अजमोदा हरिद्रे द्वे प्रियङ्गुकटुरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ।
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।
शतावरीरसं क्षीरं घृताच्चैव चतुर्गुणम् ।
सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते ।
पुत्रान् जनयते वीरान् मेधाढ्यान् प्रियदर्शनान् ।
या चैवास्थिरगर्भा स्यात् पुत्रं वा जनयेन्मृतम् ।
अल्पायुषं वा जनयेत् या च कन्यां प्रसूयते ।
योनिरोगे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम् ।
नाम्ना फलघृतं ख्यातमश्विभ्यां परिकीर्तितम् ।
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः ।
जीवद्वत्सैकवर्णाया घृतमत्र प्रयुज्यते ।
आरण्यगोमयेनात्र वह्निज्वाला च दीयते ।
मेदे मेदा महामेदा तयोरभावे शतावरी द्विगुणा देया । पयस्यात्र क्षीरकाकोली काकोलीयुगलाभावे अश्वगन्धा द्विगुणा देया । प्रियङ्गुस्थाने कश्चिद्धिङ्गु पठन्ति । पयस्या काकोलीयुक्ता पुनः काकोल्याविति काकोली क्षीरकाकोल्यौ द्वैगुण्यार्थं एतस्य फलघृतस्य पाठो नानातन्त्रे नानाविधः । तत्र हिङ्गुवचा तगरजीवकर्षभका एवाधिका । तत्र जीवकर्षभयोरभावे विदारीकन्दो द्विगुणो देयः । फलघृतं सकलयोनिरोगेषु ।*।

अथ योनिकन्दस्य चिकित्सा ।
गैरिकाम्रास्थिजम्ब्वस्थिरजन्यञ्जनकट्फलम् ।
पूरयेद्योनिमेतेषां चूर्णं क्षौद्रसमन्वितैः ।
त्रिफलाया कषायेण सक्षौद्रेण च सेचयेत्
प्रमदा योनिकन्देन व्याधिना परिमुच्यते ।
अथ प्रसङ्गात् गुर्व्विण्या रोगाणां चिकित्सा ।
'ह्रीबेरातिविषामुस्तमोचरसैः शृतं जलम् ।
दद्याद्गर्भे प्रचलिते प्रदरे कुक्षिरुज्यपि ।
कुक्षिरुक् उदरव्यथा । चलितगर्भस्थापने ह्रीबेरादिकाथः ।*।

अथ गर्भस्रावपातयोर्निदानम् ।
'ग्राम्यधर्माध्वगमनयानासनप्रपीडनैः ।
ज्वरोपवासोत्पतनप्रहाराजीर्णधावनैः ।
वमनाच्च विरेकाच्च कृन्थनाद्गर्भपातनात् ।
तीक्ष्णक्षारोष्णकटुकतिक्तरूक्षनिषेवणात् ।
वेगाभिघाताद्विषमाशनाच्छयनाद्भयात् ।
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ।

गर्भपातनात् नियमे गर्भे पातनशीलं द्रव्यं तस्मात् ।
गर्भस्य स्रावपातयोः पूर्व्वरूपमाह । गर्भे पत-
तीत्यादि । पतति स्रावेण पातेन वा पतिष्यति
स्रावपातयोरवधिमाह ।
'आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥'
आचतुर्थात् मासात् चतुर्थमासपर्य्यन्तम् ।
गर्भस्य विद्रवः । शोणितरूपगर्भः । स्रवति
शोणितमिति भोजवचनात् । स्थिरशरीरस्य
कठिनशरीरस्य गर्भस्य । गर्भपातस्य दृष्टान्तं
दर्शयति ।
'गर्भोऽभिघातविषमाशनपीड़नाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन ॥'
यथा वृन्तलग्नं पक्वं फलमभिघातेनाकाल एव
पतति तथा गर्भोऽप्यभिघातादिना अकालेऽपि
पतति ॥ * ॥ अथ गर्भस्रावस्य चिकित्सा ।
'गुर्व्विण्या गर्भतो रक्तं स्रवेद्यदि मुहुर्मुहुः ।
तन्निरोधाय सुस्निग्धमुत्पलादिशृतं पिबेत् ॥'
उत्पलादिगणमाह ।
'उत्पलं नीलमारक्तं कह्लारं कुमुदं तथा ।
श्वेताम्भोजञ्च मधुकमुत्पलादिरयं गणः ॥
संशीलितो हरत्येव दाहं तृष्णां हृदामयम् ।
रक्तपित्तञ्च मूर्च्छाञ्च तथा छर्द्दिमरोचकम् ॥'
अथ गर्भपातस्य उपद्रवानाह ।
'प्रस्रंसमाने गर्भे स्याद्दाहः शूलञ्च पार्श्वयोः ।
पृष्ठरुक् प्रदरानाहौ मूत्रसङ्गश्च जायते ॥'
प्रस्रंसमाने पतति ॥ * ॥ अथ गर्भस्य स्थाना-
न्तरगमने चोपद्रवानाह ।
'स्थानात् स्थानान्तरं तस्मिन् प्रयात्यपि च
जायते ।
आमपक्वाशयादौ तु क्षोभः पूर्व्वेऽप्युपद्रवाः ॥'
पूर्व्वेऽप्युपद्रवाः पार्श्वशूलादयः ॥ * ॥
तच्चिकित्सामाह ।
'स्निग्धशीताः क्रियास्तेषु दाहादिषु समाचरेत् ।
अश्मकाश्मीरवूकाभ्यां मूलैर्गोक्षुरकस्य च ॥
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलहृत् परम् ।
श्वदंष्ट्रामधुकक्षुद्राम्लानैः सिद्धं पयः पिबेत् ।
शर्करामधुसंयुक्तं गुर्व्विणीवेदनापहम् ॥'
अम्लानः पुष्पजातिः । अयं बाणपुष्प इति
गौड़ादौ प्रसिद्धः ।
'मृत्कोष्ठागारिका गेहसम्भवात्र च मृत्तिका ।
समङ्गा धातकीपुष्पं गैरिकञ्च रसाञ्जनम् ॥
तथा सर्व्वरसचैतान् यथालाभं विचूर्णयेत् ।
तच्चूर्णं मधुना लिह्यान्नारी प्रदरशान्तये ॥'
मृत्कोष्ठागारिकासम्भवा मृत्कोष्ठागारिका
वरटी तन्निर्म्मितगृहभवा मृत्तिका । समङ्गा
लज्जालुः ।
'कसेरूत्पलशृङ्गाटकल्कं वा पयसा पिबेत् ।
पक्वं वचारसोनाभ्यां हिङ्गुसौवर्च्चलान्वितम् ।
आनाहे तु पिबेत् दुग्धं गुर्व्विणी सुखिनी
भवेत् ॥'
सौवर्च्चलं सोञ्चार इति लोके ।

'त्वक्पञ्चकमूलानां कल्केन विपचेत् पयः ।
तत् पयो गुर्व्विणी पीत्वा मूत्रसङ्गाद्विमुच्यते ॥
शालीक्षुकुशकाशैः स्यात् शरेण त्वक्पञ्चकम् ।
एषां मूलं तृषादाहपित्तास्रमूत्रसङ्गहृत् ॥' * ॥
अथ प्रसूताया योनेः क्षतादेश्चिकित्सा ।
'तुम्बीपत्रं तथा लोध्रं समभागं सुपेषयेत् ।
तेन लेपो भगे कार्य्यः शीघ्रं स्याद्योनिरक्षता ॥
पलाशोडुम्बरफलं तिलतैलसमन्वितम् ।
योनौ विलिप्तं विधिना गाढ़ीकरणमुत्तमम् ॥"
इति भावप्रकाशः ॥ * ॥
अथ कुयोनिप्राप्तिकारणानि ।
"हरिर्हरति नाम्नां ये गोविन्दं नार्च्चयन्ति ये ।
लभन्ते नात्मविद्याञ्च सुतीर्थविमुखाश्च ये ॥
सुवर्णं वस्त्रताम्बूलं रत्नमन्नं फलं जलम् ।
आर्त्तिभ्यो न प्रयच्छन्ति सर्व्वे सुखनदारकाः ॥
प्रशस्तञ्च स्त्रीधनानि लोभादेव हरन्ति ये ।
बलेन छद्मना वापि धूर्त्ताश्च परवञ्चकाः ॥
नास्तिकाः कुहकाश्चौरा ये चान्ये वक्रवृत्तयः ।
बालवृद्धातुरस्त्रीषु निर्द्दयाः सत्यवर्ज्जिताः ॥
अग्निदा गरदा ये च ये चान्ये कूटसाक्षिणः ।
अगम्यागामिनः सर्व्वे ये चान्ये ग्रामयाजिनः ॥
व्याधाचरणसम्पन्ना वर्णाद्यधर्म्मवर्ज्जिताः ।
देवोपदेवदनुजनरकौयभादिसेविनः ॥
सर्व्वदा मादकद्रव्यपानमत्ता हरिद्विषः ।
देवनोच्छिष्टपतितशूद्रश्राद्धान्नभोजिनः ॥
असत्कर्म्मरता नित्यं सर्व्वपातकपापिनः ।
पाषण्डधर्म्माचरणाः पुरीषोद्भवजीविनः ॥
पितृमातृस्वसापत्यस्वदारत्यागिनश्च ये ।
ये कदर्य्याश्च लुब्धाश्च नास्तिका धर्म्मदूषकाः ॥
त्यजन्ति स्वामिनं युद्धे त्यजन्ति शरणागतम् ।
गवां भूमेश्च हर्त्तारो ये चान्ये रत्नदूषकाः ॥
महाचैत्येषु सर्व्वेषु प्रतिग्रहरताश्च ये ।
परद्रोहरता ये च तथा ये प्राणिहिंसकाः ॥
परापवादिनः पापा देवतागुरुनिन्दकाः ॥
कुप्रतिग्राहिणः सर्व्वे सम्भवन्ति पुनः पुनः ॥
प्रेतराक्षसपैशाचतिर्य्यग्वृक्षकुयोनिषु ।
न तेषां सुखलेशोऽस्ति इह लोके परत्र च ॥
तस्मात् त्यक्त्वा निषिद्धार्थं विहितं कर्म्म कारयेत् ।
यच्च दानं तपस्तीर्थं सर्व्वं देवं गुरुं भजेत् ॥
नाचरेत् कुत्सितं कर्म्म मनसा च कदाचन ।
विपाकं कर्म्मणां दृष्ट्वा योनिकोटिषु दुःसहम् ॥
चतुर्भिरपि वर्णैस्तु सेव्यो धर्म्मो निरन्तरम् ॥"
इति पाद्मोत्तरखण्डे १८ अध्यायः ॥ * ॥
योनिदुष्टाया असाध्वीत्वं यथा,—
"साध्वी स्त्री मातृतुल्या च सर्व्वथा हितकारिणी ।
असाध्वी वैरतुल्या च शश्वत्सन्तापदायिका ।
मुखदुष्टा योनिदुष्टा चैवासाध्वीति विश्रुता ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे २ अध्यायः ॥ * ॥
पापपुण्यफलं अधमोत्तमयोनिप्राप्तिर्यथा,—
"पापपुण्यफलं लोके प्रत्यक्षं खलु दृश्यते ।
देवदानवमानुष्यतिर्य्यक्त्वं क्रमियोनिता ॥
नानायोनिषु जन्मानि नानाव्याधिप्रपीड़िताः ।

मरणं बालवृद्धानामन्धत्वं कुब्जता तथा ॥
ऐश्वर्य्यं सुदरिद्रत्वं पाण्डित्यं मूर्खता तथा ।
एतच्चराचरे लोके भवन्ति कथमन्यथा ॥"
इति पाद्मोत्तरखण्डे २१ अध्यायः ॥ * ॥
पक्षियोनिप्राप्तिकारणं यथा,—
"इति श्रुतकथो विप्र ! सारसं प्राह वानरः ।
सम्यग्वेत्ति भवान् नूनं त्वं कथं पक्षितां गतः ।
वृत्तान्तमेतं कथय श्रोतुमिच्छामि सारस ! ॥
सारस उवाच ।
कथयिष्यामि तत् कर्म्म येनाहं दुर्गतिं गतः ।
पक्षियोनिं गतो येन तत् सर्व्वं श्रोतुमर्हसि ॥
धान्यखारीशतं साग्रमुत्सृष्टं हि त्वया पुरा ।
बहुभ्यो ब्राह्मणेभ्यश्च नर्म्मदायाः परिग्रहे ॥
पौरोहित्यमहालोभाद्वञ्चयित्वा द्विजांस्तथा ।
किञ्चिद्दत्त्वा तु तेभ्यश्च गृहीतमखिलं मया ॥
विप्रसाधारणद्रव्यग्रहणोत्पन्नपातकात् ।
पतितः कालसूत्रेऽहं नरके रक्तकर्द्दमे ॥
वक्तुमत्र न शक्नोमि दुःखं वानर ! नारकम् ।
दैवात् कथमपि प्राप्त उत्तारो नरकाम्बुधेः ॥
मया यदि तथापीह शकुनत्वमुपस्थितम् ।
अपहृत्य पुरा कांस्यभाजनं भगिनीगृहात् ।
दत्तकर्णे मया दत्तं तेन मे सारसी गतिः ॥
इयञ्च ब्राह्मणी पूर्व्वं कांस्यचौरी सुदारुणा ।
तेनेह सारसी जाता मद्भार्य्या सहधर्म्मिणी ॥"
इति तत्रैव १९ । २० अध्यायौ ॥ * ॥
पापिनां नरकभोगानन्तरं स्थावरादियोनिप्राप्ति-
र्यथा,—
"स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः ।
धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥
सहस्रभागप्रथमा द्वितीयानुक्रमास्तथा ।
सर्व्वे ह्येते महाभाग यावन्मुक्तिसमाश्रयाः ॥"
इति विष्णुपुराणे २ अंशे ५ अध्यायः ॥
"पापिनां नरकभोगानन्तरं स्थावराद्यासूत्तरो-
त्तरसुत्कृष्टासु नवधा भिन्नासु योनिषु जन्मक्रम-
माह । स्थावरा इति । अब्जा मत्स्यादयः ।
धार्म्मिका नरेष्वेव पुण्यविशेषेण केचिन्मोक्षि-
णश्च सुखचवश्च यथाक्रमं भवन्तीति शेषः ।
तेषाञ्च पूर्व्वबाहुल्यमुत्तरोत्तराल्पत्वञ्चाह सह-
स्रेति । द्वितीयानुक्रमाः द्वितीयोऽनुक्रम उद्देशो
येषां द्वितीयस्थानेऽनुक्रान्ता ये कृमयस्ते सहस्र-
भागप्रथमाः सहस्रभागाः सहस्रगुणाः प्रथमाः
प्रथमनिर्द्दिष्टाः स्थावरा येषां ते । कृमिभ्यः
सहस्रगुणमधिकाः स्थावराः । तत्सहस्रतम-
भागाः कृमयः इत्यर्थः । पञ्चम्यन्तपाठेऽपि
द्वितीयस्थानेऽनुक्रान्तात् कृमिवर्गात् सहस्रगुणाः
स्थावरा इत्येवार्थः । तथा सर्व्वे ह्येत इति ।
यथा स्थावराः स्थानान्तरनिर्द्दिष्टेभ्यः कृमिभ्यः
सहस्रगुणमधिकाः । तथा कृमयः स्थानान्तर-
निर्द्दिष्टेभ्योऽब्जेभ्यः सहस्रगुणमधिकाः । एवं
पश्वादिष्वपि द्रष्टव्यम् । मोक्षं सम्यगाश्रयन्ते
इति मोक्षसमाश्रया मुमुक्षवो ज्ञाननिष्ठास्तत्-
पर्य्यन्तमेवं पूर्व्वपूर्व्वादुत्तरोत्तरस्यूनत्वेन जन्म-

क्रमे । तत्र पर मुक्तिः । एतच्च सर्वादिजीव बाहुल्यकथनं मोक्षस्य दुर्लभताज्ञापनार्थम् । जयश्च नवधा निर्द्दिष्टो जन्मक्रम प्रायिक एव । तद्व्यतिक्रमादित्यपुराणे ।
"व्यतिक्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् ।
विचित्रा गतयः पुंसां कर्म्मणां गुरुलाघवे ॥"
इति तट्टीका ॥

कुयोनिमोक्षो यथा —
वाराह उवाच ।
"येन गर्भं न गच्छेत तन्मे शृणु हि माधवि ।।
कथयिष्यामि ते देवि सर्व्वधर्म्मविनिश्चयम् ॥
कृत्वापि विपुलं कर्म्म चात्मानं न प्रशंसति ।
कुर्व्वते बहुकर्म्माणि मद्गतेनान्तरात्मना ॥
कृत्वापि मम कर्म्माणि मत्प्रियाणि वसुन्धरे ।।
नैव कुर्व्वन्त्यहङ्कारं क्रोधञ्चैव न गच्छति ।
मम पश्यति चित्तेन लाभालाभविवर्जितः ।
मद्भावाभिरतिश्चापि समर्थो नियतः इत ॥
कार्य्याकार्य्ये विजानाति सर्व्वधर्म्मेषु निष्ठितः ।
शीतोष्णवातवर्षादिक्षुत्पिपासासहश्च यः ॥
यो दरिद्रो निरालस्यः सत्यवागनसूयकः ।
स्वदारनिरतो नित्यं परदारविवर्जितः ॥
सत्यवादी विशुद्धात्मा नित्यं भागवतप्रियः ।
संविभागी विधिज्ञश्च नित्यं ब्राह्मणवत्सलः ॥
प्रियवाग्मी द्विजानाञ्च मम कर्म्मपरायणः ।
कुयोनिन्तु न गच्छेत मम लोकाय गच्छति ॥'
वियोनिमोक्षो यथा,—
'अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
यो वियोनिं न गच्छेत मम कर्म्मपरायणः ॥
जीवहिंसानिवृत्तस्तु सर्व्वभूतहितः शुचिः ।
सर्व्वत्र समतायुक्तः समलोष्टाश्मकाञ्चनः ॥
वास्यां छिन्नोऽपि यदि च नाभ्यक्तो दान्तः शुभे इत ।
तस्य नैव विजानाति परेषापहृत क्वचित् ॥
तस्यैव स्मरते हीनं सत्यञ्च न जल्पति ।
अलीकञ्च विरक्तो य पश्यति सत्यनिश्चयः ॥
निश्चयः धृतिमान् किञ्चित् परोक्षेऽपि न च
चिन्तयेत् ।
ऋतुकालेऽभिगच्छेत् अपत्यार्थं स्वकां स्त्रियम् ॥
ईदृशास्तु नरा भद्रे । मम कर्म्मपरायणाः ।
ते वियोनिं न गच्छन्ति मम गच्छन्ति सुन्दरि ॥
तिर्य्यग्योनिमोक्षो यथा —
वाराह उवाच ।
"गुह्यानां परमं गुह्यं तच्छृणुष्व वसुन्धरे ।।
तिर्य्यग्योनिगताश्चापि या न गच्छन्ति किञ्चि
नम् ॥
अष्टम्याञ्च चतुर्द्दश्यां मैथुनं यो न गच्छति ।
श्रुत्वा परस्य वाक्यानि यश्चैव न विकुर्व्वति ॥
आत्मनि वधस्यपि च यो मम नित्यमनुव्रतः ।
यस्य कदापि क्रुद्धः पित्रमातृप्रपूजकः ॥
प्राणेन जीवति च य प्रतिभागी गुणान्वितः ।
आतुरः सर्व्वकार्य्येषु तस्य नित्यं व्रतः ॥
विक्रमी नाभिकुर्व्वीत कौमारव्रतचारितः ।
सर्व्वभूतदयायुक्तः सत्येन च समन्वितः ॥
मतिमान्नैव तप्येत परार्थेषु कदाचन ।
ईदृशीं बुद्धिमास्थाय मम कर्म्माणि कुर्व्वते ।
तिर्य्यग्योनिं न गच्छेत मम लोकाय गच्छति ॥"
इति वराहपुराणे योनिगर्भमोक्षणनामाध्याय ॥

योनिकन्द पुं, (योनौ कन्द इव ।) योनिरोग विशेषः । तस्य निदानं यथा,—
"दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्व्वाताद्याः कुपिता यदा ॥
वाताद्याः कुपिता यदा । यदा निदानकुपिता वाताद्याः । रूपमाह ।
'पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् ।
जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः ॥
लकुचाकृतिसन्निभं लकुचाकाराकारम् ।
गुरुकमत्र विशेष्य बोद्धव्यम् ॥ * ॥ वातादिभेदेन रूपमेदमाह ।
'रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्द्दिशेत् ।
दाहरागज्वरयुतं विद्यात् पित्तात्मकन्तु तत् ।
तिलपुष्पप्रतीकाशं कण्डूयुक्तं कफात्मकम् ।
सर्व्वलिङ्गसमायुक्तं सान्निपातात्मकं भवेत् ॥'
अस्य चिकित्सा । योनिशब्दे द्रष्टव्या ।" इति भावप्रकाशः ॥

योनिज त्रि (योनेर्ज्जायते इति । जन्+डः ।) योनिजि स्तनशरीरादिकम् । यथा,—
"सा च त्रिधा भवेद्देह इन्द्रिय विषयस्तथा ।
योनिजादिर्भवेद्देह इन्द्रिय घ्राणलक्षणम् ॥"
इति भाषापरिच्छेदः ॥
"योनिजादीति । योनिजमयोनिजञ्चेत्यर्थः । योनिजमपि जरायुजमण्डजञ्च । जरायुजं मानुषादीनां अण्डजं सर्पादीनाम् । अयोनिजं स्वेदजोद्भिज्जादिकम् । स्वेदजाः कृमिदंशाद्याः । उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमप्ययोनिजम् ।' इति सिद्धान्तमुक्तावली ॥

योनिदेवता, स्त्री, (योनेर्द्देवता ।) पूर्ब्बफल्गुनी नक्षत्रम् । इति हेमचन्द्रः ॥

योनिमुद्रा स्त्री, (योन्याकृतिर्म्मुद्रा हस्तभङ्गी ।) भगवत्याः पूजायां प्रदर्शनीयाङ्गुलीरचितयोन्याकारमुद्राविशेषः । यथा,—
"अथ प्रवक्ष्यामि तन्त्राय ॐ ह्रीं श्रीमिति मस्तके ।
अन्योन्यं पुरतश्चैव अधिकाभ्यां यथेच्छया ।
योनिमुद्रां तत यत्नात् न्यस्य विनिवर्त्तयेत् ॥
द्वौ पाणी प्रसृतौ कृत्वा उत्तानमञ्जलिम् ।
अङ्गुष्ठाग्रद्वयं न्यस्य कनिष्ठाग्रद्वयोत्तरम् ॥
अनामिकायां वामस्य तत्कनिष्ठां पुरो न्यसेत् ।
दक्षिणस्यानामिकायां कनिष्ठां दक्षिणस्य च ॥
अनामिकाया पृष्ठे तु मध्यमे विनियोजयेत् ।
द्व तर्ज्जन्यौ कनिष्ठाये तन्त्रेणैव यामयेत् ॥
योनिमुद्रा समाख्याता देव्याः प्रीतिकरी मता ॥
त्रिवारं न्यसेयेन्यस्य सर्व्वमेव साधकः ।
तां मुद्रां शिरसि न्यस्य भक्तस्य विघ्नसम्भवः ॥"
इति कालिकापुराणे ६९ अध्यायः ॥ * ॥
तान्त्रिकाभिमतयोनिमुद्रा यथा । मन्त्रोक्ता द्रष्टव्या ।
"उपविश्यासने मन्त्री पद्मसनो वाप्यपद्मस्तः ।
षट्चक्रं चिन्तयेद्देवि । प्राणायामपुरःसरम् ॥
चतुर्द्दलं स्यादाधारं स्वाधिष्ठानन्तु षड्दलम् ।
नाभौ दशदलं पद्मं सूर्य्यसंख्यदलं हृदि ॥
कण्ठे स्यात् षोडशदलं भ्रूमध्ये द्विदलं तथा ।
सहस्रदलमाख्यातं ब्रह्मरन्ध्रे महापथे ॥
आधारे कन्दमध्यस्थं त्रिकोणमतिसुन्दरम् ।
त्रिकोणमध्ये देवेशि । कामबीजं सुलक्षणम् ॥
कामबीजोद्भवं तत्र स्वयम्भुलिङ्गमुत्तमम् ।
तस्योपरि पुनर्ध्यायेत् चित्कलां कलमायिनाम् ॥
ध्यायेत् कुण्डलिनीं देवीं स्वयम्भुलिङ्गवेष्टिताम् ।
चित्कलया कुण्डलिनीं तेजोरूपां जगन्मयीम् ॥
आधारादीनि पद्मानि भित्त्वा तेन सह
प्रियोम् ।
हंसेन मनुना देवीं ब्रह्मरन्ध्रं नयेत् सुधीः ॥
सदाशिवेन देवेशि । क्षणमात्रं रमेत् प्रिये ।।
अमृतं जायते देवि । तत्क्षणात् परमेश्वरि ।।
तदुद्भवामृतं देवि । लाक्षारससमोपमम् ॥
तेनामृतेन देवेशि । तर्पयेत् परदेवताम् ॥
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ।
आनयेत्तेन मार्गेण मूलाधारं पुनः सुधीः ॥
ततस्तु परमेशानि । अक्षमाला विचिन्तयेत् ।
चित्रिणीं विद्युतन्त्वाभा अमृताङ्गीमनामयाम् ॥
तया सङ्ग्रथिता ध्येया साक्षाज्ज्ञानप्रदायिनी ।
अनुलोमविलोमेन मन्त्रवर्णविभेदतः ॥
मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितं मनुम् ।
कुर्य्यादक्षमयीं मालां सर्व्वमन्त्रप्रकाशिनीम् ॥
परमार्णं मेरुरूपं लङ्घनं नैव कारयेत् ।
बिन्दुं युक्तं पञ्चाशद्वर्णं मन्त्रं जपेत् सुधीः ॥
अष्टोत्तरशतं मूलमन्त्रं ध्यानेन संजपेत् ।
वर्गाणामष्टवर्गैश्च अष्टवारं जपेत् सुधीः ॥
अ क च ट त प य शा इत्येवं चाष्टवर्गका ।
योनिमुद्रा महेशानि । तव स्नेहात् प्रकाशिता ॥
मन्त्रं च मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न्न जायते ॥'
इति शाक्तानन्दतरङ्गिणी ॥

योनिरोग, पुं, (योने रोग ।) भगन्दर ॥ (यथा, सुश्रुते । ६ । ३५ ।
"मूलोदावर्त्तातिसारप्रवाहिकायोनिरोगगर्भ स्रावरक्तपित्तप्रमेहसहरम् ॥" * ॥) अस्य निदानादियोनिशब्दे द्रष्टव्यः ॥

योन्यर्श, [स्] क्ली, (योनिजातमर्शः ।) योनिजातरोगविशेष । तत्पर्य्याय । कन्दम् २ । इति त्रिकाण्डशेषः ॥ (यथा,-
"कश्चित्तु भूयांसमेव देशमुपदिश्यन्ते योनि मपत्यपथ गलशुण्डिकावलीनिकर्म्मणि अकच ।" इति चरके चिकित्सास्थाने अष्टमे अध्याये ॥)

योधा, स्त्री, (यौति मिश्रीभवतीति । यु मिश्रणे + बाहुलकात् ध । इत्युज्ज्वलदत्त । ४ । ९२ । स्त्रियां टाप् ।) नारी । इत्यमरः । २ । ६ । २ ॥ (यथा हरिभक्तिविलासे १ । २५ । ८ ।

"यथा दारुमयी योषा नटादीनां प्रचेष्टते ।
तथा स्वकर्म्मवशगो देही सर्व्वत्र वर्त्तते ॥" )

योषित्, स्त्री, ( योषति पुमांसं युष्यते पुंभिरिति वा । युष् + "हृसृरुहियुषिभ्य इतिः ।" उणा० १ । ९९ । इति इतिः । ) नारी । इत्यमरः । २ । ६ । २ ॥ ( यथा, मेघदूते । १ । ३६ ।
"गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ॥")
तस्या अवध्यत्वं यथा, वह्निपुराणे ।
"तं प्रेक्ष्य भरतं श्रेष्ठं प्रभुश्चो वाक्यमब्रवीत् ।
अवध्याः सर्व्वभूतानां योषितः क्षम्यतामिति ॥"

योषित्प्रिया, स्त्री, ( योषितां प्रिया । ) हरिद्रा । इति भावप्रकाशः ॥

योषिता, स्त्री, ( योषित् + टाप् । ) नारी । यथा,
"स्त्री वधूर्व्वनिता नारी प्रिया रामा च निम्बिनी ।
योषा योषिद्योषिता च जोषिज्जोषा च
जोषिता ॥"
इति शब्दरत्नावली ॥
( यथा, मुण्डकोपनिषदि । २ । १ । ५ ।
"तस्मादग्निः समिधो यस्य सूर्य्यः
सोमात् पर्ज्जन्य ओषधयः पृथिव्याम् ।
पुमान् रेतः सिञ्चति योषितायां
बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥" )

यौक्तिकः, पुं, ( युक्तिं करोतीति । युक्ति + ठञ् । ) नर्म्मसचिवः । इति शब्दरत्नावली ॥ युक्तियोग्ये, त्रि ॥

यौगकः, त्रि, ( योगस्यायमिति । योग + अण् + स्वार्थे कन् । ) योगसम्बन्धी । इति सिद्धान्तकौमुदी ॥

यौगिकः, त्रि, ( योगाय प्रभवतीति । योग + "योगाद्यच ।" ५ । १ । १२९ । इति ठञ् । ) प्रकृतिप्रत्यययोगलभ्यार्थवाचकः । यथा, योगाय प्रभवति । इति योग्यः यौगिकः । इति सिद्धान्तकौमुदी । "योगरूढ़ाश्च रूढ़ाश्च यौगिकाश्चेति ते त्रिधा । ...आदितेयादिशब्दा यौगिकाः अदितेरपत्यानीति ढक्प्रत्ययेन केवलं योगार्थ एव ।" इत्यलङ्कारकौस्तुभे २ किरणः ॥ ० ॥
("यौगिकं नाम लक्षयति विभजते च ।
'योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम् ।
समासस्तद्धितान्तश्च कृदन्तश्चेति तत्त्रिधा ॥'
यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वयबोधं प्रतिहेतुस्तन्नाम तादृशार्थे यौगिकम् । योगरूढ़न्तु लक्ष्मणपादिपदं योगेनावच्छिन्नस्य रूढ्यार्थस्य बोधकं न तु वस्मात्रस्य तच्च यौगिकं त्रिविधं समासस्तद्धितान्तं कृदन्तश्चेति । द्वन्द्वोऽपि समासः खपटकशब्दानामाकाङ्क्षया लभ्यस्य घवखदिराद्यर्थस्यान्वयबोधकतया यौगिक एव । सर्व्वपदं रूढ्यन्तर्भावेन विशेषणीयं नातः लक्ष्मणपादौ वासुदेवादौ पङ्कजादौ च योगरूढ़ेऽतिप्रसङ्गः । आश्वयो अश्वः शूद्रेत्यादौ स्त्रीवादेः स्त्रीत्ववाचित्वे तादृशं नाम यौगिकमेव अन्यथा तु स्त्रीत्वादिमिति तत्तदर्थे रूढ़मेव नातो विभागस्य व्याघातः ॥ यौगिकेषु समासं लक्षयति ।
'यादृशस्य मतावाक्यस्यान्तस्त्वादिर्निजार्थके ।
यादृशार्थस्य धीहेतुः स समासस्तदर्थकः ॥'
यादृशमतावाक्योत्तरत्वतलादिः स्वार्थस्य यादृशार्थावच्छिन्नविषयतानिरूपितावबोधे हेतुस्तादृशं मतावयं तथाविधार्थे समासः । पाचकादिकन्तु पाककर्त्त्राद्यर्थकं वाक्यमपि स्वघटकानेकनामलभ्यतादृशार्थकत्वविरहान्न मतावाक्यम् । प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वं वा प्रकृतं वाक्यस्य मतत्वं वाच्यम् । तेन उपकुम्भादौ नाव्याप्तिर्मेवा नीलघटत्वमित्यादौ नीलघटत्वादिभागेऽतिप्रसङ्गः । चौरपार्थीत्यादि कन्तु प्रकृत्यर्थावच्छिन्नतदर्थस्यान्वयबोधे समर्थोऽपि न प्रकृत्यर्थमात्रावच्छिन्नस्य ततः पानप्रीतसामान्यस्याप्रत्ययात् । राज्ञः पुरुषत्वमित्यादिनो राजन्येव पुरुषभावः प्रतीयते न तु राजपुरुषस्य भावः तद्धितानां प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वादतो राज्ञः पुरुषेत्यादिभागे न प्रसङ्गः । पायंपायमित्यादिणमन्तभागस्तु स्वार्थावच्छिन्नस्य धात्वन्तरार्थस्यैवान्वयबोधको न तु त्वादिप्रत्ययार्थस्य प्रत्यायित्वादौ समासव्यपदेशोऽत्यवादिशब्दसंस्कारप्रयोजनको गौणः ॥"

० ० ० ० ० ०

"यौगिकेषु क्रमप्राप्तं तद्धितान्तं नाम लक्षयति ।
'यन्नाम तद्धितं यत्र यत्क्रमं तदर्थकम् ।
यद्द्वयं यत्क्रमं तत्र तद्धितान्तं निगद्यते ॥'
यद्यपि नामोत्तरतद्धितत्वं तद्धितोत्तरनामत्वं वा प्रत्येकं बहुगुड़ो द्राक्षेत्यादौ द्राक्षिरित्यादौ चाव्यापकमेव तद्धितान्तं नाम्नि तथापि यादृशं नाम यत्र तद्धितं यादृशानुपूर्व्यवच्छिन्नं यादृशार्थस्यान्वयबोधे समर्थं तादृशानुपूर्व्यवच्छिन्नं तद्द्वयमपि तादृशार्थे तद्धितान्तं नामेत्यर्थः पचतितरामित्यादिकन्तु नामैव न प्रागेव तु तद्धितान्तं तस्यापि लक्ष्यत्वे यः शब्दस्तद्धितं यत्रेति पठनीयं टावादेरपि तद्धितत्वोपगमाद्गार्ग्यायणीत्यादेर्नासंग्रह इति वदन्ति ।
कृदन्तं नाम लक्षयति ।
'यद्धात्वर्थान्वितस्वार्थधीकृत् प्रत्ययादृशं भवेत् ।
तद्धातूत्तरगं तन् सत् कृदन्तं नाम तादृशम् ॥'
यद्धात्वर्थान्वितस्वार्थान्वयबोधं प्रति यादृशानुपूर्व्यवच्छिन्नस्य यत्कृतो निश्चयः कारणं तद्धातूत्तरगं तत् सदेव तादृशानुपूर्व्यवच्छिन्नं सत् कृदन्तं नाम । यथा पाचकपाच्यमानादि तद्धि धात्वर्थेनान्वितस्य स्वार्थकर्त्तादेः कर्म्मत्वाद्यन्वयबोधं प्रति द्वितीयादावेव तादृशानुपूर्व्विकत्वेन निश्चीयमानं हेतुः चैत्रेण ग्रामस्य गन्तव्यमित्यादौ धात्वर्थे स्वार्थमिष्टसाधनत्वादिकं बोधयदपि तव्यादिकं धात्वर्थनिष्ठविषयतानिरूपितस्वार्थविषयताकबोधजनकत्वेन धात्वर्थान्वितस्वार्थकमेव भावकृतामपि स्वस्वार्थकत्वं सुतरामिति ॥" इति शब्दशक्तिप्रकाशिका ॥
अयुतः । तत्पर्य्यायो यथा,—
"अयोगुरुः सप्तदिष्टो यौगिको लोहनामभिः ॥"
इति गारुड़े २०५ अध्यायः ॥ )

यौजनशतिकः, त्रि, ( योजनशतं गच्छतीति । योजनशत + "क्रोशशतयोजनशतयोरुपसंख्यानम् ।" ५।१।७४। इत्यस्य वार्त्ति० इति । ठञ् ।) योजनशतगमनकर्त्ता । इति सिद्धान्तकौमुदी ॥ ( योजनशतादभिगमनमर्हतीति वाक्ये योजनशताभिगमनकर्त्ता । इति काशिका ॥ )

यौजनिकः, त्रि, ( योजनं गच्छतीति । योजन + "योजनं गच्छति ।" ५ । १ । ७४ । इति ठञ् ।) एकयोजनगमनकर्त्ता । इति सिद्धान्तकौमुदी ॥

यौट, ऋ बन्धे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) चतुर्दशस्वरी । ऋ; अयुयौटत् । यौटति काष्ठं तक्षा । इति दुर्गादासः ॥

यौड़, ऋ बन्धे । इति कविकल्पद्रुमः । ( भ्वा०-पर०-सक०-सेट् । ) चतुर्दशस्वरी । ऋ, अयुयौड़त् । यौड़ति काष्ठं तक्षा । इति दुर्गादासः ॥

यौतकं, क्ली, ( युतकयोर्व्वधूवरयोरिदम् । युतक + अण् । युतकमेवेति । स्वार्थे अण् वा । ) यौतुकम् । इति हलायुधरायमुकुटौ । २ । ८ । २८ ॥ ( यथा, मनुः । ९ । १३१ ।
"मातुस्तु यौतकं यत् स्यात् कुमारीभाग एव
सः ॥"
अस्य विशेषविवरणन्तु यौतुकशब्दे द्रष्टव्यम् ॥)

यौतवं, क्ली, परिमाणम् । इत्यमरः । २ । ९ । ८५ ॥

यौतुकं, क्ली, यौतकम् । विवाहकाले दम्पत्योर्लब्धं धनम् । उपचारात् अन्नप्राशनादिसंस्कारकाललब्धमपि । युतकं योनिसम्बन्धः तत्र भवमिति अणि यौतकम् । युतयोर्व्वधूवरयोरिदमिति वा कणि यौतकम् ॥ यौतकस्तुकारमध्यमपि । यौतकं यौतुकञ्च तत् । इति वाचस्पतिः ॥ यौतकादि तु यद्देयं स दायो हरणञ्च तदित्यमरटीकायां भरतः ॥ ॥ स्त्रियः यौतकधनस्याधिकारक्रमो यथा,—
"यत्तु दुहितृमात्राधिकारार्थं गौतमवचनम् ।
'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च ।'
यच्च नारदस्य ।
'मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ॥'
यच्च कात्यायनस्यापि ।
'दुहितॄणामभावे तु रिक्थं पुत्त्रेषु तद्भवेत् ॥'
यच्च याज्ञवल्क्यस्य ।
'मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः ॥'
तानि पूर्व्वोक्तदेवलवचनविरोधेन यौतकधनमात्रविषयाणि । अतएव मनुः । ९ । १३१ ॥
'मातुश्च यौतकं यत् स्यात् कुमारीभाग एव सः ॥'
यौतकं पारिणयनलभ्यम् । यु मिश्रणे इति धातोर्युत इति पदम् । मिश्रता च स्त्रीपुंसयोरेकशरीरता तच्च विवाहाद्भवति । अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति श्रुतेः । अतो विवाहकाललब्धं यौतकम् । ततश्च परिणयनलब्धं स्त्रीधनं दुहितुरेव न पुत्त्रायाम् । तत्रैव

क्रमाच्च गोत्रमदत्तम्। स्त्रीधनं दुहितृणाम् प्रत्तानामप्रतिष्ठितानाञ्च। प्रथममप्रत्ताना तद्भावे प्रत्तानां तदभावे समूढानाम्। स्त्रीधनं दुहितृणामिति सामान्येन प्राप्तत्वात् 'अप्रत्तानाम्' इत्यादस्तु क्रमार्थत्वात्। तथा याज्ञवल्क्य।

अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि।
दुहितृणां प्रसूता चेच्छेषेषु पितृगामि तत्॥

तत्र ब्राह्मादिषु विवाहेषु यल्लब्धम् अग्निधनं स्त्रिया तत तस्यां मृतायां प्रथमं दुहितृणामेव तत्रापि प्रथमं कन्यायास्तदभावे प्रत्तायास्तदभावे परिणीताया सर्वदुहित्रभावे च पुत्रस्याधिकार अप्रजस्त्रीधने भर्तुरधिकारात्। इत्यस्यातना अप्रजापदेन अप्रजाद्यभावे समूढाया अप्यधिकार सूचित।

ब्राह्मदैवार्षगान्धर्व्वप्राजापत्येषु यद्धनम्।
अप्रजायामतीतायां भर्त्तुरेव तदिष्यते॥
यत्त्वस्यै स्याद्धनं दत्तं विवाहेष्वासुरादिषु।
अतीतायामप्रजायां मातापित्रोस्तदिष्यते॥

अस्याः स्याद्दत्तमिति पराचीनं पूर्व्वत्रानुषज्यते। तत्र विवाहेषु यद्धनं दत्तमिति सम्बन्धात् वैवाहिकधनमात्रप्रतीतेर्न यावद्धनविषयत्वम्, तथा यम।

आसुरादिषु यद्द्रव्यं विवाहेषु प्रदीयते।

विवाहक्रियायां पूर्व्वापरीभूतायां यद्द्रव्यं प्रदीयत इति यौतकधनमात्रगोचरत्वमेव प्रतीयते। इति दायभाग॥ ऊढाया यौतकधने प्रथमं कुमारी तदभावे वाग्दत्ता अधिकारिणी। एतयोरभावे ऊढयो पुत्रवतीसम्भावितपुत्रयो र्युगपदधिकार एकाभावे चापराया। एतयोरभावे वन्ध्याविधवयोस्तुल्याधिकार। एकाभावे चापराया। तत पुत्रदौहित्रपौत्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राणां क्रमेणाधिकार अस्य क्रमते सपत्नीपुत्रानन्तरं दौहित्रस्याधिकार इति विशेष। ततो ब्राह्मादिविवाहपञ्चकसमयलब्धयौतकधने भर्त्ता भ्राता माता पिता चेति क्रम। आसुरादिविवाहत्रयसमयलब्धयौतकधने माता पिता भ्राता भर्त्ता चेति क्रम। ततो देवर ततो देवरपुत्रभर्तृश्वशुरपुत्रौ भगिनीपुत्र ततो भर्तृभागिनेय ततो भ्रातृपुत्र ततो जामाता तत श्वशुर ततो भ्रातृश्वशुर तत आनन्तर्यक्रमेण सपिण्डा तत सकुल्या तत समानोदका। इति तट्टीकायां श्रीकृष्णतर्कालङ्कार।

यौधिष्ठिर त्रि (युधिष्ठिरस्य इदमिति। युधिष्ठिर + अण्।) युधिष्ठिरसम्बन्धि। यथा —

'सा च यौधिष्ठिरी सेना माद्रेयशरताडिता।
रतिपत्यादप्रीषाणां विद्रेव तद्गुतां गता॥"

इति महाभारतम्॥

(युधिष्ठिरस्यापत्ये पु। यथा महाभारते। ६। ५०। ५८।

"यौधिष्ठिरं सुधन्वा कौरव्य निषिते शरैः।

यदारयत सङ्ग्रामे मघवा इव दानवम्॥'

वासुदेवस्य पत्नीविशेषे, स्त्री। यथा, हरिवंशे। १६०। २०—२१।

'कौशिक्यां सुतसोमायां यौधिष्ठिर्यां युधिष्ठिर।
कापाली गरुडश्चैव जज्ञाते चित्रयोधिनौ॥
एवमादीनि पुत्राणां सहस्राणि निबोध मे।
इत्यायुत समाख्याता वासुदेवस्य ते सुता॥")

यौधेय, पु (योधमर्हतीति। योध + ढक्। यद्वा 'पार्श्वादियौधेयादिभ्यामणञौ।' ५। ३। ११७। इति स्वार्थे अञ्।) योद्धा। इति सिद्धान्तकौमुदी। (युधिष्ठिरपुत्र। स च शैब्यराजदौहित्र। यथा महाभारते। १। ९५। ७६।

'युधिष्ठिरस्तु गोवासनस्य शैब्यस्य देविकां नाम कन्यां स्वयम्वरे लेभे। तस्यां पुत्रं जनयामास यौधेयं नाम।' नृगराजपुत्रा यौधेया इति ख्याता। यथा हरिवंशे। ३१। ३५।

'उशीनरस्य पत्नीषु पञ्चसु राजर्षिवंशजाः। ... नृगस्य तु यौधेयाः ...' )

यौन स्त्री (योनेरिदमिति। योनि + अण्।) योनिसम्बन्धाधीनपापम्। यथा। बौधायन।

संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनाद्यौनात् सद्यो हि शयनाशनात्॥'

सुमन्तु। यश्चैतेर्यौनमौखस्रौवादीनां सम्बन्धानामन्यतमेन सह सम्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यादिति। इयात् कुर्यात्। एतदेवेति द्वादशवार्षिकमित्यर्थ। अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते। इति प्रायश्चित्तविवेक॥ (उत्पत्तिकारणम्। यथा महाभारते। १३। १०२। २५।

'यत्राग्नियौनाश्च वसन्ति लोका
ह्यवयोनय पर्व्वतयोनयश्च॥'

उत्तरापथजातजातिविशेषे पुं। यथा महाभारते। १२। २०७। ४३।

'उत्तरापथजन्मान कीर्त्तयिष्यामि तानपि।
यौनकाम्बोजगान्धारा किराता बर्व्वरै सह॥")

यौवत, क्ली (युवतीनां समूह। युवति + 'भिक्षादिभ्योऽण्।' ४। २। ३८। इति अण्। पुंवद्भावाभावश्च।) युवतिसमूह। इत्यमर। २। ६। २२। (यथा, गीतगोविन्दे। १०। १५।

'रतिकलाकलावति रुचिरचित्रलेखे भ्रुवा
बत्सो विबुधयौवत वहसि तन्वि। पृथ्वीगता॥"

युवतिभि कृतमिति। नृत्यविशेष। यथा, सङ्गीतदामोदरे।

"मधुरं बहुलीलाभिर्नटीभिर्यच्च नृत्यते।
वशीकरणविद्याभं तल्लास्यं यौवतं मतम्॥")

परिमाणम्। इति अमरटीकायां भरत॥

यौवन, क्ली (युवन् + "हायनान्तयुवादिभ्योऽण्।" ५। १। १३०। इति अण्।) यूनो भाव। तत्पर्याय। तारुण्यम् २। इत्यमर॥ वय ३ इति जटाधर॥ तत्तु षोडशवर्षमारभ्य सप्ततिवर्षपर्य्यन्तम्। यथा,—

आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते।
वृद्ध स्यात् सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परम्॥

इति स्मृति॥

नवयौवनलक्षणं यथा,—

'दरोद्भिन्नस्तनं किञ्चित् चलाक्षं मेदुरस्मितम्।
मनागभिस्फुरद्भावं नव्यं यौवनमुच्यते॥'

इत्युज्ज्वलनीलमणि॥

(गर्व्वान्तरत्वम् अभिनवयौवनत्वमप्रतिरूपत्वममानुषशक्तित्वञ्चेति महतीयं खल्वनर्थपरम्परा। सर्व्वाविनयानामेकैकमप्येषामायतनम्। किमुत समवाय। यौवनारम्भे च प्राय शास्त्रजलप्रक्षालननिर्म्मलापि कालुष्यमुपयाति बुद्धि। अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टि। अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृति। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका। नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनस। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्त्तक पुरुषमत्यासङ्गो विषयेषु।' इति कादम्बर्य्यां चन्द्रापीडं प्रति शुकनासोपदेश॥)

नवयौवनकारकमौषधं यथा,—

'अश्वगन्धानागबलागुडूचीसमितैर्विकाम्।
रूपं भवेद्यथा तद्वत् नवयौवनधारिणाम्॥"

इति गारुडे १९८ अध्याय॥

यौवनकण्टक, पु क्ली (यौवने कण्टकमिव दुःखदत्वात्।) युवमख। इति शब्दमाला॥ वयस्फोडा इति भाषा॥

यौवनपिडका, स्त्री (यौवने पिडका।) युवकाले मुखे जात क्षुद्रस्फोटक। वयस्फोडा इति भाषा। (यथा सुश्रुते निदानस्थाने। १३।

"यौवनपिडका पद्मिनी कण्टका अनुशयिरित्यादि॥") तल्लक्षणं यथा —

'शाल्मलीकण्टकप्रख्या कफमारुतशोणितै।
जायन्ते पिडका यूनां वक्त्रे या मुखदूषिका॥"

इति सुश्रुते। १। १४ अध्याय॥

अस्याश्चिकित्सा मुखदूषिकाशब्दे द्रष्टव्या॥

यौवनलक्षण, क्ली (यौवनस्य लक्षणं चिह्नम्।) लावण्यम्। स्तन। इति मेदिनी। ने, ११७॥ तारुण्यचिह्नम्॥

यौवनाश्व, पुं (युवनाश्वस्यापत्यमिति। युवनाश्व + अण्।) मान्धातृराज। इति त्रिकाण्डशेष॥ अपि च।

"यौवनाश्वोऽथ मान्धाता चक्रवर्त्त्यवनीपति।
सप्तद्वीपवतीमेक शशासाच्युततेजसा॥
इष्ट्वा च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणै॥
सर्व्वदेवमयं देवं सर्व्वात्मकमतीन्द्रियम्॥
द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विज।
धर्म्मो देशश्च कालश्च सर्व्वमेतद्यदात्मकम्॥
यावत् सूर्य्य उदेति स्म यावच्च प्रतितिष्ठति।
तत् सर्व्वं यौवनाश्वस्य मान्धातु क्षेत्रमुच्यते॥

प्रद्युम्नेन्द्रं द्वादश्यां च विष्णुमव्यामथाष्टमम् ।
पुत्रकृत्यमशेषं तु पुष्पकृन्दस्य योगिनम् ॥
तेषां समाहः प्रश्नाग्रन् सौभरिं मंत्रिरे यतिम् ।"
इति श्रीभागवते ९ स्कन्धे ६ अध्यायः ॥

यौवनाश्वकः, पुं, (यौवनाश्व+स्वार्थे कन् ।) मान्धातृराजः । इति जटाधरः ॥

यौष्माकं, त्रि, (युष्मद्+अण् । "तस्मिन्नणि च युष्माकास्माकौ ।" ४ । ३ । २ । इति युष्माकादेशः ।) युष्मत्सम्बन्धि । युष्माकमिदं इत्यर्थे अणप्रत्ययेन निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥ (यथा, कथासरित्सागरे । ११२ । २०५ ।
"इत्यादमास्त अत्यन्तमुपलितेष्वपि तनदयम् ।
विद्याधरो धर्मविदो यौष्माकोऽयमनर्हितः ॥")

यौष्माकीणं, त्रि, (युष्मद्+"युष्मदस्मदोरन्यतरस्यां खञ् च ।" ४।३।१। इति खञ् । "तस्मिन्नणि चेति ।" ४ । ३ । २ । इति युष्माकादेशः ।) युष्मत्सम्बन्धि, युष्माकमिदं इत्यर्थे खीन् प्रत्ययेन निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥ युष्मच्छब्दे अतिशयितवादप्रकरणदृष्ट्या यौष्मयुष्मदस्मच्छब्दप्रयोगोऽत्र लिख्यते । युष्मदस्मदोर्मुख्यत्वे गौणत्वे च विभक्तिरेषां खरूपपदत्वात् तेषु परेषु साध्यरूपाय युष्मत्सम्बन्धमाः स्युरेव । त्रिजमादेरन्यस्य युष्मदस्मदोर्मुख्यत्वे एकवचने परे त्वमदौ द्विवचने परे युवावौ बहुवचने परे खरूपेणावस्थानम्, गौणत्वे तु परविभक्तिमनाश्रित्य युष्मदस्मदोरेकत्वे त्वमदौ द्वित्वे युवावौ बहुत्वे खरूपेणावस्थानमिति ॥१॥ यथा त्वामतिक्रान्तः अतित्वं अतित्वां अतियूयम् । अतित्वां अतित्वौ अतित्वान् । अतित्वया अतित्वाभ्यां अतित्वाभिः । अतितुभ्यं अतित्वाभ्यां अतित्वभ्यम् । अतित्वत् अतित्वाभ्यां अतित्वत् । अतितव अतित्वयोः अतित्वयाम् । अतित्वयि अतित्वयोः अतित्वासु ॥ ५ ॥ युवामतिक्रान्ताः अतित्वं अतियुवां अतियूयम् । अतियुवां अतियुवां अतियुवान् । अतियुवया अतियुवाभ्यां अतियुवाभिः । अतितुभ्यं अतियुवाभ्यां अतियुवभ्यम् । अतियुवत् अतियुवाभ्यां अतियुवत् । अतितव अतियुवयोः अतियुवयाम् । अतियुवयि अतियुवयोः अतियुवासु ॥ ७ ॥ युष्मानतिक्रान्ताः अतित्वं अतियुष्मां अतियूयम् । अतियुष्मां अतियुष्मां अतियुष्मान् । अतियुष्मया अतियुष्माभ्यां अतियुष्माभिः । अतितुभ्यं अतियुष्माभ्यां अतियुष्मभ्यम् । अतियुष्मत् अतियुष्माभ्यां अतियुष्मत् । अतितव अतियुष्मयोः अतियुष्मयाम् । अतियुष्मयि अतियुष्मयोः अतियुष्मासु ॥ ८ ॥ मामतिक्रान्तः अहं अतिमां अतिवयम् । अतिमां अतिमां अतिमान् । अतिमया अतिमाभ्यां अतिमाभिः । अतिमह्यं अतिमाभ्यां अतिमभ्यम् । अतिमत् अतिमाभ्यां अतिमत् । अतिमम अतिमयोः अतिमयाम् । अतिमयि अतिमयोः अतिमासु ॥ ९ ॥ आवामतिक्रान्तः अहं अत्यावां अतिवयम् । अत्यावां अत्यावां अत्यावान् । अत्यावया अत्यावाभ्यां अत्यावाभिः । अतिमह्यं अत्यावाभ्यां अत्यावभ्यम् । अत्यावत् अत्यावाभ्यां अत्यावत् । अतिमम अत्यावयोः अत्यावयाम् । अत्यावयि अत्यावयोः अत्यावासु ॥ १० ॥ अस्मानतिक्रान्तः अहं अत्यस्मां अतिवयम् । अत्यस्मां अत्यस्मां अत्यस्मान् । अत्यस्मया अत्यस्माभ्यां अत्यस्माभिः । अतिमह्यं अत्यस्माभ्यां अत्यस्मभ्यम् । अत्यस्मत् अत्यस्माभ्यां अत्यस्मत् । अतिमम अत्यस्मयोः अत्यस्मयाम् । अत्यस्मयि अत्यस्मयोः अत्यस्मासु । इति दुर्गादासः ॥

---

# र

र, रेफः । यथा । यत्तात् कारनकारौ रादेशः । इति कलापसन्धिप्रसारव्याकरणे । रेफात् कारश्च । रकारः । इति प्रक्रियाकौमुदी ॥ स तु व्यञ्जनविंशवर्णः । तस्योच्चारणस्थानं मूर्धा । इति मुग्धबोधव्याकरणम् ॥ ७ ॥ (तथा च शिक्षायाम् । १० ।
"स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥")

तस्य स्वरूपं यथा,—
"रेफञ्च चञ्चलापाङ्गि ! कुण्डलीत्रयसंयुतम् ।
रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा ।
पञ्चप्राणमयं वर्णं त्रिबिन्दुसहितं सदा ॥"
इति कामधेनुतन्त्रे ६ पटलः ॥ ७ ॥

तस्य लेखनप्रकारो यथा,—
"इयतः कुण्डली रेखा वामादृक्षगताधः ।
पुनर्दक्षगता सैव ततोऽधोगाय चोर्द्धतः ॥
भवानी शङ्करो वह्निस्तासु तिष्ठन्ति नित्यशः ।
अर्द्धमात्रा ब्रह्मरूपा महाशक्तिः प्रकीर्त्तिता ॥"
अपि च ।
"ऊर्द्धाधःक्रमतो रेखा त्रिकोणाधोगता च या ।
विधिरीशः केशवश्च तासु तिष्ठन्ति नित्यशः ॥
ऊर्द्धस्थिता तु या मात्रा सा शक्तिः परिकीर्त्तिता ।
तस्य मध्यगता रेखा वह्निरूपा च या स्मृता ।
निर्गुणोऽसौ सदा वर्णो न कदाचित् गुणीभवेत् ॥"

अस्य ध्यानं यथा,—
"ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनाम् ।
रक्तवर्णामष्टभुजां रक्तपुष्पोपशोभिताम् ॥
रक्तमाल्याम्बरधरां रक्ताभरणभूषिताम् ।
महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिकाम् ॥
एवं ध्यात्वा मह्यरूपां तन्मन्त्रं दशधा जपेत् ॥"

तन्त्रनाममन्त्रो यथा,—
"त्रिशक्तिसहितं देवि ! आत्मादितत्त्वसंयुतम् ।
सर्वतेजोमयं वर्णं सततं प्रणमाम्यहम् ॥"
इति वर्णोद्धारतन्त्रम् ॥ ७ ॥

तस्य नामानि यथा,—
"रो रक्तः क्रोधिनी रेफः पावकस्तोजसो मतः ।
प्रकाशादर्शनो दीपो रक्तकृष्णापरं वशी ॥
सुधङ्गिणी मतिः स्वर्णा धातुरक्तः प्रकाशकः ।
अप्रकौ रेवतादासं कुण्डगो वह्निमण्डलम् ॥
उग्ररेखा भूमध्यो वेदकण्ठपरा पुरा ।
प्रकृतिः सुगतो ब्रह्मशब्दश्च गायको धनम् ॥
श्रीकण्ठ उग्रा हृदयं सुखो त्रिपुरसुन्दरी ।
यविन्दुर्योनिगो ज्वाला श्रीशैलो विश्वतोसुखी ॥"
इति नानातन्त्रशास्त्राणि ॥

(छन्दःशास्त्रोक्तगणविशेषः । यथा, छन्दोमञ्जर्याम् । १। ८ । "र-लमध्यः ।" लघुमध्यमध्यो रः भवति । तस्येदं सांकेतिकं चिह्नम् ऽ।ऽ पद्यादौ अस्याक्षरस्य प्रयोगे दाहो भवति । यदुक्तं वृत्तरत्नाकरटीकायाम् ।
"यो लक्ष्मीं रस्तु दाहं वशनमथ सगौ शः सुखं
यस्तु खेदम् ॥"
धात्वनुबन्धविशेषः । यथा, कविकल्पद्रुमे ।
"———————भो चभादि र वैदिकः ।"
"वैदिको वेदेष्वेव प्रयुक्तो न तु भाषायामित्यर्थः । यथा, गालिं स्तुतं जगाति ॥")

रः, पुं, (राति ऊर्द्धं गच्छतीति । रा+डः ।) पावकः । तीक्ष्णः । इति मेदिनी । रे, १ ॥ कामवह्निः । इति शब्दरत्नावली ॥

रंहः, [स्] क्ली, (रमते येन इति । रम्+"रमेश्च ।" उणा० ४ । २१२ । इति असुन् । हुगागमश्च धातोः । "अधिरंहिभ्यामसुन् इति अंहो रंहः । इति धातुप्रदीपः ।" इत्युज्ज्वलदत्तः ।) वेगः । इत्यमरः । १ । १ । ६० ॥ (यथा, रघुवंशे । २ । ३४ ।
"अलं महीपाल ! तव श्रमेण
प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्तिरंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥"
महादेवः । यथा, महाभारते । १४ । ८ । १५ ।
"हरिनेत्राय मुण्डाय क्षशायोत्तरणाय च ।
भास्कराय सुतीर्थाय देवदेवाय रंहसे ॥"
विष्णुः । यथा, महाभारते हरिवंशपर्व्वणि २५२ । १८ ।
"नमस्कृत्य सुरेशाय तस्मै देवाय रंहसे ।
प्रयाताः प्राग्दिशं पुण्यां विपुलं कश्यपाश्रमम् ॥")

रक, क खादे । आपने । इति कविकल्पद्रुमः ॥ खादो रसोपादानम् । क, राकयति मोदकं बालकः । इति दुर्गादासः ।

रक्तं, क्ली, (रज्यते अङ्गमनेनेति । रञ्ज्+क्तः ।) कुङ्कुमम् । ताम्रम् । (अस्य पर्य्यायो यथा,—
"रक्तं वरिष्ठं म्लेच्छाख्यं ताम्रं शुल्बमुदुम्बरम् ॥"
इति वैद्यकरत्नमालायाम् ॥)
प्राचीनामलकम् । इति मेदिनी । ते, ४८ ॥ पद्मकम् । (अस्य पर्य्यायो यथा,—

रक्तकन्दलः, पुं, ( रक्तं रक्तवर्णं कन्दलं नवाङ्कुरो यस्य । ) प्रवालम् । इति त्रिकाण्डशेषः ॥ ( गुणादयोऽस्य प्रवालशब्दे विज्ञेयाः ॥ )

रक्तकमलं, क्ली, ( रक्तं रक्तवर्णं कमलम् । ) रक्तवर्णोत्पलम् । तत्पर्य्यायः । कोकनदम् २ रक्ताम्भोजम् ३ अरुणकमलम् ४ शोणपद्मम् ५ रक्तोत्पलम् ६ अरविन्दम् ७ रविप्रियम् ८ रक्तवारिजम् ९ । ( रक्तकमलम् १० । इति पाद्मोत्तरखण्डे १३ अध्यायः ॥ ) अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । मधुरत्वम् । शिशिरत्वम् । रक्तदोषहरत्वम् । पित्तकफवातशमनत्वम् । सन्तर्पणकारत्वम् । वृष्यत्वञ्च । इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।

"विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् ।
रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ॥
धवलं कमलं शीतं मधुरं कफपित्तजित् ।
तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकम् ॥"
इति भावप्रकाशः ॥

रक्तकम्बलं, क्ली, ( कम्बलं जलमाश्रयत्वेनास्त्यस्येति । वर्श आद्यच् । रक्तं रक्तवर्णं कम्बलमुत्पलमिति । ) रक्तोत्पलम् । यथा,—
"चन्दनागुरुकर्पूरकुङ्कुमैश्च सुगन्धिभिः ।
कमलैः कुमुदैः पुष्पैः कह्लारै रक्तकम्बलैः ॥
फलैर्धूपैरपूपैश्च शोभनैर्गुडमिश्रितैः ।
अर्च्चयेद्बलिराजानं मन्त्रेण द्विजसत्तम ॥"
इति पाद्मोत्तरखण्डे १३ अध्यायः ॥

रक्तकरवीरकः, पुं, ( करवीर+स्वार्थे कन् । ततो रक्तः रक्तवर्णः करवीरकः । ) लोहितवर्णकरवीरपुष्पवृक्षः । लाल् कनेल् इति हिन्दी भाषा । तत्पर्य्यायः । रक्तप्रसवः २ गणेशकुसुमः ३ चण्डीकुसुमः ४ क्रूरः ५ भूतद्रावी ६ रविप्रियः ७ । अस्य गुणाः । कटुत्वम् । तीक्ष्णत्वम् । विशोधनत्वम् । त्वग्दोषव्रणकण्डूतिकुष्ठविषहरत्वञ्च । इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।

"करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः ।
द्वितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ॥
करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् ।
व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ।
वीर्य्योष्णं क्रिमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥"
इति भावप्रकाशः ॥

रक्तकाञ्चनः, पुं, ( रक्तः रक्तवर्णः काञ्चनः । ) स्वनामख्यातपुष्पवृक्षविशेषः । तत्पर्य्यायः । विदलः २ चमरिकः ३ । इति शब्दरत्नावली ॥ काञ्चनालः ४ ताम्रपुष्पः ५ कुद्दारः ६ । इति जटाधरः ॥

रक्तकाण्डा, स्त्री, ( रक्तः रक्तवर्णः काण्डः दण्डोऽस्याः । ) रक्तपुनर्नवा । इति राजनिर्घण्टः ॥ ( विवरणमस्या रक्तपुनर्नवाशब्दे विज्ञेयम् ॥ )

रक्तकाष्ठं, क्ली, ( रक्तं काष्ठं यस्य । ) पत्तङ्गम् । इति राजनिर्घण्टः ॥ लोहितवर्णदारु च ॥

रक्तकुमुदं, क्ली, ( रक्तं रक्तवर्णं कुमुदम् । ) रक्तकैरवम् । इति जटाधरः ॥

रक्तकुसुमः, पुं, ( रक्तानि रक्तवर्णानि कुसुमान्यस्य । ) पारिभद्रः । धन्वनवृक्षः । इति राजनिर्घण्टः ॥

रक्तकेशरः, पुं, ( रक्ताः केशराः किञ्जल्काः यस्य । ) पारिभद्रः । इति रत्नमाला ॥

रक्तकैरवं, क्ली, ( रक्तं रक्तवर्णं कैरवम् । ) रक्तकुमुदम् । इति जटाधरः ॥ ( यथास्य पर्य्यायः ।
"तदरुणमल्लं सोमाख्यं हल्लकं रक्तकैरवम् ॥"
इति वैद्यकरत्नमाला ॥ )

रक्तकोकनदं, क्ली, ( रक्तं रक्तवर्णं कोकनदम् । ) रक्तोत्पलम् । इति जटाधरः ॥ ( विशेषोऽस्य रक्तोत्पलशब्दे ज्ञातव्यः ॥ )

रक्तखदिरः, पुं, ( रक्तः रक्तवर्णः खदिरः । ) रक्तवर्णखदिरवृक्षः । तत्पर्य्यायः । रक्तसारः २ सुसारः ३ ताम्रसारकः ४ बहुशल्यः ५ याज्ञिकः ६ कुठनोदनः ७ यूपद्रुमः ८ अमखदिरः ९ अरः १० । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कषायत्वम् । गुरुत्वम् । तिक्तत्वम् । आमवातासवातव्रणभूतज्वरनाशित्वञ्च । इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाश्च ।

"खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥
खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् ।
तिक्तः कषायो मेदोघ्नः क्रिमिमेहज्वरव्रणान् ।
श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् ॥"
इति भावप्रकाशः ॥

रक्तगन्धकं, क्ली, ( रक्तं रक्तवर्णं गन्धकम् । ) बोलम् । इति राजनिर्घण्टः ॥

रक्तगुल्मः, पुं, ( रक्तजो गुल्मः इति मध्यपदलोपी कर्म्मधारयः । ) स्त्रीणां रक्तजगुल्मरोगः । तस्यौषधं यथा,—
"द्विजयष्टीत्रिकटुकं चूर्णं पीतं हरेद्ध्रुवम् ।
तिलक्वाथेन संयुक्तं रक्तगुल्मं स्त्रिया हरं ॥"
इति गारुडे १९६ अध्यायः ॥

( तथास्य निदानादिकं यथा,—
"शोणितगुल्मस्तु खलु स्त्रिया एव भवति न पुरुषस्य गर्भकोष्ठार्त्तवागमनवैशेष्यात् । पारतन्त्र्यादवैशारद्यात् सततमुपचारानुरोधाद्वेगानुदीर्णानुपरुन्धत्या आमगर्भे वाप्यचिरात् पतिते तथाप्यचिरप्रजातायाः ऋतौ वा वातप्रकोपणान्यासेवमानाया वातः प्रकोपमापद्यते । स प्रकुपितो योन्या मुखमनुप्रविश्यार्त्तवमुपरुणद्धि मासि मासि तदार्त्तवमुपरुध्यमानं कुक्षिं वर्द्धयति । तस्याः शूलकासातीसारच्छर्द्यरोचकाविपाकाङ्गमर्दनिद्रालस्यकफप्रसेकाः समुपजायन्ते स्तनयोश्च स्तन्यमोष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यं ग्लानिः चक्षुषोर्मूर्च्छा हृल्लासो दोहदः श्वयथुः पादयोरीषच्चोद्गमो रोमराज्या योन्याश्चाणावत्वमपि च योन्या दौर्गन्ध्यमास्रावश्चोपजायते । केवलश्चास्या गुल्मः स्पन्दते तामगर्भामपि गर्भिणीमित्याहुर्मूढाः ।" इति चरके निदानस्थाने तृतीयेऽध्याये ॥ यथा च ।

"न स्पन्दते नोदरमेति वृद्धिं
भवन्ति लिङ्गानि च गर्भिणीनाम् ।
तं गर्भकालातिगमे चिकित्स्यमसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥"
इति सुश्रुते उत्तरतन्त्रे ४२ अध्यायः ॥

तथा च । रक्तगुल्मस्तु स्त्रिया एव प्रजायते । यथा,—
"ऋतौ वा नवसूता वा यदि वा योनिरोगिणी ।
भवते वातलानि स्त्री क्रुद्धस्तस्याः समीरणः ।
निरुणद्ध्यार्त्तवं योन्यां प्रतिमासमवस्थितम् ।
कुक्षिं करोति तद्गर्भलिङ्गमाविष्करोति च ॥
हृल्लासदौर्हृदस्तन्यदर्शनं क्षामतादिकम् ।
क्रमेण वायुसंसर्गात् पित्तयोनितया च तत् ॥
शोणितं कुरुते तस्या वातपित्तोत्थगुल्मजान् ।
रुक्स्तम्भदाहातीसारतृड्ज्वरादीनुपद्रवान् ॥
गर्भाशये च सुतरां शूलं दुष्टासृगाश्रये ।
योन्याश्च स्रावदौर्गन्ध्यतोदस्पन्दनवेदनाः ॥
न चाङ्गैर्गर्भवद्गुल्मः स्फुरत्यपि तु शूलवान् ।
पिण्डीभूतः स एवास्याः कदाचित् स्पन्दते चिरात् ॥
न चास्या वर्द्धते कुक्षिर्गुल्म एव तु वर्द्धते ।
स्वदोषसंश्रयो गुल्मः सर्व्वो भवति तेन सः ॥'
पाकं चिरेण भजते नैव वा——————— ॥"
इति वाभट्टे निदानस्थाने एकादशेऽध्याये ॥

तथास्य चिकित्सा
"सरक्तगुल्मे न च पाचनानु
न हिङ्गुपानं कटिचालनञ्च ।
न चैव संस्वेदनमर्द्दनञ्च
न वा क्रमेणोत्तुलवनं हितञ्च ॥
रोधाञ्जनं खदिरमागधिका समङ्गा
क्वाथोऽम्बयेतत्समं घृतसंप्रयुक्तम् ।
गुल्मं सरक्तमपि चाथ निहन्ति शीघ्रं
दृतक्लेदनञ्च विनिहन्ति च कुक्षिरक्तम् ॥
क्षीरपानं प्रदातव्यं घृतसौवर्च्चलान्वितम् ।
रक्तगुल्मविनाशाय यक्ष्मिक्षतकेऽपि वा ॥
न हिङ्गुसंयुतं पथ्यं न पेयं न विदाहि च ।
रक्ते च तत्ते गुल्मे मांसानि जाङ्गलानि च ॥"
इति हारीते चिकित्सितस्थाने चतुर्थेऽध्याये ॥ )

अन्यत् गुल्मशब्दे द्रष्टव्यम् ॥ ❀ ॥

रक्तघ्नः, पुं, ( रक्तं हन्तीति । हन्+"अमनुष्यकर्त्तृके च ।" ३ । २ । ५३ । इति टक् । ) रोहितकवृक्षः । इति जटाधरः ॥ ( रहितकशब्देऽस्य विशेषो ज्ञेयः ॥ )

रक्तघ्नी, स्त्री, ( रक्तं हन्तीति । हन्+टक् । ङीप् । ) दूर्व्वाविशेषः । गाँडिया दूर्वा इति भाषा ॥ यथा,
"महौषधिश्च गोलोम्यां रक्तघ्नी रक्तपित्तहा ॥"
इति शब्दचन्द्रिका ॥

रक्तचन्दनं, क्ली, ( रक्तं रक्तवर्णं चन्दनम् । ) रक्तवर्णचन्दनकाष्ठम् । ( यथा, रामायणे ।२।३।३६ ।
"पद्मरागोचितां सीतां रक्तचन्दनसेविनीम् ।
वर्षमुत्थाय शीतञ्च नेष्यत्याशु विवर्णताम् ॥" )
तत्पर्य्यायः । तिलपर्णी २ पत्राङ्गम् ३ रक्त-

ते मिथस्तुल्यरूपत्वमागम्य यान्त्युपेक्षताम् ।
पित्तरक्तस्य विकृतेः संसर्गाद्दूषणादपि ॥
गन्धवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते ।
प्रभवत्यसृजः स्थानात् प्लीहतो यकृतश्च तत् ॥
शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ।
छर्दिश्छर्दितवैभत्स्यं कासः श्वासो भ्रमः क्लमः ॥
लोहितो लोहितो मत्स्यामगन्धास्यत्वं च विस्वरः ।
रक्तहारिद्रहरितवर्णता नयनादिषु ॥
नीललोहितपीतानां वर्णानामविवेचनम् ।
स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन् भविष्यति ॥
ऊर्द्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते ॥
ऊर्द्ध्वं साध्यं कफाद्यस्मात् तद्विरेचनसाधितम् ।
बह्वौषधञ्च पित्तस्य विरेको हि वरौषधम् ॥
अनुबन्धी कफो यश्च तत्र तस्यापि शुद्धिकृत् ।
कषायाः स्वादवो यस्य हिमास्तु हितलोहिताः ॥
कटुतिक्तकषाया वा ये निसर्गात् कफापहाः ।
अधो याप्यञ्च नासुज्ञात् तत् प्रच्छर्दनसाधनम् ॥
अल्पौषधञ्च पित्तस्य वमनं न तु चौषधम् ।
अनुबन्धि च लोपस्य प्रान्तपित्तहरस्य तत् ॥
कषायाश्च हितास्तस्य मधुरा एव केवलम् ।
रूपमात्रसंसृष्टमसाध्यमुपनायनम् ॥
अवस्थाप्रतिलोमत्वादसाध्यादौषधस्य च ।
नहि संशोधनं किञ्चिदस्य च प्रतिलोमगम् ॥
शोधनं प्रतिलोमञ्च रक्तपित्ते विनिर्ज्जितम् ।
एवमेवोपशमनं सर्व्वशोधनमिष्यते ॥
संसृष्टेष्वाह दोषेषु सर्व्वथा छर्दनं हितम् ।
तत्र दोषोऽत्र गमनं शिराभ्य इव लक्ष्यते ।
उपद्रवाश्च विकृतं फलतस्त्वेषु चाधिकम् ॥”

इति गारुडे १५३ अध्यायः ॥ * ॥

तस्यौषधं यथा,—
“त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु ।
मोदकः सन्निपातान्तो रक्तपित्तज्वरापहः ॥
बाधायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥
वटरूषककण्टकारीकाथपथ्याक्वाथः सशर्करः ।
क्षौद्राढ्यः कासनश्वासरक्तपित्तनिवर्हणः ॥”

इति गारुडे १७४ अध्यायः ॥ * ॥

अपि च । “तत्र रक्तपित्तस्य निदानपूर्व्विकां सम्प्राप्तिमाह ।
‘घर्म्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ।
पित्तं विदग्धं स्वगुणैर्व्विदहत्याशु शोणितम् ॥’
तीक्ष्णं मरिचादि । उष्णोऽग्नितापादिः । क्षारो यवक्षारादिः । विदग्धं दूषितम् । स्वगुणैः स्वकारणैर्गुणैस्तीक्ष्णादिभिः । गुणैरिति बहुत्वेन तीक्ष्णाम्ललवणकटूष्णघर्म्मादयो गृह्यन्ते । विदहति दूषयति ॥ * ॥ रक्तपित्तस्य सामान्यलक्षणमाह ।
‘ततः प्रवर्त्तते रक्तमूर्द्ध्वं चाधो द्विधापि वा ।’
रक्तमित्युपलक्षणम् । तत्संसर्गि पित्तञ्च । अतएव रक्तञ्च पित्तञ्च रक्तपित्तमिति द्वन्द्व इति सुश्रुतः ॥ रक्तञ्च तत् पित्तञ्चेति रक्तपित्तं रागप्राप्तं पित्तमिति कर्म्मधारय इति चरकः ॥ मार्गानाह ।
‘ऊर्द्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते ॥’
कुपितमतिकुपितम् ॥ * ॥ पूर्व्वरूपमाह ।
‘सदनं शीतकामित्वं कण्ठधूमायनं वमिः ।
लोहगन्धिश्च निश्वासो भवत्यस्मिन् भविष्यति ॥’
विशिष्टं रूपमाह ।
‘सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वितम् ।
श्यावारुणं सफेनञ्च तनुरूक्षञ्च वातिकम् ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम् ।
मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम् ।
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् ॥’
सपाण्डु ईषत्पाण्डु । पिच्छिलं मयूरपिच्छच्छविसंयुक्तम् । कृष्णं कृष्णाभम् । मेचकं चिक्कणकृष्णवर्णम् । अञ्जनं स्रोतोऽञ्जनं तदाभम् ॥ * ॥ संसर्गविशेषेण मार्गभेदमाह ।
‘ऊर्द्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् ।
द्विमार्गं कफवाताभ्यामुभाभ्यां तत्प्रवर्त्तते ॥’ * ॥
उपद्रवानाह ।
‘दौर्ब्बल्यश्वासकासज्वरवमथुमदाः पाण्डुता दाहमूर्च्छा
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा ।
तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनञ्च
द्वेषो भुक्तेऽविपाको विकृतिरपि भवेद्रक्तपित्तोपसर्गाः ॥’
उपसर्गा उपद्रवाः । विकृतिर्मांसप्रक्षालनाभत्वादिः ॥ * ॥ साध्यत्वादिकमाह ।
‘एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ।
यत्त्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगवत् ॥
ऊर्द्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥’
साध्यमाह ।
‘एकमार्गं बलवतो नातिवेगं न चोत्थितम् ।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥’
सुखे काले हिमशिशिरयोः ॥ * ॥ असाध्यमाह ।
‘मांसप्रक्षालनाभं क्वथितमिव च यत् कर्द्दमाम्भोनिभं वा
मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् ।
यत् कृष्णं यच्च नीलं भृशमपि कुणपं यत्र चोक्ता विकारा-
स्तद्वर्ज्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥’
उक्ता विकारा दौर्ब्बल्यादयः । सुरपतिधनुषा तुल्यं नानावर्णम् ।
‘येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद्दृश्यं वियच्चापि तच्चासाध्यमसंशयम् ॥’
येन रक्तपित्तेन उपहतो मनुष्यः दृश्यं घटपटादिकं वियच्च रक्तं पश्यति स नश्यति वियच्चापि अनुक्तमपीत्यर्थः ॥ * ॥ अरिष्टमाह ।
‘लोहितं छर्द्दयेद्यस्तु बहुशो लोहितेक्षणः ।
लोहितोद्गारदर्शी च म्रियते रक्तपित्तकः ॥’
लोहितोद्गारदर्शी व्याधिमहिम्नोद्गारमपि लोहितं पश्यति इत्यर्थः ॥ * ॥ अथ रक्तपित्तस्य चिकित्सा ।
‘पित्तास्रं स्तम्भयेन्नादौ प्रवृत्तं बलिनोऽश्नतः ।
हृत्पाण्डुग्रहणीरोगप्लीहगुल्मज्वरादिकृत् ॥
शालिषष्टिकनीवारकोरदूषप्रसाधिकाः ।
श्यामाकाश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥’
प्रियङ्गुः कङ्गुः ।
‘मसूरमुद्गचणकाः समकुष्ठाढकीफलाः ।
प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ।
दाडिमामलकं विद्वानम्लार्थे चापि दापयेत् ।
पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः ॥
शाकार्थे शाकसात्म्यानां तण्डुलीयादयो हिताः ।
पारावतान् कपोतांश्च लावान् रक्ताक्षवर्त्तकान् ॥
शशान् कपिञ्जलानेणान् हरिणान् कालपुच्छकान् ।
रक्तपित्तहरान् विद्याद्रसांस्तेषां प्रयोजयेत् ॥
ईषदम्लाननम्लांश्च घृतभृष्टान् ससैन्धवान् ।
कफानुगे यूषशाके दद्याद्वातानुगे रसम् ॥
पथ्यं सतिलयूषैश्च सक्तुलाजशक्तुभिः ।
धान्याकधात्रीवासानां द्राक्षापर्पटयोर्हिमः ।
रक्तपित्तं ज्वरं दाहं तृष्णां शोषञ्च नाशयेत् ॥’
धान्याकादेर्हिमः ॥ * ॥
‘ह्रीवेरमुत्पलं धान्यं चन्दनं यष्टिकाम्बुता ।
उशीरञ्च हिमश्चैषां क्वाथं समधुशर्करम् ॥
पाययेत्तेन सद्यो हि रक्तपित्तं प्रशाम्यति ।
रक्तपित्तं जयत्युग्रं तृष्णां दाहं ज्वरं तथा ॥ * ॥
पुराणं पीनमानीय कुष्माण्डस्य फलं दृढम् ।
तद्बीजधारबीजत्वक्शिराशून्यं समाचरेत् ॥
ततस्तस्य तुलां नीत्वा पचेज्जलतुलाद्वये ।
तस्मिन्नीरेऽर्द्धशिष्टे तु यत्नतः शीतलीकृते ॥
तानि कुष्माण्डखण्डानि पीडयेद्दृढवाससा ।
यत्नतस्तज्जलं नीत्वा पुनः पाकाय धारयेत् ॥
कुष्माण्डं शोषयेद्घर्म्मे ताम्रपात्रे ततः क्षिपेत् ।
क्षिप्त्वा तत्र घृतप्रस्थं कुष्माण्डं तेन भर्ज्जयेत् ॥
मधुवर्णं तदालोक्य तज्जलं तत्र निःक्षिपेत् ।
सितायाश्च तुलां तत्र क्षिप्त्वा तल्लेहवत् पचेत् ॥
सुपक्वे पिप्पलीशुण्ठीजीरकाणां द्वे पले पृथक् ।
पृथक् पलार्द्धं धन्याकपत्रैलामरिचं त्वचम् ॥
चूर्णमेषां क्षिपेत्तत्र घृतार्द्धं क्षौद्रमावपेत् ।
एतत् पलमितं खादेदथवाग्निबलं यथा ॥
खण्डकुष्माण्डलेहोऽयं रक्तपित्तं विनाशयेत् ।
पित्तज्वरं तृषां दाहं प्रदरं कृशतां वमिम् ॥
स्वरभेदं चक्षुरोगं कासं श्वासं क्षतं क्षयम् ।
नाशयत्येव वृष्योऽयं बृंहणो बलवर्द्धनः ॥’

इति खण्डकुष्माण्डावलेहः ॥ * ॥

‘शतावरीमूलकल्कं कल्कात् क्षीरं चतुर्गुणम् ।
क्षीरतुल्यघृतं गव्यं सितया कल्कतुल्यया ॥

रक्तपित्तहा, स्त्री, ( रक्तपित्तं हन्तीति । हन्+ ड: । स्त्रियां टाप् । ) रक्तघ्नी । इति शब्दचन्द्रिका ॥ गाँठिया दूर्व्वा इति भाषा ॥ (विवृतिरस्याः रक्तघ्नीशब्दे ज्ञातव्या ॥)

रक्तपुनर्नवा, स्त्री, ( रक्ता रक्तवर्णा पुनर्नवा । ) रक्तवर्णपुनर्नवाशाक: । तत्पर्य्याय: । क्रूरा २ मण्डलपत्रिका ३ रक्तकाण्डा ४ वर्षकेतु: ५ लोहिता ६ रक्तपत्रिका ७ वैशाखी ८ रक्तवर्षाभू: ९ शोफघ्नी १० पुष्पिका ११ विकस्वरा १२ विषघ्नी १३ प्रावृषेण्या १४ सारिणी १५ वर्षाभव: १६ शोणपत्र: १७ भौम: १८ पुनर्भव: १९ नव: २० नय: २१ । अस्या गुणा: । तिक्तत्वम् । सारकत्वम् । शोफरक्तप्रदरदोषपाण्डुपित्तनाशित्वञ्च । इति राजनिर्घण्ट: ॥

रक्तपुष्प:, पुं, ( रक्तं पुष्पमस्य । ) करवीर: । इति जटाधर: ॥ ( अस्य पर्य्यायो यथा,—
"करवीर: श्वेतपुष्प: शतकुम्भोऽश्वमारक: ।
द्वितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ )
रोहितवृक्ष: । इति शब्दमाला ॥ रक्तकाञ्चनवृक्ष: । दाड़िमवृक्ष: । वकवृक्ष: । इति रत्नमाला ॥ वन्धूकवृक्ष: । पुन्नागवृक्ष: । इति राजनिर्घण्ट: ॥ ( रक्तवर्णपुष्पविशिष्टे, त्रि । ) यथा, वृहत्संहितायाम् । १५ । १४ ।
"इन्द्राग्निदैवते रक्तपुष्पफलशाखिन: सतिलमुद्गा: ।
कार्पासमाषचणका: पुरन्दरहुताशभक्ताश्च ॥")

रक्तपुष्पक:, पुं, ( रक्तं पुष्पमस्य । कन् । ) पलाशवृक्ष: । ( अस्य पर्य्यायो यथा,—
"पलाश: किंशुक: पर्णो यज्ञियो रक्तपुष्पक: ।
क्षारश्रेष्ठो वातहरो ब्रह्मवृक्ष: समिद्वर: ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ )
रोहितकवृक्ष: । इति जटाधर: ॥ पर्प्पट: । शाल्मलिवृक्ष: । इति राजनिर्घण्ट: ॥

रक्तपुष्पा, स्त्री, ( रक्तं पुष्पं यस्या: ।) शाल्मलिवृक्ष: । इति जटाधर: ॥ ( अस्या: पर्य्यायो यथा,—
"शाल्मलिस्तु भवेन्मोचा पिच्छिला पूरणीति च ।
रक्तपुष्पा स्थिरायुश्च कण्टकाढ्या च तूलिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ )
पुनर्नवा । तत्पर्य्यायो यथा,—
"पुनर्नवा परा रक्ता रक्तपुष्पा शिलाटिका ॥"
सिन्दूरी । तत्पर्य्यायो यथा,—
"सिन्दूरी रक्तबीजा च रक्तपुष्पा सुकोमला ॥"
इति भावप्रकाश: ॥ )

रक्तपुष्पिका, स्त्री, ( रक्तपुष्पा+कन् । टापि अत इत्वम् । ) लज्जालु: । इति शब्दचन्द्रिका ॥ रक्तपुनर्नवा । भूपाटलि: । इति राजनिर्घण्ट: ॥

रक्तपुष्पी, स्त्री, ( रक्तं पुष्पं यस्या: । ङीष् । ) पाटलीवृक्ष: । इति जटाधर: ॥ जवा । आवर्त्तकीलता । नागदमनी । धातकीवृक्ष: । उष्ट्रकाण्डी । इति राजनिर्घण्ट: ॥ ( धातकी । तत्पर्य्यायो यथा,—
"धातकी रक्तपुष्पी स्यात् कुञ्जरा मद्यवासिनी ॥"
इति वैद्यकरत्नमालायाम् ॥ )

रक्तपूरकं, क्ली, (रक्तं पूरयतीति । पूर् + ण्वुल् । ) वृक्षाम्लम् । इति राजनिर्घण्ट: ॥ ( विवरणमस्य वृक्षाम्लशब्दे ज्ञातव्यम् ॥ )

रक्तप्रसव:, पुं, ( रक्त: रक्तवर्ण: प्रसव: पुष्पमस्य ।) रक्तकरवीर: । रक्ताम्लान: । इति राजनिर्घण्ट: ॥

रक्तफल:, पुं, ( रक्तं लोहितवर्णं फलमस्य । ) वटवृक्ष: । इति जटाधर: ॥ ( अस्य पर्य्यायो यथा,—
"वटो रक्तफल: शृङ्गी न्यग्रोध: स्कन्दजो ध्रुव: ।
क्षीरी वैश्रवणो वासो बहुपादो वनस्पति: ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ )

रक्तफला, स्त्री, ( रक्तं पक्वदशायां लोहितवर्णं फलमस्या: । ) बिम्बिका । इत्यमर: । २ । ४ । १३९ ॥ (अस्या: पर्य्यायो यथा,—
"तुण्डी रक्तफला बिम्बी तुण्डिकेरी च बिम्बिका ॥"
इति वैद्यकरत्नमालायाम् ॥ )
स्वर्णवल्ली । इति राजनिर्घण्ट: ॥ ( अस्या: पर्य्यायो यथा,—
"स्वर्णवल्ली रक्तफला काकायु: काकवल्लरी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ )

रक्तफेनज:, पुं, ( रक्तफेनात् जायते इति । जन् + ड: । ) वामपार्श्वस्थक्लोम । तत्पर्य्याय: । पुस्फुस: २ । इति हेमचन्द्र: । ३ । २६९ ॥

रक्तबिन्दु:, पुं, ( रक्तानां बिन्दु: । ) रक्तकणा । यथा,—
"रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरत: ।
समुत्पतति मेदिन्यास्तत्प्रमाणस्तदासुर: ॥"
इति मार्कण्डेये देवीमाहात्म्यम् ॥ )

रक्तबीज:, पुं, ( रक्तवर्णं बीजमस्य । ) दाड़िम: । इति राजनिर्घण्ट: ॥ ( अरिष्टकफल: । रीटा इति ख्यात: । तत्पर्य्यायो यथा,—
"अरिष्टकस्तु माङ्गल्य: कृष्णवर्णोऽर्थसाधन: ।
रक्तबीज: पीतफेन: फेनिलो गर्भपातन: ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
रक्तं शोणितं बीजं कारणमस्य । ) असुरविशेष: । स च शुम्भनिशुम्भसेनापति: देव्या हतश्च । यथा,—
"पलायनपरान् दृष्ट्वा दैत्यान् मातृगणार्द्दितान् ।
योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुर: ॥
रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरत: ।
समुत्पतति मेदिन्यास्तत्प्रमाणस्तदासुर: ॥
युयुधे स गदापाणिरिन्द्रशक्त्या महासुर: ।
ततश्चैन्द्री स्ववज्रेण रक्तबीजमताड़यत् ॥
कुलिशेनाहतस्याशु तस्य सुस्राव शोणितम् ।
समुत्तस्थुस्ततो योधास्तद्रूपास्तत्पराक्रमा: ॥
यावन्त: पतितास्तस्य शरीराद्रक्तबिन्दव: ।
तावन्त: पुरुषा जातास्तद्वीर्य्यबलविक्रमा: ॥
तस्याहतस्य बहुधा शक्तिशूलादिभिर्भुवि ।
पपात यो वै रक्तौघस्तेनासञ्छतशोऽसुरा: ॥
तैश्चासुरासृक्सम्भूतैरसुरै: सकलं जगत् ।
व्याप्तमासीत्ततो देवा भयमाजग्मुरुत्तमम् ॥
तान् विषण्णान् सुरान् दृष्ट्वा चण्डिका प्राह सत्वरा ।
उवाच कालीं चामुण्डे ! विस्तरं वदनं कुरु ॥
मच्छस्त्रपातसम्भूतान् रक्तबिन्दून् महासुरान् ।
रक्तबिन्दो: प्रतीच्छ त्वं वक्त्रेणानेन वेगिना ॥
भक्षयन्ती चर रणे तदुत्पन्नान् महासुरान् ।
एवमेष क्षयं दैत्य: क्षीणरक्तो गमिष्यति ॥
भक्ष्यमाणास्त्वया चोग्रा न चोत्पत्स्यन्ति चापरे ।
इत्युक्त्वा तां ततो देवी शूलेनाभिजघान तम् ॥
मुखेन काली जगृहे रक्तबीजस्य शोणितम् ।
ततोऽसावाजघानाथ गदया तत्र चण्डिकाम् ॥
तस्याहतस्य देहात्तु बहु सुस्राव शोणितम् ॥
यतस्ततस्तद्वक्त्रेण चामुण्डा संप्रतीच्छति ।
मुखे समुद्गता येऽस्या रक्तपातान्महासुरा: ।
तांश्चखादाथ चामुण्डा पपौ तस्य च शोणितम् ॥
देवी शूलेन वज्रेण बाणैरसिभिरृष्टिभि: ।
जघान रक्तबीजं तं चामुण्डापीतशोणितम् ।
स पपात महीपृष्ठे शस्त्रसंघसमाहत: ।
नीरक्तश्च महीपाल ! रक्तबीजो महासुर: ॥
ततस्ते हर्षमतुलमवापुस्त्रिदशा नृप ! ।
तेषां मातृगणो जातो ननर्त्तासृङ्मदोद्धत: ॥"
इति मार्कण्डेये देवीमाहात्म्यम् ॥
( महिषासुरपिता दानवो रम्भ एव जन्मान्तरे रक्तबीजो जात: । यथा, देवीभागवते । ५ । २ । ४४—४९ ।
"एतं रम्भं समानीय यथास्ते परमं प्रियम् ।
चितायां रोपयामासुस्तस्य देहस्य शुद्धये ॥
महिषी सा पतिं दृष्ट्वा चितायां रोपितं तदा ।
प्रवेष्टुं वा मतिं चक्रे पतिना सह पावकम् ॥
वार्य्यमाणापि यक्षै: सा प्रविवेश हुताशनम् ।
ज्वालामालाकुलं साध्वी पतिमादाय वल्लभम् ॥
महिषस्तु चितामध्यात् समुत्तस्थौ महाबल: ।
रम्भोऽप्यन्यद्वपु: कृत्वा नि:सृत: पुत्रवत्सल: ॥
रक्तबीजोऽप्यसौ जातो महिषोऽपि महाबल: ।
अभिषिक्तस्तु राज्येऽसौ हयारिरसुरोत्तमै: ॥
एवं स महिषो जातो रक्तबीजश्च वीर्य्यवान् ।
अवध्यस्तु सुरैर्दैत्यैर्मानवैश्च नृपोत्तम ! ॥")

रक्तबीजका, स्त्री, (रक्तो रक्तवर्णो बीजोऽस्या: । कन् + टाप् । ) तरटीवृक्ष: । इति राजनिर्घण्ट: ॥

रक्तमञ्जर:, पुं, (रक्ता रक्तवर्णा मञ्जरी । सा विद्यतेऽस्येति । "अर्श आदिभ्य: अच् ।" ५।२।१२७। इत्यच् । ) निचुलवृक्ष: । इति त्रिकाण्डशेष: ॥ ( गुणादयोऽस्य निचुलशब्दे ज्ञातव्या: ॥ )

रक्तमत्स्य:, पुं, ( रक्तो रक्तवर्णो मत्स्य: । ) रक्तवर्णो मत्स्यविशेष: । यथा,—
"यो रक्ताङ्गो नातिदीर्घो न चाण्वो
नातिस्थूलो रक्तमत्स्य: स उक्त: ।
शीतो रुच्य: पुष्टिकृद्दीपनोऽसौ
शाम्यं धत्ते पित्तदोषचयस्य ॥"
इति राजनिर्घण्ट: ॥

घृतमेव पचेत्तत्तु पश्चाद्ध लेहयेत् सदा ।
रक्तपित्तं चाम्लपित्तं क्षयं श्वासञ्च नाशयेत् ॥'
शतावरीपाकः । इति रक्तपित्ताधिकारः ॥"
इति भावप्रकाशः ॥

(तथास्य सनिदानपूर्व्वरूपलक्षणं सम्प्राप्तिश्च । 'पित्तं यथा भूतं लोहितपित्तसंज्ञां लभते तत्तथानुव्याख्यास्यामः । यदा जन्तुर्यवकोद्दालककोरदूषकप्रायाण्यन्नानि भुङ्क्ते भृशोष्णतीक्ष्णमपि चान्यदन्नजातं निष्पावमाषकुलत्थक्षारसूपोपहितं दधिमण्डोदश्वित्कट्वरकाञ्जिकोपहितं वाराहमाहिषाविकमात्स्यगव्यपिशितं पिण्याकपिण्डालुकशुष्कशाकोपहितं मूलकसर्षपलशुनकरञ्जशिग्रुकखरयूषभूस्तृणकसुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकोपदंशं सुरासौवीरकतुषोदकमैरेयमेदकमधूलकशुक्तकुवलबदराम्लप्रायानुपानं पिष्टान्नोत्तरभूयिष्ठमुष्णाभितप्तो वाऽतिमात्रमतिवेलं वा पयसा समश्नाति रौहिणीकं काणकपोतं वा सर्षपतैलक्षारसिद्धं कुलत्थपिण्याकजाम्बवलकुचपक्वैः शौक्तिकैर्वा सह क्षीरमाममतिमात्रं अथवा पिबत्युष्णाभितप्तस्तथैवमाचरतः पित्तं प्रकोपमापद्यते । लोहितञ्च स्वप्रमाणमतिवर्त्तते । तस्मिन् प्रमाणातिप्रवृत्ते पित्तं प्रकुपितं शरीरमनुसर्पद्यदेव यकृत्प्लीहप्रभवाणां लोहितवहानां स्रोतसां लोहिताभिष्यन्दगुरूणि मुखान्यासाद्य प्रतिपद्यते तदेव लोहितं दूषयति । स संसर्गाल्लोहितप्रदूषणाल्लोहितगन्धवर्णानुविधानाच्च पित्तं लोहितमित्याचक्षते । तस्येमानि पूर्व्वरूपाणि । तद्यथा । अनन्नाभिलाषो भुक्तस्य विदाहः शुक्ताम्लरसगन्ध उद्गारश्छर्देरभीक्ष्णमागमनं छर्दितस्य बीभत्सता स्वरभेदो गात्राणां सदनं परिदाहश्च मुखाद्धूमागम इव लोहलोहितमत्स्यामगन्धित्वमपि चास्यस्य रक्तहरितहारिद्रत्वमङ्गावयवशकृन्मूत्रस्वेदलालासिङ्घाणकास्यकर्णमलपिडकालिकापिडकारागसवेदनालोहितनीलपीतश्यावानामर्च्चिष्मताञ्च रूपाणां स्वप्रदर्शनमभीक्ष्णमिति लोहितपित्तपूर्व्वरूपाणि । उपद्रवास्तु खलु दौर्ब्बल्यारोचकाविपाकश्वासकासज्वरातीसारशोफशोषपाण्डुरोगस्वरभेदाः । मार्गौ पुनरस्य द्वौ ऊर्द्ध्वञ्चाधश्च तद्बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादूर्द्ध्वं प्रपद्यमानं कर्णनासिकानेत्रास्येभ्यः प्रच्यवते । बहुवाते तु शरीरे वातसंसर्गादधः प्रपद्यमानं मूत्रपुरीषमार्गाभ्यां प्रच्यवते । बहुवातश्लेष्मणि तु शरीरे श्लेष्मवातसंसर्गाद्द्वावपि मार्गौ प्रपद्यते । तौ मार्गौ प्रपद्यमानं सर्व्वेभ्य एव यथोक्तेभ्यः खेभ्यः प्रच्यवते शरीरस्य । तत्र यदूर्द्ध्वभागं तत्साध्यं विरेचनोपक्रमणीयत्वात् बह्वौषधत्वाच्च । यदधोभागं तद्याप्यं वमनोपक्रमणीयत्वात् अल्पौषधत्वाच्च । यदुभयभागं तदसाध्यं वमनविरेचनायोगित्वादनौषधत्वाच्च । रक्तपित्तप्रकोपस्तु खलु पुरा दक्षयज्ञोद्ध्वंसे रुद्रकोपामर्षाग्निना प्राणिनां परिगतशरीरप्राणानामनुज्वरमभवत् । तस्य शुकादिभ्यो दावाग्निरिवापतितस्यात्ययिकस्याशु प्रशान्त्यै मतिमता मात्रां देशं कालञ्चाभिसमीक्ष्य संशमनैरपतर्पणैर्वा मृदुमधुरशिशिरतिक्तकषायैरभ्यवहार्य्यैः प्रदेहपरिषेकावगाहसंस्पर्शैर्वमनाद्यैर्वा तत्रावहितमतिः ।"
अथैतस्योपशमनोपायो यथा --
"साध्यं लोहितपित्तं तद्यदूर्द्ध्वं प्रतिपद्यते ।
विरेचनस्य योगित्वाद्बहुत्वाद्भेषजस्य च ॥
वमनं नहि पित्तस्य हरणे श्रेष्ठमुच्यते ।
यच्च तत्रानुगो वायुस्तच्छान्त्यै चावरं मतम् ॥
स्याच्च योगावहं तत्र कषायं तिक्तकानि च ।
तस्माद्याप्यं समाख्यातं यदुक्तमनुलोमगम् ॥
रक्तपित्तन्तु यन्मार्गौ द्वावपि प्रतिपद्यते ।
असाध्यमपि तज्ज्ञेयं पूर्व्वोक्तादपि कारणात् ॥
नहि संशोधनं किञ्चिदस्त्यस्य प्रतिमार्गगम् ।
प्रतिमार्गञ्च हरणं रक्तपित्ते विधीयते ॥
एवमेवोपशमनं सर्व्वशो नास्य विद्यते ।
संसृष्टेषु च दोषेषु सर्व्वजिच्छमनं मतम् ॥
इत्युक्तं त्रिविधोदर्कं रक्तं मार्गविशेषतः ॥
एभ्यस्तु खलु हेतुभ्यः किञ्चित् साध्यं न सिध्यति ।
प्रेष्योपकरणाभावाद्दौरात्म्याद्वैद्यदोषतः ॥
अकर्म्मतश्च साध्यत्वं कश्चिद्रोगोऽतिवर्त्तते ।
तत्र साध्यत्वमेकं स्यात् साध्ययाप्यपरिक्रमात् ॥
रक्तपित्तस्य विज्ञानमिदं तस्योपदेक्ष्यते ।
यत् कृष्णमथवा नीलं यद्वा शक्रधनुष्प्रभम् ।
रक्तपित्तमसाध्यन्तद्वाससो रञ्जनञ्च यत् ।
भृशं पूत्यतिमात्रञ्च सर्व्वोपद्रववच्च यत् ॥
बलमांसक्षये यच्च तच्च रक्तमसिद्धिमत् ॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद्दृश्यं वियच्चैव तच्चासाध्यमसंशयम् ॥
तत्रासाध्यं परित्यज्य याप्यं यत्नेन यापयेत् ।
साध्यञ्चावहितः सिद्धैर्भेषजैः साधयेद्भिषक् ॥
कारणं नाम निर्वृत्तिं पूर्व्वरूपाण्युपद्रवान् ।
मार्गौ दोषानुबन्धञ्च साध्यत्वं न च हेतुमत् ॥
निदाने रक्तपित्तस्य व्याजहार पुनर्व्वसुः ।
वीतमोहरजोदोषलोभमानमदस्पृहः ॥"
इति चरके निदानस्थाने द्वितीयोऽध्यायः ॥ * ॥
अथास्य चिकित्सायां रसः ।

"सूतं गन्धं माक्षिकञ्चैव लौहं
सर्व्वं घृष्ट्वा चैकवासादकेन ।
लौहे पात्रे गोमये पाचयित्वा
रात्रौ दद्यात् रक्तपित्तप्रशान्त्यै ॥

इति सुधानिधिरसः ॥

मृताभ्रसूतलौहाणां माक्षिकं रसतालकम् ।
मस्तकञ्च भवेत्तु [illegible] ।
दिनैकं मर्द्दयेत् खल्वे सिताक्षौद्रयुतावटी ।
माषमात्रा निहन्त्याशु रक्तपित्तं सुदारुणम् ।
ज्वरं दाहं तृषां ग्लानिं शोषं पित्तान्तको रसः ॥

इति रक्तपित्तान्तको रसः ॥

शर्करातिलसंयुक्तं त्रिकत्रययुतन्त्वयम् ।
रक्तपित्तं निहन्त्याशु चाम्लपित्तहरं परम् ॥

इति शर्करादि लौहम् ॥'

इति वैद्यकरसेन्द्रसारसंग्रहे रक्तपित्ताधिकारः ।
अथास्य पथ्यापथ्यविधिः ।

"अधोगते छर्दनमूर्द्ध्वनिर्गमे
विरेचनं स्यादुभयत्र लङ्घनम् ।
पुरातनाः षष्टिकशालिकोद्रव-
प्रियङ्गुनीवारयवप्रशातिकाः ॥
मुद्गा मसूराश्चणकाश्च तुवर्यो
मकुष्टकाश्चिन्नटवह्निमत्स्याः ।
शशः कपोतो हरिणैणलाव-
शराविपारावतवर्त्तकाश्च ॥
वकाः उरभ्राश्च सकालपुच्छाः
कपिञ्जलाद्याश्च कषायवर्गः ।
गवामजायाश्च पयो घृतञ्च
घृतं माहिष्याः पनसं प्रियालम् ॥
रम्भाफलं कर्कटतण्डुलीय-
पटोलवेत्राग्रमथार्द्रकाणि ।
पुराणकूष्माण्डफलञ्च पक्व-
फलानि तद्वोत्पलनालानि वासा ॥
स्वादूनि बिम्बानि च दाडिमानि
खर्ज्जूरधात्रीमिसिनारिकेलम् ।
कशेरुशृङ्गाटकपुष्कराणि
कपित्थतालूकपरूषकाणि ॥
भूनिम्बशाकं पिचुमर्द्दपत्रं
तुम्बीकलिङ्गानि च लाजसक्तुः ।
द्राक्षा सिता माक्षिकमैक्षवञ्च
शीतोदकञ्चौद्भिदवारि चापि ॥
सेकोऽवगाहः शतधौतसर्पि-
रभ्यङ्गयोगः शिशिरप्रदेहः ।
हिमानिलश्चन्दनमिन्दुपादाः
कथा विचित्राश्च मनोऽनुकूलाः ॥
धारागृहं भूमिगृहं सुशीतं
वैदूर्य्यमुक्तामणिधारणञ्च ।
रम्भोत्पलाम्भोरुहपत्रशय्या
चौमाम्बरञ्चोपवनं सुशीतम् ॥
प्रियङ्गुकाचन्दनरूषिताना-
मालिङ्गनञ्चापि वराङ्गनानाम् ।
पद्माकराणां सरितां ह्रदानां
चन्द्रोदयानां हिमवद्दरीणाम् ॥
सुशीतलानां गिरिनिर्झराणां
स्मृतिः प्रशस्तानि च कीर्त्तितानि ।
प्रयोरमोद हिमवालुका च
मित्रं नृणां शोणितपित्तरोगे ॥"

अथापथ्यानि ।
"व्यायामाध्वनिषेवणं रविकरस्तीक्ष्णानि
कर्म्माणि च ।
क्षोभो वेगविधारणञ्चपलता हृद्यन्धयानानि च ।
स्वेदासृक्स्रुतिधूमपानसुरतक्रोधाः कुलत्था गुडो
वार्त्ताकं तिलमाषसर्षपदधिक्षाराश्च कोपं पयः ॥"
इति वैद्यकपथ्यापथ्यविधौ रक्तपित्ताधिकारः ॥)

आच्छाद्यैरण्डपत्रेण स्वाद्धुष्णं याममुग्मतः ॥
धान्यराशौ न्यसेत् पश्चाद्दद्याद्वाचासदुद्धरेत् ।
संचूर्ण्य गालयेद्वस्त्रे सत्यं वारितरं भवेत् ॥
त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः ।
नवभागोन्मितैरेतैः सम एष रसो भवेत् ॥
निष्कद्वयमितं नित्यं मधुना सह लेहयेत् ।
अयमग्निरसो नाम्ना कासक्षयहरः परः ॥
इति अग्निरसः शार्ङ्गधरे ॥"

इति भावप्रकाशस्य मध्यखण्डे द्वितीयभागे राजयक्ष्माधिकारः ॥ * ॥ (अथास्य पौराणिकं विवरणं यथा,—

"दिवौकसां कथयतामृषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥
रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः ।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात् ॥
दुहितॄणामसम्भोगाच्छेषाणाञ्च प्रजापतेः ।
क्रोधो निश्वासरूपेण मूर्त्तिमान्निःसृतो मुखात् ॥
प्रजापतेर्हि दुहितॄरष्टाविंशतिमंशुमान् ।
भार्य्यार्थं प्रतिजग्राह न च सर्व्वास्ववर्त्तत ॥
गुरुणा तमवध्यानं भार्य्यास्वसमवर्त्तिनम् ।
रजोऽन्वमबलं दीनं यक्ष्मा शशिनमाविशत् ॥
सोऽभिभूतोऽतिगुरुणा गुरुक्रोधेन निष्प्रभः ।
देवदेवर्षिसहितो जगाम शरणं गुरुम् ॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः ।
प्रसादं कृतवान् सोमस्ततोऽश्विभ्यां चिकित्-
सितः ॥
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः ।
तेजसा वर्द्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च ॥
क्रोधो यक्ष्मा ज्वरो रोग एकोऽर्थो दुःखसंज्ञितः ।
यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो
मतः ॥
स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं लोकमागतः ।
लब्ध्वा चतुर्व्विधं हेतुं समाविशति मानवान् ॥
अयथाबलमारम्भं वेगसन्धारणं क्षयम् ।
यक्ष्मणः कारणं विद्यात् चतुर्थं विषमाशनम् ॥"

अस्य विशेषहेतुर्यथा,—

"युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः ।
पतनैरभिघातैर्वा साहसैर्वा तथापरैः ॥
अयथाबलमारब्धैर्जन्तोरुरसि विक्षते ।
वायुः प्रकुपितो दोषावुदीर्य्योभौ विधावति ॥"

तथास्य लक्षणादिकं यथा,—

"स शिरःस्थः शिरःशूलं करोति गलमाश्रितः ।
कण्ठोद्ध्वंसञ्च कासञ्च स्वरभेदमरोचकम् ॥
पार्श्वशूलञ्च पार्श्वस्थो वर्च्चोभेदं गुदे स्थितः ।
जृम्भां ज्वरञ्च सन्धिस्थ उरःस्थश्चोरसो रुजम् ॥
क्षणनाच्चोरसो रक्तं कासमानः कफानुगम् ।
जर्ज्जरेणोरसा कृच्छ्रमुरःशूली निरस्यति ॥
इति साहसिकं यक्ष्मा रूपैरेतैः प्रपद्यते ।
एकादशभिरात्मज्ञो भवेत्तस्मान्न साहसम् ॥
ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् ।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः ॥
तदा वेगप्रतीघातात् कफपित्ते समीरयन् ।
ऊर्द्ध्वं तिर्य्यगधः कुर्य्याद्विकारान् कुपितोऽनिलः ॥
प्रतिश्यायञ्च कासञ्च स्वरभेदमरोचकम् ।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्द्दनम् ॥
अङ्गमर्द्दं मुहुश्छर्द्दिं वर्च्चोभेदं त्रिलक्षणम् ।
रूपाण्येकादशैतानि यक्ष्मा येरुच्यते महान् ॥"

इति चरके चिकित्सास्थाने अष्टमेऽध्याये ॥

अस्य चिकित्सा यथा,—

"काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्र-
कम् ।
विद्रुमं मनवैक्रान्तं तारं ताम्रञ्च वङ्गकम् ॥
कस्तूरिका लवङ्गञ्च जातिकोषैलवालुका ।
प्रत्येकं बिन्दुमात्रञ्च सर्व्वं मर्द्द्यं प्रयत्नतः ।
कन्यानीरेण संमर्द्द्य भृङ्गराजरसेन च ।
अजाक्षीरेण संभाव्यं प्रत्येकं दिवसत्रयम् ॥
चतुर्गुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
अनुपानं प्रदातव्यं यथादोषानुसारतः ॥
नानारोगप्रशमनं सर्व्वोपद्रवसंयुतम् ।
क्षयं हन्ति तथा कासं यक्ष्माणं श्वासमेव च ॥
प्रमेहान् विंशतिञ्चैव दोषत्रयसमुत्थितान् ।
सर्व्वान् रोगान् निहन्त्याशु भास्करस्तिमिरं
यथा ॥"

इति हेमकाञ्चनाभ्रवटी ॥

"शिलाजतुमधुव्योषताप्यलौहरजांसि च ।
क्षीरेणालोडितस्याशु यक्ष्मा क्षयमवाप्नुयात् ॥"

इति शिलाजत्वादिलौहम् ॥ * ॥

इति वैद्यकरसेन्द्रसारसंग्रहे राजयक्ष्माधि-
कारे ॥ * ॥ )

यच्छन्, [ त् ] त्रि, दानकर्त्ता । उपरमकर्त्ता । दानधातोर्यमधातोश्च शतृप्रत्ययेन निष्पन्नः ॥

यज, ऐ ञ औ देवार्च्चादानसङ्गतौ । इति कवि-कल्पद्रुमः ॥ ( भ्वा०-उभ०-सक०-अनिट् । ) सङ्गस्य कृतिः सङ्गकृतिः । ऐ, इष्यात् । ञ, यजति यजते विष्णुं सुधीः पूजयतीत्यर्थः । पशुना रुद्रं यजते पशुं रुद्राय ददातीत्यर्थः । यजति सन्तं सन् सता सह सङ्गं करोतीत्यर्थः । औ, यष्टा । इति दुर्गादासः ॥

यजतः, पुं, (यजतीति । यज्+"भृमृदृशियजि-पर्व्विपच्यमितमिनमिहर्य्यिभ्योऽतच् ।" उणा० ३।११०।इति अतच् ।) ऋत्विक् । इति सिद्धान्त-कौमुदी ॥ ( ऋषिविशेषः । स तु ऋग्वेदस्य ५ म० ६७।६८ । सूक्तयोः ऋषिः ॥ त्रि, यष्टव्यः । यथा, ऋग्वेदे । १ । १८१ । ३ ।

"अहंपूर्व्वो यजतो धिष्ण्या यः ॥"

"यजतो यष्टव्यः ।" इति तद्भाष्ये सायणः ॥ तथा च तत्रैव । २ । ५ । ८ ।

"यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः ।"

"यजतेभ्यः सर्व्वेभ्यो यजनीयेभ्यो देवेभ्यः ।" इति तद्भाष्ये सायणः ॥)

यजतिः, पुं, (यज्+बाहुलकात् अतिः ।) यागः । यथा,—

"यजतिषु येयजामहं कुर्य्यान्नानुयाजेषु ।"

इति मलमासतत्त्वधृता श्रुतिः ॥

यजत्रः, पुं, (यजतीति । यज्+"अमिनक्षियजि-वधिपतिभ्योऽत्रन् ।" उणा० ३ । १०५ । इति अत्रन् । ) अग्निहोत्री । इत्युणादिकोषः ॥ (यजनशीले, त्रि । यथा, ऋग्वेदे ।७।५२।१६।

"पिता च तन्नो महान् यजत्रो
विश्वेदेवाः समनसो जुषन्त ॥"

"यजत्रः यजनशीलः ।" इति तद्भाष्ये सायणः ॥)

यजन्, [त्] पुं, यागकर्त्ता । यजधातोः शतृप्रत्ययेन निष्पन्नः ॥

यजनं, क्ली, (इज्यते इति । यज्+ल्युट् ।) यागः । ( यथा, महाभारते । ७ । ५३ । ३७ ।

"यस्य सेन्द्रामरगणा बृहस्पतिपुरोगमाः ।
देवा विश्वसृजः सर्व्वे यजनान्ते समासते ॥")

तत्तु ब्राह्मणस्य षट्कर्म्मान्तर्गतकर्म्मविशेषः । यथा, मानवे १ अध्याये ।

"अध्यापनं अध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत् ॥"

अस्य लक्षणं यथा । चरुचीराज्यपुरोडाश-सोमौषधिपशुप्रभृतिभिर्हविर्भिः खदिरपलाशा-श्वत्थन्यग्रोधोडुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवो-दूखलमुषलकुठारखनित्रयूपदार्व्वदर्भचर्म्मग्राव-पवित्रभाजनादिभिर्यज्ञोपकरणैर्ब्रह्महोत्रध्वर्यु-ब्रह्मादिभिर्ऋत्विग्भिः काम्यनैमित्तिकानां पश्चादिपूर्व्वकाणां यथोक्तदक्षिणानां समापनं यजनम् । इति श्राद्धविवेकधृतदेवलवचनम् ॥ (इज्यतेऽत्रेति । यज्+अधिकरणे ल्युट् । यज्ञ-स्थानम् । यथा, श्रीमद्भागवते । ४ । ४ । ६ ।

"स्वहार्च्चयःकाञ्चनदर्भचर्म्मभि-
र्निरस्तभाण्डं यजनं समाविशत् ॥"

"यजनं यज्ञस्थानम् ।" इति तट्टीकायां श्रीधर-स्वामी ॥ )

यजन्तः, पुं, यागकर्त्ता । यजधातोर्झच्प्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ॥

यजमानः, पुं,(यजतीति । यज्+शानच् ।) अध्वरे आदेष्टा । तत्पर्य्यायः । व्रती २ यष्टा ३ । इत्य-मरः ।२।७।८॥ (यथा, श्रीमद्भागवते । ३।१६।८ ।

"नाहं तथाद्मि यजमानहविर्वितान
श्च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन ॥" )

"व्रत्यादित्रयं यजमाने । अध्वरे यागविषये मम इष्टसम्पादनाय यथार्थं कर्म्म कुरु इति ऋत्वि-जामादेशको यागस्वामी व्रत्यादिशब्दत्रयवाच्य इत्यर्थः । व्रतमैणाजिनादिधारणं विद्यतेऽस्य व्रती इन् । यजते इति तृनि यष्टा । शाने यजमानः । स व्रती सोमपानवति अध्वरे यज-मानः सन् दीक्षित उच्यते अन्यत्राप्युपचारात् । दीक्ष मौण्ड्येज्योपनयनव्रतादेशेषु क्तः दीक्षा-शब्दादितो वा ।" इति भरतः ॥

यजाकः, त्रि, (यजतीति । यज् दाने+आकन् ।) दानकर्त्ता । इत्युणादिकोषः ॥

यजिः, पुं, (यजतीति । यज्+"सर्व्वधातुभ्य इन् ।" उणा० ४।११७। इति इन् ।) यष्टा । इत्युणादि-कोषः ॥

रक्तशीर्षकः, पुं, ( रक्तं रक्तवर्णं शीर्षं अग्रमस्य । कन् । ) सरलद्रवः । इति रत्नमाला ॥

रक्तशृङ्गिकं, क्ली, विषम् । इति राजनिर्घण्टः ॥

रक्तसंज्ञं, क्ली, ( रक्तमिति संज्ञास्य । ) कुङ्कुमम् । इति त्रिकाण्डशेषः ॥ ( गुणादयोऽस्य कुङ्कुमशब्दे विज्ञेयाः ॥ )

रक्तसन्ध्यिका, स्त्री, ( रक्ताय रक्तपानाय सम्यक् दृश्यतीति । दृश + ण्वुल् । टापि अत इत्वञ्च । ) जलौका । इति राजनिर्घण्टः ॥

रक्तसन्ध्यकं, क्ली, ( "रक्तं सन्ध्येवेति रघुनाथः । रक्तान् सन्धीन् अकति गच्छति व्याप्नोतीति । कः । इति रायमुकुटभरतमल्लिकौ ।") रक्तकह्लारम् । तत्पर्य्यायः । हल्लकम् २ । इत्यमरः । १ । १० । ३६ ॥

रक्तसरोरुहं, क्ली, ( रक्तं सरोरुहम् । ) रक्तपद्मम् । इत्यमरः । १ । १० । ४१ ॥

रक्तसर्षपः, पुं, ( रक्तवर्णः सर्षपः । ) राजिका । इति राजनिर्घण्टः ॥

रक्तसहा, स्त्री, ( रक्तं सहते इति । सह + अच् + टाप् । ) रक्तम्लानः । इति राजनिर्घण्टः ॥

रक्तसारं, क्ली, ( रक्तवर्णः सारोऽस्य । ) रक्तचन्दनम् । ( यथास्य पर्य्यायः ।
"रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम् ।
तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ )
पत्तङ्गम् । इति राजनिर्घण्टः ॥ ( अस्य पर्य्यायो यथा,—
"पत्ताङ्गं रक्तसारञ्च सुरङ्गं रञ्जनन्तथा ।
पट्टरञ्जकमाख्यातं पत्तूरञ्च कुचन्दनम् ॥")
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ )

रक्तसारः, पुं, ( रक्तः सारो यस्य । ) अम्लवेतसः । रक्तखदिरः । इति राजनिर्घण्टः ॥ ( अस्य पर्य्यायो यथा,—
"खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
रक्तं सारो यस्येति । शोणितसारयुक्ते, त्रि । यथा, बृहत्संहितायाम् । ६८ । ६७ ।
"ताल्वोष्ठदन्तपालीजिह्वानेत्रान्तपायुकरचरणैः ।
रक्तैस्तु रक्तसारा बहुसुखवनितार्थपुत्रयुताः ॥")

रक्तसौगन्धिकं, क्ली, ( रक्तवर्णं सौगन्धिकम् । ) रक्तकह्लारम् । इति जटाधरः ॥

रक्तस्रावः, पुं, ( रक्तं स्रावयतीति । स्रु + णिच् + अच् । ) वेतसाम्लः । इति जटाधरः ॥ ( रक्तस्य स्रावः । ) रक्तपतनम् । ( यथा, बृहत्संहितायाम् । ८७ । ३५
"क्वणन्तो नैरृतभागे रक्तस्रावोऽथ पश्चकामश्च ।
अपराधैर्व्वर्मकृतं विनश्यते चर्म्मकारभयम् ॥")

रक्तहंसा, स्त्री, ( रक्ताः वशीभूताः हंसा अत्र । ) रागिणीविशेषः । इति हलायुधः ॥

रक्ता, स्त्री, ( रक्त + टाप् । ) गुञ्जा । ( अस्याः पर्य्यायो यथा,—
"रक्ता सा काकचिञ्ची स्यात् काकानन्ती च रक्तिका ।
काकादनी काकपीलुः सा स्मृता काकवल्लरी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ )
लाक्षा । मञ्जिष्ठा । उष्ट्रकाण्डी । इति राजनिर्घण्टः ॥

रक्ताकारः, पुं, (रक्तवर्ण आकारः अवयवोऽस्य ।) प्रवालः । इति राजनिर्घण्टः ॥ ( विशेषोऽस्य प्रवालशब्दे विज्ञेयः ॥ )

रक्ताक्तं क्ली, (रक्तेन रक्तवर्णेन अक्तं म्रक्षितम् ।) रक्तचन्दनम् । इति जटाधरः ॥ शोणितमिश्रिते, त्रि ॥

रक्ताक्षः, पुं, ( रक्ते लोहिते अक्षिणी यस्य । "अक्ष्णोऽदर्शनात् ।" ५ । ४ । ७६ । इति अच् । ) महिषः । पारावतः । चकोरः । क्रूरः । इति मेदिनी । ष, ४४ ॥ सारसः । इति राजनिर्घण्टः ॥ ( अब्दविशेषः । यथा, बृहत्संहितायाम् । ८ । ५१ ।
"रक्ताक्षमब्दं कथितं तृतीयं
यस्मिन् भयं दंष्ट्रिकृतं गदाश्च ॥" )
रक्तवर्णचक्षुर्युक्ते, त्रि । ( यथा,रामायणे । २ । ८८ । १६ ।
"कथमिन्दीवरश्यामो रक्ताक्षः प्रियदर्शनः ।
सुखभागी न दुःखार्हः शयितो भुवि राघवः ॥"
अयन्तु सदा लक्ष्मीयुक्तो भवेत् । यथा, ज्योतिःसागरे ।
"न श्रीस्त्यजति रक्ताक्षं नार्थः कनकपिङ्गलम् ।
न दीर्घबाहुमैश्वर्य्यं न सौख्यं प्रहसन्मुखम् ॥")

रक्ताङ्गं, क्ली, ( रक्तवर्णमङ्गमस्य । ) विद्रुमः । कुङ्कुमम् । इति मेदिनी । गे, ४८ ॥ (रक्तचन्दनम् । यथा, भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ।
"रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम् ।
तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम् ॥" )

रक्ताङ्गः, पुं, ( रक्तमङ्गं यस्य । ) मङ्गलग्रहः । कम्पिल्लः । इति मेदिनी । गे, ४७ ॥ ( अस्य पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
"कम्पिल्लकस्तु रक्ताङ्गो गुण्डारोचनिकेति सा ॥"
"कम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीऽपि च ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ॥ )
प्रवालः । मत्कुणः । इति राजनिर्घण्टः ॥ मत्स्यकम् । इति शब्दरत्नावली ॥ (नागविशेषः । यथा, महाभारते । १ । ५७ । १७ ।
"ऋषभो वेगवान्नागः पिण्डारकमहाहनू ।
रक्ताङ्गः सर्व्वसारङ्गः समृद्धः पटवासकौ ॥")

रक्ताङ्गी, स्त्री, ( रक्ताङ्ग + ङीष् । ) जीवन्ती । इति मेदिनी । गे, ४८ ॥ मञ्जिष्ठा । इति भावप्रकाशः ॥

रक्तातिसारः, पुं, ( रक्तं अत्यन्तं सरत्यस्मात् । सृ + घञ् । ) रोगविशेषः । "तस्य संप्राप्तिमाह ।
'पित्तकृन्ति यदात्यर्थं द्रव्यमश्नाति पैत्तिके ।
तद्दोषाज्जायते शीघ्रं रक्तातीसार उल्बणः ॥'
तस्य चिकित्सा ।
'वत्सकस्य त्वगार्द्रा दाडिमफलसभया त्वक् ।
त्वग्युगलं पलमानं विपचेदष्टाङ्गसम्मिते तोये ॥
अष्टमभागं शेषं क्वाथं मधुना पिबेत् पुरुषः ।
रक्तातिसारसुदारुणमतिशयितं नाशयेन्नियतम् ॥
इति कुटजदाडिमक्वाथः ॥ * ॥
'गोदुग्धजप्रनीतन्तु मधुना सितया सह ।
लीढं रक्तातिसारे तु ग्राहकं परमं महत् ॥'
इति नवनीतावलेहः ॥ * ॥
'पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना ।
रक्तातिसारजित्रक्तपित्ततृड्दाहमेहनुत् ॥'
चन्दनमत्र श्वेतम् । इति चन्दनकल्कः ॥" इति भावप्रकाशः ॥ ( तथा च ।
"यस्तु रक्तगुदविरेचने शोणदाहमतिरिच्यते ।
रक्तातिसार इति विज्ञेयो वैद्यैर्महामतिभिः ॥
धन्वनागरमुस्ता च वालकं वालविल्वकम् ।
बलानागबला चेति क्वाथो रक्तातिसारिणाम् ॥
दाडिमञ्च कपित्थञ्च पथ्याजम्वाम्रपल्लवान् ।
पिष्ट्वा देया मस्तुयुक्ता रक्तातिसारवारणाः ॥
गुडेन पक्वं दातव्यं बिल्वं रक्तातिसारिणे ।
मधुकं मधुयुक्ता वा दध्ना रक्तातिसारहा ॥
वत्सकातिविषानागराभया
पेषितञ्च मधुमस्तुसंयुतम् ।
लेह एव मधुना च मानुषे
रक्तवाहमति वारयत्यपि ॥
कुटजत्वक् च पाठा च बिल्वं बिल्वञ्च धातकी ।
मधुना सहितं चूर्णं देयं रक्तातिसारहम् ॥
इति रक्तातिसारः ।" इति हारीते चिकित्सितस्थाने तृतीयेऽध्याये ॥ )

रक्ताधारः, पुं, ( रक्तस्याधारः । ) चर्म्म । इति राजनिर्घण्टः ॥

रक्तापहं, क्ली, ( रक्तमपहन्तीति । हन् + डः । ) वोलम् । इति राजनिर्घण्टः ॥

रक्तापामार्गः, पुं, ( रक्तवर्णः अपामार्गः । ) रक्तवर्णापामार्गक्षुपः । राङ्गा आपाङ् इति वङ्गभाषा । लाल चिरचिरी इति हिन्दी भाषा । तत्पर्य्यायः । क्षुद्रापामार्गः २ आघट्टकः ३ दुग्धिनिका ४ रक्तविट् ५ कल्यवल्लिका ६ । अस्य गुणाः । शीतलत्वम् । कटुत्वम् । कफवातव्रणकण्डूविषनाशित्वम् । संग्राहित्वम् । वान्तिकारित्वञ्च । इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः । अथ रक्तचिरचिरा ।
"रक्तोऽन्यो वशिरो वृत्तफलो धामार्गवोऽपि च ।
प्रत्यक्पर्णी केशपर्णी कथिता कपिपिप्पली ॥
अपामार्गोऽरुणो वातविष्टम्भी कफहृद्धिमः ।
रूक्षः पूर्ब्बगुणैर्न्यूनः कथितो गुणवेदिभिः ॥
अपामार्गफलं स्वादु रसे पाके च दुर्ज्जरम् ।
विष्टम्भि वातलं रूक्षं वातपित्तप्रसादनम् ॥"
इति भावप्रकाशः ॥

रक्ताम्बरं, क्ली, ( रक्तं रञ्जितमम्बरम् । ) काषायवस्त्रम् । यथा,—

त्वामतिक्रम्य मधुना राजन् कुम्भीनसी हृता” ॥)

कुम्भीपाकः, पुं, (कुम्भ्यां उखायां पाक इव पाको यत्र ।) नरकविशेषः । इति जटाधरः ॥ तत्पर्य्यायः । सम्प्रतापनः २ । इति मनुः ॥ “य इह पशून् पक्षिणो वा प्राणतो रन्धयति तं परत्र यमदूताः तप्ततैले रन्धयन्ति यत्र । इति श्रीभागवते । ६ । २६ । ७ ॥

कुम्भीरः, पुं, (कुम्भिनं हस्तिनमपि ईरयति । ईर + “कर्म्मण्यण्” । ३ । २ । १ ।) जलजन्तुविशेषः । कुमीर इति भाषा । तत्पर्य्यायः । नक्रः २ । इत्यमरः ॥ १ । १० । २१ ॥ कुम्भीलः ३ । इति तट्टीका ॥ गिलग्राहः ४ महाबलः ५ । इति राजनिर्घण्टः ॥ वार्भटः ६ अम्बुकिरातः ७ अम्बुकण्टकः ८ । इति शब्दरत्नावली ॥
(यथा, महाभारते । १३ । १११ । ५८ ।
“गर्दभत्वन्तु संप्राप्य दशवर्षाणि जीवति ।
संवत्सरन्तु कुम्भीरस्ततो जायेत मानवः” ॥)

कुम्भीरमक्षिका, स्त्री, (कुम्भीर इत्याख्या मक्षिका । यद्वा कुम्भीरोपपदयुक्ता मक्षिका ।) मक्षिकाविशेषः । कुमीरा पोका इति भाषा । तत्पर्य्यायः । कणा २ । इति हारावली ॥

कुम्भीलः, पुं, (कुम्भीर + रस्य लः ।) कुम्भीरः । इत्यमरटीका ॥

कुम्भीवीजं, क्ली, (कुम्भ्या वीजम् ।) जयपालः । इति राजनिर्घण्टः ॥ (जयपालशब्देऽस्य गुणादिकं ज्ञेयम् ॥)

कुर श शब्दे । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सेट् ।) श कुरति कोरिता । इति दुर्गादासः ॥

कुरका, स्त्री, (कुर् + कः । कुरः शब्दः कायति प्रकाशतेऽस्मिन् । कै + कः ।) सल्लकीवृक्षः । इति राजनिर्घण्टः ॥

कुरङ्करः, पुं, (कुरमित्यव्यक्तशब्दं करोति । कुरम् + कृ + टः ।) सारसपक्षी । इति हेमचन्द्रः ॥

कुरङ्कुरः, पुं, (कुरं इत्यस्फुटशब्दं कुरति । कुर् + कः ।) सारसपक्षी । इति हारावली ॥

कुरङ्गः पुं, (कौ पृथिव्यां भूमौ वा रङ्गति । रगि + अच् । यद्वा, “विड़ादिभ्यः कित्” । उणां १ । १२० इति अङ्गच् वाहुलकात् उलं रपरत्वञ्च । कुरङ्ग-विहङ्गादयः सर्व्वे निपात्यन्ते । इति वा ।) हरिणः । इत्यमरः । २ । ५ । ८ ॥ कुतङ्कोऽपि ॥
(यथा, भागवतटीकायां स्वामिना प्रोक्तम् ।
“कुरङ्गमातङ्गपतङ्गभृङ्ग-
मीना हताः पञ्चभिरेव पञ्च” ॥
अस्य गुणाः यथा,—
“कुरङ्गो वृंहणो वल्यः शीतलः पित्तहृद्गुरुः ।
मधुरो वातहृद्ग्राही किञ्चित्कफकरः स्मृतः” ॥
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥ * ॥
अस्य लक्षणं यथा,—
“न कृष्णो न च ताम्रश्च कुरङ्गः सोऽभिधीयते” ॥
इति सूत्रस्थाने सप्तचत्वारिंशेऽध्याये सुश्रुतेनोक्तम् ॥)

कुरङ्गनयना, स्त्री, (कुरङ्गस्य नयने इव नयने यस्याः ।) मृगनयना नारी । इति राजनिर्घण्टः ॥ (उदाह, “किन्त्वेकायमुना कुरङ्गनयना नेत्राम्बुभिर्वर्द्धते” ॥)

कुरङ्गनाभिः, पुं, (कुरङ्गस्य नाभिः ।) कस्तूरी । इति राजनिर्घण्टः ॥ (कस्तूरीशब्देऽस्य गुणादयो वोद्धव्याः ॥)

कुरङ्गमः, पुं, (कौ भूमौ रङ्गं मिमीते । मा + डः ।) हरिणविशेषः । तत्पर्य्यायः । एणः २ ऋष्यः ३ रिष्यः ४ चारुलोचनः ५ । इति त्रिकाण्डशेषः ॥

कुरङ्गिका, स्त्री, (कौ रङ्गोऽस्या अस्तीति । ठन् टाप् च ।) मुद्गपर्णी । इति राजनिर्घण्टः ॥

कुरचिल्लः, पुं, (कुरे शब्दे चिल्लति । चिल्ल शैथिल्ये + अच् ।) कर्कटः । इति हेमचन्द्रः ॥

कुरटः, पुं, (कुर् + अटन् किच्च । कु कुत्सितरूपया रटति जीवति देहयात्रां सम्पादयति वा । रट + अच् ।) चर्म्मकारः । इति त्रिकाण्डशेषः ॥

कुरण्टकः, पुं, (कुर्य्यते शब्द्यते इति । कुर् + कर्म्मणि वाहुलकात् अण्टक् स्वार्थे कन् ।) पीताम्लानः । पीतझिण्टी । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायलक्षणगुणा यथा,—
“सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका ।
सहाचरः सहचरः स च भिन्द्यपि कथ्यते ॥
कुरण्टकोऽत्र पीते स्याद्रक्ते कुरवकः स्मृतः ।
नीले वाणाद्वयोर्यक्तो दासे आर्त्तगलश्च सः ॥
सैरेयः कुष्ठवाताखकफकण्डूविषापहः ।
तिक्तोष्णो मधुरोऽनम्लः सुस्निग्धः केशरञ्जनः” ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
“किंशुकं कफपित्तघ्नं तद्वदेव कुरण्टकम्” ॥
इति सुश्रुते सूत्रस्थाने ४६ अः ॥ अथास्य नपुंसकत्वं लभ्यते ।)

कुरण्डः, पुं, (कुर् + अण्डक् ।) मुष्कवृद्धिरोगः । कोरण्ड इति भाषा । तत्पर्य्यायः । वृद्धिः २ अण्डवर्द्धनः ३ । इति हेमचन्द्रः ॥ तस्य सम्प्राप्तिपूर्व्वकं लक्षणं यथा,—
“क्रुद्धोऽधूर्द्धगतिर्वायुः शोथशूलकरश्चरन् ।
मुष्कौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः ॥
प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः ।
दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा मतः ॥
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ।
वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥
पक्वोडुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ।
कफाच्छीतो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्परुक् ॥
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः ।
कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥
मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः ॥
मूत्रकृच्छ्रमधः स्याच्च चालयन् फलकोषयोः ।
वातकोपिभिराहारैः शीततोयावगाहनैः ॥
धारणेरणभाराध्वविषमाङ्गप्रवर्त्तनैः ।
क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ॥
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ।
कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥
उपेक्ष्यमाणस्य च मुष्कवृद्धि-
माध्मानरुक् स्तम्भवती स वायुः ।
प्रपीड़ितोऽन्तः स्वनवान् प्रयाति
प्रध्मापयन्नेति पुनश्च मुक्तः ॥
अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः” ॥
इति वृद्धिनिदानम् ॥ इति माधवकरः ॥ * ॥
तस्यौषधं यथा,—
“द्विजयष्ट्याश्च वै मूलं पिष्टं तण्डुलवारिणा ।
गलगण्डमालां हरेल्लेपात् कुरण्डगलगण्डकम् ॥
रसाञ्जनं हरीतक्याश्चूर्णं तेनैव गुण्डनात् ।
नश्येद् पुरुषव्याधिं नात्र कार्य्या विचारणा” ॥
इति गारुड़े १९० अध्यायः ॥ * ॥ अन्यच्च ।
“गव्यं घृतं सैन्धवसंप्रयुक्तं
शम्बूकभाण्डे निहितं तदेव ।
सप्ताहमादित्यकरैर्विपक्वं
हन्यात् कुरण्डं चिरजं प्रवृद्धम्” ॥
गव्यघृत कर्ष १ । सैन्धव मा ४ । शम्बूकभाण्ड कृत्वा सप्तदिनं यावत् रौद्रे भावयेत् तेन कुरण्डम्रक्षणम् ॥
“सैन्धवञ्च घृताभ्यक्तं ताम्रभाजन आतपे ।
प्रतप्तमूर्च्छया घृष्टं तन्मलञ्च समाहरेत् ॥
कुरण्डं म्रक्षयेत्तेन स निर्व्विघ्नं दिवानिशम् ।
कुरण्डं तेन संजितं नास्तीत्याह पुनर्व्वसुः ॥
ताम्रभाजने घृतं सैन्धवं दत्त्वा रौद्रे तप्तं कृत्वा मेषलोमकुण्डिकया घृष्ट्वा मलयुक्तं कृत्वा तेन म्रक्षयेत् ॥
धुस्तूरस्य वीजञ्च पिष्ट्वा तथार्ककैः सह ।
कुरण्डं नाशयेद्रङ्गे लेपनान्नात्र संशयः ॥
घृतैर्नीलोत्पलं मूलं पिष्ट्वा लिम्पेत् कुरण्डकम् ।
अथवा लेपनं कुर्य्यात् ग्टहमण्डूकशोणितैः” ॥
इति भैषज्यरत्नावली ॥ * ॥ अपरञ्च ।
“गुग्गुलुं रुवुतैलं वा गोमूत्रेण पिवेन्नरः ।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥
सक्षीरं वा पिवेत्तैलं मासमेरण्डसम्भवम् ।
पुनर्नवायास्तैलं वा तैलं नारायणन्तथा ॥
पाने वस्तौ रुवोस्तैलं पेयं वा दशमूलाम्भसा ।
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम् ॥
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः ।
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम् ॥
सर्व्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम् ।
श्लेष्मवृद्धिं तूष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत् ॥
पीतदारुकषायञ्च पिवेन्मूत्रेण संयुतम् ।
स्विन्नां मेदःसमुत्थान्तु लेपयेत् सुरसादिना ॥
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ।
संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत् ॥
सेवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन वै ।
शङ्खोपरि च कर्णान्ते त्यक्त्वा सेवनिमादरात् ॥
व्यत्यासाद्वा सिरां विध्येदन्त्रवृद्धिनिवृत्तये ।
अङ्गुष्ठमध्ये त्वक् छित्वा दहेदङ्गविपर्य्यये ॥
रास्नायष्ट्यमृतैरण्डबलागोक्षुरसाधितः ।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुवुतैलेन मिश्रितः ॥
तैलमेरण्डजं पीत्वा बलासिद्धपयोऽन्वितम् ।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥

अस्माकमिति कुसुमे कुरवके निर्वाप्य वन्यद्विपैः" ॥
तस्य पुष्पादिरपि । यथा कुमारटीकायां मल्लिनाथः । "आलोकितः कुरवकः कुरुते विकाशम्" ॥ अस्य पर्य्याया लक्षणञ्च यथा ॥
"सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका ।
सहाचरः सहचरः स च भिन्द्यपि कथ्यते ।
कुरण्टकोऽत्र पीते स्याद्रक्ते कुरवकः स्मृतः" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
कुत्सितरवे त्रि ॥

कुरसः, पुं, (कुत्सितो रसो यत्र ।) मद्यभेदः । इति हारावली ॥ कर्म्मधारये कुत्सितरसः । बहुव्रीहौ कुत्सितरसयुक्ते त्रि ॥

कुरसा, स्त्री, (कुत्सितः ईषत् वा रसो यस्याः ।) गोजिह्वा लता । इति शब्दचन्द्रिका ॥

कुराहः, पुं, कुलाहः । ईषत्पाण्डुः श्यामजङ्घो घोटकः । इति हेमचन्द्रः ॥

कुरी, स्त्री, (कुं भूमिं राति ददाति । कु+रा+कः । ततो गौरादित्वात् ङीष् ।) तृणधान्यभेदः । इति राजनिर्घण्टः ॥

कुरीरं, क्ली, ("कृञ उच्च" । उणां ४ । ३३ । इति ईरन् उकारादेशश्च ।) मैथुनम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

कुरुः, पुं, (कृ+"कृग्रोरुच्च" । उणां १ । २५ । इति कुः उच्च ।) आग्नीध्रराजपुत्त्रः । स तु प्रियव्रतराजपौत्त्रः । (स्वायम्भुवमनोः प्रपौत्त्रः उत्तरकुरुराज्यं प्राप्तवांश्च । तत्रत्या नदी च भद्रेति नाम्ना विश्रुता । यथा विष्णुपुराणे । २ । १ । १६-२२ ।
"जम्बुद्वीपेश्वरो यस्तु आग्नीध्रो मुनिसत्तम ! ।
तस्य पुत्त्रा बभूवुस्ते प्रजापतिसमा नव ॥
नाभिः किम्पुरुषश्चैव हरिवर्ष इलावृतः ।
रम्यो हिरण्वान् षष्ठश्च कुरुर्भद्राश्व एव च ॥
केतुमालस्तथैवान्यः साधुचेष्टो नृपोऽभवत् ।
जम्बुद्वीपविभागांश्च तेषां विप्र ! निशामय ॥
पित्रा दत्तं हिमाह्वन्तु वर्षं नाभेस्तु दक्षिणम् ।
हेमकूटं तथा वर्षं ददौ किम्पुरुषाय सः ॥
तृतीयं नैषधं वर्षं हरिवर्षाय दत्तवान् ।
इलावृताय प्रददौ मेरुर्यत्र तु मध्यगः ॥
नीलाचलाश्रितं वर्षं रम्याय प्रददौ पिता ।
श्वेतं यदुत्तरं वर्षं पित्रा दत्तं हिरण्वते ॥
यदुत्तरं शृङ्गवतो वर्षं तत्कुरवे ददौ ।
मेरोः पूर्व्वेण यद्वर्षं भद्राश्वाय प्रदत्तवान्" ॥
वैवस्वतमनुवंश्यचन्द्रवंशीयराजविशेषः । स तु संवरणराजभार्य्यायां सूर्य्यकन्यायां तपत्यां जातः । अयमेव कुरुक्षेत्रपतिः । धार्त्तराष्ट्रपाण्डवानां पूर्व्वपुरुषः । यथा,—
"योऽजमीढसुतस्तस्य ऋक्षः संवरणस्ततः ।
तपत्यां सूर्य्यकन्यायां कुरुक्षेत्रपतिः कुरुः ॥
परीक्षित् सुधनुर्जह्नुर्निषधाश्वः कुरोः सुताः" ॥
इति श्रीभागवते । ९ । २२ । ४ ॥) भक्तम् । देशविशेषः । इति मेदिनी ॥ स तु जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषः । इति ज्योतिषम् ॥ तद्देशवासी । तत्र बहुवचनान्तः । (यथा गीतायाम् १ । २५ ।
"उवाच पार्थ ! पश्यैतान् समवेतान् कुरूनिति" ॥)
कारुकारिका । इति शब्दचन्द्रिका ॥

कुरुकन्दकं, क्ली, (कुरुः इव विस्तीर्णः कन्दो यस्य । कप् ।) मूलकम् । इति शब्दमाला ॥

कुरुक्षेत्रं, क्ली, (कुरुणा चन्द्रवंशोद्भवेन राजविशेषेण भूरितपसोपार्ज्जितं धर्म्मक्षेत्रनाम्ना प्रसिद्धं कुरुदेशान्तर्गतं क्षेत्रम् । शाकपार्थिवादित्वात् मध्यपदलोपः ।) देशविशेषः । तत्तु धर्म्मक्षेत्रम् । (त्रिःसप्तकृत्वः अस्मिन्नेव क्षेत्रे क्षत्रियकुलारण्यकुठारेण भृगुवंशधुरन्धरेण भगवता जामदग्न्यरामेण क्षत्रियशोणितैः पञ्च ह्रदाः कृताः तदारभ्य च क्षेत्रमेतत् समन्तपञ्चकनाम्नोच्यते । नितरामेवात्र युध्यतां क्षत्रियाणां शरीरविसर्ज्जनेन पुण्यप्राचुर्य्यात् वैकुण्ठप्राप्तिः । तत एवात्र कुरुपाण्डवानां समरयुद्धं निर्वृत्तम् । एतद्विवरणं महाभारतीये १२ । ४८ अध्याये श्रीकृष्णयुधिष्ठिरसंवादे द्रष्टव्यम् ॥ यथा भगवद्गीतायाम् १ । १ ।
"धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्व्वत सञ्जय !" ॥
एतत्क्षेत्रस्य सीमानिर्द्देशे बहूनि मतानि दृश्यन्ते दिङ्मात्रमुदाहृतमत्र । यथा, हेमचन्द्रः ।
"धर्म्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि" ॥
तथा त्रिकाण्डशेषेऽपि ।
"कुरुक्षेत्रं प्रयागश्च हिमाद्रिं विन्ध्यमन्तरा" ॥
एष हि ब्रह्मर्षिदेशः । यथा, मनौ । २ । १९ ।
"कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः" ॥)

कुरुक्षेत्रीयोगः, पुं, एकस्मिन् श्रावणदिने तिथित्रयनक्षत्रत्रययोगत्रयाणाञ्च स्पर्शः । इति स्मृतिः ॥ कुरुक्षेत्रे मृत्युयोगः । यथा,—
"पञ्चग्रहयुते सूर्य्ये लग्नसंस्थे वृहस्पतौ ।
सौम्यक्षेत्रगते लग्ने कुरुक्षेत्रे मृतिर्भवेत्" ॥
इति जातकाभरणसंग्रहे योगाध्यायः ॥

कुरुटः, पुं, (कुत्सितं रोटते दीप्यते प्रतिहन्ति वा । रुट दीप्तौ प्रतिघातादिषु च + "इगुपधेति" ३ । १ । १३५ । कः ।) सितावरशाकः । इति राजनिर्घण्टः ॥

कुरुण्टः, पुं, (कुत्सितं दुर्गन्धादिकं रुण्टति लुण्ठतीति । कु + रुटि स्तेये + अच् ।) पीतझिण्टी । पीताम्लानः । इति मेदिनी ॥ (कुरुण्टकशब्देऽस्य विवृतिर्ज्ञेया ॥)

कुरुण्टकः, पुं, (कुरुण्ट + स्वार्थे कन् ।) पीताम्लानः । पीतझिण्टी । तत्पर्य्यायः । सहचरी २ सहचरः ३ । इत्यमरः । २ । ४ । ७५ ॥ सहाचरः ४ कुरण्टकः । इति भरतः ॥
("वीरः सहचरः पीतपुष्पो दासीकुरुण्टकः" ॥
इति वैद्यकरत्नमालायाम् । यत्रास्य व्यवहारस्तद्यथा, सुश्रुते सूत्रस्थाने ३८ अध्याये आरग्वधादिवर्गे ॥ "आरग्वधमदनगोपघोण्टा कुटजपाठा कण्टकीपाटलामूर्व्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदासीत्यादिषु द्रष्टव्यः ॥)

कुरुण्टी, स्त्री, (कु कुत्सितं रुण्टति रमाद्वा । कु + रुटि + अच् । गौरादित्वात् ङीष् ।) दासपुत्त्रलिका । इति मेदिनी ॥ (कु कुत्सितं पापं रुण्टति नाशयति ब्राह्मणः पत्युर्वा परिचर्य्यया ।) ब्राह्मणी । इति जटाधरः ॥

कुरुम्बं, क्ली, (कुर् + बाहुलकात् उम्बच् ।) कूपपालकम् । इति शब्दचन्द्रिका ॥ कामरालेबु इति भाषा ॥

कुरुम्बा, स्त्री, (कुरुम्ब + स्त्रियां टाप् ।) द्रोणपुष्पी । इति राजनिर्घण्टः ॥ (द्रोणपुष्पीशब्देऽस्या गुणादयो ज्ञेयाः ॥)

कुरुम्बिका, स्त्री, (कुरुम्बा + स्वार्थे कः टाप् इत्वं च ।) द्रोणपुष्पी । इति राजनिर्घण्टः ॥

कुरुम्बी, स्त्री, (कुरुम्ब + स्त्रियां गौरादित्वात् ङीष् ।) सैंहलीवृक्षः । इति राजनिर्घण्टः ॥

कुरुराट् [ज्] पुं, (कुरुषु राजते । राज् + क्विप् ।) दुर्य्योधनः । इति त्रिकाण्डशेषः ॥

कुरुलः, पुं, (कुर् + उलक् ।) भालस्थितचूर्णकुन्तलः । तत्पर्य्यायः । भ्रमरकः २ भ्रमरालकः ३ । इति हेमचन्द्रः ॥

कुरुवकः, पुं, (रौतीति रवो भ्रमरः । कुत्सितः स्वल्पमधुलाभात् विरक्तो रवो यत्र । स्वल्पमधुत्वादस्य तथात्वम् ।) रक्तझिण्टी । रक्ताम्लानः । इत्यमरः । २ । ४ । ७४ ॥ पीतझिण्टी । इति हेमचन्द्रः ॥ (कुरवकशब्दे पीतझिण्टीशब्दे च अस्य विवृतिर्ज्ञातव्या ॥)

कुरुविन्दं, क्ली, (कुरून् विन्दति + विद्लृ लाभे "अनुपसर्गात् लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च" । ३ । १ । १३८ । इति शः मुचादित्वात् नुम् च ।) काचलवणम् । माणिक्यम् । इति राजनिर्घण्टः ॥ कुरुविल्वरत्नम् । कुल्माषशस्यम् । इति मेदिनी ॥ (क्वचिदस्य पुंलिङ्गत्वमपि दृश्यते । यथा, सुश्रुते सूत्रस्थाने ३६ अः ।
"कासीससैन्धवं किण्वं कुरुविन्दो मनःशिला" ॥)

कुरुविन्दः, पुं, (कुरु + विद + शः नुम् च ।) मुस्तकम् । इत्यमरः । २ । ४ । १५९ ॥ माषः । इति राजनिर्घण्टः ॥ (अस्य पर्य्याया यथा,—
"मुस्तकं न स्त्रियां मुस्तं त्रिषु वारिदनामकम् ।
कुरुविन्दश्च सङ्ख्यातोऽपरः क्रोडकसेरुकः ।
भद्रमुस्तश्च गुन्द्रा च तथा नागरमुस्तकः" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

कुरुविल्वः, पुं, (कुरुषु विल्व इव ।) पद्मरागमणिः । इति त्रिकाण्डशेषः ॥

कुरुविल्वकः, पुं, (कुरुविल्व + संज्ञायां कन् ।) कुल्माषः । वनकुलत्थिका । इति रत्नमाला ॥ (गुणाश्चास्य कुल्माषशब्दे ज्ञेयाः ॥)

कुरुविस्तः, पुं, (कुरुषु विख्यातः विस्तः ।) स्वर्णपलम् । इत्यमरः । २ । ९ । ८६ ॥ चारि तोला सोणा ! इति भाषा ॥

कुरूप्यं, क्ली, (कु ईषत् रूप्यमिव । रूप्यवत् शुभ्रत्वात्तथात्वम् ।) रङ्गम् । इति राजनिर्घण्टः ॥

कुर्कुरः, पुं स्त्री, (कुर् इत्यस्फुटं शब्दं कुरति शब्दायते । कुर् + कुर् + कः ।) कुक्कुरः । इत्यमरटीकायां रायमुकुटः ॥

कुर्व्वाङ्गः, पुं, कुलञ्जनवृक्षः । इति राजनिर्घण्टः ॥

शर्कराश्मरीनाशित्वम् । इति राजनिर्घण्टः ॥ (अस्य अपरे पर्य्यायगुणा यथा,—
"कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ ।
कुलत्थः कटुकः पाके कषायः पित्तरक्तकृत् ।
लघुर्विदाही वीर्य्योष्णः श्वासकासकफानिलान् ॥
हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान् ।
स्वेदसंग्राहको मेदोज्वरक्रिमिहरः परः" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ * ॥
"उष्णः कुलत्थो रसतः कषायः
कटुर्विपाके कफमारुतघ्नः ।
शुक्राश्मरीगुल्मनिषूदनश्च
संग्राहकः पीनसकासहारी ॥
आनाहमेदोगुदकीलहिक्का
श्वासापहः शोणितपित्तदश्च ।
कफस्य हन्ता नयनामयघ्नो
विशेषतो वन्यकुलत्थ उक्तः" ॥
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥ * ॥)

कुलत्था, स्त्री, (कुलत्थ + स्त्रियां टाप् ।) वनकुलत्थः । तत्पर्य्यायः । दृक्प्रसादा २ अरण्यकुलत्थिका ३ कुलाली ४ लोचनहिता ५ चक्षुष्या ६ कुम्भकारिका ७ कुलत्थिका ८ । इति राजनिर्घण्टः ॥ कुल्माषः ९ कुरुविन्दकः १० । इति रत्नमाला ॥ अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । अर्शःशूलनाशित्वम् । विबन्धाध्मानशमनत्वम् । चक्षुर्हितत्वम् । व्रणरोपणत्वञ्च । कुलत्थाञ्जनम् । अस्य पर्य्यायः पूर्व्ववत्तदधिकन्तु । कुम्भकारी १ प्रलापघ्नी २ । अस्य गुणाः । चक्षुर्हितत्वम् । कषायत्वम् । कटुत्वम् । हिमत्वम् । विषविस्फोटकण्डूव्रणदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

कुलत्थिका, स्त्री, (कुलत्था स्वार्थे संज्ञायां वा कन् अत इत्वम् ।) कुलत्थाकाराञ्जनप्रस्तरविशेषः । इत्यमरः ।२।९।१०२॥ अस्य गुणपर्य्यायौ कुलत्थाशब्दे द्रष्टव्यौ । वनकुलत्थः । इति राजनिर्घण्टः ॥

कुलधर्म्मः, पुं, (कुलस्य कुले वा आचरितो धर्म्मः ।) स्वजातीयधर्म्मः । कुलाचारः । यथा,—
"उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ! ।
नरके नियतं वासो भवतीत्यनुशुश्रुम" ॥
इति श्रीभगवद्गीतायाम् । १ । ४३ ॥

कुलधारकः, पुं, (कुलं धारयति रक्षति यः । कुल + धृ + णिच् + ण्वुल् ।) पुत्त्रः । इति त्रिकाण्डशेषः ॥

कुलनायिका, स्त्री, ( कुले कुलाचारयजनकाले पूज्या या नायिका ।) पञ्च-मकारयजने पूज्या स्त्री । यथा,—
"रक्तमाल्येन सम्बीतो रक्तपुष्पाविभूषितः ।
पञ्चीकारणसङ्केतैः पूजयेन कुलनायिकाम्" ॥
सा नवविधा यथा,—
"नटी कापालिनी वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ।
मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः" ॥
इति तन्त्रसारः ॥

कुलनक्षत्रं, स्त्री, (तन्त्रसारोक्तपारिभाषिकलक्षणं कुलं तत्र तत्सम्बन्धि वा नक्षत्रम् ।) भरणीरोहिणीपुष्यमघोत्तरफल्गुनीचित्राविशाखाज्येष्ठापूर्व्वाषाढ़ाश्रवणोत्तरभाद्रपदः । यथा,—
"वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् ।
कुलानि समधिष्ण्यानि शेषाणि चाकुलानि च" ॥
इति तन्त्रसारः ॥

कुलनाशः, पुं, (कुलं भूमिलग्नं न अश्नाति । न + अश् + अच् । सुप्सुपेति समासः । उद्रस्य हि उन्नतकन्धरत्वात् भूमिलग्नस्याभक्षकतया तथात्वम् ।) उष्ट्रः । इति हेमचन्द्रः ॥ (कुलस्य नाशः ध्वंसः ।) कुलध्वंसः ॥

कुलपतिः, पुं, (कुलस्य वंशस्य गोत्रस्य वा पतिः स्वामी ।) कुलस्वामी । गोत्रप्रधानः । कुलनायः । यथा । "अथ सिन्धुसौवीरपतेरहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिविकावाहपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्धः" । इति श्रीभागवते ५ । १० । १ ॥ (कुलस्य छात्रवर्गस्य पतिः पालकः । अन्नदानपोषणपूर्व्वकं अध्यापको मुनिविशेषः । उक्तञ्च ।
"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः" ॥)

कुलपत्रः, पुं, (कुलं भूलग्नं पत्रं पर्णमस्य ।) दमनकवृक्षः । इति राजनिर्घण्टः ॥

कुलपालकं, स्त्री, (कुलं समूहं पालयतीति । पालि + ण्वुल् । वङ्कफलोत्पत्तेस्तथात्वम् ।) कुरुम्बम् । कमलानेवु इति भाषा । इति शब्दचन्द्रिका ॥ (कुलं वंशं पालयति । पाल + णिच् + ण्वुल् ।) वंशप्रतिपालके, त्रि ॥

कुलपालिः, स्त्री, (कुलं पालयति या । पालि + इन् ।) कुलवती । इति शब्दमाला ॥

कुलपालिका, स्त्री, (कुलं पालयति । पालि + ण्वुल् टाप् इत्वम् । यद्वा कुलपालि + स्वार्थे कन् टाप् ।) कुलस्त्री । इत्यमरः । २ । ६ । ७ ॥

कुलभृत्या, स्त्री, (कुलैः वंशभवैः भृत्या भरणम् । कुल + भृ + भावे क्यप् ।) गर्भिण्युपासना । इति जटाधरः ॥ (कुलस्य भृत्या । वंशभरणम् ।)

कुलम्भरः, पुं, ( कुलं गृहं भलति हन्ति सन्धिकर्त्तनादिना इति । कुल + भल + अच् । निपातनात् मुम् लस्य रः । ) कुजम्भलः । चौरः । इति हारावली ॥

कुलवर्णा, स्त्री, (कुलेषु भिषक्कुलेषु वर्णः वर्णनं गुणकथनं यस्याः ।) रक्तत्रिवृत् । इति राजनिर्घण्टः ॥

कुलवारः,पुं,(कुलसंज्ञया प्रसिद्धो वारः ।) मङ्गलशुक्रवारौ । यथा ।
"रविचन्द्रौ गुरुः सौरिश्चत्वारश्चाकुला इमे ।
भौमशुक्रौ कुलाख्यौ हि बुधवारः कुलाकुलः" ॥
इति तन्त्रसारः ॥

कुलविप्रः, पुं, (कुलपरम्परागतः कुलहिताय नियुक्तो वा विप्रः ।) कुलपुरोहितः । इत्यमरटीकायां स्वामी ॥

कुलश्रेष्ठी, [न्] त्रि, (कुलेषु शिल्पिकुलेषु श्रेष्ठी ।) शिल्पिकुलप्रधानः । तत्पर्य्यायः । कुलिकः २ । इत्यमरः । २ । १० । ५ ॥ कुलकः ३ मुखः ४ श्रेष्ठी ५ । इति तट्टीकायां भरतः ॥

कुलसम्भवः, पुं, (कुले कस्यचित् वंशे सम्भवः उत्पत्तिरस्य ।) यस्य कस्यचित् कुले जातः । तत्पर्य्यायः । बीज्यः २ । इत्यमरः । २ । ७ । २ ॥

कुलसौरभं, क्ली, (कुलं श्रेष्ठं सौरभं यस्य ।) मरुवकवृक्षः । इति शब्दमाला ॥

कुलस्त्री, स्त्री, (कुले कुलस्थिता स्त्री ।) कुलपालिका । अनन्यगामिनी कुलरक्षिका स्त्री । इत्यमरः । २ । ६ । ७ ॥ (तथा च चाणक्ये ।
"असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः" ॥
कुले कुलचक्रे मूलाधारे विराजते या स्त्री । कुलकुण्डलिनीशक्तिः । यथा, कुलार्णवे ।
"कुलस्त्रीज्ञानमात्रेण जीवन्मुक्तो भवेन्नरः" ॥)

कुलाहण्डकः, पुं, (कुलाय संघाय ऊण्डते । ऊडि संघे + ण्वुल् । पृषोदरात् उकारलोपः ।) घारणिः । आवर्त्तः । इति हारावली ॥

कुलाकुलतिथिः, पुं स्त्री, (तन्त्रोक्तकुलाकुलनाम्ना प्रसिद्धा तिथिः ।) द्वितीयाषष्ठीदशम्यः । यथा ।
"द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम्" ॥
इति तन्त्रसारः ॥

कुलाकुलनक्षत्रं, क्ली, (तन्त्रोक्तकुलाकुलसंज्ञकं नक्षत्रम् ।) आर्द्रामूलाभिजिच्छतभिषानक्षत्राणि । यथा, तन्त्रसारे ॥
"वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम्" ॥

कुलाकुलवारः, पुं, (तन्त्रोक्तकुलाकुलनामा वारः ।) बुधवारः । यथा, तन्त्रसारे ॥
"भौमशुक्रौ कुलाख्यौ हि बुधवारः कुलाकुलः" ॥

कुलाचलः, पुं (कुलसंज्ञकः अचलः पर्व्वतः । शाकपार्थिवादिवत् मध्यपदलोपः ।) कुलपर्व्वतः । यथा ।
"अष्टकुलाचलसप्तसमुद्रा
ब्रह्मपुरन्दरदिनकररुद्राः ।
न त्वं नाहं नायं लोक-
स्तदपि किमर्थं क्रियते शोकः" ॥
इति मोहमुद्गरे ७ ॥ सप्तकुलपर्व्वता यथा ।
"सप्त येऽस्मिन् महापर्व्वाः विस्तृताः कुलपर्व्वताः ।
माहेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ॥
विन्ध्यश्च पारिपात्रश्च इत्येते कुलपर्व्वताः" ॥
इति मात्स्ये ९५ अध्यायः ॥

कुलाचार्य्यः, पुं, (कुलस्य वंशस्य व्याख्यायां वर्णनादौ गुणकीर्त्तनविषये वा आचार्य्यः ।) कुलज्ञः । कुलीनादीनां वंशशंसाख्याकर्त्तृब्राह्मणः । अस्य विवरणं घटकशब्दे द्रष्टव्यम् ॥

कुलाटः, पुं, (कुलेन संघेन अटतीति । अट् + अच् ।) क्षुद्रमत्स्यभेदः । इति शब्दमाला ॥

कुलाद्रिः, पुं, (कुलनाम्ना ख्यातोऽद्रिरचलः ।) कुलाचलः । इति सिद्धान्तशिरोमणिः ॥

कुलाधारकः, पुं, (कुलस्य वंशस्य आधारकः प्रतिष्ठापकः ।) पुत्त्रः । इति शब्दरत्नावली ॥

कुलायं, क्ली, (कौ पृथिव्यां लायो लयो यस्य ।) शरीरम् । इति पुराणम् ॥

कुलायः, पुं, (कुलानां पक्षिसमूहानां अयः वास-

स्थानम् ।) नीड़ं । (यथा, माघे ।
"खगकुलायकुलायनिलायिताम्" ।)
स्थानमात्रम् । इति मेदिनी ॥

कुलायस्थ, पु, (कुलाये नीडे तिष्ठति । स्था + क ।) पक्षी । इति शब्दचन्द्रिका ॥

कुलायिका, स्त्री, (कुलाय पक्षिवासस्थानं विद्यते ऽस्याम् । ठन् ।) पक्षिशाला । इति त्रिकाण्डशेषः ॥

कुलाल, पु, (कुलं घटादिनिर्म्माणोपयोगिमृदाद्युपादानम् आलाति सम्यगादत्ते । आ + ला + क । कुलं वर्णं घटादिसमूहं वा अलति पर्य्याप्नोति वा अल + कर्म्मण्यण् । कुल + "तमिविशिविडीति" उणा १ । ११७ । इति कालन् वा ।) कुम्भकारः । इत्यमरः । २ । १० । ६ ॥ तस्योत्पत्तिर्यथा ।
"मालाकारात् कर्म्मकार्य्यां कुम्भकारो व्यजायत" ॥
इति पराशरसंहिता ॥
"पट्टिकाराच्च तैलिक्यां कुम्भकारो बभूव ह" ॥
इति पराशरपद्धतिः ॥ ब्रह्मवैवर्त्तोक्ता च कुम्भकारशब्दे द्रष्टव्या ॥ कुक्कुभपक्षी । इति मेदिनी ॥

कुलाली, स्त्री, (कुलं पर्व्वतकुलं कलायकुलं वा अलति परिवर्द्धयति । अल + अण् । ङीप् ।) कुलत्थाकाराञ्जनप्रस्तरविशेषः । कुलत्थाञ्जनमिति ख्याता । इत्यमरः । २ । ९ । १०२ ॥ अरण्यकुलत्थिका वनकुलत्थकडाइ इति भाषा । इति राजनिर्घण्टः ॥ (कुलाल + स्त्रियां ङीष् ।) कुलालभार्य्या ॥

कुलाह, पु, (कुलं पालकत्वेन स्वकुलं वा आहन्ति । आ + हन + ड ।) ईषत्पीतवर्णः कृष्णजानुर्घोटकः । इति हेमचन्द्रः ॥

कुलाहक, पु, (कुलाह + संज्ञायां कन् ।) कृकलासः । इति शब्दमाला ॥ वृक्षविशेषः । राङ्गा कुलेखाडा इति भाषा । अस्य गुणाः । आमवातवातरक्तरोगनाशित्वम् । इति राजवल्लभः ॥

कुलाहल, पु, (कुलं आहलति स्पृशति स्पर्द्धते वा । आ + हल विलेखने + अच् ।) क्षुद्रवृक्षविशेषः । कोकसीमा इति भाषा । तत्पर्य्यायः । अनम्बुः २ गोच्छाल ३ भुकदम्बः ४ । इति रत्नमाला ॥

कुलि, पुं, (कुल् + इन् किच्च ।) हस्तः । इति त्रिकाण्डशेषः ॥

कुलि, स्त्री, (कुल इन् किच्च ।) कण्टकारी । इति शब्दरत्नावली ॥

कुलिक, त्रि, (कुलम् अधीनतया प्रशस्ततया वा अस्त्यस्य । इति ठन् ।) शिल्पिकुलप्रधानः । इत्यमरः । २ । १० । ५ ॥ कुलसत्तमः इति मेदिनी ॥

कुलिक, पु, अष्टमहानागान्तर्गतनागविशेषः ।
(यथा, भागवते । ५ । २४ । ३१ ।
"ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिकमहाशङ्खश्वेतधनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति" ॥
अस्य रूपमुक्तं हेमाद्रौ यथा ।
"कुलिकोऽर्द्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः" ।)
वृक्षविशेषः इति मेदिनी । केलेकडा इति भाषा ।

कुलिकवेला, स्त्री, रव्यादिवारेषु शुभकर्म्मसु निषिद्धकालविशेषः । यथा । रवौ सप्तमयामार्द्धम् सोमे षष्ठयामार्द्धम् । मङ्गले पञ्चमयामार्द्धम् । बुधे चतुर्थयामार्द्धम् । गुरौ तृतीययामार्द्धम् शुक्रे द्वितीययामार्द्धम् । शनौ प्रथमयामार्द्धम् । राघवभट्टमते तु पूर्व्वोक्तयामार्द्धानां दिवाशेषभागः । रात्रौ प्रथमभागः । इति ज्योतिषतत्त्वम् ॥

कुलिङ्ग, पु, (कौ पृथिव्यां लिङ्गति गच्छतीति । कु + लिगि + अच् + इदित्वात् नुम् । यद्वा कुत्सितं कृष्णवर्णं लिङ्गं वर्णं यस्य ।) पक्षिविशेषः । फिङ्गा इति भाषा । तत्पर्य्यायः । कलिङ्गः २ धुम्याटः ३ फिङ्गकः ४ । इति शब्दमाला ॥ भृङ्गः ५ । इत्यमरः ॥ अस्य मांसगुणाः । मधुरत्वम् । स्निग्धत्वम् । कफपित्तकारित्वञ्च । इति राजवल्लभः ॥

कुलिङ्गक, पु, (कुलिङ्ग + अल्पार्थे कन् ।) चटकपक्षी । इति हेमचन्द्रः ॥

कुलिङ्गाक्षी, स्त्री, (कुलिङ्गस्य अक्षिवत् फलं यस्य ।) पेटिकावृक्षः । इति रत्नमाला । पेटारी इति भाषा ॥

कुलिङ्गी, स्त्री, (कुलिङ्ग + स्त्रियां गौरादित्वात् ङीष् ।) कर्कटशृङ्गीवृक्षः । इति रत्नमाला ॥

कुलिर, पुं, (कुल + बाहुलकात् इरन् किच्च ।) कर्कटः । इति शब्दरत्नावली ॥

कुलिश, क्ली, पु, (कुलौ हस्ते शेते अवतिष्ठते । कुल + शी + ड । यद्वा कुलिनः पर्व्वतान् श्यति दारयतीति । शो + ड । "आतोऽनुपसर्गे कः" । ३ । २ । ३ । इति को वा ।) वज्रम् । इत्यमरभरतौ ॥
(यथा, कुमारे । २ । २० ।
"कुण्ठेऽपि पक्षच्छिदि वृत्रशत्रा-
वनेदनाश्च कुलिशक्षतानाम्" ॥
कु ईषत् कुत्सितं वा लिशति । कु + लिश अल्पीभावे गतौ च + क ।) मत्स्यविशेषः । तत्पर्य्यायः । कण्टकाष्ठीलः २ । इति त्रिकाण्डशेषः ॥
(यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालकनन्दिवारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः" ॥ कौ भूमौ लिशति अल्पीभवति कुभूमिं लिशति गच्छति कृशतया प्राप्नोति वा ।) अस्थिसंहारवृक्षः । इति रत्नमाला ॥

कुलिशनायक, पु, (कुलिशवत् नायको यस्मिन् ।) शृङ्गारबन्धविशेषः । तस्य लक्षणम् ।
"स्त्रीपादद्वयमाकृष्य विमुच्य चितलिङ्गकः ।
योनिञ्च पीडयेत् कामी बन्धः कुलिशनायकः" ॥
इति रतिमञ्जरी ॥

कुलिशाङ्कुशा, स्त्री, (कुलिशेनाङ्कुशेन चैव निगृह्यते मनो यया । यद्वा कुलिशवत् दृढमङ्कुशं यस्याः ।) बौद्धानां विद्यादेवीविशेषः । इति हेमचन्द्रः ॥

कुलिशासन, पुं, (कुलिशं वज्रं तद्वत् दृढमासनमस्य ।) शाक्यमुनिः । इति त्रिकाण्डशेषः ॥

कुली, स्त्री, (कुलि + कृदिकारादक्तिनः वा ङीष् ।) कण्टकारी । इत्यमरः । २ । ४ । ९४ ॥ पत्नीज्येष्ठभगिनी । इति हेमचन्द्रः ॥ वृहती । इति राजनिर्घण्टः ॥

कुलीन, पु, (कुले प्रशस्तवंशे जातः । "कुलात् खः" । ४ । १ । १३९ । इति खः ।) श्रेष्ठघोटकः । तत्पर्य्यायः । आजानेयः २ । इत्यमरः ॥ आजानेयः ३ । इति तट्टीका ॥ सुजानेयः ४ जात्यः ५ वाल्लिकः ६ । इति शब्दरत्नावली ॥ (तन्त्रशास्त्रोक्तकुलाचारव्रते स्थितः कौलः ।) उत्तमकुलोद्भवे, त्रि । तत्पर्य्यायः । महाकुलः २ आर्य्यः ३ सभ्यः ४ सज्जनः ५ साधुः ६ । इत्यमरः । २ । ७ । ३ ॥ * ॥ अथाधुनिककुलीनलक्षणम् । कुलम् उत्कर्षविशेषवत् । इति सङ्केतम् । अथवा स्वधर्मं तस्यापत्यमित्यर्थे कुलशब्दादीनप्रत्ययेन कुलीन इति पदसिद्धिरिति केचित् । अर्थात् कुलीनशब्देन उत्कर्षविशेषवत्वंशजातव्यक्तिरिति । तथा च लक्षणम् । उत्कर्षविशेषधर्म्मावच्छिन्नवंशजातत्वे सति तद्धर्म्मवत्त्वं कुलीनत्वमिति । उत्कर्षविशेषस्तु नवधा गुणाः । ते च यथा ।
"आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् ।
निष्ठाऽऽवृत्तिस्तपो दानं नवधा कुललक्षणम्" ॥
अत एव उत्कर्षविशेषात्मकनवधागुणविशिष्टत्वं कुलीनत्वम् । एतेन इदानीं साधारणसामान्यजनानां यदि नवधा गुणा वर्त्तन्ते तदा तेऽपि कुलीनाः स्युरिति । अनवच्छिन्नपर्य्यायत्वं कुलीनत्वम् । प्रमाणं यथा,—
"सपर्य्याय समासाद्य दानग्रहणमुत्तमम् ।
कन्याऽभावे कुशत्यागः प्रतिज्ञा वा परस्परम्" ॥
तथा च ।
'कुलीनस्य सुतां लब्ध्वा कुलीनाय सुतां ददौ ।
पर्य्यायक्रमतश्चैव स एव कुलदीपकः" ॥
तथा च ।
'आदानञ्च प्रदानञ्च कुशत्यागस्तथैव च ।
प्रतिज्ञाघटकाग्रे च कुलकर्म्म चतुर्व्विधम्" ॥
इति कुलदीपिका ॥ * ॥ अथ बल्लालभूपालकृता पञ्चगोत्रराढीयब्राह्मणस्य ग्रामविशिष्टस्य मुख्यगौणभेदेन द्वाविंशतिकुलीना यथा । शाण्डिल्यगोत्रे भट्टनारायणवंशज आदिवराहवन्द्यः स मुख्यः । रामगडगाड निपकेशरकोयारी गुंडी कुसुमी बटु दिघाटि वैकुण्ठपारियाल एते पञ्च गौणाः । काश्यपगोत्रे दक्षवंशज सुलोचनचट्टः स मुख्यः । अमहद धीरगुड काकपीतसराडी एते त्रयो गौणाः ॥ भरद्वाजगोत्रे श्रीहर्षवंशज धुरन्धर मुखटी स च मुख्यः । विनायकदिण्डीसांयी गन्धर्व्वरायो एतौ द्वौ गौणौ ॥ सावर्णगोत्रे वेदगर्भवंशज वीरभद्रसाङ्गली सधीरकुन्द एतौ द्वौ मुख्यौ । वीररुद्रनघण्टेश्वर एष गौणः ॥ वात्स्यगोत्रे छान्दडवंशज सुरभिघोषवाल कविकाञ्जिलाल रविपूतितण्ड एते मुख्याः । भानुचौटखण्डी पतिकालुम्बधिक्या वन्माशिपिप्पली एते गौणाः । अधुना एषां मध्ये मुख्याः अष्टौ कुलीनाः गौणाश्चतुर्दशश्रोत्रियाः । अन्येऽपि पञ्चगोत्राणां सार्द्धसप्तशतश्रोत्रियाः सन्ति । ततः लक्ष्मणसेनेन मुख्याष्टकुलीनो न विंशतिगुणाना समीकरणं कृतम् । तत एतेषां नानादोषदर्शनात् देवीवरेण

"क्षौमं दुकूले स्यादट्टे पुंनपुंसकयोरिह ।
क्षौमन्तु शणवेऽपि स्यादतसीजे नपुंसकम् ॥"
(यथा, महाभारते । १।२००।३ ।
"कृष्णा च क्षौमसंवीता कृतकौतुकमङ्गला
कृताभिवादना श्वश्र्वास्तस्थौ प्रह्वा कृताञ्जली ॥")

क्षौमकः, पुं, ( क्षुमा एव क्षौमः प्रज्ञादित्वात् अण् । ततः संज्ञायां कन् । ) चोरनामगन्धद्रव्यम् । इति केचित् ॥

क्षौमी, स्त्री, ( क्षुमा एव इति स्वार्थे अणि वृद्धिः ततो गौरादित्वात् ङीष् । ) अतसी । इति रत्नमाला ॥ ( विकारार्थे अणि ) क्षुमानिर्म्मितकन्था । इति क्षौमशब्दटीकायां भरतः ॥

क्षौरं, क्ली, ( क्षुरस्य कार्य्यं कर्म्म क्षुरकृतं कर्म्मेति भावः क्षुरस्येदं वा ।) क्षुरकर्म्म । कामान इति भाषा । तत्पर्य्यायः । मुण्डनम् २ भद्रकरणम् ३ वपनम् ४ परिवापनम् ५ । इति हेमचन्द्रः ॥
अस्य गुणः ।
"केशश्मश्रुनखादीनां कर्त्तनं संप्रसाधनम् ।"
संप्रसाधनं पवित्रीकरणमिति यावत् । इति राजवल्लभः ॥ * ॥ व्रतादिसंयमे क्षौरकर्म्माकरणे दोषो यथा,—
"व्रतानामुपवासानां श्राद्धादीनाञ्च संयमे ।
न करोति क्षौरकर्म्म अशुचिः सर्व्वकर्म्मसु ॥
स च तिष्ठति कुण्डेषु नखादीनाञ्च सुन्दरि ! ।
तदेव दिनमानाब्दं तद्भोजी दण्डताडितः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥*॥
नित्यक्षौरविहितनिषिद्धदिनादि यथाह राजमार्त्तण्डः ।
"न स्नानमाचरगमनोत्सुकभूषितानामभ्यक्तभुक्तरणकालनिरासनानाम् ।
सन्ध्यानिशाशनिकुजार्कदिनेषु रिक्ते
क्षौरं हितं प्रतिपदह्नि न चापि विष्ट्याम् ॥"*॥
"प्राचीमुखः सौम्यमुखोऽपि भूत्वा
कुर्य्यान्नरः क्षौरमनुत्कटस्थः ॥
उत्तरात्रितययाम्यरोहिणी-
रौद्रसर्पपितृभेषु चाश्विभे ।
श्मश्रुकर्म्म सकलं विवर्ज्जयेत्
प्रेतकार्य्यमपि बुद्धिमान्नरः ॥"
प्रेतकार्य्यं पतितप्रेतसंप्रदानकदासीघटदानविषयकम् । अन्यथा वक्ष्यमाणवचनविरोधः स्यात् ॥
"चन्द्रशुद्धिर्यदा नास्ति तारायाश्च विशेषतः ।
अक्षौरिभिरपि कर्त्तव्यं चन्द्रचन्द्रजयोर्द्दिने ॥
मानं हन्ति गुरुः क्षौरे शुक्रं शुक्रो धनं रविः ।
आयुरङ्गारको हन्ति सर्व्वं हन्ति शनैश्चरः ॥"*॥
श्रीपतिरत्नमालायाम् ।
"आज्ञया नरपतेर्द्विजन्मनां
दारकर्म्मिमृतसूतकेषु च ।
बन्धमोक्षमखदीक्षणेष्वपि
क्षौरमिष्टमखिलेषु चोडुषु ॥
देवकार्य्ये पितृश्राद्धे स्वैरंश्रपरिचये ।
क्षुरिकर्म्म न कुर्व्वीत जन्ममासे च जन्मभे ॥"*॥
वृद्धगार्ग्यः ।
"केशवमानर्त्तपुरं पाटलिपुत्रं पुरीमहिच्छत्रम् ।
दितिमदितिञ्च स्मरतां क्षौरविधौ भवति कल्याणम् ॥ * ॥"
अत्र क्रमो वराहपुराणे ।
"श्मश्रुकर्म्म कारयित्वा नखच्छेदमनन्तरम् ॥"
इति ज्योतिस्तत्त्वम् ॥
अपि च । गोभिलः ।"केशश्मश्रुलोमनखानि वापयीत शिखावर्ज्जम् ।"इति शुद्धितत्त्वम् ॥*॥अन्यच्च ।
"रोहिण्याञ्च विशाखायां मैत्रे चैवोत्तरासु च ।
मघायां कृत्तिकायाञ्च द्विजैः क्षौरं विवर्ज्जितम् ॥
कृत्वा तु मैथुनं क्षौरं यो देवांस्तर्पयेत् पितॄन् ।
रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत् ॥"
इति ब्रह्मवैवर्त्तपुराणम् ॥ * ॥
नापितगृहे क्षौरनिषेधो यथा,—
"स्वयं माल्यं स्वयं पुष्पं स्वयं घृष्टञ्च चन्दनम् ।
नापितस्य गृहे क्षौरं शक्रादपि हरेत् श्रियम् ॥
रवौ दुःखं सुखं चन्द्रे कुजे मृत्युर्बुधे धनम् ।
मानं हन्ति गुरोर्व्वारे शुक्रे शुक्रक्षयो भवेत् ॥
शनौ च सर्व्वदोषाः स्युः क्षौरमत्र विवर्ज्जयेत् ॥"
इति कर्म्मलोचनम् ॥ * ॥ * ॥
अथ प्रथमक्षौरस्य चूडाकरणस्य विहितदिनादि । ज्योतिषे ।
"अयुग्माब्दे तथा मासि चूडा भौमशनीतरे ।
अर्केन्दुकालशुद्धौ च जन्ममासेन्दुभेतरे ।
रिक्तादर्शाष्टमीषष्ठीप्रतिपद्वर्ज्जिते सिते ॥"
दक्षोऽपि सामान्यतो दोषमाह ।
"षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥
मेषसिंहतुलाकर्किवृश्चिकेतरलग्नके ।
श्रवणादित्रयस्वातीचित्रापुष्याश्विचन्द्रभे ॥
आदित्यरेवतीहस्ता ज्येष्ठामूले च चौडकम् ॥
पौष्णाश्विपुष्यवसुरामकवासुदेव-
ब्रह्मार्कचन्द्रवरुणादितिचित्रभेषु ।
वारेषु सोमबुधवाक्पतिभार्गवाणां
क्षौरं करोति कुशलं खलु मानवानाम् ॥"
इति वचनात् रोहिण्यामपि चूडाकरणम् ।
अत्रापि तिथ्यङ्गादिविहन्तृत्वं विवर्ज्जयेत् ॥
"ऊर्द्ध्वे दक्षिणमार्गगामिनि हरौ सुप्ते निरंशे रवौ
क्षीणे शीतरुचौ महीजयमयोर्व्वारे निशासन्ध्ययोः ।
भुक्तेऽभ्यक्ततनौ निषिद्धसमयेऽलङ्कारयुक्ते शिशौ
क्षौरान्नोगभयं वदन्ति यवना मृत्युं तथान्ये जगुः ॥"
राजमार्त्तण्डे ।
"मानं हरेत् क्षौरमिहायुषोऽर्कः
शनैश्चरः पञ्च कुजस्तथाष्टौ ।
आचार्य्यभृग्विन्दुबुधाः क्रमेण
दद्युर्द्दशैकादश सप्त पञ्च ॥"
जीवादिवारे क्षौरं प्रशस्तम् ॥*॥ भोजराजः ।
"शिखिसन्निधाने च चूडाकरणं जगुः शुभं यवनाः ।
चैत्रे मासि दिवाकरवारे उत्तरवर्त्मनि सवितरि ॥"
दिवाकरवारविनिर्मोके तु गर्गः ।
"जन्मर्क्षे जन्ममासे च युग्ममासे च वत्सरे ।
न कुर्य्यात् प्रथमं क्षौरं विशेषाच्चैत्रपौषयोः ॥"
ज्येष्ठपुत्त्रकन्ययोस्तु ज्येष्ठदशाहाभ्यन्तरे चूडानिषेधो विवाहप्रकरणे उक्तः । इति ज्योतिस्तत्त्वम् ॥ * ॥
अपि च । भोजराजः ।
"यो जन्ममासे क्षुरकर्म्म यात्रां
कर्णस्य वेधं कुरुते च मोहात् ।
नूनं स रोगं धनपुत्त्रनाशं
प्राप्नोति मूढो वधबन्धनानि ॥
जातं दिनं दूषयते वशिष्ठ-
श्चाष्टौ च गर्गो यवनो दशाहम् ।
जन्माख्यमासं किल भागुरिश्च
चूडे विवाहे क्षुरकर्णवेधे ॥"
एतद्विषयभेदस्तु राजमार्त्तण्डे ।
"उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च ।
सापेक्षनिरपेक्षाणि श्रुतिवाक्यानि कोविदैः ॥
सापेक्षनिरपेक्षाणि समर्थासमर्थविषयकाणि ।
क्षुरेति क्षुरकर्म्म ।" इति तिथ्यादितत्त्वम् ॥

क्षौरपव्यं, क्ली, ( क्षुरैः पविभिर्व्वज्रैर्निर्म्मितं निर्व्वृत्तमिव वा गृहम् ।) क्षुरवज्रतुल्यतीक्ष्णदृढगृहम् । यथा, श्रीभागवते । ६ । ५ । ८ ।
"नदीमुभयतो वाहां पञ्चपञ्चाद्भुतं गृहम् ।
क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयं भ्रमि ॥"
"पञ्चपञ्चानां पञ्चविंशतेः । अद्भुतं गृहम् । क्षौरपव्यं क्षुरैः पविभिर्व्वज्रैश्च निर्म्मितमिव तीक्ष्णं दृढञ्चेत्यर्थः । स्वयं स्वतन्त्रम् । भ्रमि भ्रमणस्वभावम् ।" इति तट्टीकायां श्रीधरस्वामी ॥

क्षौरिकः, पुं, ( क्षुरकर्म्म क्षुरेण वा कर्म्म करोति । यद्वा क्षुरिकर्म्म कार्य्यत्वेनास्त्यस्य । इति ठञ् । क्षौरं शिल्पत्वेनास्त्यस्य इति तु ठन् । ) नापितः । इति शब्दमाला ॥

क्ष्णु, ल तेजने । इति कविकल्पद्रुमः ॥ (अदां-परं-सकं-सेट् । ) मूर्द्धन्यणकारोपधः । क्षादिः । क्ष्णौति खड्गं कर्म्मकारः । इति दुर्गादासः ॥

क्ष्णुतः, त्रि, ( क्ष्णु + कर्म्मणि क्तः । ) शाणितः । तीक्ष्णीकृतः । इत्यमरः । ३ । १ । ६१ ॥

क्ष्मा, स्त्री, ( क्षमते सहते भारं अपराधजनितं वात्सल्यानां जीवानां चतुर्व्विधानां इति । क्षम् + अच् उपधायाः लोपश्च । ) पृथ्वी । इत्यमरः ।२।१।३॥ ( यथा, भागवते ।७।८।३३।
"द्यौस्तत् सटोत्क्षिप्तविमानसङ्कुला
प्रोत्सर्पत क्ष्मा च पदातिपीडिता ॥")

क्ष्माजः, पुं, (क्ष्मा पृथ्वी तस्यां तस्याः वा जातवान् इति । क्ष्मा + जन् + डः । ) मङ्गलग्रहः । इति ज्योतिषम् ॥

क्ष्मातलं, क्ली, ( क्ष्मायाः तलम् । ) भूतलम् । (यथा, मार्कण्डेये । २३ । ४७ ।
"यद्विद्यस्ति क्ष्मातले खेऽन्यतो वा
त्वत्सम्बन्धं त्वत्स्वरैर्व्यञ्जनैश्च ॥")
पृथिवीमध्यम् । इति केचित् ॥

क्ष्माधृतिः, पुं, (क्ष्मायां पृथ्व्यां धृतिर्धारणं पालनीशक्तिर्यस्य ।) काश्मीरदेशीयराजविशेषः । यथा, राजतरङ्गिण्याम् । ५ । ४८२ ।

## ख

ख, खकारः । स तु व्यञ्जनद्वितीयवर्णः । अस्योच्चारणस्थानं कण्ठः । ( यथा, सिद्धान्तकौमुद्याम् । "अ-कु-ह-विसर्ज्जनीयानां कण्ठः ।" इति । शिक्षायान्तु अस्य जिह्वामूलीयत्वमुक्तम् । यथा,—"जिह्वामूले तु कुः प्रोक्तः ।" इति । परं जिह्वामूलीयस्यापि कण्ठमूलोच्चारणपरत्वात् न दोषाय एव ॥ ) यथा, कामधेनुतन्त्रे ।
"खकारं परमाश्चर्य्यं शङ्खकुन्दसमप्रभम् ।
कोणत्रययुतं शून्यं विन्दुत्रयसमन्वितम् ॥
गुणत्रययुतं देवि ! पञ्चदेवमयं सदा ।
त्रिशक्तिसंयुतं वर्णं खकारं प्रणमाम्यहम् ॥"
तस्योत्पत्तिर्यथा, प्रपञ्चसारे ।
"स सर्गः प्रेरितः कण्ठे वायुना कादिमीरयेत् ।
वर्गस्पर्शनमात्रेण कं खरस्पर्शनात्तु खम् ॥"
( बङ्गाक्षरैः ) तस्य लेखनप्रकारादिर्यथा,—
"शिवरूपा वामरेखा दक्षरेखा प्रजापतिः ।
अधोरेखा विष्णुरूपा साक्षाद्ब्रह्मस्वरूपिणी ॥
वामादामगता रेखा वह्निरूपा च सा स्मृता ।
मात्रा कुण्डलिनी साक्षात् खकारः पञ्चदैवतः ॥
ध्यानमस्याः प्रवक्ष्यामि शृणुष्व कमलानने ! ।
बन्धूकपुष्पसङ्काशां रत्नालङ्कारभूषिताम् ॥
वराभयकरां नित्यामीषद्धास्यमुखीं पराम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
तस्य नामानि यथा, नानातन्त्रेषु,—
"खः प्रचण्डः कामरूपी रुद्रिवह्निः सरस्वती ।
आकाशमिन्द्रियं दुर्गा चण्डीशस्तापिनी गुरुः ॥
शिखण्डी दन्तजातीशः कफोणिर्गरुतो वदि ।
शून्यं कपाली कल्याणी सूर्पकर्णोऽजरामरः ।
शुभाशेया चण्डलिङ्गो जना वज्रारखड्गकौ ॥"

खं, क्ली, ( खर्व्वति मनोऽस्मिन् खन्यते क्षुभ्यते मनोऽनेन वा । खर्व्व गतौ, खन दारणे वा अन्येभ्योपीति डः । ) इन्द्रियम् । ( यथा, मनौ । २ । ६० ।
"निराचामेदपः पूर्व्वं द्विः प्रमृज्यात् ततो मुखम् ।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ॥")
पुरम् । क्षेत्रम् । शून्यम् । ( यथा, महाभारते । १ । ८८ । ७ ।
"पतस्तुरीयादुपरात्मकारात्
खात् खेचराणां प्रवरो यथार्कः ॥")
बिन्दुः । ( यथा, लीलावत्यां क्षेत्रव्यवहारे ।
"वेदाग्निबाणखाश्वैश्च खखाभ्राभ्ररसैः क्रमात् ॥")
आकाशम् । ( यथा, मनौ । १२ । १२० ।
"खं सन्निवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम् ॥"
"खं बाह्याकाशं खेषु उदराद्यवच्छिन्नशरीराकाशेषु ।" इति कुल्लूकभट्टः ॥) संवेदनम् । देवलोकः । शर्म्म । इति मेदिनी । खे । १ ॥ लग्नात् दशमराशिः । इति दीपिका ॥ ( यथा, जातकाभरणे । "तनुर्दिषनखमेषगः केन्द्रकोणे विलाभे ॥" ) अभ्रकम् । इति राजनिर्घण्टः ॥ ( शब्दतन्मात्रम् । यथा, मण्डूकोपनिषदि ।
"एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथ्वी सर्व्वस्य धारिणी ॥"
चिदानन्दमयब्रह्माकाशम् । यथा, छान्दोग्योपनिषदि "कं ब्रह्म खं ब्रह्म यदेव कं तदेव खं गङ्गाकारी वै पुरुषो वकारी घोषयंस्तथा ॥"
छिद्रम् । यथा, भागवते । ७ । १२ । २५ ।
"खे खानि वायौ निःश्वासांस्तेजस्यूष्माणमात्मवान् ॥")

खः, पुं, (खर्व्वयति स्वरश्मिभिरिति । खर्व्व + अन्तर्भूतणिच् + डः ।) सूर्य्यः । इति हेमचन्द्रः ॥

खकुन्तलः, पुं, ( खं आकाशं कुन्तलं कुन्तलस्थानीयं यस्य । ) शिवः । इति त्रिकाण्डशेषः ॥ ( विष्णुः । "आकाशं वै विष्णुर्व्योमकेशः शिवो महर्षिः ।" इति श्रुतिः ॥ )

खक्ख, हासे । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-अकं-सेट् । ) कोपधः । खादिः । खक्खति । इति दुर्गादासः ॥

खक्खटः, पुं, ( खक्ख + अटन् । ) कक्खटः । कठिनः । इत्यमरटीकायां रायमुकुटः ॥

खखोल्कः, पुं, ( खे आकाशे सूर्य्यरूपेण खेषु इन्द्रियेषु आत्मरूपेण उल्का इव । अन्तर्ब्बहिःप्रकाशकत्वात् तथात्वम् ।) सूर्य्यः । यथा,—
हरिरुवाच ।
"पुनः सूर्य्यार्च्चनं वक्ष्ये यदुक्तं भृगवे पुरा ।
ओम् खखोल्काय ओम् नमः ॥"
इति गारुडे १६ अध्यायः ॥
खयोल्कायेति च पाठः ॥ ( अयं हि काशीस्थितादित्यः । इति काशीखण्डम् ॥ यदुक्तं तत्रैव ५० अध्याये ।
"खखोल्को नाम भगवानादित्यः परिकीर्त्तितः ॥"
एतद्विवरणं तत्रैवाध्याये विशेषतो द्रष्टव्यम् ॥ )

खगः, पुं, ( खे आकाशे गच्छति । खं + गम् + डः ।) सूर्य्यः । ग्रहः । ( यथा, ज्योतिषे ।
"आमोक्षिमे यदि खगाः च कलिन्दुवारः ॥")
देवः । वायुः । पक्षी । इति मेदिनी । गे । ६ ॥ ( यथा, महाभारते । १ । ३३ । १६ ।
"तं व्रजन्तं खगश्रेष्ठं वज्रेणेन्द्रोऽभ्यताडयत् ॥")
वायुः । इति शब्दचन्द्रिका ॥ (यथा, महाभारते वनपर्व्वणि ।
"तस्मांश्चैव यथा सूर्य्यो दृष्टवान् निर्घृणान् खगः ॥")
शलभः । इत्यमरटीकायां भरतः ॥ (यथा, मनुः । १२ । ६३ ।
"मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः ॥"
महादेवः । यथा, महाभारते । १३ । १७ । ६६ ।
"आकाशनिर्व्विरूपश्च निपाती ह्यवशः खगः ॥")

खगखागं, क्ली, ( खन्यते इति । खन् + कर्म्मणि घञ् । खगानां पक्षिणां खानं वासार्थं कोटरम् ।) वृक्षकोटरम् । इति शब्दचन्द्रिका ॥

खगपतिः, पुं. ( खगान् पातीति । खग + पा + "आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः । ) गरुडः । इति शब्दरत्नावली ॥

खगवक्त्रः, पुं, ( खगस्य वक्त्रमिव वक्त्रं अग्रभागः आकृतिर्वा यस्य । ) बङ्गबदरः । इति शब्दचन्द्रिका ॥

खगवती, स्त्री, ( पृथिव्याः खकक्षायामाकाशगतिमत्त्वात् खगतुल्यगतिलेन साहश्यमस्त्यस्या इति आर्य्यभट्टः । सूर्य्यसिद्धान्तमते तु खगसादृश्यं आकाशस्थितिलेनास्त्यस्याः । मतुप् । मस्य वः । ) पृथ्वी । इति जटाधरः ॥

खगशत्रुः, पुं, ( खगानां शत्रुरिव । ) पृश्निपर्णी चाकुलिया इति भाषा ॥ इति शब्दचन्द्रिका ॥

खगान्तकः, पुं, ( खगानां अन्तकः यम इव । यद्वा, अन्तयति अन्तं करोति इति । अन्तर्णिच् ततो ण्वुल् । ) श्येनपक्षी । इति राजनिर्घण्टः ॥

खगासनः, पुं, (खगस्य सूर्य्यस्य आसनमिव उदयस्थानं यत्र । आसनत्वेन कल्पितत्वात्तथात्वम् । ) उदयपर्व्वतः । इति शब्दमाला ॥ ( खगो गरुड आसनं यस्येति विग्रहे । ) विष्णुः । (एतद्विवरणं यथा, महाभारते ।१। सौपर्णे । ३३ । १२—१८ ।
"तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।
स वव्रे तव तिष्ठेयमुपरीत्यन्तरीक्षगः ॥
उवाच चैनं भूयोऽपि नारायणमिदं वचः ।
अजरश्चामरश्च स्याममृतेन विनाप्यहम् ॥
एवमस्त्विति तं विष्णुरुवाच विनतासुतम् ।
प्रतिगृह्य वरौ तौ च गरुडो विष्णुमब्रवीत् ॥
भवतेऽपि वरं दद्यां वृणोतु भगवानपि ।
तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम् ।
ध्वजञ्च चक्रे भगवानुपरि स्थास्यतीति तम् ॥
एवमस्त्विति तं देवमुक्त्वा नारायणं खगः ।
वव्राज तरसा वेगाद्वायुं स्पर्द्धन् महाजवः ॥")

खगेन्द्रः, पुं, ( खगानां पक्षिणां इन्द्रः । ) गरुडः । इति राजनिर्घण्टः ॥ ( यथा, महाभारते । १ । सौपर्णे । ३१ । ३५ ।
"पतत्त्रीयाश्च गरुड इन्द्रत्वेनाभ्यषिच्यत ॥"
अस्य खगेन्द्रत्वकथा यथा तत्रैव । १६—२० ।
"तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः ।
वालिखिल्यानुपागम्य कर्म्मसिद्धिमपृच्छत ॥
एवमस्त्विति तच्चापि प्रत्यूचुः सत्यवादिनः ।
तान् कश्यप उवाचेदं सान्त्वपूर्व्वं प्रजापतिः ॥
अयमिन्द्रस्त्रिभुवने नियोगाद्ब्रह्मणः कृतः ।
इन्द्रार्थे च भवन्तोऽपि यत्नवन्तस्तपोधनाः ॥
न मिथ्या ब्रह्मणो वाक्यं कर्त्तुमर्हथ सत्तमाः ! ॥
भवतां हि न मिथ्यायं सङ्कल्पो वै चिकीर्षितः ॥
भवत्वेष पतत्त्रीणामिन्द्रोऽतिबलसत्त्ववान् ।
प्रसादः क्रियतामस्य देवराजस्य याचतः ॥")

खगेन्द्रध्वजः, पुं, (खगेन्द्रो गरुडो ध्वजः केतुर्वाहनं च यस्य ।) विष्णुः । (यथा, भागवते ।१।१८।१६ ।
"ज्ञानेन वैयासकिशब्दितेन
भेजे खगेन्द्रध्वजपादमूलम् ॥" )

खगेश्वरः, पुं, ( खगानां ईश्वरः । ) गरुडः । इत्यमरः । १ । १ । ३१ ॥

नीहारः। इति त्रिकाण्डशेषः॥ आकाशवारि। यथाह राजवल्लभः। [लुताख।

"वर्षासु चरन्ति घनैः सहोरगा वियति कीट-तद्विषनुदसमर्थं खजलमगस्त्योदयात् पूर्व्वम्॥"

खजा, स्त्री, (खज्+भावे अप् टाप् च।) मन्थः। मथीया इति भाषा॥ प्रहस्तः। इति मेदिनी॥ (खज्+करणे अप् स्त्रियां टाप्।) दर्व्वी। इति हेमचन्द्रः॥ (यथा, चिकित्सितस्थाने मढ़्-विंशेऽध्याये सुश्रुतेनोक्तम्।

"शुण्ठफलं गोक्षुरकाच्च वीजं
तयोश्चटां गोपयसा विपाच्य।
खजाहतं शर्करया च युक्तं
पीत्वा नरो हृष्यति सर्व्वरात्रम्॥"

पाकसाधनद्रव्यविशेषः। यथा, महाभारते। ४।७।११।

"खजाश्च दर्व्वीश्च करेण धारय-
न्नसिश्च कालाङ्गमकोषमव्रणम्॥")

मारणम्। इति शब्दरत्नावली॥

खजाकः, पुं, (खज् मन्थे+"खजेराकः।" उणां ४।१३। इति आकः।) पक्षी। इत्युणादिवृत्तिः॥

खजाका, स्त्री, पुं, (खजति मथ्नाति पाकम्। खज् मन्थे+"खजेराकः।" उणां ४।१३। इति आकः ततष्टाप्।) दर्व्वी। इत्यमरः। २।९।३४। हाता चमस इत्यादि भाषा॥ ("खजाकः पक्षिविशेषः खजाका दर्व्विरुच्यते॥" इत्युणादिवृत्तिटीका।)

खजित्, पुं, (खेन आकाशध्यानेन शून्यभावनयेति भावः जयति संसारभावं यः। जि+क्विप्। शून्य-वादिनां बौद्धानां शून्यं सर्व्वमेव इत्याकार-भावनया संसारभावजयनात् तथात्वम्।) बुद्ध-विशेषः। इति हेमचन्द्रः। २। १४६॥

खज्योतिः, [स्] पुं, (खे आकाशे ज्योतिर्यस्य।) खद्योतः। इति राजनिर्घण्टः॥

खञ्जः, त्रि, (खजि गतिवैकल्ये+अच्।) विकल-गतिः। खोँड़ा इति भाषा॥ यथा, मनुः।३।२४२।

"खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत्॥")

तत्पर्य्यायः। खोड़ः २। इत्यमरः।२।६।४९। खोणः ३। इति शब्दरत्नावली॥ खोरः ४ खञ्जकः ५। इति हेमचन्द्रः॥ खोटः ६। इति खोड़धातुपदर्शनात्॥ तस्य लक्षणं यथाह माधवकारः।

"वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा। खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात्॥"

खञ्जकः, त्रि, (खञ्जतीति। खजि+कर्त्तरि ण्वुल्। स्वार्थे कन् वा।) खञ्जः। इति हेमचन्द्रः।३।११६॥

खञ्जकारिः, पुं, (खञ्जकस्य अरिः नाशकः।) सुखा। इति राजनिर्घण्टः॥ खेँसारि इति भाषा॥

खञ्जखेटः, पुं, (खञ्ज इव खेटति गच्छति नृत्यन्निव भूमौ चरतीत्यर्थः। खिट्+अच्।) खञ्जन-पक्षी। इति शब्दमाला॥

खञ्जखेलः, पुं, (खञ्ज इव खेलति तद्वत्चलनादि-त्यर्थः। खेल्+अच्।) खञ्जनपक्षी। इति त्रिकाण्डशेषः॥

खञ्जनं, क्ली, (खजि विकलगतौ+भावे ल्युट्।) गमनम्। इति मेदिनी। ने। ५५॥

खञ्जनः, पुं, (खजि+कर्त्तरि ल्युः।) खनामख्यात-पक्षी। तत्पर्य्यायः। खञ्जरीटः २। इत्यमरः। २।५।१५॥ कणाटीनः ३ काकच्छर्दिः ४ खञ्जखेलः ५ तातनः ६ मुनिपुत्रकः ७ भद्रनामा ८ रत्न-निधिः ९। इति त्रिकाण्डशेषः॥ खञ्जखेटः १० गूढ़नीड़ः ११ तण्डकः १२ चारः १३। इति शब्दमाला॥ काकच्छदः १४ नीलकण्ठः १५ कणाटीरः १६ कणाटारकः १७। इति शब्द-रत्नावली॥ (अस्य दर्शनेन यत् शुभाशुभं फलं भवति तदुक्तं वृहत्संहितायां ४५ अध्याये। तद्यथा,—

"खञ्जनको नामायं यो विहगस्तस्य दर्शने प्रथमे।
प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि॥"

तत्र चत्वारः खञ्जना भवन्ति। तेषां नामान्याह।

"स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः।
आकण्ठमुखात् कृष्णः सम्पूर्णः पूरयत्याशाम्॥
कृष्णो गलेऽस्य विन्दुः सितकरटान्तः स रिक्त-कृद्रिक्तः।
पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः॥"

अथ कस्मिन् काले दृष्टः कीदृक्फलं करोति इत्याह।

"अथ मधुरसुरभिफलकुसुमतरुषु सलिलाशयेषु पुण्येषु।
करितुरगभुजगमूर्द्धिं प्रासादोद्यानहर्म्म्येषु॥
गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे।
हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु॥
हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु।
दधिपात्रधान्यकूटेषु च श्रियं खञ्जनः कुरुते॥
पङ्के स्वाद्वन्नाप्तिर्गोरससम्पच्च गोमयोपगते।
शाद्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः॥
गृहपटलेऽर्थभ्रंशो वध्रे बन्धोऽशुचौ भवति रोगः।
पृष्ठे त्वजाविकानां प्रियसङ्गममावहत्याशु॥
महिषोष्ट्रगर्द्दभास्थिश्मशानगृहकोणशर्करा-द्रिस्थः।
प्राकारभस्मकेशेषु चाशुभो मरणरुग्भयदः॥
पक्षौ धुन्वन्नशुभः शुभः पिबन् वारि निम्नगासंस्थः।
सूर्य्योदयेऽथ शस्तो नेष्टफलः खञ्जनोऽस्तमये॥
नीराजने निवृत्ते यया दिशा खञ्जनं नृपो यान्तम्।
पश्येत्तया गतस्य क्षिप्रमरातिर्वशमुपैति॥
तस्मिन् निधिर्भवति मैथुनमेति यस्मिन्
यस्मिंस्तु छर्द्दयति तत्र तलेऽस्ति काचः।
अङ्गारमप्युपदिशन्ति पुरीषणेऽस्य
तत्कौतुकापनयनाय खनेद्धरित्रीम्॥
स्तवकविकलविभिन्नरोगितः
खतनुसमानफलप्रदः खगः।
धनकदभिनिलीयमानको
वियति च बन्धुसमागमप्रदः॥
नृपतिरपि शुभं शुभप्रदेशे
खगमवलोक्य महीतले विदध्यात्।
सुरभिकुसुमधूपयुक्तमर्घं
शुभमभिनन्दितमेवमेति वृद्धिम्॥
अशुभमपि विलोक्य खञ्जनं
द्विजगुरुसाधुसुरार्च्चने रतः।
न नृपतिरशुभं समाप्नुया-
न्न यदि दिनानि च सप्त मांसभुक्॥"

ततः कालफलप्रदर्शनार्थमाह। [दिनशेषे।

"आ वर्षात् प्रथमे दर्शने फलं प्रतिदिनं तु दिक्स्थानमूर्त्तिलग्नर्क्षशान्तदीप्तादिभिश्चोह्यम्।

शाकुने दिग्विशेषेऽस्य शब्दफलं यथा,—

"वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला शक्रे हुताशे भयं याम्यायामपि अभयं सुरद्विषि कलिर्लाभः समुद्रालये। वायव्यां वरवस्त्रगन्धसलिलं दिव्याङ्गना चोत्तरे-ऽैशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने॥")

खञ्जनरतं, क्ली, (खञ्जनस्य रतमिव गोपनीयं अव्यक्तं रतं रतिः।) यतिनां गोप्यं रतम्। यतिनां गोपनीयमैथुनम्। इति हारावली॥

खञ्जना, स्त्री, (खञ्जन इवाचरति। खञ्जन+आच्+क्विप् टाप् च। यद्वा, खजि+युच्+टाप्।) सर्षपी। क्षुद्रखञ्जनजातिः। इति मेदिनी॥

खञ्जनाकृतिः, स्त्री, (खञ्जनस्याकृतिरिवाकृतिरस्य।) खञ्जनविशेषः। इति शब्दचन्द्रिका॥ तत्-पर्य्यायः। छायुत्रिका २ खञ्जनिका ३ सर्षपी ४। इति शब्दरत्नावली॥

खञ्जनिका, स्त्री, (खञ्जनस्तदाकारोऽस्त्यस्याः इति। खञ्जन+ठन् टाप् च।) खञ्जनाकारपक्षि-विशेषः। तत्पर्य्यायः। छायुत्रिका २ तुलिका ३ स्फोटिका ४ सर्षपी ५। इति त्रिकाण्डशेषः॥ खञ्जनाकृतिः ६। इति शब्दचन्द्रिका॥

खञ्जरीटः, पुं, (खञ्ज इव ऋच्छतीति। ऋ गतौ+बाहुलकात् कीटन्।) खञ्जनपक्षी। इत्यमरः। २।५।१५॥ (यथा, अमरुशतके। ६६।

"तन्वी शरत्त्रिपथगापुलिने कपोलौ
लोले दृशौ रुचिरचञ्चलखञ्जरीटौ॥")

खट, काङ्क्षि। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-सेट्।) खटति। काङ्क्षि आकाङ्क्षायाम्। इति दुर्गादासः॥

खटः, पुं, (खट्+अच्।) अन्धकूपः। कफः। प्रहारान्तरम्। टङ्कः। इति मेदिनी॥ तृणम्। इति हेमचन्द्रः॥ लाङ्गलम्। कतृणम्। इत्य-जयपालः॥

खटकः, पुं, (खट्+बाहुलकात् वुन्।) घटकः। तत्पर्य्यायः। नागवीटः २ टाङ्करः ३ चारचरः ४। इति त्रिकाण्डशेषः॥ कुञ्चितपाणिः। इति शब्द-माला॥

खटिकः, पुं, (खटः अस्त्यस्य इति ठन्।) कुञ्चित-पाणिः। इति हेमचन्द्रः॥

खटिका, स्त्री, (खट्+अच्। ततः संज्ञायां कन् टाप् अत इत्वञ्च।) लेखनद्रव्यम्। खड़ी इति भाषा। (यथा, कलाविलासे। २। २३।

# खगोलः

अथ ग्रहाणां मध्यभुक्तयः ।

| | शनेः | राहोः | चन्द्रोच्चस्य |
|---|---|---|---|
| दिने— कलाद्याः | २।०।२३ | ३।१०।४४ | ६।४१।० |
| वर्षे—— राश्याद्याः | ०।१२।१२।५४ | ०।१८।२१।१२।३६ | १।१०।४०।५८।४२ |
| युगे—— भगणाद्याः | २४६५६८ | २३१२३८ | ४८८१०३ |
| कल्पे—— भगणाद्याः | २४६५६८००० | २३१२३८००० | ४८८१०३००० |

अथ राशिषु नक्षत्राणां स्थितिः ।

| | अश्विनी | भरणी | कृत्तिका | रोहिणी | मृगशिरा | आर्द्रा | पुनर्वसुः | पुष्या | अश्लेषा |
|---|---|---|---|---|---|---|---|---|---|
| राशिः | ० | ० | १ | १ | २ | २ | २ | ३ | ३ |
| अंशः | १ | २० | १ | २९ | ३ | १ | २० | १६ | २९ |
| कला | ० | ० | ३ | ३० | ० | १० | ४० | २० | २० |
| अपक्रम-भागाः | १० उत्तरः | १२ उत्तरः | ५ उत्तरः | ५ दक्षिणः | १० दक्षिणः | ९ दक्षिणः | ६ उत्तरः | ० उत्तरः | ७ दक्षिणः |
| | **मघा** | **पूर्वफल्गुनी** | **उत्तरफल्गुनी** | **हस्ता** | **चित्रा** | **स्वाती** | **विशाखा** | **अनुराधा** | **ज्येष्ठा** |
| राशिः | ४ | ४ | ५ | ५ | ५ | ६ | ६ | ७ | ७ |
| अंशः | २ | २२ | ५ | १० | २४ | १६ | २६ | २४ | २९ |
| कला | २० | २० | ४० | ० | १० | ४ | ४० | ० | ० |
| अपक्रम-भागाः | उ | १२ उ | १३ उ | ११ द | २ द | २७ उ | ३४ द | ३ द | ४ द |

| | मूला | पूर्वाषाढ़ा | उत्तराषाढ़ा | अभिजित् | श्रवणा | धनिष्ठा | शतभिषा | पूर्वभाद्रपद् | उत्तरभाद्रपद् | रेवती |
|---|---|---|---|---|---|---|---|---|---|---|
| राशिः | ८ | ८ | ८ | ८ | ९ | ९ | १० | १० | ११ | ११ |
| अंशः | १ | १४ | २० | २४ | १० | २० | २० | २६ | १ | २९ |
| कला | १० | ० | ० | ४० | ० | ० | ० | ० | ० | ५० |
| अपक्रम-भागाः | ९ द | ५ ३० द | ५ द | ३० उ | ३० उ | ३३ उ | ३० द | २४ उ | २६ उ | ० उ |

खगोलः, पुं आकाशमण्डलम्। तस्य विवरणं यथा। एतद्ब्रह्माण्डं सच्छिद्रं कटाहद्वयस्य गोलाकारसम्पुटतुल्यम्। यत्र भूर्भुवःस्वर्महर्जनतपःसत्याख्यानि सप्तभुवनानि सन्ति। ब्रह्माण्डमध्ये यः परिधिः स आकाशकक्षा। तन्मध्ये परावह परिवह सुवह संवहोद्वहाख्यानां पञ्चानां वायूनां स्थानानि अधोऽधःक्रमेण सन्ति। तदन्तर्गताधोऽधःस्थितपूर्वाभिमुखशनिबृहस्पतिराहुकेतुमङ्गलसूर्यशुक्रबुधचन्द्रग्रहयुक्तं दक्षिणोत्तरस्थितध्रुवाख्यताराद्वयेन बद्धं नक्षत्रचक्रं सदापश्चिमगतिना प्रवहवायुना भ्रमति। ततः अधोऽधःक्रमेण सिद्धविद्याधरमेघविद्युदादियुक्तः सदोत्तरगामी आवहवायुर्भ्रमति एतद्ब्रह्माण्डस्य मध्ये समन्तात् ईश्वरस्य धारणात्मिकां शक्तिं बिभ्राणो भूगोलः शून्ये तिष्ठति। एतदन्तर्गता नागासुरसमाश्रया दिव्यौषधिरत्नोपेता रम्याः पातालरसातलमहातलतलातलसुतलवितलातल-संज्ञका ऊर्द्ध्वक्रमेण सप्तपातालभूमयश्च सन्ति। सुमेरुपर्व्वतोपरि शून्ये एका ध्रुवतारा भ्रमति। एवं वडवानलोपरि शून्ये अन्या ध्रुवतारा भ्रमति।

| अथ कक्षायोजनानि | | व्यासयोजनानि | पृथिव्युच्चयोजनानि |
|---|---|---|---|
| आकाशस्य ब्रह्माण्डस्य वा | १८७१२०८०८६४०००००० | ५६५३८४३६११२०७२०२७ | २६७६६२१६५५६३६६६६ |
| नक्षत्रस्य | २५९८९०००० | ८२६६२२७३ | ४१३४५३३६ |
| शनेः | १२७६६८२५५ | ४०६२०२१७ | २१३१००५८ |
| राहुकक्षा | ८०५७२८६३२ | २५६३३६८२०१ | १२८१८८३३०० |
| गुरोः | ५११७५७६४ | १६३४६८४ | ८१७२६१७ |
| चन्द्रोच्चस्य | ३८३२८४८४ | १२७४२८२८ | ६३७०६१४ |
| मङ्गलस्य | ८१४६९०९ | २५९२१९८ | १२९५२९९ |
| सूर्यस्य | ४३३१५०० | १३७८२०४ | ६८८३०२ |
| शुक्रशीघ्रस्य | २६६४१६७ | ८४०८३९ | ४२३११९ |
| बुधशीघ्रस्य | १०४३२०९ | ३३११६० | १६५१६५ |
| बुधशुक्रयोः | ४३६१५० | १३८७०५ | ६९५८८ |
| चन्द्रस्य | ३२४००० | १०३०९१ | ५०४५ |
| आवहवायोः | ५१०४ | १६२४ | १२ |
| भूगोलस्य | ४९६७ | १५८१ | ० |

अथ ग्रहाणां मध्यभुक्तयः।

| | रवेः | चन्द्रस्य | मङ्गलस्य |
|---|---|---|---|
| नित्य— कलाद्या | ५९।८।१०।० | ७९०।३४।५२ | ३१।२६।२८ |
| वर्ष— राश्याद्या | १२।०।०।० | ४।१२।४६।४०।४८ | ६।११।२४।९।३६ |
| युग— भगणाद्या | ४३२०००० | ५७७५३३३६ | २२९६८३२ |
| कल्प— भगणाद्या | ४३२०००००००० | ५७७५३३३६००० | २२९६८३२००० |

| | बुधशीघ्रस्य | बृहस्पतेः | शुक्रशीघ्रस्य |
|---|---|---|---|
| नित्य— कलाद्या | २४५।३२।२० | ४।५९।९ | ९६।७।४३ |
| वर्ष— राश्याद्या | १।२४।४।४५।२२।४८ | १।०।२१।३।३६ | ७।१५।११।४९।१२ |
| युग— भगणाद्या | १७९३७०६० | ३६४२२० | ७०२२३७६ |
| कल्प— भगणाद्या | १७९३७०६०००० | ३६४२२०००० | ७०२२३७६००० |

# खगोलः

अथ ग्रहाणां मध्यभुक्तयः ।

| | शनेः | राहोः | चन्द्रोच्चस्य |
|---|---|---|---|
| दिने— कलाद्याः | २।०।२३ | ३।१०।४४ | ६।४१।० |
| वर्षे— राश्याद्याः | ०।१२।१२।५४ | ०।१८।२१।१२।३९ | १।१०।४०।५८।४ |
| युगे— भगणाद्याः | २४६५६८ | २३१२३८ | ४८८२०३ |
| कल्पे— भगणाद्याः | २४६५६८००० | २३१२३८००० | ४८८२०३००० |

अथ राशिषु नक्षत्राणां स्थितिः ।

| | अश्विनी | भरणी | कृत्तिका | रोहिणी | मृगशिरा | आर्द्रा | पुनर्वसुः | पुष्या | आश्लेषा |
|---|---|---|---|---|---|---|---|---|---|
| राशिः | ० | ० | १ | १ | २ | २ | २ | ३ | ३ |
| अंशः | १ | २० | १ | २८ | ३ | १ | २० | १६ | २८ |
| कला | ० | ० | ३ | ३० | ० | १० | ४० | २० | २० |
| अपक्रमभागाः | १० उत्तरः | १२ उत्तरः | ५ उत्तरः | ५ दक्षिणः | १० दक्षिणः | ९ दक्षिणः | ६ उत्तरः | ० उत्तरः | ७ दक्षिणः |

| | मघा | पूर्वफल्गुनी | उत्तरफल्गुनी | हस्ता | चित्रा | स्वाती | विशाखा | अनुराधा | ज्येष्ठा |
|---|---|---|---|---|---|---|---|---|---|
| राशिः | ४ | ४ | ५ | ५ | ५ | ६ | ६ | ७ | ७ |
| अंशः | २ | २२ | ५ | १० | २४ | १९ | २६ | २४ | २८ |
| कला | २० | २० | ४० | ० | १० | ४ | ४० | ० | ० |
| अपक्रमभागाः | उ | १२ उ | १३ उ | ११ द | २ द | ३७ उ | ३४ द | ३ द | ४ द |

| | मूला | पूर्वाषाढा | उत्तराषाढा | अभिजित् | श्रवणा | धनिष्ठा | शतभिषा | पूर्वभाद्रपद् | उत्तरभाद्रपद् | रेवती |
|---|---|---|---|---|---|---|---|---|---|---|
| राशिः | ८ | ८ | ८ | ८ | ९ | ९ | १० | १० | ११ | ११ |
| अंशः | १ | १४ | २० | २४ | १० | २० | २० | २६ | १ | २९ |
| कला | १० | ० | ० | ४० | ० | ० | ० | ० | ० | ५० |
| अपक्रमभागाः | ९ द | ५ ३० द | ५ द | ३० उ | ३० उ | ३३ उ | ३० द | २४ उ | २६ उ | ० उ |

नीहारः । इति त्रिकाण्डशेषः ॥ आकाशवारि ।
यथाह राजवल्लभः । [लुताख्य ।
"वर्षासु चरन्ति घनैः सहोरगा वियति कीट-
तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्व्वम् ॥"
खजा, स्त्री, (खज्+भावे अप् टाप् च ।) मन्थः ।
मन्थोया इति भाषा ॥ प्रहस्तः । इति मेदिनी ॥
( खज्+करणे अप् स्त्रियां टाप् । ) दर्व्वी ।
इति हेमचन्द्रः ॥ (यथा, चिकित्सितस्थाने षड्-
विंशेऽध्याये सुश्रुतेनोक्तम् ।
"गुप्ताफलं गोक्षुरकाच्च वीजं
तथोच्चटां गोपयसा विपाच्य ।
खजाहतं शर्करया च युक्तं
पीत्वा नरो हृष्यति सर्व्वरात्रम् ॥"
शाकसाधनद्रव्यविशेषः । यथा, महाभारते ।
४।७।११ ।
"खजाश्च दर्व्वीश्च करेण धारय-
न्नविष्ट कालाङ्गमकोषमव्रणम् ।")
मारणम् । इति शब्दरत्नावली ॥
खजाकः, पुं, ( खज् मन्थे+"खजेराकः ।" उणां
४।१३। इति आकः ।) पक्षी । इत्युणादिवृत्तिः ॥
खजाका, स्त्री, पुं, ( खजति मथ्नाति शाकम् ।
खज् मन्थे+"खजेराकः ।" उणां ४।१३ । इति
आकः ततष्टाप् ।) दर्व्वी । इत्यमरः । २।९।३४ ।
हाता चमस इत्यादि भाषा ॥
("खजाकः पक्षिणि ख्यातः खजाका दर्व्विरुच्यते ॥"
इत्युणादिवृत्तिटीका ।)
खजित्, पुं, (खेन आकाशध्यानेन शून्यभावनयेति
भावः जयति संसारभावं यः । जि+क्विप् । शून्य-
वादिनां बौद्धानां शून्यं सर्व्वमेव इत्याकार-
भावनया संसारभावजयनात् तथात्वम् ।) बुद्ध-
विशेषः । इति हेमचन्द्रः । २ । १४६ ॥
खज्योतिः, [स्] पुं, ( खे आकाशे ज्योतिर्यस्य ।)
खद्योतः । इति राजनिर्घण्टः ॥
खञ्जः, त्रि, ( खजि गतिवैकल्ये+अच् । ) विकल-
गतिः । खोँड़ा इति भाषा ॥ यथा, मनुः ।३।२४२।
"खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा
भवेत् ॥")
तत्पर्य्यायः । खोड़ः २ । इत्यमरः ।२।६।४६।
खोतः ३ । इति शब्दरत्नावली ॥ खोरः ४
खञ्जकः ५ । इति हेमचन्द्रः ॥ खोटः ६ । इति
खोड़धात्वर्थदर्शनात् ॥ तस्य लक्षणं यथाह
माधवकरः ।
"वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ।
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥"
खञ्जकः, त्रि, ( खञ्जतीति । खजि+कर्त्तरि ण्वुल् ।
स्वार्थे कन् वा ।) खञ्जः । इति हेमचन्द्रः ।३।११६॥
खञ्जकारिः, पुं, (खञ्जकस्य अरिः नाशकः ।) सुखा ।
इति राजनिर्घण्टः ॥ खेँसारि इति भाषा ॥
खञ्जखेटः, पुं, (खञ्ज इव खेटति गच्छति नृत्यन्निव
भूमौ चरतीत्यर्थः । खिट्+अच् ।) खञ्जन-
पक्षी । इति शब्दमाला ॥
खञ्जखेलः, पुं, ( खञ्ज इव खेलति तद्वचलनादि-
त्यर्थः । खेल्+अच् ।) खञ्जनपक्षी । इति
त्रिकाण्डशेषः ॥
खञ्जनं, क्ली, ( खजि विकलगतौ+भावे ल्युट् ।)
गमनम् । इति मेदिनी । ने । ५५ ॥
खञ्जनः, पुं, (खजि+कर्त्तरि ल्युः ।) खनामख्यात-
पक्षी । तत्पर्य्यायः । खञ्जरीटः २ । इत्यमरः ।
२।५।१५॥ कणाटीनः३ काकच्छर्दिः४ खञ्जखेलः५
तातनः ६ मुनिपुत्त्रकः ७ भद्रनामा ८ रत्न-
निधिः ९ । इति त्रिकाण्डशेषः ॥ खञ्जखेटः १०
गूढ़नीड़ः ११ तक्षकः १२ चरः १३ । इति
शब्दमाला ॥ काकच्छदः १४ नीलकण्ठः १५
कणाटीरः १६ कणाटारकः १७ । इति शब्द-
रत्नावली ॥ ( अस्य दर्शनेन यत् शुभाशुभं फलं
भवति तदुक्तं वृहत्संहितायां ४५ अध्याये ।
तद्यथा,—
"खञ्जनको नामायं यो विहगस्तस्य दर्शने प्रथमे ।
प्रोक्तानि यानि मुनिभिः फलानि तानि
प्रवक्ष्यामि ॥"
तत्र चत्वारः खञ्जना भवन्ति । तेषां नामान्याह ।
"स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः ।
आकण्ठमुखात् कृष्णः सम्पूर्णः पूरयत्याशाम् ॥
कृष्णो गलेऽस्य बिन्दुः सितकरटान्तः स रिक्त-
कृद्रिक्तः ।
पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः ॥"
अथ कस्मिन् काले दृष्टः कीदृक्फलं करोति
इत्याह ।
"अथ मधुरसुरभिफलकुसुमतरुषु सलिलाशयेषु
पुण्येषु ।
करितुरगभुजगमूर्द्ध्नि प्रासादोद्यानहर्म्म्येषु ॥
गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे ।
हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु ॥
हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु ।
दधिपात्रधान्यकूटेषु च श्रियं खञ्जनः कुरुते ॥
पङ्के स्वाद्वन्नाप्तिर्गोरससम्पच्च गोमयोपगते ।
शाद्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः ॥
गृहपटलेऽर्थभ्रंशो वध्रे बन्धोऽशुचौ भवति रोगः ।
पृष्ठे त्वजाविकानां प्रियसङ्गममावहत्याशु ॥
महिषोष्ट्रगर्द्दभास्थिश्मशानगृहकोणशर्करा-
द्रिस्थः ।
प्राकारभस्मकेशेषु चाशुभो मरणरुग्भयदः ॥
पक्षौ धुन्वन्नशुभः शुभः पिबन् वारि निम्नगासंस्थः ।
सूर्य्योदयेऽथ शस्तो नेष्टफलः खञ्जनोऽस्तमये ॥
नीराजने निवृत्ते यया दिशा खञ्जनं नृपो यान्तम् ।
पश्येत्तया गतस्य क्षिप्रमरातिर्वशमुपैति ॥
तस्मिन् निधिर्भवति मैथुनमेति यस्मिन्
यस्मिंस्तु छर्द्दयति तत्र तलेऽस्ति काचः ।
अङ्गारमप्युपदिशन्ति पुरीषणेऽस्य
तत्कौतुकापनयनाय खनेद्धरित्रीम् ॥
मृतविकलविभिन्नरोगितः
स्वतनुसमानफलप्रदः खगः ।
धनकृदभिनिलीयमानको
वियति च बन्धुसमागमप्रदः ॥
नृपतिरपि शुभं शुभप्रदेशे
खगमवलोक्य महीतले विदध्यात् ।
सुरभिकुसुमधूपयुक्तमर्घं
शुभमभिनन्दितमेवमेति वृद्धिम् ॥
अशुभमपि विलोक्य खञ्जनं
द्विजगुरुसाधुसुरार्च्चने रतः ।
न नृपतिरशुभं समाप्नुया-
न्न यदि दिनानि च सप्त मांसभुक् ॥"
ततः कालफलप्रदर्शनार्थमाह । [दिनशेषे ।
"आ वर्षात् प्रथमे दर्शने फलं प्रतिदिनं तु
दिक्स्थानमूर्त्तिलग्नर्क्षशान्तदीप्तादिभिश्चोह्यम् ।
शाकुने दिग्विशेषेऽस्य शब्दफलं यथा,—
"वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला शक्रे हुताशे भयं
याम्यामग्निभयं सुरद्विषि कलिर्लाभः समुद्रालये ।
वायव्यां वरवस्त्रगन्धसलिलं दिव्याङ्गना चोत्तरे-
ऽऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने ॥")
खञ्जनरतं, क्ली, ( खञ्जनस्य रतमिव गोपनीयं
अव्यक्तं रतं रतिः । ) यमिनां गोप्यं रतम् ।
यतिनां गोपनीयमैथुनम् । इति हारावली ॥
खञ्जना, स्त्री, (खञ्जन इवाचरति । खञ्जन+ङाच्
+क्विप् टाप् च । यद्वा, खजि+युच्+टाप् ।)
सर्षपी । क्षुद्रखञ्जनजातिः । इति मेदिनी ॥
खञ्जनाकृतिः, स्त्री, (खञ्जनस्याकृतिरिवाकृतिरस्य ।)
खञ्जनविशेषः । इति शब्दचन्द्रिका ॥ तत्-
पर्य्यायः । हापुत्त्रिका २ खञ्जनिका ३ सर्षपी ४ ।
इति शब्दरत्नावली ॥
खञ्जनिका, स्त्री,(खञ्जनस्तदाकारोऽस्त्यस्याः इति ।
खञ्जन+ठन् टाप् च । ) खञ्जनाकारपक्षि-
विशेषः । तत्पर्य्यायः । हापुत्त्रिका २ तुलिका३
स्फोटिका ४ सर्षपी ५ । इति त्रिकाण्डशेषः ॥
खञ्जनाकृतिः ६ । इति शब्दचन्द्रिका ॥
खञ्जरीटः, पुं ( खञ्ज इव ऋच्छतीति । ऋ गतौ+
बाहुलकात् कीटन् ।) खञ्जनपक्षी । इत्यमरः ।
२ । ५ । १५ ॥ (यथा, अमरुशतके । ९६ ।
"तन्वी शरत्त्रिपथगापुलिने कपोलौ
लोले दृशौ रुचिरचञ्चलखञ्जरीटौ ॥")
खट, काङ्क्षे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) खटति । काङ्क्षि आकाङ्क्षायाम् ।
इति दुर्गादासः ॥
खटः, पुं, ( खट्+अच् । ) अन्धकूपः । कफः ।
प्रहारान्तरम् । टङ्कः । इति मेदिनी ॥ तृणम् ।
इति हेमचन्द्रः ॥ लाङ्गलम् । कन्तृणम् । इत्य-
जयपालः ॥
खटकः, पुं, ( खट्+बाहुलकाद् वुन् । ) घटकः ।
तत्पर्य्यायः । नागवीटः२ टाङ्करः ३ चाचरः ४ ।
इति त्रिकाण्डशेषः ॥ कुञ्चितपाणिः । इति शब्द-
माला ॥
खटिकः, पुं, ( खटः अस्त्यस्य इति ठन् । ) कुञ्चित-
पाणिः । इति हेमचन्द्रः ॥
खटिका, स्त्री, (खट्+अच् । ततः संज्ञायां कन्
टाप् अत इत्वञ्च । ) लेखनद्रव्यम् । खड़ी इति
भाषा । (यथा, कलाविलासे । २ । २३ ।

ये च मे युद्धकालेषु प्रवहन्ति रणे सदा ।
अशक्य धारयन्तेश्च दानवैर्बलवत्तरैः ॥
दृष्टिकोश समुत्पन्य पपच्छेदं यथात्तदा ।
वाजिना शुक्रवाक्येन शालिहोत्रो महामुनिः ॥
छिन्नपक्षास्तु ते सर्व्वे गत्वा तन्त्विमब्रुवन् ।
दीनाः सुदुःखसम्पन्ना रुधिरेण परिप्लुताः ॥
भगवन् । किं निमित्तं न पक्षच्छेदं कृतस्त्वया ।
अपराधविहीनानां नेच्छन्ति पण्डिताः ॥
तस्मादनुग्रहं प्राज्ञ । कर्त्तुमर्हसि वाजिनाम् ।
यथा स्यात् सर्व्वदा सौख्यं पृथिव्यां मुनिपुङ्गव ॥
अथाश्वान् कृपयाविष्टस्तानुवाच सुदुःखितान् ।
इन्द्राज्ञया कृतं सर्व्वं भवतां पक्षपातनम् ॥
तस्माद्वः प्रकरिष्यामि भविष्यति यथासुखम् ।
पृष्ठीरम्या यथा दृष्टे गौरवं च जगत्त्रये ॥
अद्य प्रभृति देवानां वाहनत्वं करिष्यथ ।
तथा भूमिपतीनाञ्च गौरवेण समन्विताः ॥
यो राजा भवतां पुष्टिं स्वन्नपानादिभिः सदा ।
करिष्यति न सन्देहो भविष्यति स दुर्ज्जयः ॥
न च त्यक्ष्यति तं लक्ष्मीः कदाचिच्चपलक्षणा ।
अपि सर्व्वैर्गुणैर्हीनं बहुशत्रुभिरावृतम् ॥
तथा चैव विधास्यामि परमश्वचिकित्सितम् ।
पुष्टौ च रोगनाशार्थं नराणां विहितं यथा ॥
तस्मादश्वकृते भूलोके पातालञ्च तथापरे ।
मया चान्ये मन्त्रदेशाद्येन शान्तिर्भवद्भुवने ॥
एवं विसृज्य तान् सर्व्वान् शालिहोत्रस्तुरङ्गमान् ।
चक्रे द्वादशसाहस्रीं तन्त्रे संहितां सुधीः ॥
ततः प्रभृति लोकेऽस्मिन् वाह्या जातास्तुरङ्गमाः ।
तच्चिकित्सितं तथा शालिहोत्रप्रभाषितम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते प्रश्नो नाम प्रथमोऽध्यायः ॥

अथ जातिः ।

उत्तमा मध्यमा नीचा कनीयांसस्तथापरे ।
चतुर्धा वाजिनो भूमौ जायन्ते दृष्टसंश्रयात् ॥
ताजिकाः खुरशाणाश्च उत्तराश्चोत्तमा हयाः ।
गौजिकाणाश्च केकाणाः प्रौढाहाराश्च मध्यमाः ॥
गाह्वराश्चोत्तमाश्चैव राजशूलाश्च मध्यमाः ।
गोह्वराः शावराश्चैव सिन्धुपाराः कनीयसः ॥
अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृताः ।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे ॥
समीरप्रभवाश्चान्ये उलूकम्भजास्तथा ।
जलोद्भवा द्विजातीयाः क्षत्रिया वह्निसम्भवाः ॥
समीरप्रभवा वैश्या उलूकाश्च शूद्रजाः ।
विवेकी सद्गुणो विप्रस्तेजस्वी क्षत्रियो बली ॥
दुःखभारसहो वैश्यः शूद्रो निःसत्त्वकातरः ।
ब्राह्मणः सामवाही च भेरवाही च क्षत्रियः ।
उपादानं वैश्यः स्याच्छूद्रो दण्डेन ताडितः ।
पद्मगन्धः सन्तविप्रः क्षत्रियोऽगुरुगन्धकः ।
घृतगन्धः सन्तवैश्यो मीनामोदी च शूद्रकः ।
विप्रास्तु वाजिनः सर्व्वे क्षत्रियो भूपतेः सदा ।
द्वौ वैश्यस्याथ शूद्रस्य शूद्र एव सुखावहः ।
कश्चिदिच्छन्ति भूपानां सर्व्वेऽप्यथ वाहनोचिताः ।
तच्च भूपते यथा शालिहोत्रेण निर्मिताः ।

ब्राह्मणाः क्षेमकार्य्येषु सिद्धिं गच्छन्ति वाजिनः ।
क्षत्रिया युद्धकार्य्येषु वैश्या वित्तार्ज्जने सदा ।
शूद्राः कार्य्येषु क्षुद्रेषु शालिने वाजिनः सदा ॥
आरोहेत सर्व्वकार्य्येषु यदीच्छेच्छाश्वतीं श्रियम् ।
सन्ति शुभा भवन्त्येते वाजिनो यस्य भूतले ॥
सन्त्येव निद्रावश्यगता निद्राभद्रस्य सम्भवः ।
जायते सङ्गरे प्राप्ते कर्क्करस्य च भक्षणे ॥
प्रबुद्धः कथयत्यश्वः शुभं वा यदि वाशुभम् ।
स्वस्वामिनो निरीक्षितेङ्गितैश्च विचक्षणः ॥
यः सव्यजो हयो रावमर्द्धमर्द्धं करोति च ।
खुराग्रेण लिखन् भूमिं स ग्रसति रणे जयम् ॥
यः करोत्यसकृन्मूत्रं पुरीषञ्चाशुभावहम् ।
स ग्रसति पराभूतिं यस्यैव वर्त्तते हयः ॥
निराभिष निर्द्दोषे यो जागर्त्ति नृपतेर्हयः ।
स ग्रसति हुतन्तस्य स्थिरस्यापि प्रयाणकम् ॥
यस्य व्याधिं विना वाजी ग्रासमत्यजति दुर्म्मनाः ।
अशुभातञ्च कुरुते तस्य भर्त्तुरशोभनम् ॥
पुलकाङ्कितपुच्छा ये जायन्ते भूपतेर्हयाः ।
निरीक्षन्त प्रभौ नाम ते वदन्ति विनाशभम् ॥
भ्रष्टे राजवेश्मनि प्रविशन्ति हयालये ।
यस्येच्छेच्छाश्वतीं वृद्धिं तथाश्वैव तथात्मनः ॥
स्फुलिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः ।
परचक्रागमाशंसी विज्ञेयो हयपण्डितैः ॥
अश्वशालां समासाद्य यदात्मंशुभक्षिका ।
मधुजालं प्रकुर्व्वन्ति तत्राश्वान् घ्नन्ति क्षत्रयः ॥
तस्मात् सप्रयत्नेन वाजिशालां प्ररक्षयेत् ।
उपायैश्च सर्व्वैश्च य इच्छेद्धितमात्मनः ॥
ब्राह्मणान्वाचयत् सन्ति नित्यं वस्त्रविचक्षणान् ।
तिलहोमस्तथा कार्य्यो जपश्च शान्तयेऽपि ॥
मन्दुरायां सदा धार्य्यो रक्तवक्त्रो महाकपिः ।
सर्व्वपापविनाशाय वाजिनाञ्च विवृद्धये ॥
मरणं हन्त्येते यत्र प्रविशन्ति हयालये ।
यस्येच्छेच्छाश्वतीं वृद्धिं तथाश्वैव तथात्मनः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते जात्यधिकारे द्वितीयोऽध्यायः ॥

अथ वर्णवर्णनम् ।

‘यथा सप्त भवन्तीह सर्व्वेषां वाजिनां ध्रुवम् ।
तानहं कीर्त्तयिष्यामि भेदजातानेकधा ॥
सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एव च ।
नील कृष्णोऽथ सर्व्वेषां श्वेत श्रेष्ठतमः स्मृतः ॥
पट्टार्हो भूपतेर्वाजी सर्व्वश्वेत प्रशस्यते ।
तदभावे यथा प्रोक्तास्तथा श्रेष्ठाः क्रमेण च ॥
श्वेत प्रालेयसदृशो रक्तः कुङ्कुमसन्निभः ।
हरिद्रासदृशः पीतः सारङ्गः कर्बुरः स्मृतः ॥
पिङ्गः कपिलकाकारो नीलो दूर्व्वादलसन्निभः ।
कृष्णो भ्रमरकाकारः प्राज्ञैः समुदाहृतः ॥
पीताभः श्वेतपादो यस्तथा स्यात् सितलोचनः ।
चक्रवाकः स विज्ञेयो राजार्हो वाजिसत्तमः ॥
सर्व्वश्वेतो हयो यस्तु भवेत्कृष्णैककर्णकः ।
स वाजी वाजिमेधार्हः श्यामकर्णः प्रकीर्त्तितः ॥
शुचे चन्द्रकसंवीतो अम्बुपलसमाकृतिः ।
श्वेतपादः स विज्ञेयो मल्लिकाख्यः स पूजितः ॥

चत्वारोऽप्यसिता पादाः सन्ध्येतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ।
यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा ।
मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम् ॥
भस्माभं वाजिनं त्यजेत् सुदूरेण नराधिपः ।
यदि वाञ्छति कल्याणं वाञ्छन् श्रीमनुत्तमम् ॥
यस्य रोमविभेदेन जायन्ते रोमबिन्दवः ।
पुष्याख्यः स परित्याज्यः सर्व्ववाजिभयावहः ॥
यस्य पादाः सिताः सर्व्वे तथा वक्त्रञ्च सन्धतः ।
कल्याणपञ्चकः प्रोक्तः सर्व्वकल्याणकृच्च सः ॥
विमिश्रवर्णकाः सर्व्वे प्रशस्ता वाजिनः स्मृताः ।
कृष्णनीलास्ति यत्नमेकं मुक्त्वा सुदूरतः ॥
यस्योतत्कृष्णतरो वर्णो वृद्धिं याति दिने दिने ।
नाशयति तथा सौख्यात् स करोति बहून् हयान् ।
यस्याशुभेन वर्णेन छाद्यते च प्रधानतः ।
विवृद्धिं गच्छता सोऽथ करोति हयसंक्षयम् ।
इति श्रीनकुलकृतेऽश्वचिकित्सिते वर्णो नाम तृतीयोऽध्यायः ॥

अथ आवर्त्ताः ।

“आवर्त्ता निश्चिताः प्रोक्ताः शालिहोत्रमहात्मना ।
गात्रस्थानविभागेन तेषां व्यक्तिर्म्मयोच्यते ॥
ललाटे मस्तके चैव ग्रीवायां हृदये तथा ।
पादे पृष्ठे महीबन्ध नाभिदेशे विशेषतः ॥
स्कन्धे पार्श्वे गले वक्ते कुक्षौ रन्ध्रे त्रिके तथा ।
आद्यास्तयोऽश्ववर्त्ता विज्ञेया वाजिपण्डितैः ॥
नासिकायां ललाटाग्रे पृष्ठे कण्ठे च मस्तके ।
आवर्त्तो जायते येषां ते धन्यास्तुरगोत्तमाः ॥
हृदि स्कन्धे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाग्रे मध्यमास्ते प्रकीर्त्तिताः ॥
ललाटे यस्य चावर्त्तौ द्वितीयस्य स लिङ्गकः ।
मस्तके च तृतीयश्च पूर्ण्णकुक्षिः स उत्तमः ॥
पृष्ठवंशे तथावर्त्तो यस्यैकः सप्रजायते ।
स करोत्यश्वसङ्घातान् स्वामिनः स्वयमक्षकः ॥
कक्षायां जानुमेढ्रे च त्रिकलौ पुच्छसन्निधौ ।
पुच्छे गुह्ये बलावर्त्तावावर्त्ता अधमा हये ।
जयो यस्य ललाटस्था आवर्त्ता अधरोत्तराः ।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः परः ।
एवमेव प्रकारेण जयो ग्रीवां समाश्रिताः ।
जयावर्त्तः स वाजीशो जायते भूपमन्दिरे ॥
ललाटे युगलावर्त्तौ चन्द्रार्कौ सम्प्रकीर्त्तितौ ।
वाजिनो यदि तौ स्यातां राष्ट्रवृद्धिकरौ परौ ॥
उपर्य्युपरि यस्य स्युरावर्त्ता अलिके त्रयः ।
निःश्रेणिः स तु विज्ञेयो राष्ट्रवृद्धिकरः परः ॥
एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते ।
वर्द्धमानः स विज्ञेयः स दुष्टेषु स्वामिनामलम् ॥
कपोलाभ्यान्तयावर्त्तो विद्यते वाजिनो यदि ।
तावश्विनाविति प्रोक्तौ युद्धकाले जयप्रदौ ॥
गलावर्त्तो भवेद्यस्य वाजिनो दक्षिणाश्रयः ।
स करोति महासौख्यं स्वामिनः श्रीवत्सकः ॥
तद्वामाश्रयः क्रूरः प्रकरोति धनक्षयम् ।
इन्द्रकाख्याविभौ प्रोक्तौ नृपराज्यविवृद्धिदौ ।
कर्णमूले यदावर्त्तस्कन्धे च तथापरः ।

विनयाख्यावुभौ ज्ञेयौ युद्धकाले जयप्रदौ ॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः ।
चक्रवर्त्ती स विज्ञेयो वाजी भूपालपूजितः ॥
कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते ।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवर्द्धनः ॥
स्कन्धे पार्श्वे यदावर्त्तः स भवेत् पद्मलक्षणः ।
करोति विविधवत् पद्मं स्वामिनः सततं सुखम् ॥
शुक्राख्यौ तालुवान्तस्थावावर्त्तौ कीर्त्तिवर्द्धनौ ।
हयस्य स्वामियुक्तस्य सदैव सुसुखावहौ ॥
एकावर्त्तो भवेद्यस्य कक्षान्ते वाजिनो यदा ।
स रणे मृत्युमाप्नोति द्वौ च स्वामिविनाशनौ ॥
जानुदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
प्रवासं सततं ब्रूते स्वभर्त्तुः क्लेशसंयुतम् ॥
वाजी मेढ्रतलावर्त्तो वर्जनीयो महीभुजाम् ।
स करोति हरेर्नाशं परचारसमुद्भवम् ॥
त्रिवलिस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशकः ।
वाजिनस्ते परिज्ञेयाः स्त्रीपार्श्वस्था भयप्रदाः ॥
पुच्छदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः ॥
गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्त्तकास्त्रयः ।
स कृतान्तस्वरूपेण वर्जनीयस्तुरङ्गमः ॥
अथ ऊर्द्ध्वं यदा वाजी सम्पुटं न स्पृशेत् क्वचित् ।
यमदूतः स विज्ञेयो वर्जनीयः प्रयत्नतः ॥
हीनदन्तोऽधिदन्तश्च कराली कृष्णतालुकः ।
मुशली च तथा शृङ्गी षडेते स्वामिघातकाः ॥
एकाण्डजातश्चैकाण्डो हीनाङ्गोऽप्यधिकाङ्गकः ।
परित्याज्यः स वाञ्छद्भिरन्विष्य परमं यशः ॥
घण्टी वदनवो वाली शृङ्गी चैव चतुर्थकः ।
वर्जनीयः प्रयत्नेन सर्व्वे ते पापकृत्तमाः ॥
घण्टी च स्वामिनं हन्ति वदनी धनसंचयम् ।
अन्तःपुरं तथा वाली शृङ्गी राष्ट्रविनाशनः ॥
षट्पदाभो भवेद्यश्च कृष्णतालुर्न दुष्यति ।
शक्रपादसखो यस्तु आवर्त्तैः कुत्सितैरपि ।
न दुष्यति सदावर्त्तः शालिहोत्रमतं यथा ॥

इति श्रीनकुलविरचितेऽश्वचिकित्सिते आवर्त्ताध्यायश्चतुर्थः ॥

अथ दन्ताः ।

दन्तोद्भेदं प्रवक्ष्यामि वाजिनामायुलक्षणम् ।
येन विज्ञातमात्रेण आयुर्ज्ञानं प्रचक्षते ॥
अश्वस्तु तनुभिर्दन्तैः क्षीरदन्त इति स्मृतः ।
तथा षोड़शभिः कोणे शस्तैर्द्वादशमासिकः ॥
त्रिंशन्मासोद्भवाः सर्व्वे अखण्डाः परिकीर्त्तिताः ।
द्वौ स्यातां द्वौ च न स्यातां सर्व्वोपरि यथाक्रमम् ॥
चतुर्भिर्वत्सरैर्दन्ताः कालिकाख्ये भवन्ति च ।
तथान्यः सप्तमे वर्षे चतुर्थः कालिको भवेत् ॥
अष्टमे वत्सरे प्राप्ते प्रायाः स्युः सार्व्वकालिकाः ।
नवमे त्वथवा रेखा पीतत्वं शंसयन्ति च ॥
तथाप्येकादशे वर्षे तावत् पीतत्वमागताः ।
तिष्ठन्ति दशनास्तेषां वाजिनामप्यसंशयम् ॥
ततः श्वेताः प्रदृश्यन्ते यावद्वर्षत्रयं पुनः ।
ततः काचप्रभाः सम्यक् यावत् संवत्सरास्त्रयः ॥
ततः सप्तदशादूर्द्ध्वं यावद्वर्षाणि विंशतिः ।
मक्षिकाभारदास्तेषां यावद्वर्षत्रयं पुनः ॥
तस्मादुदूखलं प्राप्तास्तावद्वर्षत्रयं पुनः ।
प्रकम्पश्च समागम्य पश्चात् पातः समात्रयम् ॥
द्वात्रिंशद्वत्सरैरेव वाजी निर्व्वाणमाप्नुयात् ।
दंष्ट्राचतुष्टयं श्वेतं वक्रेण परमायुषि ॥
अश्वानामेव सर्व्वेषां दन्ता द्वादश कीर्त्तिताः ।
कालिका हारिणी शुक्ला काचा वाप्यथ मक्षिका ॥
शङ्खोदूखलकश्चैव दन्तानाञ्चलनं तथा ।
ततस्तु पतनं विद्यादेष वञ्जनसंग्रहः ॥
चतुर्विंशतयो दंष्ट्राः शालिहोत्रमतं तथा ।
एवं दन्तविशेषेण सर्व्वेषामिह वाजिनाम् ।
विज्ञेया चायुषःसंख्या वाजिपोषणतत्परैः ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते दन्तोद्भेदो नाम पञ्चमोऽध्यायः ॥

अथ अवयवप्रमाणम् ।

दीर्घह्रस्वविमांसास्था ये भवन्ति तुरङ्गमाः ।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्म्मणि ॥
स्कन्धमभ्युन्नतं दीर्घं वक्रग्रीवं विशेषतः ।
चमरालङ्कृतं सम्यक् स्तोकवालसमन्वितम् ॥
येषां पृष्ठं सुवंशं स्याद्विपुलं व्रणवर्जितम् ।
किञ्चिन्मध्ये भवेन्निम्नं राजार्हास्ते तुरङ्गमाः ॥
स्निग्धरोमा सुवृत्ता च सुस्थूला विपुला कटी ।
ग्रथिताः सुदृढ़ा रम्या भुजा मांसप्रपूरिताः ॥
पादा निर्मांसला वक्राश्चक्राकारखुरान्विताः ।
अप्रमाणं तथा वक्षः कर्णौ लघुतरौ स्मृतौ ॥
पार्श्वौ तनुतरौ शस्तौ सुरक्तस्निग्धतालुकम् ।
दन्ताश्च शिखराकारा विपुला चन्द्रवर्चसः ॥
सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते ।
कर्णौ षड़ङ्गुलौ प्रोक्तौ तालुकं चतुरङ्गुलम् ॥
चत्वारिंशच्च सप्ताढ्याः स्कन्धाः सम्यक् प्रकीर्त्तिताः ।
पृष्ठवंशश्चतुर्व्विंशः सप्तविंशा तथा कटी ॥
अतिसूक्ष्मं तथा निम्नं पुच्छं हस्तद्वयायतम् ।
लिङ्गं हस्तप्रमाणञ्च तथाण्डौ चतुरङ्गुलौ ॥
मार्गस्थानं चतुर्व्विंशं हृदयं षोड़शाङ्गुलम् ।
कटिकक्षान्तरञ्चोक्तं चत्वारिंशत् प्रमाणतः ॥
मणिबन्धद्वयं चैव खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेधो दैर्घ्यञ्च द्व्यधिकं शतम् ।
एवं क्रमेण गात्रस्य प्रमाणं वाजिनां मतम् ॥

दीर्घाणि चत्वारि तथोन्नतानि
चत्वारि रक्तानि च सूक्ष्मकाणि ।
ह्रस्वानि चत्वार्य्यथ चायतानि
भूयश्च चत्वार्य्यथ नम्रकाणि ॥

द्वात्रिंशत् क्रमशोऽप्याहुर्लक्षणानि मुनीश्वराः ।
तान्यहं कीर्त्तयिष्यामि वाजिनाञ्च पृथक् पृथक् ॥'

आस्यं मुखौ केशकृकाटिकाश्च
दीर्घं चतुष्कं तुरगस्य शस्तम् ।
तथोन्नते घ्राणपुटे ललाटे
शफाश्च तज्ज्ञास्तरणौ वदन्ति ॥
ओष्ठौ च जिह्वाप्यथ तालुकञ्च
मेढ्रं सुरक्तं शुभदं हयस्य ।
लघूनि बन्धास्तरणेषु कोष्ठं
श्रोत्राणि सर्व्वाणि तथैव पुच्छम् ॥
कर्णान्तरं कर्णसमन्वितञ्च
वंशं तथा ह्रस्वतरं प्रशस्तम् ।
वक्त्रं मुखं कन्धराजानुनी च
पार्श्वञ्च सप्तैः शुभदं प्रदिष्टम् ॥
कक्षान्तरं चोदरमध्यमञ्च
निम्ना कटी तानि सजानुकानि ।
वक्षःशफोरूजघनस्थलञ्च
चतुष्कमेतत् पृथुलं प्रदिष्टम् ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते सर्व्वावयवप्रमाणो नाम षष्ठोऽध्यायः ॥

अथ वेगः ।

गुणानामिह सर्व्वेषां गुणो वेगमयोऽधिकः ।
अश्वानां शस्यते तज्ज्ञैरश्वज्ञानविचक्षणैः ॥
संवाहनविधानेन प्रकाशं यान्त्यसंशयम् ।
तस्मात् सर्व्वप्रयत्नेन वेगो ज्ञेयश्च वाजिनाम् ॥
अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः ।
अश्वानां वाहनं पथ्यं सानुरागञ्च मोक्षणम् ॥
अधमा मध्यमास्ते स्युर्मध्यमाश्च तथोत्तमाः ।
उत्तमाश्चोत्तमा भूयो वाह्यमानास्तुरङ्गमाः ॥
रूढ़मश्वविदां श्रेष्ठं रूढ़े सर्व्वं प्रतिष्ठितम् ।
रूढ़ेन तु विहीनस्य लक्षणं चाप्यलक्षणम् ॥
रूपावर्त्तगतिच्छायासत्त्ववर्णवयोबलम् ।
जवहीनस्य वाहस्य सर्व्वमेव निरर्थकम् ॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्त्वं सर्व्वं सत्त्वे प्रतिष्ठितम् ॥
लघुत्वं मातृदोषेण पितृदोषेण जाड्यता ।
दौर्ब्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥

जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य वेदोऽथ मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनः ॥

आकर्षन्निव गां वमन्निव खुरौ पश्चार्द्धमुद्यन्निव
स्तोकूर्म्मन्निव खं पिबन्निव दिशो वायुं समश्नन्निव ।
साङ्गारप्रकरान् स्पृशन्निव महीं छायाममर्षन्निव
चञ्चच्चामरवीज्यमानवदनः श्रीमान् हयो धावति ॥
अलक्षितगतागतैर्मृगदृशां कटाक्षैरिव
क्षणानुनयशीतलैः प्रलयकेलिकोपैरिव ।
सुरत्तमहणोत्तरैर्मृगदृशासुरोजैरिव
त्वदीयतुरगैरलं धरणिचक्रमाक्रम्यते ॥
येषां दीपशिखोपमानि नयनान्युद्भावितः सन्निव
ग्रीवा क्रौञ्चनिभा विभाति च समा पादाश्च सूक्ष्मोपमाः ॥
वेगो वायुरिवाथ वानरसमः स्याद्वारणप्रेङ्गितं
शङ्खक्रौञ्चमृगेन्द्रदुन्दुभिघनध्वानेभतुल्यस्वनः ॥
वक्त्रे यो हरिणाधिपप्रतिनिभो याघोपमौ बाहुभिः
आवर्त्तैऽप्यशुभैः प्रधानकुलजाः सान्द्रघवर्ण-प्रभाः ।
उष्ट्राघाः प्रियदर्शनाश्च सुभगाः श्वासैः सुगन्धैश्च ये

धावन्ति घातैश्च न चोद्विजन्ते
भयावहास्ते समरे नृपाणाम् ॥
शोकं शीलं भयं लज्जामालस्यं चैवमादिषु ।
सुकुलं तं विजानीयादलं पर्य्याणवारणे ॥
स्थाणुकण्टकवृक्षैश्च सुधाखदिरकण्टकैः ।
स्वामिघाताय चाद्रौ तेषां रूपमिदं शृणु ॥
वानरोलूकमार्जारतरक्षुगवललोचनाः ।
गतिर्वा वसुरैस्तुल्या स्थूलमेढ्रशिरान्विताः ॥
लम्बौष्ठकर्णनासाश्च क्षतदाहीनाधिकाङ्गिनाः ।
विच्छिन्नग्रीवगण्डा ये भ्रुकुटीचित्रमेहनाः ॥
एते दोषास्तथान्येऽपि सुकुलाश्वसमुद्भवाः ।
खलानामिह राजेन्द्र ! वक्तुं शक्या न मादृशैः ॥
लक्ष्यं प्रधानमित्येके चान्ये लक्षणमाश्रिताः ।
लक्ष्यलक्षणमेतेषां तेनेदं दुष्करं विदुः ॥
अश्वाभिरतिसंक्षेपादतिथाणिश्च विस्तरात् ।
मुनीनामेकवाक्यत्वाद्भूयसः स्थितिदुष्कराः ॥
सत्ववर्णगतिच्छायास्वरस्थानगतिः क्रमम् ।
पुण्यं पुण्ड्रकनामानि दीर्घं वा जवलक्षणम् ॥
एवं लक्षणसंयुक्तं दृश्यते शूररक्षणे ।
लक्षणेन विहीना ये निर्दोषाःस्युः प्रधाविताः ॥
हयरोहस्य का चिन्ता लक्षणैः शुभनिन्दितैः ।
तेनात्र न कृतोऽस्माभिर्हयलक्षणविस्तरः ॥
हयवाहनविज्ञानं कौतुकाहितहृदयः ।
अनायासेन गृह्णन्ति परं दृष्ट्वा इमे जनाः ॥
चलासनं कृपा रागाः पार्ष्णिघातप्रतोदनम् ।
मदप्रघातसंज्ञानि दोषो येरुपजायते ॥
कामात् कोपाद्भयाल्लोभाद्दर्पाच्चैव मदाश्रयात् ।
मर्य्यादारोहदोषाच्च दुष्यन्त्यश्वा निसर्गतः ॥
श्रीयुक्तसामन्तनरेन्द्रवन्दितं
रथे हयारोहवराभिनन्दितम् ।
धर्मार्थकामादियशःप्रधान-
मित्थं कृतं वाहनशास्त्रविस्तरम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वाहना-
ध्यायो नवमः ॥

अथ धातुपरीक्षा ।

अथातः संप्रवक्ष्यामि धातूनां लक्षणं परम् ।
येन विज्ञानमात्रेण ज्ञायन्ते रोगसम्भवाः ॥
ततः शुद्धशरीरोत्थरक्तदोषानवाप्नुयात् ।
रक्तदोषात्तदा वाजी प्राप्नोत्येव महामयान् ।
तस्मात् सर्व्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणैः ।
आषाढ़समये प्राप्ते शिरामोक्षेण तत्क्षणः ॥
तेन संशोध्यते रक्तं वाजिनां दोषसम्भवम् ।
ततः शुद्धशरीरोऽथ पिच्छादेश्च वशीकृतः ॥
सावर्णं शष्पमासाद्य वत्सवत् सुदृढ़ो भवेत् ।
यदि रक्ताधिको वाजी शस्यमश्नाति कर्हिचित् ॥
रक्तात् सञ्जायते पित्तं ततो नाशमवाप्नुयात् ।
रक्ताधिकश्वासपुटः स्नेहाद्यैः शस्यमत्ति चेत् ॥
संप्राप्य श्लेष्ममरिचाद्वयो नाशमवाप्नुयात् ।
हीनरक्तो यदा शस्यं रूक्षोऽश्नाति तुरङ्गमः ॥
तदा वायुं परं प्राप्य सद्यो नाशमवाप्नुयात् ।
वक्ष्येदं लक्षणं प्रोक्तं रक्तकोपसमुद्भवम् ॥
धातूनामपि सर्व्वेषां ज्ञेयमिदं विचक्षणैः ।
पित्तरक्तप्रकोपेण यदा संपीड्यते हयः ॥
तदा कण्डूनिभामाद्य कषते सततं वपुः ।
छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम् ॥
मुहुर्वाञ्छति पानीयमाहारञ्च विशेषतः ।
एवं वातोत्थरक्तेन ज्ञात्वाश्वं पीड़ितं ततः ॥
शिरामोक्षं विधायैव दद्यात् सकटुकं गुड़म् ।
ततः शुद्धिमवाप्नोति नीरोगः संप्रपद्यते ॥
पित्तासृग्दूषितो वाजी यदि चाश्रूणि मुञ्चति ।
नेत्रान्ते पाण्डुरत्वञ्च सद्यो मृत्युमवाप्नुयात् ॥
नेत्रयोर्लक्षणं प्रोक्तं पित्तरक्तसमुद्भवम् ।
श्लेष्मरक्तप्रकोपेण यदा सम्पीड्यते हयः ॥
अधोवक्त्रो भवेन्नित्यं क्लाम्यते च मुहुर्मुहुः ।
आहारं न च गृह्णाति नात्माहं कुरुते क्वचित् ॥
न विन्दति कशाघातं न च पार्ष्णिं न चासनम् ।
नासाग्रेण छिपेत्तोयं वह्निर्धर्मांश्च वाञ्छति ॥
तस्यापि शोधयित्वासृग् दद्यात्शुण्ठीयुतं गुड़म् ।
सर्व्वं रक्तं ततः शुद्धं निःशेषं समवाप्नुयात् ॥
वाजिनः श्लेष्मरक्ताभ्यां दूषितस्य सदा भवेत् ।
नेत्रान्ते विन्दुकाकारकाष्ठस्तस्य तथोदरे ॥
तदा मृत्युमवाप्नोति षण्मासाभ्यन्तरे ध्रुवम् ॥
शुण्ठ्याद्रका गोक्षुरकं घनश्च
श्यामानिशाच्छिन्नयुता च यष्टिः ।
कफप्रणाशाय विनिर्मितोऽयं
पिण्डः पनिश्च कफापहश्च ॥
नोचेद्दद्यात् शुण्ठ्याद्यं सैन्धवं नस्यमार्गतः ।
वायुरक्तप्रकोपेण पीड़ितस्तु तुरङ्गमः ॥
कुक्षिद्वयं हयस्तीव्रं मुहुः श्वासं प्रसर्पति ॥
नैकत्र मन्यते स्थातुं रूपते च निरर्गलम् ।
एवं वातोद्भवं ज्ञाप्यं रक्तान्देहे हयस्य च ॥
शोधयित्वाश्च सन्दद्यात्क्षाघृतमनल्पकम् ।
ततः शुद्धिमवाप्नोति परां पुष्टिञ्च गच्छति ॥
उत्साहं कुरुते मार्गे सर्व्वदोषविवर्ज्जितः ।
वातरक्तप्रकोपेण लोचनान्ते हयस्य च ॥
यदा स्यातां सिते रक्ते काशः कण्डूस्तथानने ।
तदा तस्य भवेन्मृत्युर्यदि नाश्नाति चामिषम् ॥
अश्मकाश्च युतन्दद्यात् माहिषेण निशागमे ।
सन्निपातेऽथ रक्तेन यदा सम्पीड्यते हयः ॥
यदा वेपथुमाप्नोति काशते च निरर्गलम् ।
निद्रालस्याग्निमन्दत्वं वक्त्रौ मलनिबन्धनम् ॥
कर्णयोः पातनञ्चैव वक्त्रालालाविमोचनम् ।
तत्रापि शोधयेद्रक्तं ततो लङ्घनमर्हति ॥
यावद्दोषस्य निःशेषं क्षोभोदकशताशनः ।
कश्चिदुष्णं कश्चिच्छीतं कश्चिद्द्वेषणसंयुतम् ॥
प्रदेयं युक्तिनत्वत्रैवारि वार्थ्यं न कुत्रचित् ।
सपथ्या चाम्लता चैव कटुका च वचा तथा ॥
शाम्यत्येतत्क्षणादेव त्रिधातुकुपितं ज्वरम् ।
शिरीषं श्रीफलञ्चैव वेतसञ्चैव वृद्धिभाक् ॥
मन्दाग्नित्वं सदोषाणां कुरुते भस्मसाद्द्रुतम् ।
मधुकं मधुशालञ्च माधुर्य्यं क्षुलिकान्वितम् ॥
शिरीषं चतुर्थां राचां छाययित्वा त्रिभागतः ।
यस्यैतत् सन्निपाताय वाजिनः संप्रदीयते ॥
तस्य तन्नाशमायाति तमः सूर्य्योदये यथा ।
कस्यचिदपि हि नेत्रान्ते स्यातां नीले च वाजिनः ॥
गन्धश्च सदृशः जीवेन तदा मृत्युर्द्विमासिकः ।
नीले पीतेऽथ नेत्रान्ते स्यातां चेद्वाजिनः क्वचित् ।
स निर्वाणमवाप्नोति त्रिभिर्मासैरसंशयम् ॥
यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते ।
विशेषान् स्वरभेदः स्यात्तस्यायुः पञ्चमासिकम् ॥
जिह्वायां जायते विन्दुरकस्माद् यस्य वाजिनः ।
कृष्णस्य जीवते मासं स वाजी नात्र संशयः ॥
पीतो मासद्वयेनैव मृत्युं प्रयच्छति ।
त्रिभिर्मासैस्तथा रक्तश्चतुर्भिश्च विचित्रितः ॥
पञ्चभिर्नीलवर्णश्च षड्भिर्जलसमाकृतिः ।
सप्तभिः पाटलाकारश्चन्द्रकाभस्तथाष्टभिः ॥
नवभिश्च हरिद्राभो दशभिर्जम्बुकोपमः ।
एकादशभिर्दूर्वाभो वत्सरेण हिमद्युतिः ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ।
जिह्वा हिमकराकारा मासषट्कं स जीवति ॥
ग्रीवाग्रे पिडिका यस्य जायते च तथाधरे ।
मूत्रं करोति रक्ताभं मासषट्कं स जीवति ॥
वर्णः श्वेतो यदा यस्य नेत्रयोश्च प्रजायते ॥
दशमासान् समासाद्य पित्तार्त्तो न न जीवति ।
यस्य नीलप्रभे स्यातां नेत्रे वातार्द्दितस्य तु ।
तास्त्रयश्च हयेण यः कश्चिः स न जीवति ॥
श्लेष्मयुक्तस्य वा रक्ते यदि स्यातां विलोचने ।
वातान्यः सुरातुल्यो दश मासान् न जीवति ॥
यस्य नेत्रे हरिद्राभे स्यातां पित्तार्द्दितस्य च ।
तस्यायुः सप्तमासान्तं मुनिभिः परिकीर्त्तितम् ॥
बहुवर्णे घने नेत्रे स्यातां धातुसमागमे ।
तस्य सप्तभिर्मृत्युः समरान्नादसंशयम् ॥
यस्यैकं लोचनं नीलं द्वितीयं रक्तसन्निभम् ।
दृश्यते च च विज्ञेयः पित्ताढ्यो मासजीवकः ॥
यस्य पित्तप्रसक्तस्य काले नीरदवर्त्तिनि ।
हयस्य जीवितं तावद्दिनानि दश पञ्च च ॥
एवं रक्तविकाराणां ज्ञात्वा धातुं तुरङ्गमे ।
ततः प्रतिक्रिया कार्य्या उक्ता या कीर्त्तिता परा ॥
भयादपीतपानीयशीनविग्रीयुतस्य च ।
आर्त्तोऽपि ताड़ितोऽत्यर्थं तिर्य्यग्विद्धो यदापि वा ॥
श्रमाद्वराद्व वन्धाद्वा गात्रे वा विषमस्थिते ।
क्षीणशोणितमांसस्य शिरावेधः प्रशस्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते धातु-
परीक्षाध्यायो दशमः ॥

अथ ऋतुचर्य्या ।

द्वासप्ततिसहस्राणि नाड़ीनां हि भवन्ति च ।
वाजिनामिह सर्वेषां वायुरक्तं व्यवस्थितम् ॥
तासां निर्मोक्षणार्थाय द्वाराण्यष्टौ वदान्यहम्
वैर्याति कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥
कण्ठे वक्षसि तालौ च नासयोश्च मुखे तथा ।
अण्डयोरथ पादेषु पादयोरुभयोरपि ॥
कालं बलञ्च विज्ञाय वाजिनां भिषगुत्तमः ।
शिरामोक्षं प्रकुर्वीत स्थानेष्वेतेषु पण्डितः ॥
अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः ।
विकारयुक्तं यद्रक्तं सुस्वस्थमपि वर्जयेत् ॥
एवं शरदि यः सम्यक् पुष्टिं नयति वाजिनाम् ।

तस्य यद्वाञ्छितं किञ्चिद्दद्यात्तत्र सिध्यति ॥
ततो हेमन्तमासाद्य निवाते निरुपद्रवम् ।
मासोत्थं यवसन्दानं पानीयञ्च यथेच्छया ॥
घृतं वा यदि वा तैलं पाने दद्याद्धितञ्च यत् ।
वाहयेच्च शनैरेनं सर्व्वदोषप्रशान्तये ॥
तत शिशिरमासाद्य दद्यात्तैलं हि वाजिनाम् ।
पलाष्टकप्रमाणेन यावद्दिनत्रिसप्तकम् ॥
यवोत्थं यवसन्दद्यादेकविंशत्यहानि च ।
यवाभावेऽथ चणकान् दद्यादार्द्रतरान् सदा ॥
तदभावे मसूरांश्च मुद्गांस्तैलसंयुतान् ।
यवसं चापि तद्देयं नीरोगो जायते हयः ॥
कौमुद्याश्च सर्व्वथा कार्याणां नस्यकर्म्मणाम् ।
शैलानाञ्च स्नानाञ्च यवस्य यवसं परम् ॥
पर्व्वतानां यथा मेरुरायुधानाञ्च वज्रकम् ।
तथा सर्व्वोपचाराणां हये श्रेष्ठतमा यवाः ॥
देवतानां यथा विष्णुर्ब्रह्मा वेदविदां वरः ।
नदीनाञ्च यथा गङ्गा तथा श्रेष्ठा यवा हये ॥
यथोदितः सहस्रांशुर्निःशेषं तिमिरं जयेत् ।
तथा शरीरजान् दोषान् यवाः सर्व्वे हरन्ति च ॥
उपचारक्रियाः सम्यक् पञ्चसु जनिता हये ।
कृताः सुयवभोज्येन सम्यक्तस्य कृता नरैः ॥
यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते ।
साम्प्रतापि कृता सर्व्वा पञ्चसु जनिता हये ॥
तथा सुयवभोज्येन सम्यक्तस्य कृता नरैः ।
नीरोगास्तुरगाः सर्व्वे शालिहोत्रमतं यथा ॥
पञ्चसु जनिता वाथ क्रिया यत्ता तुरङ्गमे ।
यस्तेनास्ति विजानीयाद्यवभोज्यविवर्ज्जिताः ॥
एवं रक्तविशुद्ध्यर्थं कृत्वा यत्नेन वाजिनाम् ।
दद्यात्ससैन्धवयुक्तां सतैलां च हरीतकीम् ॥
दिनं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः ।
ततः शुद्धिमवाप्नोति निःशेषाद्धिरोत्तमात् ॥
ततो नस्याहारं संप्राप्य सुमनोहरम् ।
परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते ॥
न पादौ वाहयेदश्वं प्रावृट्काले कथञ्चन ।
य इच्छेद्वाजिनस्तस्य वाहनं दशमासिकम् ॥
कूपोदकं सदा शस्तं पानाय जलदागमे ।
अभ्यङ्गं कटुतैलेन निर्व्वातस्थानबन्धनम् ॥
एकाहान्तरितं दद्याल्लवणञ्च विचक्षणः ।
पलद्वयप्रमाणेन सुबलापरिशुद्धये ॥
सुखरोगमवाप्नोति चारम्भादिविवर्ज्जितः ।
दशाम्भोभिस्तु विकारैर्बाध्यते हयः ॥
चतुर्होत्कलान् ग्रासान् प्राश्नाति शतशः परान् ।
सर्व्वेदकप्रधानेन बलहीनश्च जायते ।
तस्मात् सर्व्वप्रयत्नेन प्रावृट्काल उपस्थिते ।
अनेन विधिना प्राज्ञो वाजिनः परिपोषयेत् ॥
ततः शरन्मासाद्य बहुशष्पसमन्वितम् ।
शस्यं चारोग्यं समपञ्चाष्टपरिमाणया ॥
दुग्धं वा केवलं रात्रौ दापितं गमश्नुते ।
तदाप्यदधि यत्किञ्चिन्मधुरं सम्प्रजायते ॥
पानाय चारमं तोयं परमं सुमनोहरम् ।
दोषनस्यमुक्ताश्च एनं प्राप्नोति संयुतम् ॥
वाहनं च प्रयत्नेन सुमन्दमपि वर्ज्जयेत् ॥



परीक्षा मे यथा देव स्वच्छन्दस्य च प्रतिक्रिया ।
हयजीवस्य तद्वच्च परीता यवभक्षणे ॥
यथा सांयात्रिकः पारं गत्वाब्धेः स्वस्थतां व्रजेत् ।
तद्वत् यवाशनोत्तीर्णाः सुहृष्टा हयोत्तमाः ॥
अल्पेनापि हि छिद्रेण यथा नश्यति नौर्ज्जले ।
स्वल्पेनापि हि व्याधिना यवदोषास्तथैव च ॥
एवं ज्ञात्वा विमर्शेन यवा देयाः प्रयत्नतः ।
प्रायशोरा विशेषेण शिशिरे समुपस्थिते ॥
शुष्का वापि यवा देयाः सर्व्वकालं च वाजिनाम् ।
प्राणदास्ते ततो ज्ञेया सर्व्वव्याधिविनाशनाः ॥
यश्चाश्नाति यवानाशु शुष्कांश्च स्वेच्छया सदा ।
न तस्य जायते रोगः कदाचिच्च यवाशभाक् ॥
न च शूलं न च श्वासो न च प्लीहा न च क्लमः ।
न च रक्तप्रकोपश्च न च वातादिधातवः ॥
योग्योऽशनाय वाहानां प्रधानो यव इष्यते ।
यवाभावेऽथ चणका धान्यमन्यतमं परम् ॥
यवाभावेऽथवा दद्यान्मुकुष्ठांस्तैलसंयुतान् ।
भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सताम् ॥
सुकुष्ठभोजनाद्वाजी पुष्टिं गच्छत्यलौकिकीम् ।
उत्साहं परमं धत्ते स च रोगैर्विमुच्यते ॥
चणकाश्च गुरुत्वानां सुता दया मनीषिभिः ।
सतैलास्तेऽपि कुर्व्वन्ति पुष्टिं सत्त्वविवर्द्धिनीम् ॥
एते पुष्टिगुणाः प्रोक्ताश्चणकाहारजा हये ।
नाम्यस्तस्मादभावेन सर्व्वेषां तान् विनिर्द्दिशेत् ॥
नान्यद्विस प्रशमन्ति पञ्चमं वाजिनां बुधाः ।
भक्षणाय यतस्तस्य दानोलङ्घनमुत्तमम् ॥
अन्नाभावे प्रदातव्यं घृतं वा यदि वा पयः ।
शस्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा ॥
यस्तान्यशस्यमश्नाति सदा लवणमिश्रितम् ।
किं तस्य शस्यदानेन यथाभृतेन भूपते ॥
शस्याभावेऽथ यवसं शुष्कं वा यस्य वाजिनः ।
स्थानान्निर्गमरण्ये च स्वेच्छया सविमुक्तिकाः ॥
ते चापि वाजिनो ज्ञेया यथा शस्यचरास्तथा ।
तथा सर्व्वप्रयत्नेन तुरगान् चारयेद्वने ॥
आरोग्यार्थं सुपुष्ट्यर्थं तत्साहार्थं विशेषतः ।
वित्तव्ययस्य रक्षार्थं न रोगे प्रयत्नतः ॥
वसन्तसमये प्राप्ते वाहयेन् सततं हयम् ।
सनिम्बं लवणं दद्यात्ताभ्यां तैलं विशेषतः ॥
सर्व्वत्र सर्व्वदं भोज्यं तैलं वा यदि वा घृतम् ।
न दोषकारणं प्रोक्तं सचारं लवणान्वितम् ॥
वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः प्रणश्येत आलस्यं जायते वपुः ॥
ततो मन्दाग्निनाविष्टो रोगाभावे प्रजायते ।
तस्मात् सर्व्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥
ग्रीष्मकाले च संप्राप्ते दूर्व्वाभोज्यं प्रशस्यते ।
वाजिनामिह सर्व्वेषां सर्व्वतापोपशान्तये ॥
घृतपानं विशेषेण शुष्कायाञ्च निबन्धनम् ।
तदभावे च गात्रेषु चार्द्रं वा घृतसंयुतम् ॥
दूर्व्वाभावे प्रदातव्यं तुरगाय घृतान्वितम् ।
लपकाद्यकसमधाय सर्व्वदोषोपशान्तये ॥
एवं वत्सरमयं सम्यगुपचारं करोति यः ।
वयसं तु यतो नित्यं तस्य वर्द्धन्ति वाजिनः ॥



नीरोगा पुष्टिसंयुक्ता प्रकृष्टोत्साहसंयुताः ।
तर्पिता भूमिपैरश्वा भूमिमार्गक्रियाक्षमाः ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते ऋतुचर्य्याध्याय एकादशः ॥

अथ नस्यं ।

कासश्वासक्षमो नस्यो वातपित्तकफोद्भवः ।
नस्यं सनाशयेत्तस्मात् नस्यं योजयेद्धये ॥
पिप्पली सैन्धवं सारं नागरञ्च गुडान्वितम् ।
हस्तिकासारमध्याय वाजिनां श्लेष्मनाशनम् ॥
चूलिकालवणं नस्यं सदा रोगविनाशनम् ।
सिता चन्दनतोयानि बालुकाख्यानि वाजिनाम् ।
नस्यकर्म्माणि युक्तानि नाडीवातप्रशान्तये ।
मण्डूकैरादिकं सान्द्रं यवाधारविमिश्रितम् ॥
नस्ये दत्तं वातशान्त्यै हयरोगविनाशनम् ।
शर्करा माक्षिकं सैरं पटोलं फलसंयुतम् ॥
नस्ये प्रदद्यात् सप्तीनां जायते रोगशान्तये ।
वचा चोशायकं कुष्ठं शुण्ठी च कासमर्द्दिका ॥
युक्तं शीतोदके स्तोके तेषां नस्येऽप्रयोजयेत् ।
गुडूची कौमुदी ताली मिश्रिता कूपवारिणा ॥
नस्ये दत्ता पराश्वानां शिशिरे सुखदा सदा ।
अपामार्गं महानस्यं सर्व्वरोगविनाशनम् ॥
कवलं कटुतैलं वा गोमूत्रं पाचितञ्च यत् ।
मैथुनादिक्षतस्वीनां शीतोबलकरं विदुः ॥
कफरोगे तथा नस्यं गोमूत्रलवणान्वितम् ।
मधुस्नुपकरं प्रोक्तं सर्व्वदोषनिवारणम् ॥
अपामार्गस्य मूलेन नस्यं मूत्रञ्च छागलम् ।
मुखरोगविनाशाय नस्यं मनस्सरसोद्भवम् ॥
*लशुनं पिप्पलीमूलं शल्लकी नागकेशरम् ।*
दत्तं नस्येन रोगघ्नं कटुतैलेन वाजिनाम् ॥
नस्यं पर्य्युषितं तोये प्रातस्तेन तु कवले ।
अश्वानाञ्च नराणाञ्च चायुष्यं बलप्रदम् ॥
पिप्पलीमिश्रतोयेन शसितासलिलेन च ।
नस्यं यच्छति सप्तीनां सर्पिषा यच्छते बलम् ॥
नस्यं स्निग्धं तथा रूक्षं तिक्तञ्च मधुरं तथा ।
चतुर्द्धा वाजिशास्त्रज्ञैर्यथावत्परिकीर्त्तितम् ॥
देयं वाताधिके स्निग्धं रूक्षं तिक्तं कफाधिके ।
मधुरं चैव पित्ताढ्ये तुरङ्गे समयोचितम् ॥
द्विपञ्चाशत्प्रमाणं वा श्रेष्ठं नस्यमुच्यते ।
पादोनं मध्यमं तत्र षड्विंशत्या तथाधमम् ॥
नस्याभ्ने वाजिनो रक्तं सन्नं पुष्टं प्रजायते ।
नस्यदानात् स्रुतं तस्य विनाशमुपगच्छति ॥
दाडिमं पुष्करं शीकं श्वेतदूर्व्वाङ्कुरास्तथा ।
शीताम्बुना संयुक्तं रक्तं दुष्टं न जायते ॥
धातकी गोक्षुरं रोध्रं कुसुम्भं सिन्धुवारकम् ।
शीतोदकेन संयुक्तं नस्यं रक्तविनाशनम् ॥
धातकी गन्धकी चैव गोमूत्रं लवणं तथा ।
नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा ॥
शुण्ठी घृतञ्च दुग्धञ्च रससारं तथैव च ।
वातरोगविनाशाय नस्यमेतत्प्रयोजयेत् ॥
माक्षिकं शर्करायुक्तं चन्दनं केशरादि च ।
नस्येऽथ वारिणा सह पित्तनाशकरं परम् ॥
गुडूची शुण्ठी मुस्ता च तगरं सितसर्षपा ।

सन्निपाते सपित्तेऽयं नस्यः स्याज्जीवरक्षकः ॥
अभया पुत्रिणी धात्री एला लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥
मरिचं पिप्पलीमूलं वचा भार्ङ्गिकाभया ।
सन्निपाते कफाधिक्ये नस्यं नप्तिः सुखप्रदम् ॥"
इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधि-
काराध्यायो द्वादशः ॥

अथ पिण्डः ।

"कटुका च जयन्ती च भ्रामरी सुरसा घनाः ।
पञ्चामृतमयः पिण्डो वाजिनामयमिरकृत ॥
एला शतघ्नी सुरसा काकजङ्घा शतावरी ।
माक्षिकं ससितं पिण्डः पित्तयुक्ते हि वाजिनि ॥
माक्षिकं सैन्धवं मुस्ता गोमूत्रञ्च हरीतकी ।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥
कंकोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः पुष्टिं नयति वाजिनः ।
मत्स्यमांसेन संयुक्तं माषचूर्णं घृतप्लुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥
यला मद्यं दधि क्षौद्रं भक्षयंस्तुरगो भवेत् ।
अनिरुद्धोऽपि रूक्षोऽपि यथा षट्सप्तवार्षिकः ॥
मेथिका धातकी काली सारणी बीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः ॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुडान्विता ।
दत्ता पिण्डविधानेन वाजिनां सुखवृद्धिदा ॥
त्रिफला कटुका मुस्ता विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आर्त्तिहृत् ॥
वचा विदलिताः स्निग्धाः सघृताः क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्व्वन्ति वाजिनां व्याधिनाशनम् ॥
सैन्धवं नागरं श्यामा गुडूची सितसर्षपाः ।
अम्लवेतससम्भानां पिण्डोऽयं शूलनाशनः ॥
पिप्पली पिप्पलीमूलं कटुका सहदेविका ।
दूर्व्वापल्लवसंमिश्रः पिण्डोऽयं क्लीहनाशकः ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं श्रपने शस्तो वाजिनां सुगतिप्रदः ॥
वचा लोध्रं सकर्पूरं गुहा श्यामा गुडं मधु ।
समांशकेन पिण्डोऽयं करोति लघुतां हये ॥
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
द्विगुणं मेषमांसञ्च पिण्डो दत्तो जयेच्छ्रमम् ॥
जम्बीरं फलिनीपत्रं त्वचा किञ्जल्कमेव च ।
जातशोणितवाहानां पिण्डोऽयं रक्तनाशनः ॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम् ।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम् ॥
आरनालं प्रविष्टा च पथ्यां नेपालिकाफलम् ।
पिण्डे दत्ते हये दध्ना निहन्त्याशु विजृम्भितम् ॥
मुस्तपूगं वचामिश्रं तथा सर्व्वरसान्वितम् ।
पिण्डे दत्ते निहन्त्याशु कृमिसंघं व्रणोद्भवम् ॥
स्नुहीक्षीरं सकर्पूरं कूपोदकविभावितम् ।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान् सर्व्वान्
कृमिव्रणान् ॥
सिता दुग्धं सकर्पूरमेलया पत्रसंयुतम् ।
अग्निदाहार्त्तियुक्तानां पिण्डोऽयं वाजिनां स्मृतः ॥
शीघ्रासन्नप्रतप्तानामारनालं यदिप्सुतम् ।
सक्तुरिच्छन्ति पिण्डेन वाजिनां सुखकारकम् ॥
वृष्टिवातादिर्तानाञ्च वाजिनां पुष्टिकृन्मतः ।
पिण्डः कृतः सतैलेन लशुनेन यवेन च ॥
मद्याघृतं सकर्पूरं शर्करा दुग्धमेव च ।
कफनाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः ॥
रोचना च वरी धात्री तथा स्याद्बीजपूरकः ।
गुल्मं प्रशमयन्त्याशु वाजिनां हृदयोद्भवम् ॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी ।
अतिश्वासं हरन्त्येते वाजिनां मधुना सह ॥
उदुम्बरफलं मांसं शौकरं माहिषं दधि ।
हयस्य चातिवृद्धस्य करोति परमं सुखम् ॥
विभीतकं प्रियङ्गुश्च सर्ज्जिका लवणं तथा ।
कासशोषोपशमनः पिण्डः सर्पिः सुखप्रदः ॥
तक्रं कर्पूरचूर्णञ्च शिवं सौवर्चलान्वितम् ।
पिण्डोऽयं वस्तिसंरोधे वाजिनः संप्रकीर्त्तितः ॥
सौवर्च्चलं हरिद्रा च पिप्पली चेन्द्रवारुणी ।
मूत्रकृच्छ्रे परीक्षन्ति पिण्डोऽयं तुरगस्य हि ॥
पिण्डीरसक्तवः क्षौद्रं भल्लातकफलं युगम् ।
रक्तमूत्रे तु पिण्डोऽयं वाजिनां रक्तनाशनः ॥
अभया यष्टिका श्यामा देवदारु सगन्धकम् ।
पुरीषे रक्तसंमिश्रे सदा शंसति वाजिनः ॥
पटोलं धातकी मुस्ता यष्टिका गिरिकर्णिका ।
रक्ताधिके कृतः पिण्डः करोति रुधिरक्षयम् ॥
हरिद्राद्वयसंयुक्तं गन्धकं कटुतैलकम् ।
पिण्डकं स्रुतियुक्तानां सदाश्वानां प्रशस्यते ॥
अतसीपत्रकं निम्बं न्यग्रोधकलिकान्वितम् ।
अतीसारे सुशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
व्रणैः कृमिभिरत्यर्थं सदा वाजी प्रपीड्यते ।
तदा पिण्डः प्रदातव्यः स्थूलैरण्डदलैरलम् ॥
कर्पूरशर्कराक्षोध्रं माक्षिकं त्रिफलान्वितम् ।
तुरङ्गिण्याः प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
पत्रकं सिन्धुवारञ्च भ्रामरं चक्रकिंशुकम् ।
मांसवृद्धौ प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
सैन्धवं चूलिकाक्षारं विडङ्गानि मधूनि च ।
शस्त्रपीड़ाभिभूतस्य पिण्डोऽश्वस्य प्रशस्यते ॥"
इति श्रीनकुलकृतेऽश्वचिकित्सिते पिण्डा-
ध्यायस्त्रयोदशः ॥

अथ घृतविधानम् ।

"शिलाजतु विशाला च पद्मकं नागकेशरम् ।
लाक्षा पद्मकाष्ठलञ्च निम्बद्वयसमन्वितम् ॥
घृतं माक्षिकसंयुक्तं सप्तविंशतिकं विदुः ।
अष्टांशं तु समादाय सुरामांसघृतस्य च ॥
पलमात्राणि सर्व्वाणि पूर्व्वद्रव्याणि निःक्षिपेत् ।
तेषां दानेन तत्सर्पिर्जायते सर्व्ववाजिनाम् ॥
बलपुष्टिकरं नित्यं सर्व्ववातविनाशनम् ।
सर्व्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम् ॥
ओजस्करं यथानाशं क्लीहशोषप्रणाशनम् ।
धातकी केशरं कुष्ठं कुसुम्भं कुङ्कुमं नलम् ॥
दाड़िमं स्नितलोध्रञ्च पलमात्राणि निःक्षिपेत् ।
घृतञ्च पाचयेत् पानादभिघातान्वितो हयः ॥
जायते सर्व्वसुष्ठाङ्गो महाप्राणेन संशयः ।
आरनालं वचा कुष्ठ पिङ्गला सिक्थकं घृतम् ॥
एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम् ।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला ॥
क्वाथयेन्नवनीतेन त्रिगुणेन घृतेन च ।
अभ्यङ्गेनाथ पानेन सप्तरात्रेण वाजिनः ॥
कण्डूतिर्निःक्षयं याति तथोदरभवा रुजः ।
माक्षिकं निम्बपत्राणि नवं गुग्गुल एव च ॥
भृङ्गराजो विशाला च पाठा चैव पुनर्नवा ।
विल्वमारुष्ककं लोध्रं सैन्धवं तगरं तथा ॥"
एतैः पक्वा घृतं वाजी संप्राप्यार्त्तिर्विमुच्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते घृता-
ध्यायश्चतुर्द्दशः ॥

अथ क्वाथः ।

"पूर्व्वाणि समभागानि क्वाथयेत् कूपवारिणा ।
ततोऽष्टांशं समादाय तोयस्य क्वथितस्य च ॥
एतत् सिद्धार्थकं नाम ज्ञुत्कष्टं सर्व्ववाजिनाम् ।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति ॥
मुस्ता मधुकपत्राणि केशरं लवणं रुहा ।
शताह्वा शाल्मली धात्री त्रपुषं फलिनी तथा ॥
क्वाथयित्वा जलं कौपं दत्तैस्तुल्यैर्विचक्षणः ।
त्रिभागमेवमादाय ततो दद्याद्धयस्य च ॥
प्रकरोति सदा नाशं पित्तस्यागन्तुकस्य च ।
एकविंशद्दिनं यावत्कालिहोत्रमतं यथा ॥
शुण्ठी हरीतकी पाठा ब्राह्मी मुस्ता शिफालिका ।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥
सिद्धस्त्रिभागशेषोऽयं क्वाथो हन्यात्त्रिरात्रिकम् ।
सन्निपातमशेषेण पलिकः पलमात्रकः ॥
मधुकं केशरं पत्रं भल्लातकविभीतकम् ।
शणपुष्पं रुहा सारं समभागेन मिश्रितम् ॥
कासार्त्तस्य समुद्दिष्टः क्वाथोऽयं त्रिफलात्मकः ।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥
कुमारी शाल्मली पाठा मञ्जिष्ठा चेन्द्रवारुणी ।
काकोली समभागेन क्वाथयेत् समभागतः ॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना ।
मोहयेच्छूलवं दोषं मूत्रदोषं च तत्क्षणात् ॥
यवानी माक्षिकं कासं सौवर्च्चलयुताभया ।
क्वाथयेदष्टमांशेन तत्पानाज्जायते हयः ॥
प्रदीप्ताग्निस्तु तेजस्वी सर्व्वरोगाद्विमुच्यते ।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्ज्जितः ॥
सेफालिका रुहानीचे वेणुका सिन्धुवारिका ।
एतैः क्वाथः कृतः सम्यक् कृमिनाशकरः परः ॥
मातुलुङ्गस्य बीजानि चन्दनं सितसर्षपाः ।
उशीरं पुष्करं ब्राह्मी लक्ष्मणा च पुनर्नवा ॥
क्वाथोऽयं सुखिचूर्णेन धावितक्लेशनाशनः ।
प्रकरोति तुरङ्गाणां सर्व्वदैव सुखं तथा ॥"
इति श्रीनकुलकृतेऽश्वचिकित्सिते क्वाथा-
ध्यायः पञ्चदशः ॥

अथ विषम् ।

"वारुणी माक्षिकी गौरी श्रीतालीबीजपूरकम् ।
कृमिक्लेदविनाशाय क्वाथो नित्यं रुजाहरः ॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः ।
विषनाशं करोत्येव सर्व्वगात्रेषु तत्क्षणात् ॥
सामान्येन प्रदिष्टोऽयमगदो विषनाशनः ।

त्रा, स्त्री, ( चित्रयति चित्रकर्म्म करोति सर्व्व-गुणैः शोभते इति वा । चित्र + अच् + टाप् ।) श्रीकृष्णसखीविशेषः । यथा, उज्ज्वलनीलमणौ ।

"परमप्रेष्ठसख्यस्तु ललिता सविशाखिका ।
सचित्रा चम्पकलता तुङ्गविद्येन्दुलेखिका ।
रङ्गदेवी सुदेवी चेत्यष्टौ सर्व्वगुणाग्रिमाः ॥"

अस्याः कुञ्जः श्रीकृष्णस्य पूर्व्वस्यां आनन्दसुखदो नाम । वयः चतुर्मासाधिकचतुर्दश-वत्सरम् । वर्णो गौरः । अस्या वस्त्रं जातीपुष्पतुल्यम् । कर्म्म चित्रम् । इति गोस्वामिग्रन्थः ॥ * ॥ मूषिकपर्णी । गोडुम्बा । सुभद्रा । दन्तिका । (पर्य्याया यथा, वैद्यकरत्नमालायाम् ।

"चित्रा दन्ती निकुम्भः स्यादुपचित्रा तु मूलकः ।
द्राक्षावची विशल्या च तथोदुम्बरपर्ण्यपि ॥")

माया । सर्पभेदः । नदीविशेषः । इति मेदिनी ॥ अप्सरोविशेषः । इति हेमचन्द्रः ॥ अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतचतुर्द्दशनक्षत्रम् । तत्तु मुक्तावदुज्ज्वलं एकतारकामयम् । अस्य अधिष्ठात्री देवता विश्वकर्म्मा । यथा,—

"एकमौक्तिकवदुज्ज्वलप्रभे
त्वष्टरीन्दुवदने क्षमध्यगे ।"

इति कालिदासः ॥

तत्र जातस्य फलं यथा, कोष्ठीप्रदीपे ।

"प्रतापसन्तापितशत्रुपक्षो
दक्षो नये चापि विचित्रवाचाः ।
प्रकृतिकाले यदि यस्य चित्रा
बुद्धिर्विचित्रा खलु तस्य शास्त्रे ॥"

स्वर्णक्षीरी । (यथा, चरके कल्पस्थाने । १२ अः ।

"तिलः प्रियालाभिषुकौ विभीतका-
चित्राभयैरण्डमधूकसर्षपाः ।
कुसुम्भबिल्वारुकमूलकातसी-
निकोठकाक्षोडकरञ्जशिग्रुजाः ॥
स्नेहाश्रयाः स्थावरसंज्ञितास्तथा
स्युर्जङ्गमा मत्स्यमृगाः सपक्षिणः ॥")

गण्डदूर्व्वा । गुडूची । मञ्जिष्ठा । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते चिकित्सितस्थाने २ अध्याये ।

"चित्रासमन्वितस्त्वेव रुजादाहविनाशनम् ॥")

छन्दोविशेषः । इति छन्दोमञ्जरी ॥ अस्य विवरणं छन्दःशब्दे द्रष्टव्यम् ॥ ( गायत्त्रीस्वरूपा महाशक्तिः । यथा, देवीभागवते ।१२।६।५२।

"चक्रवाकस्तनी चेष्टा चित्रा चारुविलासिनी ॥")

चित्राक्षी, स्त्री, ( चित्रे अक्षिणी नेत्रे यस्याः । समासे षच् स्त्रियां ङीष् । ) सारिकापक्षी । इति त्रिकाण्डशेषः ॥

चित्राक्षुपः, पुं, (चित्रा मूषिकपर्णीव क्षुपः ह्रस्वशाखवृक्षः ।) द्रोणपुष्पी । इति राजनिर्घण्टः ॥

चित्राङ्गं, स्त्री, ( चित्रं अङ्गं यस्मात् ।) हिङ्गुलम् । हरितालम् । इति राजनिर्घण्टः ॥

चित्राङ्गः, पुं, ( चित्रमङ्गं यस्य । ) चित्रकः । रक्तचित्रकः । सर्पः । इति राजनिर्घण्टः ॥ (यथास्य गुणाः ।

"चित्राङ्गो वातशमनो रूक्षो वलकृत्तनः ।
श्लेष्मलः कफिनो वापि दुर्ज्जरो मेदवर्द्धकः ॥"

इति हारीते प्रथमे स्थाने एकादशेऽध्याये ॥ धृतराष्ट्रपुत्त्रागामन्यतमः । यथा, महाभारते । १ । ११७ । ६ ।

"अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः ॥")

चित्राङ्गदः, पुं, चन्द्रवंशीयराजविशेषः । स तु शान्तनुराजपुत्त्रः । विचित्रवीर्य्यभ्राता । (अयन्तु शान्तनुराजस्य स्वर्गगमनानन्तरं राज्यं लब्ध्वा ऐश्वर्य्यवीर्य्यमदेन भूपान् सर्व्वान् तृणवन्मन्यत । अथ कदाचित् गन्धर्व्वराजश्चित्ररथः युद्धार्थमेनमभ्ययात् । ततः कुरुक्षेत्रमध्ये प्रवृत्ते महति युद्धे समविक्रमायावन्तेनानेन गन्धर्व्वराजेन निहतोऽयं कौरवप्रवीरः । इत्येषा कथा महाभारते । १।१०१। अध्याये द्रष्टव्या ॥ ) गन्धर्व्वविशेषः । इति महाभारतम् ॥ ( यथा, देवीभागवते । १ । २० । २२ ।

"चित्राङ्गदस्तु गन्धर्व्वो दृष्ट्वा तं मार्गगं नृपम् ।
उत्ततारान्तिकं भूमेर्व्विमानवरमास्थितः ॥" )

ब्रह्मणः माहात्म्यकीर्त्तकस्य चित्रगुप्तादिचित्रयात्मजस्य विशेषः । स अघोरीशिविदेवकः । तस्याघोरगमनकारणं यथा,—

"अघोरगतस्य कौतुकं वराले ! प्रश्र कामिके ! ।
वराले इति मत्वं प्राप्य विप्रः स्वामिति मान्यया ॥
तयैव कार प्रथार्द्धं नान्यत् किञ्चिद्गृहीतवान् ।
फलमूलादिकं किञ्चित् सायमत्ति दश मिलेत् ॥
विहाय विप्रस्य गुरोरपि पूजाश्च पार्व्वणि ! ।
अधोऽलिङ्गं हि बरालामन्यविप्रश्च नैचयन् ॥
ज्ञात्वेति ब्राह्मणाः सर्व्वे सन्तुचित्राङ्गदं सुधा ।
वचो हि मधुरं किञ्चित् प्रियाह्लादाय सुन्दरि ! ॥
रे चित्राङ्गद ! अधन्यं वत्स ! विप्रत्वमिच्छसि ।
कदाप्युपानत् मत्स्यो नैवेति न हि बुध्यसे ।
वत्स ! शीघ्रमितो गच्छ चिरं कुरु तपो सदा ॥"

चित्राङ्गदः शापं श्रुत्वा ब्राह्मणान् तुष्टाव ततो ब्राह्मणा लज्जिताः सन्तस्तमूचुः ।

"हे चित्राङ्गद ! हे तात वत्स ! त्वं नीलवः किल ।
दुश्चिन्तां कुरु मा तात भद्रं ते कथयाम भोः ॥
जलसम्पोषणेनैव सर्व्वं प्राप्नोत्यसंशयम् ।
नार्हतीयं विना तात ! ब्राह्मणो भवितुं किल ॥
इतीश्वराज्ञा वेदेऽस्ति प्रतिज्ञानीहि तत्त्वतः ।
वरं प्राप्नोति देवत्वं ब्राह्मणत्वं कदापि न ॥
यथामरत्वमैशेन विना क्वापि न शास्यते ।
नीलवत्समतो गच्छ सुखेन वराली जय ॥
कल्पेऽद्यशतसाधि नागलोकेश्वरो भव ।
ततस्त्रिलोकनाथत्वमिन्द्रतुल्यो भविष्यसि ॥
राज्यं सुक्रान्ततो नैव पुनरावर्त्तनं तव ।
सदा वयं तव शिवं चिन्तयामो न भीं कुरु ॥
तात गच्छ सुखं सुहृच्च नागलोकेऽपि विलसात् ।
तत आनन्दमनसा गतश्चित्राङ्गदस्तलम् ॥"

इत्याचारनिर्णयतन्त्रम् ॥

( स्त्रियां टाप् । मणिपुरेश्वरस्य चित्रवाहनस्य कन्या । यथा, महाभारते । १।२१६।१५।

"नस्य चित्राङ्गदा नाम दुहिता चारुदर्शना ॥")

चित्राङ्गसूः, स्त्री, ( चित्राङ्गदं सूते प्रसूते इति । सू ह प्रसवे + क्विप् । ) सत्यवती । सा व्यासमाता । इति त्रिकाण्डशेषः ॥

चित्राङ्गी, स्त्री, (चित्रमङ्गं यस्याः । स्त्रियां ङीष् ।) मञ्जिष्ठा । कर्णजलौका । इति राजनिर्घण्टः ॥

चित्राटीरः, पुं, ( चित्रां नक्षत्रविशेषं अटतीति । अट गतौ + बाहुलकात् ईरच् ।) चन्द्रः ।(चित्रं तिलकं अटति गच्छति प्राप्नोति वलिच्छागामिबिन्दुभिरित्यर्थः । अट + ईरच् । ) घण्टाकर्णवलिच्छागामिबिन्दुभिरङ्कितभालः । इति मेदिनी । रे, २६३ ॥

चित्रापूपः, पुं, ( चित्रो विचित्र अपूपः पिष्टकः ।) पिष्टकभेदः । चितार पिठा इति भाषा ॥ तत्पर्य्यायः । पल्लवः २ । इति त्रिकाण्डशेषः ॥

चित्रायसं, स्त्री, (चित्रमायसं लौहम् । ) तीक्ष्णलौहम् । इति राजनिर्घण्टः ॥

चित्रिकः, पुं, ( चित्रा नक्षत्रविशेषः तत्पौर्णमासीमस्त्यस्य । चित्रा + ठन् । ) चैत्रमासः । इति शब्दरत्नावली ॥

चित्रिणी, स्त्री, ( चित्रं विचित्रतास्त्यस्याः । चित्र + इनिः + ङीप् । ) पद्मिन्यादिचतुर्व्विधस्त्रीमध्ये स्त्रीविशेषः । सा मीनगन्धा । तस्या लक्षणं यथा । रतिमञ्जर्य्याम् । ६ ।

"भवति रतिरसज्ञा नातिदीर्घा न खर्व्वा
तिलकुसुमसुनासा स्निग्धदेहोत्पलाक्षी ।
कठिनघनकुचाढ्या सुन्दरी वा सुशीला
सकलगुणविचित्रा चित्रिणी चित्रवक्त्रा ॥"

( इयं हि मृगजातीयपुरुषं प्राप्य सन्तुष्टा भवति । यदुक्तं तत्रैव । ८ ।

"शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम् ।
वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम् ॥"

अस्याः रतिकरप्रकारमाह तत्रैव । २६ ।

"शीत्कार चुम्बनं पीडा गले हस्ते च चुम्बनम् ।
चरो चये स्तने हस्तं चित्रिण्या रतिमादिशेत् ॥")

चित्रेशः, पुं, ( चित्रा नक्षत्रविशेषस्तस्या ईशः पतिः । ) चन्द्रः । इति शब्दचन्द्रिका ॥

चित्रोक्तिः, स्त्री, (चित्रा आश्चर्य्यकरी उक्तिर्व्वाणी ।) आकाशवाणी । इति त्रिकाण्डशेषः ॥ आश्चर्य्यकथनम् ॥

चित्रौदनं, स्त्री, ( चित्रमोदनम् । ) विचित्रान्नम् । इति ब्रह्मवैवर्त्तम् ॥

चिद्रूपः, त्रि, हृदयालुः । इति भूरिप्रयोगः । ( चित् ज्ञानमेव रूपं यस्य ।) ज्ञानमयः । यथा । चिद्रूपे परमात्मनीति योगशास्त्रम् ॥

चिन्ता, स्त्री, (चिन्तनमिति । चिति स्मृत्याम् + "चिन्तिपूजिकथिकुम्बिचर्च्चश्च ।" ३ । ३ । १०५ । इति अङ् ।) चिन्तना । चिन्तनम् । तत्पर्य्यायः । स्मृतिः २ आध्यानम् ३ । इत्यमरः । १ । ७ । २९ । आध्या ४ ध्यानम् ५ चिन्तितिः ६ । इति शब्दरत्नावली ॥ चिन्तिया ७ । इति रभसः ॥ (यथाह कश्चित् ।

"चिता चिन्ता द्वयोर्मध्ये चिन्ता नाम गरीयसी।
चिता दहति निर्जीवं चिन्ता हि जीवितन्तथा॥")
शृङ्गारसम्भोगयोः प्रकारभावना। इति रसमञ्जरी॥ (सा च व्यभिचारिभावविशेषः। यथा साहित्यदर्पणे। ३। १७०।
'ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासताप- [कृत्॥")

चिन्तामणिः पुं (चिन्तायां सर्व्वकामप्रदो मणिरिव। शाकपार्थिवादिवत् समासः। यद्वा, चिन्तया ध्यानधारणादिना मण्यते आहूयते इति। मण+इण्।) ब्रह्मा। इति शब्दरत्नावली॥ (चिन्ता एव मणिरिव यस्य। चिन्ताशीलत्वादेवास्य तथात्वम्।) बुद्धविशेषः। इति त्रिकाण्डशेषः॥ मणिविशेषः। यथा भट्टिः।
'सामर्थ्यसम्पादितवाञ्छितार्थ-
श्चिन्तामणिः स्यान्न कथं हनूमान्॥"
स्पर्शमणिः। तथा च।
'यथा चिन्तामणिं स्पृष्ट्वा लौहं काञ्चनतां भजेत्॥"
इति माघोत्तरखण्डम्॥
(अश्वविशेषः। यथा, नकुलकृताश्वचिकित्सिते। ४। १६।
'कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः॥")

चिन्तावेश्म [न्] क्ली (चिन्ताया मन्त्रणादेर्वेश्म गृहम्।) मन्त्रणागृहम्। तत्पर्य्यायः। शार्व्वटम् २। इति हारावली। १६८॥

चिन्तिडी स्त्री (तिन्तिडी। पृषोदरादित्वात् तस्य चत्वम्।) तिन्तिडी। इति द्विरूपकोषः॥ इति कश्चित्॥

चिन्तित त्रि, (चिति+कर्म्मणि क्तः।) कृतचिन्तनम्। यथा,—
'यच्चिन्तितं तदिह दूरतरं प्रयाति
यच्चेतसा न गणितं तदिहाभ्युपैति।"
इत्युद्भटः॥
कर्त्तरि क्ते चिन्तायुक्तः। भावे क्ते चिन्ता॥

चिन्तितिः स्त्री (चिन्त भावे क्तिच् इट् च।) चिन्ता। इति शब्दरत्नावली॥

चिन्तिया स्त्री चिन्ता। इति त्रिकाण्डशेषः॥

चिन्नः पुं शस्यविशेषः। इति शब्दचन्द्रिका। चिना इति भाषा॥ (चीनशब्दे विशेषोऽस्य ज्ञातव्यः॥)

चिपिटः पुं (चयतीति। चि+बाहुलकात् पिटच् स च कित्।) भक्ष्यद्रव्यविशेषः। चिडा। इति भाषा॥ तत्पर्य्यायः। पृथुकः २। इति रत्नमाला। ३। ६५॥ चिपिटकः ३। इत्यमरः॥ चिपुटः ४। इति भरतः॥ धान्यचमसः ५। इति त्रिकाण्डशेषः॥ चिपीटकः ६। इति शब्दरत्नावली॥ अस्य गुणाः। गुरुत्वम्। स्निग्धत्वम्। कफदत्वम्। कफवर्द्धकत्वञ्च। चीरयुक्तस्य तस्य गुणाः। बलकारित्वम्। वायुनाशित्वम्। मलभेदकत्वञ्च। इति राजवल्लभः॥ दुर्ज्जरत्वम्। तृप्यत्वञ्च। तस्य कल्कं यथा, भावप्रकाशे पूर्व्वखण्डे द्वितीये भागे।
"शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः।
कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि॥"
"शालेया यावनालाद्याश्चिपिटाः पुष्टिवर्द्धनाः॥"
इति राजनिर्घण्टः॥
तस्य भक्षणविधिनिषेधौ यथा,—
"हिंस्रिमन्नं पृथुकं शुद्धं देशविशेषके।
नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने॥
अभक्ष्यञ्च यतीनाञ्च विधवाब्रह्मचारिणाम्॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डम्॥
(नि नता नासिका विद्यतेऽस्य। "इनच्पिटच्-चिकचि च।" ५। २। ३३। इति पिटच् प्रत्ययेऽचिरादेशश्च। नतनासिके त्रि। यथा विश्वकर्म्मकाशी। १३। २।
"द्विगवक्त्रं चिपिटञ्चैव यञ्च सुरणस्तथा॥"
इत्यस्य फलमाह तत्रैव। ५म श्लोके।
'तुङ्गत्वोनञ्च चिपिटं यज्ञस्थानदर्शनम्॥"
चिपिटाकारमुखादौ च। यथा, काशीखण्डे। ३७। १४।
"वक्त्रो ह्रस्वश्चिपिटः सुखसौभाग्यभञ्जकः॥"
"चिपिटः चिपिटकाकारः।" इति तट्टीका॥)

चिपिटकः, पुं (चिपिट+स्वार्थे कन्।) चिपिटः। इत्यमरः। २। ९। ४७॥ (स्त्रियां टाप्। नतनासिका॥)

चिपिटा स्त्री, गुडादिनीत्यम्। इति राजनिर्घण्टः॥ (चिपिटा चिपिटाकारा इति। चिपिट+टाप्। चिपिटमूर्त्तिः। यथा, काशीखण्डे। ३७। १६। 'चिपिटाभिर्भवेद्दासी॥")

चिपुटः पुं (चिपिट+पृषोदरादित्वात् साधुः।) चिपिटकः। इति भरतधृतशब्दकोषः॥

चिप्पः, पुं (चिक्कति पीडयति अङ्गुलिमिति। चिक+अच्। निपातनात् कस्थाने पागमे साधुः।) नखरोगविशेषः। आङ्गुलहाडा इति भाषा॥ तल्लक्षणं यथा,—
"नखमांसमधिष्ठाय वातः पित्तञ्च देहिनाम्।
करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्॥"
अथ कुनखस्य लक्षणमाह।
'अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः।
भवेत्तं कुनखं विद्यात् कुशीरं वा विचक्षणः॥"
अथ तयोश्चिकित्सा।
'चिप्पं रुधिरमोक्षेण शोधनेनाप्युपाचरेत्।
गतोष्मा णमयेनस्तु सेचयेदुष्णवारिणा।
शस्त्रेणापि यथायोग्यमुत्छिद्य स्रावयेत्ततः॥
व्रणोक्तेन विधानेन रोपयेत्तं विचक्षणः।
स्वरसेन हरिद्राया पात्रे हस्तायसेऽभयाम्॥
घृष्ट्वा तस्येन कल्केन लिम्पेच्चिप्पं पुनः पुनः।
काञ्जिकाः सम्भिः पत्रैः कोमलैः परिवर्द्धितः॥
चक्रुलादिवकः पुनः ध्रुवमाशु प्रशाम्यति।
चैग्रविमर्द्धकल्केन कुनखं समुपाचरेत्॥
नखकोटिप्रविष्टञ्च टङ्कणञ्च प्रशाम्यति।
कुनखश्चेत्तदा शैलः सलिलं सवतोऽपि च॥"
इति भावप्रकाशे मध्यखण्डे ४र्थे भागे॥
(तन्त्रान्तरमस्य यथा,—
"कुर्य्यात् पित्तानिलः पाकं नखमांसे सरुग्ज्वरम्।
चिप्पमक्षतरोगञ्च विद्यादुपनखञ्च तम्॥"
इति वाभटेनोत्तरस्थाने ३१ अध्याये उक्तम्॥
चिकित्सास्य यथा,—
"चिप्पं शुद्धा जितोष्माणं साधयेच्छस्त्रकर्म्मणा॥"
इत्युत्तरस्थाने द्वात्रिंशेऽध्याये वाभटेन चोक्तम्॥)

चिमिः, पुं, (चिनोति सञ्चिनोति मनुष्यजातिवद्वाक्यानीति। चि+बाहुलकात् मिक्।) शुकपक्षी। इति शब्दमाला॥

चिमिकः, पुं, (चिमि+स्वार्थे कन्।) शुकपक्षी। इति शब्दरत्नावली॥

चिरं अ, (चि+बाहुलकात् रक्।) दीर्घकालः। तत्पर्य्यायः। चिराय २ चिररात्राय ३ चिरस्य ४। इत्यमरः॥ चिरेण ५ चिरात् ६ चिरे ७। इति भरतः॥ चिरतः ८। इति शब्दरत्नावली॥ (यथा मनुः। ४। ६०।
'नैकः प्रपद्येताध्वानं न चिरं पर्व्वते वसेत्॥)

चिरकारी, [न्] त्रि (चिरं व्याप्य करोतीति। कृ+णिनि।) चिरक्रियः। (यथा, महाभारते। १२। २६४। ३।
"चिरकारी हि मेधावी नापराध्यति कर्म्मसु॥")
गौतमस्य पुत्रभेदः। अस्य नियमादिकं यदुक्तं महाभारते। १२। २६५। ४५।
"चिरकारी महाप्राज्ञो गौतमस्याभवत् सुतः।
चिरेण सर्व्वकार्य्याणि विमृश्यार्थान् प्रपद्यते॥
चिरं सञ्चिन्तयन्नर्थांश्चिरं जाग्रत् चिरं स्वपन्।
चिरं कार्य्याभिपत्तिश्च चिरकारी तथोच्यते॥")

चिरकालः पुं, (चिरः कालः इति कर्म्मधारयः।) दीर्घकालः। तत्पर्य्यायः। दीर्घरात्रम् २। इति त्रिकाण्डशेषः॥

चिरक्रियः, त्रि, (चिरं व्याप्य क्रिया यस्य।) चिरकालेन क्रियाकारकः। तत्पर्य्यायः। दीर्घसूत्रः। इत्यमरः। २। १। १७॥

चिरजीवकः, पुं, (चिरं जीवतीति। जीव+ण्वुल्।) जीवकवृक्षः। इति जटाधरः॥

चिरजीवी, [न्] पुं (चिरं जीवतीति। जीव+णिनिः।) विष्णुः। काकः। इति मेदिनी॥ जीवकवृक्षः। शाल्मलिवृक्षः। इति राजनिर्घण्टः॥ मार्कण्डेयः। अश्वत्थामा। बलिः। व्यासः। हनूमान्। विभीषणः। कृपः। परशुरामः। इति तिथ्यादितत्त्वम्॥ बहुकालजीविनि त्रि। इति जटाधरः॥ (यथा, रामायणे। २। १। २६।
"अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः॥")

चिरञ्जीवी, [न्] पुं, (चिरं जीवतीति। जीव+णिनिः।) विष्णुः। काकः। इति हेमचन्द्रः। ४। ३८८॥ जीवकवृक्षः। शाल्मलिवृक्षः। इति राजनिर्घण्टः॥ चिरजीविनि त्रि॥

चिरण्टी, स्त्री (चिरात् चिरेण वा अटति पितृगृहादिति। अट+अच्। 'वयसि प्रथमे।" ४। १। २०। इति ङीप्। तत्र पृषोदरात् साधुः।) स्ववासिनी। ऊढा अनूढा वा पितृ-

गेहस्थिता कन्या। द्वितीयवयाः स्त्री। सा च युवती। इति भरतधृतरुद्रः हेमचन्द्रश्च॥

चिरतिक्तः, पुं, (चिरं चिरात् वा चिरावधीत्यर्थः तिक्तः।) वृक्षविशेषः। चिरता इति भाषा॥ तत्पर्य्यायः। चिरातिक्तः २ तिक्तकः ३ अनार्य्यतिक्तकः ४ किराततिक्तः ५ भूनिम्बः ६ किरातकः ७ सुतिक्तकः ८। इति शब्दरत्नावली॥ (भूनिम्बशब्देऽस्य विवरणमस्य ज्ञातव्यम्॥)

चिरत्नः, त्रि, (चिर+"चिरपरुत्परारिभ्यस्त्नो वक्तव्यः।" ४।३।२३। इत्यस्य वार्त्तिकोक्त्या त्नप्रत्ययः।) पुरातनः। चिरकालोत्पन्नः। इति जटाधरः॥

चिरन्तनः, त्रि, (चिरं भव इति। "सायंचिरमिति।"४।३।२३। इति ट्युल् तुट् च। निपातनात् साधुः।) पुरातनः। इत्यमरः।३।१।७७॥ (यथा, पञ्चतन्त्रे।१।८०। "अयमस्माकं चिरन्तनो मन्त्रिपुत्रो दमनकोऽव्याहतप्रवेशः॥" पुं, मुनिविशेषः। यथा, सिद्धान्तकौमुद्याम्।४।३।१०५। इत्यस्य वार्त्तिके। "ब्राह्मणेषु पुराणेन चिरन्तनेन मुनिना॥")

चिरपाकी, [न्] पुं, (चिरेण पाकोऽस्त्यस्य। पाक+इनिः।) कपित्थः। इति राजनिर्घण्टः॥

चिरपुष्पः, पुं, (चिराणि पुष्पाणि यस्य।) वकुलवृक्षः। इति राजनिर्घण्टः॥

चिरम्, व्य, (चि+रमक्।) चिरार्थम्। दीर्घकालार्थम्। तत्पर्य्यायः। चिराय २ चिररात्राय ३ चिरस्य ४ चिरात् ५ चिरेण ६। इति हेमचन्द्रः।३।१६८॥ (यथा, रघौ।३।६२।

"तथापि शस्त्रव्यवहारनिष्ठुरे
विपक्षभावे चिरमस्य तस्थुषः॥")

चिरमेही, [न्] पुं, स्त्री, (चिरेण मेहतीति। मिह+णिनिः।) गर्द्दभः। इति हेमचन्द्रः।४।३२२॥

चिरम्भणः, पुं, (चिरं भणति क्रोशतीति। चिरं+भण+अच्।) चिल्लः। इति त्रिकाण्डशेषः॥

चिररात्रं, क्ली, (चिरा रात्रिरिति योगविभागात् अच् समासे।) दीर्घकालः। इति हलायुधः॥ (यथा, महाभारते।१।१६८।३।

"चिररात्रोषिताः सेह ब्राह्मणस्य निवेशने॥")

चिररात्राय, व्य, (चिररात्रं अयते इति। अय+"कर्म्मण्यण्।" ३।२।१। इत्यण्।) दीर्घकालः। इत्यमरः।३।४।१४॥ (यथा, मनुः।३।२६६।

"हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते।
पितृभ्यो विधिवद्दत्तं तत् प्रवक्ष्याम्यशेषतः॥")

चिरविल्वः, पुं, (चिरं विलति आच्छादयति पत्रकण्टकादिभिरिति। विल आच्छादने+वः।) करञ्जवृक्षः। इत्यमरः।२।४।४७॥ (यथा,—

"चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः।
कपोतचणकश्यामा पुरीषाणि च दारुणम्॥"
इति सुश्रुते सूत्रस्थाने षट्त्रिंशेऽध्याये॥)

चिरसूता, स्त्री, (चिरं सूता या सा।) चिरप्रसूता गावी। केलेन् गाइ इति भाषा। तत्पर्य्यायः। वष्कयणी २। इत्यमरः।२।९।७१॥

चिरस्थायी, [न्] त्रि, (चिरं तिष्ठतीति। स्था+णिनिः।) बहुकालस्थाता॥

चिरस्य, व्य, (चिरमस्यते इति। अस्+यत्। शकन्ध्वादित्वात् साधुः।) दीर्घकालः। इत्यमरः।३।४।१॥ (यथा, हरिवंशे।१२६।२३।

"चिरस्य खलु कालेन संस्तुतोऽसि महात्मना॥")

चिराटिका, स्त्री, (चिरं अटतीति। अट+ण्वुल् कापि अत इत्वञ्च।) श्वेतपुनर्नवा। इति रत्नमाला॥ साताड़ी इति भाषा॥ यथा, वैद्यके।

"गोमूत्रयुक्तस्य पुरातनस्य
यद्वायसस्तानि चिराटिकायाः॥"

चिरात्, व्य, (चिरं अततीति। अत्+क्विप्) दीर्घकालः। इति हेमचन्द्रः।६।१६८॥ (यथा, पञ्चतन्त्रे।४।७८। "भो भगिनीसुत! किमतिचिराद्दृष्टोऽसि॥")

चिरात्, पुं, (चिरं चिरेण वा अत्ति। अद्+क्विप्।) गरुड़ः। इति त्रिकाण्डशेषः॥

चिरातिक्तः, पुं, (चिरं आतिक्तः।) चिरतिक्तः। इति शब्दरत्नावली॥

चिराय, व्य, (चिरं अयते। अय+अण्।) दीर्घकालः। इति हेमचन्द्रः।६।१६८॥ (यथा, महाभारते।१३।६४।१०।

"पुरा धर्म्मो वर्त्तते नेह यावत्
तावद्गच्छामः सुरलोकं चिराय॥")

चिरायुः, [स्] पुं, (चिरमायुर्यस्य।) देवता। इति त्रिकाण्डशेषः॥ चिरजीविनि त्रि। यथा,

"भवति यदि मनुष्यो गुर्व्वधीनश्चिरायुः॥"
इत्यागमः॥

(यथा च पञ्चतन्त्रे।५।३४।

"यदि विस्तारविस्तीर्णं तद्भवेन्न चिरायुषम्॥")

चिरि, र न हिंसे। इति कविकल्पद्रुमः॥ (स्वां-परं-सकं-सेट्।) रेफोपधः। र वैदिकः। न, चिरिणोति। इति दुर्गादासः॥

चिरिः, पुं, (चिनोति मनुष्यवद्वाक्यादिकम्। चि+रिक्।) शुकपक्षी। इति त्रिकाण्डशेषः॥

चिरिण्टी, स्त्री, (चिरण्टी+पृषोदरात् साधुः।) ऊढ़ा अनूढ़ा वा पितृगृहस्थिता कन्या। तत्पर्य्यायः। सुवासिनी। इत्यमरः।२।६।९॥ चिरण्टी ३ सुवासिनी ४। इति भरतः॥ द्वितीयवयाः स्त्री। युवती। इति मेदिनी॥

चिरिविल्वः, पुं, (चिरविल्वः। पृषोदरादित्वात् साधुः।) चिरविल्वः। करञ्जवृक्षः। इत्यमरटीकायां भरतः॥

चिरु, स्त्री, (चिञ् चयने+क्विप्। चि चयनं ग्रहणमित्यर्थः रातीति। रा+न्याय्वादयश्चेति कुः। बाहुसन्धिवलमाश्रित्यैव ग्रहणक्रियासम्भवात् तथात्वम्।) बाहुसन्धिः। इति शब्दचन्द्रिका॥

चिरे, व्य, चिरम्। इत्यमरटीकायां रायमुकुटः॥

चिरेण, व्य, चिरम्। इति हेमचन्द्रः॥ (यथा, रघुः।५।६४।

"भावाववोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव॥")

चिर्भटी, स्त्री, (चिरेण भटतीति। भट+अच्। गौरादित्वात् ङीष्। पृषोदरादित्वात् साधुः।) कर्कटी। इति हेमचन्द्रः।४।२५५॥ (यथा, पञ्चतन्त्रे।१।१६७। "अहो! अविवेकोऽसद्भूपतेर्यः पुरीषोत्सर्गमाचरंश्चिर्भटीभक्षणं करोति॥")

चिर्भिटा, स्त्री, कर्कटीभेदः। चिभिड़ा इति वेलसेद इति च देशान्तरीयभाषा॥ तत्पर्य्यायः। सुचित्रा २ चित्रफला ३ चैत्र चिर्भिटा ४ पाण्डुफला ५ पथ्या ६ रोचनफला ७ चिर्भिटिका ८ कर्कचिर्भिटा ९। इति राजनिर्घण्टः॥ चिर्भिटम् १० घेणुदुग्धम् ११ गोरक्षकर्कटी १२। अस्या गुणाः। मधुरत्वम्। रूक्षत्वम्। गुरुत्वम्। पित्तकफापहत्वम्। अनुष्णत्वम्। ग्राहित्वम्। विष्टम्भित्वञ्च॥ पक्वाया अस्या गुणाः। उष्णत्वम्। पित्तलत्वञ्च। इति भावप्रकाशः॥ गौल्यत्वम्। दीपनत्वञ्च॥ बालाया अस्या गुणाः। तिक्तत्वम्। किञ्चिदम्लत्वञ्च। शुष्कायास्तस्या गुणाः। श्लेष्मवातारुचिजाड्यनाशित्वम्। रोचनत्वम्। दीपनत्वञ्च। इति राजनिर्घण्टः॥ (क्वचित् पुंलिङ्गेऽपि दृश्यते॥)

चिल, श वासे। इति कविकल्पद्रुमः॥ (तुदां-परं-सकं-सेट्।) वासः परिधानम्। श, चिलति वस्त्रं लोकः परिदधातीत्यर्थः। चेलिता। इति दुर्गादासः॥

चिलमीलिका, स्त्री, (चिरं मीलतीति। मील सङ्कोचे+ण्वुल्। ततष्टापि अत इत्वम्। रस्य लत्वे साधुः।) कण्ठीभेदः। खद्योतः। विद्युत्। इति मेदिनी। के, २२८॥

चिलिचिमः, पुं, (चिरिं हिंसां चिनोतीति। चिरि+चि+मक्। रस्य लत्वम्।) मत्स्यविशेषः। वालियागड़क इति ख्यातः। इश्वाक इत्येके। इति भरतः॥ तत्पर्य्यायः। नलमीनः २। इत्यमरः।१।१०।१८॥ तलमीनः ३ चिलीचिमिः ४ चिलीचिमः ५ चिलिचीमः ६ चेलिचीमः ७ चिलीमः ८ चिलिमीनकः ९ चिलिचीमिः ११ कवलः ११ विलोटकः १२। इति भरतधृतकोषान्तरम्॥ चेङ्गो इति ख्यातो मत्स्यः। तस्य गुणाः। लघुत्वम्। रूक्षत्वम्। अनभिष्यन्दित्वम्। वायुकारित्वम्। कफनाशित्वञ्च। इति राजवल्लभः॥

चिल्ल, शैथिल्ये। भावकृतौ। इति कविकल्पद्रुमः॥ (भ्वां-परं-अकं-सेट्।) ह्रस्वी लघ्वन्तः। चिल्लति चेचिल्लते। इति दुर्गादासः॥

चिल्लः, पुं, (चिल्लति भावभावेन उड्डीयते इति। चिल्ल+अच्।) पक्षिविशेषः। चिल् इति भाषा॥ तत्पर्य्यायः। आतायी २। इत्यमरः।२।५।२१॥ शकुनिः ३ आतायी ४। इति हेमचन्द्रः॥ शम्भाकिः ५ कण्ठनीड़कः ६ चिरम्भणः ७। इति त्रिकाण्डशेषः॥ (यथा, विष्णुधर्म्मोत्तरे।

'गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च।
चिल्लश्चर्म्मचिल्लश्च भासः पाण्डुर एव च।'
क्लिन्ने चक्षुषी यस्य। 'क्लिन्नस्य चिल्लपिल्ल
लश्चास्य चक्षुषी।" ५।२।३३। इत्यस्य वार्त्ति
इति चिलादेशो लप्रत्ययश्च।) क्लिन्नचक्षुः।
क्लिन्ननेत्रयुक्ते त्रि। इति मेदिनी। ले, १६।

**चिल्लका** स्त्री (चिल्ल इव कायतीति। कै+क।)
झिल्लिका। इति शब्दरत्नावली॥

**चिल्लभक्ष्या** स्त्री (चिल्लस्य भक्ष्या भक्षणीया।)
चञ्चुविलासिनी। इति शब्दचन्द्रिका॥

**चिल्लाभ** पुं (प्रसह्य हारकत्वात् चिल्ल इव आभा
तीति। आ+भा+क।) प्रसह्यचौरः। इति
त्रिकाण्डशेषः॥ छातछेँचड इति गाँटिकाटा
इति च भाषा॥

**चिल्ली** स्त्री (चिल्लति हावं करोति चिल्ल्यतेऽनेन
वा। चिल्ल+इन्। ततो वा ङीष्।) लोध्रः।
पत्रशाकभेदः। तत्पर्य्यायः। चिल्लिका २ कुली ३
अग्रलोहिता ४ मृदुपत्री ५ चारुदला ६ चार
पत्रा ७ वास्तुकी ८ महद्दला ९ गौरवास्तुकः १०।
(यथा सुश्रुते सूत्रस्थाने ४६ अध्याये।
'सतीनो वास्तुकश्चुच्चु चिल्ली मूलकपोतिका।
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते॥')
अस्य गुणाः। वास्तुकतुल्यत्वम्। क्षारत्वम्।
श्लेष्मपित्तप्रमेहमूत्रकृच्छ्रनाशित्वम्। पथ्यत्वम्।
रुचिकारित्वञ्च। इति राजनिर्घण्टः॥
(तद्वच्चिल्ली तु विज्ञेया वातपित्तविकारिणाम्।'
इति हारीते प्रथमे स्थाने दशमेऽध्याये॥)
झिल्लिका। इति शब्दरत्नावली॥

**चिवि** पुं (चीयते आदराय गच्छत इति। चीव
ग्रहणे+'सर्व्वधातुभ्य इन्।' उणां ४।११७।
इति इन्। पृषोदरादित्वात् ह्रस्वः।) चिबुकम्।
इति जटाधरः॥

**चिविट** पुं (चिपिटः निपातनात् पस्य वः।)
चिपिटः। इत्यमरटीका॥

**चिविल्लिका** स्त्री क्षुद्रक्षुपविशेषः। तत्पर्य्यायः।
रक्ताङ्का २ क्षुद्रचोली ३ मधुमालपत्रिका ४।
अस्या गुणाः। कटुत्वम्। कषायत्वम्। जीर्ण
ज्वरं अतिहितत्वम्। रसायनत्वञ्च। इति
राजनिर्घण्टः॥

**चिबु** पुं (चीयत आदरार्थं गच्छति असौ। चीव
+ मृगय्वादयश्च। उणां।१।३८। इति
कुप्रत्ययेन साधु।) चिबुकम्। इति भरतः॥

**चिबुक** क्ली (चिबु+स्वार्थे कन्। अभिधानात्
क्लीवत्वम्।) अधराधोभागः। इत्यमरः।२।
६।९०॥ थुँति इति दाडि इति च भाषा॥
(यथा, छन्दोमञ्जर्य्याम्। १।४१।
'उत्तम्भ्य चिबुकं वदस्यथाद्य पवने पुने॥')

**चिबुक** पुं (चिबुरिव कायतीति। कै+क।)
मुचुकुन्दवृक्षः। इति राजनिर्घण्टः॥

**चिह्न** लक्षणे। (अदन्तचुरा० पर० सक० सेट्।)
चौरचुराश्चिरिति दृष्टा इत्यमरटीकायां
भरतः॥

**चिह्न** क्ली (चिह्न्यतेऽनेनेति। चिह्न लक्षणे+करणे
घञ्।) चिह्न्यते येन तत्। चिना इति दाग इति
च भाषा॥ तत्पर्य्यायः। कलङ्कः २ अङ्कः ३
लाञ्छनम् ४ लक्ष्म ५ लक्षणम् ६ लिङ्गम् ७। इत्य
मरः।१।४।१७॥ लक्ष्मण ८। इति भरतः॥
अभिज्ञानम् ९। इति जटाधरः॥ (यथा
भागवते। ४।१५।९।
'वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः।
पादयोररविन्दञ्च तं वै मेने हरेः कलाम्॥')
पताका। इति मेदिनी। ने ४॥

**चिह्नकारी** [न्] त्रि, (चिह्नं करोतीति। कृ+
णिनि।) घोरदर्शनः। विघाती। इति विश्वः॥

**चिह्नधारिणी** स्त्री (चिह्नं धरति धारयतीति वा।
धृ+णिनि स्त्रियां ङीप्।) श्यामालता। इति
शब्दचन्द्रिका॥

**चिह्नित**, त्रि, चिह्न+कर्म्मणि क्त। चिह्नयुक्तः।
अङ्कितः। लक्षितः। (यथा मनुः। १०।५५।
'दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः॥")

**चीक** कि मर्षणे। इति कविकल्पद्रुमः॥ (चुरा० पक्षे
भ्वा० पर० सक० सेट्।) कि, चीकयति चीकति।
मर्षणं स्पर्शः। तथा च। चन्द्रावलीतरङ्गा
न्दोधीकयन्ति च यदूनपुरीति हलायुधः। वायव
स्पृशन्तीत्यर्थः। भट्टमल्लस्तु मर्षणं इति मर्षेण्य
यमर्थं पठित्वा क्षमार्थमाह। इति दुर्गादासः॥

**चीड़ा**, स्त्री, गन्धद्रव्यविशेषः। चीडागन्ध इति
ख्याता। तत्पर्य्यायः। दारुगन्धा २ गन्ध
वधूः ३ गन्धमादनी ४ लक्ष्मी ५ तारा ६ भूत
मारी ७ मङ्गल्या ८ कपटिनी ९ अशुभौति
जित् १०। अस्या गुणाः। कटुत्वम्। काश
कफनाशित्वम्। दीपनत्वम्। अत्यन्तसेवनात्
पित्तदोषभ्रमापहत्वञ्च। इति राजनिर्घण्टः॥

**चीन**, क्ली (चिनोति कौशादिकमिति। चि+
बाहुलकात् नक् दीर्घश्च।) पताका। इति
त्रिकाण्डशेषः॥ सीसकम्। इति रत्नमाला॥

**चीन** पुं (चीयते सञ्चीयते शबलत्वादिदोषो
यत्र। चि+बाहुलकात् नक् दीर्घश्च।) देश
विशेषः। चीना इति भाषा॥ यथा —
'काश्मीरन्तु समारभ्य कामरूपात्तु पश्चिमे।
भोटान्तदेशो देवेशि। मानसेशाच्च दक्षिणे।
मानसेशादुत्तरे च चीनदेशः प्रकीर्त्तितः॥'
इति शक्तिसङ्गमतन्त्रम्॥
(तद्देशवासिषु तन्नृपेषु च बहुवचनान्तः। यथा
महाभारते।२।२६।९। [ऽभवत्॥)
स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषो
अंशुकविशेषः। (यथा शकुन्तलायां १ माङ्के।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य।)
व्रीहिभेदः। तन्तुः। मृगविशेषः। इति
मेदिनी। ने ४॥

**चीनक** पुं (चीन इव। चीन+स्वार्थे कन्।)
धान्यविशेषः। चीना इति भाषा॥ तत्पर्य्यायः।
काककङ्गु २। इति हेमचन्द्रः॥ (यथा विष्णु
पुराणे। १।६।२१।
"प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः॥")
अस्य गुणाः। शोषणत्वम्। वायुवर्द्धकत्वम्।
पित्तश्लेष्मनाशित्वम्। रूक्षत्वञ्च। इति राज
वल्लभः॥ कर्पूरः। चीनकपूर। इति राज
निर्घण्टः॥ (चीनदेशवासिषु बहुवचनान्तः।
यथा, महाभारते। ८। ८। १९।
"तुषारान्ववनांश्चैव खशांश्चैव निषधान् पुण्ड्रचीनकान्।")

**चीनकर्पूर** पुं (चीननामकः कर्पूरः।) कर्पूर
विशेषः। चीनकर्पूर इति देशान्तरीयभाषा॥
तत्पर्य्यायः। चीनकः २ कृत्रिमः ३ धवल ४
पटु ५ मेघसारः ६ तुषारः ७ द्वीपकर्पूरजः ८।
अस्य गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्।
ईषच्छीतत्वम्। कफकण्ठदोषकृमिनाशित्वम्।
मेध्यत्वम्। पावनत्वञ्च। इति राजनिर्घण्टः॥

**चीनज**, क्ली, (चीने चीनदेशे जायते इति। जन
+ड।) लौहम्। तत्तु तीक्ष्णलौहम्। इति
राजनिर्घण्टः॥

**चीनपिष्ट** क्ली, (चीनस्य सीसकस्य पिष्टं तत्
पेषणे वस्तु चूर्णमित्यर्थः।) सिन्दूरम्। इति
हेमचन्द्रः॥ सीसकम्। इति राजनिर्घण्टः॥
(यथा कथासरित्सागरे। २३। ८५।
'चीनपिष्टमयो लोकश्चारवेकमयी च भूः॥')

**चीनवङ्ग** क्ली (चीनभवं वङ्गम्।) सीसकम्।
इति राजनिर्घण्टः॥

**चीनाक** पुं, (चीनं चीनाकारमकतीति। अक
+अण्।) कर्पूरविशेषः। तद्गुणाः। यथा
भावप्रकाशे।
'चीनाकश्च कर्पूरः कफक्षयकरः स्मृतः।
कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः॥'

**चीनाकर्कटी** स्त्री, (चीनमिव स्वादु कर्कटी। तत
पृषोदरात् साधुः।) कर्कटीभेदः। सा तु
चित्रकूटदेशे प्रसिद्धा। तत्पर्य्यायः। राज
कर्कटी २ सुदीर्घा ३ राजफला ४ बाला ५
कुलकर्कटी ६। अस्या गुणाः। रुच्यत्वम्।
शिशिरत्वम्। पित्तदाहशोषनाशित्वम्। मधु
रत्वम्। रुचिरत्वम्। हृद्यत्वञ्च। इति राज
निर्घण्टः॥

**चीभ** ऋ ङ कत्थे। इति कविकल्पद्रुमः॥ (भ्वा०
आत्म० सक० सेट्।) कत्थः प्रशंसा। ऋ अचि
चीभत्। ङ चीभते गुणिनं गुणी चोऽत्र
कारान्तियमित्येके। इति दुर्गादासः॥

**चीय** ऋ ञ सहत्यादानयोः। (भ्वा० उभ० सक०
सेट्।) चतुःस्वरी। ऋ अचिचीयत्। ञ
चीयति चीयते। इति दुर्गादासः॥

**चीर** क्ली (चिनोति आवृणोति शब्दं कटिदेशा
दिकं वा। चि+'शुसिचिमीनां दीर्घश्च।"
उणां।२।२५। इति क्रन् दीर्घश्च।) वस्त्र
खण्डः। (यथा रामायणे।५।३१।२२।
'प्राप्त तु महाबुद्धिं सौमित्रिभाव्यवनुमं।
पूर्व्वजस्यानुयात्रार्थे द्रुमचीरैरलङ्कृतः॥")
जीर्णवस्त्रखण्डम्। इति सुभूतिः। इति लिङ्गादि
संग्रहटीकायां भरतः॥ (यथा भागवते।२।२।५।

"चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ॥" )
गोस्तनः । वस्त्रभेदः । (यथा, मनुः ।११।१०१।
"चीरवासा द्विजोऽरण्ये चरेद्‌ब्रह्महणो व्रतम् ॥")
रेखाभेदः । लेखनभेदः । इति मेदिनी ॥ चूडा ।
( यथा, महाभारते । ३ । ११ । ४६ ।
"मुक्तावज्जर्ज्जरीभूता बहुवल्कल पादपाः ।
चीराणीव युदस्तानि रेजुस्तत्र महावने ॥" )
सीसकम् । इति हेमचन्द्रः ॥

चीरकः, पुं, ( चीर+संज्ञायां कन् ।) विक्रिया-
लेखः । विकारलेखनम् । इति विश्वः ॥ (स्वार्थे-
कनि चीरशब्दार्थोऽप्यत्र ॥)

चीरपत्रिका, स्त्री, ( चीरमिव पत्रमस्य । ततः
कन् टापि अत इत्वञ्च । ) चञ्चुशाकः । इति
राजनिर्घण्टः ॥

चीरपर्णः, पुं, ( चीरमिव पर्णमस्य ।) शालवृक्षः ।
इति राजनिर्घण्टः ॥ ( विवृतिरस्य शालशब्दे
विज्ञेया ॥)

चीरिः, स्त्री, ( चि+बाहुलकात् क्रिः दीर्घश्च । )
नेत्रांशुकम् । इति शब्दरत्नावली ॥

चीरिका, स्त्री, (चीरीति कृत्वा कायति शब्दायते
इति । कै+कः ।) झिल्ली । इति हेमचन्द्रः ॥

चीरितच्छदा, स्त्री, (चीरितः चीरमिव जात-
श्छदः पत्रं यस्याः ।) पालङ्कशाकम् । इति
भावप्रकाशः ॥

चीरी, स्त्री, ( चीरि+"कृदिकारादिति ।"
वा ङीष् ।) कच्छाटिका । झिल्ली । इति हेम-
चन्द्रः ॥

चीरुकं, क्ली, ( ची इति कृत्वा रौति । रु+क्विप् ।
चीरुर्झिल्लीपतङ्गः स इव इति इवार्थे कन् । )
फलविशेषः । चैँउर इतिभाषा । अस्य गुणाः ।
रुचिदाहकफपित्तकारित्वम् । अम्लत्वञ्च । इति
राजवल्लभः ॥

चीर्णं, त्रि, (चर+क्त । पृषोदरात् साधुः ।) शीलि-
तम् । इति त्रिकाण्डशेषः ॥

चीर्णपर्णः, पुं, ( चीर्णं विदीर्णं पर्णमस्य ।) निम्ब-
वृक्षः । खर्ज्जूरवृक्षः । इति मेदिनी ॥

चीलिका, स्त्री, ( चीरिका+रस्य लत्वे साधुः । )
चीरिका । झिल्ली । इति शब्दरत्नावली ॥

चील्लका, स्त्री, ( चीलिका+पृषोदरात् साधुः ।
चीदिति शब्देन लभ्यते इति । लभ+घञ् । ततः
पृषोदरादित्वात् साधुः इति वा । ) झिल्ली ।
इति शब्दरत्नावली ॥

चीव, ऋ ञ ग्रहणे । संवृतौ ।। इति कविकल्प-
द्रुमः ॥ (भ्वां उभं-सकं-सेट् ।) ऋ, अचिचीवत् ।
ञ, चीवति । चीवते वल्कलं भिक्षुः । गृह्णाति
परिदधाति वेत्यर्थः । इति दुर्गादासः ॥

चीव, क दीप्तौ । इति कविकल्पद्रुमः ॥ ( चुरां-
परं-अकं-सेट् । ) क, चीवयति । इति दुर्गा-
दासः ॥

चीवरं, क्ली, ( चीयते तन्तुसन्तानैरिति । चि+
"चिलरच्छलरधीवरेति ।" उणां । ३ । १ ।
इति ष्वरच् । निपातनात् धातोर्दीर्घत्वे साधुः ।)
भिक्षुवस्त्रम् । इत्युणादिकोषः ॥ ( यथा, महा-
भारते । १ । ६१ । १२ ।
"अगारिरनिकेतश्चाप्यगोत्रचरणो मुनिः ।
कौपीनाच्छादनं यावत्तावदिच्छेच्च चीवरम् ॥")

चीवरी, [ न् ] पुं, (चीवरं अस्यस्येति । इनिः ।)
बुद्धभिक्षुकः । इति त्रिकाण्डशेषः ॥

चुक्क, क व्यथने । इति कविकल्पद्रुमः ॥ ( चुरां-
परं-सकं-सेट् । ) कोपधः पञ्चमस्वरमध्यः ।
व्यथिः पीडनम् । क, चुक्कयति शत्रुं शूरः ।
इति दुर्गादासः ॥

चुक्कारः, पुं, ( चुक्क+भावे अण् । चुक्कं पीडनं
आराति सम्यक् ददातीति । सिंहनादश्रवणेन
भीरूणां भयजनकत्वात्तथात्वम् । आ+रा+
कः ।) सिंहनादः । इति त्रिकाण्डशेषः ॥

चुक्रं, क्ली, (चकते तृप्यत्यनेन इति । चक+"चकि-
रम्योरुच्चोपधायाः ।" उणां । २ । १४ । इति
रक उपधाया उच्च ।) अम्लद्रव्यविशेषः । महादा
इति ख्यातम् । तत्पर्य्यायः । तिन्तिडीकम् २
वृक्षाम्लम् ३ । इत्यमरः । २ । ६ । ३५ ॥ चुक्र-
कम् ४ । इति शब्दरत्नावली ॥ महाम्लम् ५ ।
इति जटाधरः ॥ (अम्लवृक्षकम् ६ । इति भाव-
प्रकाशः । १ । १ ॥) पत्रशाकविशेषः । चुक इति
भाषा ॥ तत्पर्य्यायः । चुक्रवास्तूकम् २ लिकु-
चम् ३ अम्लवास्तुकम् ४ दलाम्लम् ५ अम्ल-
शाकाख्यम् ६ अम्लादि ७ हिलमोचिका ८ ।
अस्य गुणाः । अम्लपत्रत्वम् । लघुत्वम् । उष्ण-
त्वम् । वातगुल्मनाशित्वम् । रुच्यशोषतृष्पित्त-
कारित्वम् । पथ्यत्वम् । तत्पर्य्यायगुणाः ।
"चुक्रिया स्यात्तु पत्राम्ला रोचनी शतवेधिनी ।
चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत् ॥
रुच्या लघुतरा पाके वृन्ताके नातिरोचनी ॥"
इति भावप्रकाशः ॥ * ॥
("चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परम् ।
शूलगुल्मविबन्धामवातश्लेष्महरं परम् ॥
वमिदृष्ण्यास्यवैरस्यहृत्पीडावह्निमान्द्यहृत् ॥"
इति शब्दार्थचिन्तामणिधृतवैद्यकम् ॥ )
काञ्जिकप्रभेदः । तत्पर्य्यायः । सहस्रवेधम् २
रसाम्लम् ३ चुक्रवेधकम् ४ शाकाम्लभेदनम् ५
चन्द्रम् ६ अम्लसारम् ७ चुक्रिका ८ । अस्य
गुणाः । तिक्तत्वम् । अम्लत्वम् । स्वादुत्वम् ।
कफपित्तनासिकारोगदुर्गन्धशिरोरोगनाशित्वञ्च ।
इति राजनिर्घण्टः ॥*॥ सन्धानविशेषः । यथा,
"यन्मस्त्वादिशुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥
द्विगुणं गुडमध्वारनालमस्तु क्रमादिह ॥"
इति परिभाषा ॥
(अस्य लक्षणं यथा,—
"विनष्टे संहितो यस्तु तच्चुक्रमभिधीयते ॥"
इति शार्ङ्गधरे मध्यखण्डे दशमेऽध्याये ॥)

चुक्रः, पुं, (चकते तृप्यतेऽनेनेति । चक+रक् उप-
धाया उच्च ।) अम्लः । अम्लवेतसः । इति विश्वः ॥

चुक्रकं, क्ली, ( चुक्र+संज्ञायां कन् । ) शाक-
विशेषः । चुकापालङ्ग इति भाषा ॥ अस्य
गुणाः । दुर्ज्जरत्वम् । भेदकत्वम् । वायुनाशि-
त्वम् । पित्तकारित्वम् । गुरुत्वञ्च । इति राज-
वल्लभः ॥ ( चुक्रार्थे स्वार्थे कन् ॥ )

चुक्रफलं, क्ली, (चुक्रमेव फलं यस्य । चुक्रं फलति
वा । फल+अच् । ) वृक्षाम्लम् । इति राज-
निघण्टः ॥ (वृक्षाम्लशब्देऽस्य विशेषो ज्ञातव्यः ॥)

चुक्रा, स्त्री, ( चुक्रः अम्लत्वं विद्यतेऽस्य इत्यच्
टाप् च ।) चाङ्गेरी । इति मेदिनी । रे, ३५ ॥
चामरुल इति भाषा ॥ (अस्या गुणा यथा,—
"चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत् ।
रुच्या लघुतरा पाके वृन्ताके नातिरोचनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
तिन्तिडी । इति शब्दरत्नावली ॥ (यथास्याः
पर्य्याया: भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च ।
अम्ला च चिञ्चिका चिञ्चा तिन्तिडीका च
तिन्तिडी ॥")

चुक्राम्लं, क्ली, ( चुक्रमिव अम्लम् । चुक्रवदम्लोऽत्र
इति वा । ) वृक्षाम्लम् । इति राजनिर्घण्टः ॥
(वृक्षाम्लशब्दे विवृतिरस्य ज्ञेया ॥)

चुक्राम्ला, स्त्री, ( चुक्रमिव अम्लः अम्लत्वं विद्यते-
ऽस्याः । अच् टाप् च । ) अम्ललोणिका ।
चिञ्चा । काञ्जिकभेदः । इति राजनिर्घण्टः ॥

चुक्रिका, स्त्री, ( चुक्रो विद्यतेऽस्मिन् इति । ठन्
टाप् च ।) अम्ललोणिका । इत्यमरः । २ । ४ ।
१४० ॥ (अस्याः पर्य्याया यथा, भावप्रकाशे ।
"चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ।
अश्मन्तकस्तु शफरी कुशली चाम्लपत्रकः ॥")
क्षुद्रचाङ्गेरी । इति रत्नमाला ॥ चुकापालङ्ग
इति भाषा ॥ (यथास्याः पर्य्यायाः ।
"चुक्रिका स्यात्तु पत्राम्ला रोचिनी शतवेधिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
तिन्तिडी । तत्पर्य्याया यथा, तत्रैव ।
"अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च ॥
अम्ला च चिञ्चिका चिञ्चा तिन्तिडीका च
तिन्तिडी ॥")

चुचुकं, क्ली, ( चुचु इत्यव्यक्तशब्देन कायति पान-
काले इति । कै+कः । ) कुचाग्रम् । तत्-
पर्य्यायः । चूचुकम् २ चुचूकम् ३ । इति शब्द-
रत्नावली ॥ कुचाननम् ४ । पुंलिङ्गोऽपि । इति
रत्नकोषः ॥ स्तनवृन्तम् ५ । इत्यमरटीकायां
भरतः ॥ (देशविशेषे तद्देशवासिषु च पुं । यथा,
महाभारते । १२ । २०७ । ४२ ।
"दक्षिणापथजन्मानः सर्व्वे नरवरान्ध्रकाः ।
गुहाः पुलिन्दाः शवराश्चुचुका मद्रकैः सह ॥")

चुचूः, पुं, सुनिषण्णशाकम् । इति त्रिकाण्डशेषः ॥

चुचूकं, क्ली, ( चुचुक+पृषोदरादित्वात् दीर्घः । )
चुचुकम् । इति शब्दरत्नावली ॥

चुच्य, ई अभिषवे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सकञ्च-सेट् । ) तालव्यवर्गाद्योपधः । पञ्च-

चुलुम्पा, स्त्री, (चुलुम्पति चञ्चला भवतीति । चुलुम्प+अच् । स्त्रियां टाप् ।) छागी । इति त्रिकाण्डशेषः ॥

चुलुम्पी, [न्] पुं, (चुलुम्पो लौल्यं चञ्चलता इत्यर्थः । सोऽस्यास्तीति । इनिः ।) शिशुमाराकृतिमत्स्यः । उत्पलमत्स्यः । इति कश्चित् । इति शब्दरत्नावली ॥

चुल्ल, हावकृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) प्रथमस्वरी लद्वयान्तः । एकोऽयं । चुल्लन्ति चारुनयनाश्च सह प्रियेणेति हलायुधः । इति दुर्गादासः ॥

चुल्लः, पुं, क्लिन्नचक्षुः । (क्लिन्ने चक्षुषी अस्य । "चुल् च ।" ५ । २ । ३३ । इत्यस्य वार्त्तिकोक्त्या क्लिन्नस्य चुलादेशो लप्रत्ययश्च ।) तद्युक्तोऽपि । इति हेमचन्द्रः । ३ । १२५ ॥

चुल्लकी, स्त्री, (चुल्लति हावभावेन क्रीडतीति । चुल्ल+ण्वुल् । गौरादित्वात् ङीष् ।) शिशुमारः । कुण्डीभेदः । कुलविशेषः । इति मेदिनी शब्दरत्नावली च ॥

चुल्लिः, स्त्री, (चुल्लते प्रज्वाल्यते अग्निरत्र । चुल्ल+"सर्व्वधातुभ्य इन् ।" उणां । ४ । ११७ । इति इन् । यद्वा, चुदते प्रेर्य्यते अग्निर्यत्र । चुद+बाहुलकात् लिक् ।) पाकार्थमग्निस्थलम् । चुला इति भाषा इति च भाषा ॥ तत्पर्य्यायः । अश्मन्तम् २ उद्धानम् ३ अधिश्रयणी ४ अन्तिका ५ । इत्यमरः । २ । ९ । २९ ॥ अश्मन्तम् ६ उधानम् ७ उद्धारम् ८ चुल्ली ९ आन्द्रिका १० । इति तट्टीका ॥ उद्धानिः ११ । इति शब्दरत्नावली ॥

चुल्ली, स्त्री, (चुल्लि+"कृदिकारादक्तिनः ।" ४ । १ । ४५ । इत्यस्य वार्त्तिकोक्त्या वा ङीष् ।) चिता । उद्धानम् । इति मेदिनी । ले, १० ॥ (यथा, मनुः । ३ । ६८ ।
"पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥")

चुस्तं, क्ली पुं, कुसुमम् । तत्तु मांसपिण्डकविशेषः ॥ स्थालीस्थमांसम् । पनसादिफलस्यासारभागः । इति लिङ्गादिसंग्रहटीकायां भरतः ॥ भोता इति ख्यातः ॥

चूचुकं, क्ली पुं, (चूष्यते पीयते इति । चूष पाने+बाहुलकात् उकः षस्य चत्वञ्च ।) चुचुकम् । इत्यमरटीकायां भरतः ॥ (यथा, रामायणे । ६ । २३ । १३ ।
"स्तनौ च विरलौ पीनौ समौ मे मग्नचूचुकौ ॥")

चूडकः, पुं, (चुडति अप्रकटीभवतीति । चुड+ण्वुल् ततो निपातनात् दीर्घत्वं साधुः ।) कूपः । इति त्रिकाण्डशेषः ॥

चूडा, स्त्री, (चोलयति मस्तकादुपरि उन्नता भवतीति । चुल क् उन्नतौ+भिदादित्वादङ् ततो दीर्घत्वलोलस्य डत्वे साधुः ।) मयूरशिखा । शिरोमध्यस्थशिखामात्रम् । तत्पर्य्यायः । शिखा २ । इत्यमरः । २ । ५ । ३२ ॥



केशपाशी ३ । जूटिका ४ कुटिका ५ । यथा, शब्दरत्नावल्याम् ।
"शिखा चूड़ा केशपाशी जूटिका कुटिकेत्यपि ।
शिरोमध्यवद्धचूडे भवेदेतत्तु पञ्चकम् ॥"
वड़भी । बाहुभूषणम् । इति मेदिनी । डे, १३ ॥ अग्रम् । इति हेमचन्द्रः ॥ (यथा, क्षितीशवंशे ।
"अस्ताचलचूड़ालम्बिनि भगवति चन्द्रमसि ॥")
कूपः । इति त्रिकाण्डशेषः ॥ दशसंस्कारान्तर्गतसंस्कारविशेषः । यथा । चूड़ा कार्य्या यथाकुलमिति मलमासतत्त्वम् ॥ (यथाच,—
"अयुग्माब्दे तथा मासि चूड़ा सौमग्रनीतरे ।
अर्केन्दुकालशुद्धौ च जन्ममासेन्दुभाद्दते ॥
रिक्तादर्शाऽष्टमीषष्ठीप्रतिपद्वर्ज्जिते सिते ॥"
इति संस्कारतत्त्वधृतज्योतिषवचनम् ॥
अस्य विशेषविवरणं चूड़ाकरणशब्दे द्रष्टव्यम् ॥)

चूड़ाकरणं, क्ली, (चूड़ायाः करणं कर्म्म ।) दशसंस्कारान्तर्गतसंस्कारविशेषः । तस्य क्रमो यथा । कुलाचारवशात् प्रथमे तृतीये वा वर्षे चूड़ाकरणं कर्त्तव्यम् । तत्र प्रथमं प्रातःकृतस्नानः कृतवृद्धिश्राद्धः पिता सभ्यनामानमग्निं संस्थाप्य विरूपाक्षजपान्तां कुशण्डिकां समाप्याग्नेर्दक्षिणत एकविंशतिदर्भपिञ्जलीः सप्तसप्तभिरेकीकृत्य कुशान्तरेण वेष्टयित्वा उष्णोदकसहितं कांस्यपात्रं ताम्रनिर्म्मितक्षुरं तदभावे दर्पणं वा लौहक्षुरपाणिञ्च नापितं स्थापयेत् अग्नेरुत्तरतो वृषगोमयं तिलतण्डुलमाषविह्वच शरावं अग्नेः पूर्व्वतो मिश्रितव्रीहियवतिलमाषपूरितपात्रत्रयं स्थापयेत् । माता शुचिना वस्त्रेण कुमारमाच्छाद्य क्रोड़े निधाय अग्नेः पश्चिमतो भर्त्तुर्व्वामपार्श्वे उत्तराग्रेषु कुशेषु प्राङ्मुखी उपविशति । ततः पिता प्रक्रान्तकर्म्मारम्भे प्रादेशप्रमाणां घृताक्तां समिधं तूष्णीमग्नौ हुत्वा व्यस्तसमस्तमहाव्याहृतिहोमं कुर्य्यात् । प्रजापतिऋषिर्गायत्री छन्दोऽग्निर्देवता महाव्याहृतिहोमे विनियोगः । ओँ भूः स्वाहा । प्रजापतिऋषिरुष्णिक् छन्दो वायुर्देवता महाव्याहृतिहोमे विनियोगः । ओँ भुवः स्वाहा । प्रजापतिऋषिरनुष्टुप् छन्दः सूर्य्यो देवता महाव्याहृतिहोमे विनियोगः । ओँ स्वः स्वाहा । प्रजापतिऋषिर्बृहती छन्दः प्रजापतिर्देवता व्यस्तसमस्तमहाव्याहृतिहोमे विनियोगः । ओँ भूर्भुवः स्वः स्वाहा । ततः पिता उत्थाय प्राङ्मुखः कुमारस्य मातुः पश्चादवस्थितः क्षुरपाणिं नापितं पश्यन् तमेव सवितृरूपं ध्यायन् जपति । प्रजापतिऋषिः सविता देवता चूड़ाकरणे विनियोगः । ओम् आयमगात् सविता क्षुरेण । तत उष्णोदकसहितं कांस्यपात्रं पश्यन् वायुं मनसा ध्यायन् जपति । प्रजापतिऋषिर्वायुर्देवता चूड़ाकरणे विनियोगः । ओँ उष्णेन वाय उदकेनैधि । ततः कांस्यपात्रस्थितोष्णोदकेन दक्षिणहस्तगृहीतेन दक्षिणकपुष्णिकामनेन मन्त्रेण क्लेदयति । कपुष्णिकाशब्देन दक्षिणोत्तरतः शिखास्थानादधः शिरसः कर्णाभिमुखोच्चदेश उच्यते । ततः प्रजापतिऋषिरापो देवता चूड़ाकरणे विनियोगः । ओम् आप उन्दन्तु जीवसे । ततस्ताम्रक्षुरं तदभावे दर्पणं वा पश्यन् जपति । प्रजापतिऋषिर्विष्णुर्देवता चूड़ाकरणे विनियोगः । ओँ विष्णोर्दंष्ट्रोऽसि । ततः कुशवद्धसप्तदर्भपिञ्जलीर्गृहीत्वा क्लिन्नदक्षिणकपुष्णिकादेशे अनेन मन्त्रेण अर्द्धमूला निदध्यात् । प्रजापतिऋषिरोषधिर्देवता चूड़ाकरणे विनियोगः । ओम् ओषधे त्रायस्वैनम् । ततो वामहस्तगृहीतकुशपिञ्जलीसहितकपुष्णिकादेशे स्वदक्षिणहस्तगृहीतताम्रक्षुरं दर्पणं वा अनेन मन्त्रेण निदध्यात् । प्रजापतिऋषिः स्वधितिर्देवता चूड़ाकरणे विनियोगः । ओँ स्वधिते मैनं हिंसीः । ततः केशच्छेदो यथा न भवति तथा ताम्रक्षुरं दर्पणं वा तत्रैव कपुष्णिकादेशे अनेन मन्त्रेण प्रेरयेत् । प्रजापतिऋषिः पूषा देवता चूड़ाकरणे विनियोगः । ओँ येन पूषा वृहस्पतेर्वायोरिन्द्रस्य चावपत्तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय दीर्घायुष्ट्वाय बलाय वर्चसे । तूष्णीं वारद्वयम् । ततो लौहक्षुरेण दक्षिणकपुष्णिकादेशस्य केशं छित्त्वा दर्भपिञ्जलीसहितकेशस्य वालमित्रविष्टतपात्रस्थवृषगोमयोपरि निधानं कुर्य्यात् । ततः कपुच्छलदेशस्य कांस्यपात्रस्थितोष्णोदकेन दक्षिणहस्तगृहीतेन पूर्व्ववदेव आप उन्दन्तु जीवसे इत्यनेन मन्त्रेण क्लेदनं ओँ विष्णोर्दंष्ट्रोऽसि इत्यनेन ताम्रक्षुरस्य दर्पणस्य वा प्रेरणं ओम् ओषधे त्रायस्वैनं इत्यनेन कपुच्छलदेशे अर्द्धमूलदर्भपिञ्जलीनिधानं ओँ स्वधिते मैनं हिंसीरित्यनेन ताम्रक्षुरस्य दर्पणस्य वा कपुच्छलदेशे निधानं ओँ येन पूषा वृहस्पतेरित्यनेन पूर्व्वाभिमुखं ताम्रक्षुरप्रेरणं लौहक्षुरेण कपुच्छलदेशस्य केशं छित्त्वा दर्भपिञ्जलीसहितकेशस्य वालमित्रविष्टतपात्रस्थवृषगोमयोपरि निधानं कुर्य्यात् । कपुच्छलशब्देन पश्चिमतः शिखास्थानादधःशिरसो नापितक्रोड़ाभिमुखोच्चदेशोऽभिधीयते । तथैव वामकपुष्णिकाप्लावनादिच्छेदनपूर्व्वकं वृषगोमयोपरिदेशे निधानान्तं पूर्व्ववत् सर्व्वं कुर्य्यात् । ततः कुमारस्य शिरः पाणिभ्यामुपगृह्य जपति । प्रजापतिऋषिरुष्णिक् छन्दो जमदग्निकश्यपागस्त्यादयो देवताश्चूड़ाकरणे विनियोगः । ओँ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तत्तेऽस्तु त्र्यायुषम् । ततोऽग्नेरुत्तरदेशं नीत्वा पुष्पादलङ्कृतो नापितः कुमारं मुण्डयति । सर्व्वमेव केशं वृषगोमयोपरि निधायारण्ये वंशविटपे स्थापयेत् ततः पूर्व्ववत् व्यस्तसमस्तमहाव्याहृतिहोमं कृत्वा तूष्णीं प्रादेशप्रमाणघृताक्तसमित्प्रक्षेपान्तप्रकृतं कर्म्म समाप्य उदीच्यं शाट्यायनहोमादिवामदेव्यगानान्तं कर्म्म निर्व्वृत्य कर्म्मकारयितृब्राह्म-

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| दोधकम् | दोधकमिच्छति भत्रितयाद्गौ ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | देव ! सदोधकदम्बतलस्थ ! श्रीधर ! तारकनामपदं मे।<br>कण्ठतलेऽसुविनिर्गमकाले स्वल्पमपि क्षणमेष्यति योगम्॥ |
| मोटनकम् | स्यान्मोटनकं तजजाश्च लगौ ऽऽ।,।ऽ।,।ऽ।,।,ऽ | रङ्गे खलु मल्लकलाकुशलश्चाणूरमहाभटमोटनकम्।<br>यः केलिलवेन चकार स मे संसाररिपुं प्रतिमोटयतु॥ |
| श्येनी<br>श्येनिका इति क्वचित्। | श्येन्युदीरिता रजौ रलौ गुरुः ऽ।ऽ,।ऽ।,ऽ।ऽ,।,ऽ | यस्य कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यशेषलोकपावनी सदा।<br>जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम्॥ |
| श्रीः | बाणरसैः स्यात् भतनगगैः श्रीः ऽ।।,ऽऽ।,।।।,ऽ,ऽ | |
| वृत्ता | ननसगगुरुरचिता वृत्ता ।।।,।।।,।।ऽ,ऽ,ऽ | |
| भद्रिका | ननरलगुरुभिश्च भद्रिका ।।।,।।।,ऽ।ऽ,।,ऽ | |
| मौक्तिकमाला | मौक्तिकमाला यदि भतनात् गौ ऽ।।,ऽऽ।,।।।,ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं जसौ ताद् गकारौ।ऽ।,।।ऽ,ऽऽ।,ऽ,ऽ | |
| उपचित्रम् | उपचित्रमिदं सससाल्लगौ ।।ऽ,।।ऽ,।।ऽ,।,ऽ | |
| कुपुरुषजनिता | कुपुरुषजनिता ननौ रगौ गः ।।।,।।।,ऽ।ऽ,ऽ,ऽ | |
| अनवसिता | अनवसिता न्यौ भगौ गुरुरन्ते ।।।,।ऽऽ,ऽ।।,ऽ,ऽ | |
| विध्वङ्कमाला | विध्वङ्कमाला भवेत्तौ तगौ गः ऽऽ।,ऽऽ।,ऽऽ।,ऽ,ऽ | |
| सान्द्रपदम् | सान्द्रपदं स्याद्भतनगलैश्च ऽ।।,ऽऽ।,।।।,ऽ,। | |
| शिखण्डितम् | शिखण्डितमिदं जसौ तगौ गुरुश्चेत्<br>।ऽ।,।।ऽ,ऽऽ।,ऽ,ऽ | |
| द्वादशाक्षरा वृत्तिः। जगती। | | |
| चन्द्रवर्त्म | चन्द्रवर्त्म निगदन्ति रनभसैः ऽ।ऽ,।।।,ऽ।।,।।ऽ | चन्द्रवर्त्म पिहितं घनतिमिरे राजवर्त्म रहितं जनगमनैः।<br>इष्टवर्त्म तदलङ्कुरु सरसे ! कुञ्जवर्त्मनि हरिस्तव कुतुकी॥ |
| वंशस्थविलम्<br>वंशस्तनितमिति क्वापि। | वदन्ति वंशस्थविलं जतौ जरौ ।ऽ।,ऽऽ।,।ऽ।,ऽ।ऽ | विलासवंशस्थविलं मुखानिलैः<br>प्रपूर्य यः पञ्चमरागमुद्गिरन्।<br>व्रजाङ्गनानामपि गानशालिनां<br>जहार मानं स हरिः पुनातु नः॥ |
| इन्द्रवंशा<br>वंशस्थनिवेन्द्रवंशाचरणोभयघटिता-श्चतुर्व्वर्णप्रस्तारीयाद्यन्तव्यतिरिक्त-चतुर्द्दशप्रकारा उपजातयो भवन्ति। | स्यादिन्द्रवंशा ततजैरसंयुता ऽऽ।,ऽऽ।,।ऽ।,ऽ।ऽ | दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः<br>पीताम्बरोऽसौ जगतीतमोहरः।<br>यस्मिन् ममज्जुः शलभा इव स्वयं<br>ते कंसचाणूरमुखा मखद्विषः॥ |
| जलोद्धतगतिः | जसौ जसयुतौ जलोद्धतगतिः ।ऽ।,।।ऽ,।ऽ।,।।ऽ | यदीयहलतो विलोक्य विपदं<br>कलिन्दतनया जलोद्धतगतिः।<br>विलासविपिनं विवेश सहसा<br>करोतु कुशलं हली स जगताम्॥ |
| भुजङ्गप्रयातम् | भुजङ्गप्रयातं चतुर्भिर्यकारैः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | सदारात्मजज्ञातिभृत्यो विहाय<br>स्वमेतं ह्रदं जीवनं लिप्समानः।<br>मया क्लेशितः कालियेत्थं कुरु त्वं<br>भुजङ्ग ! प्रयातं द्रुतं सागराय॥ |
| तोटकम् | वद तोटकमब्धिसकारयुतम् ।।ऽ,।।ऽ,।।ऽ,।।ऽ | यमुनातटमच्युतकेलिकला-<br>लसदङ्घ्रिसरोरुहसङ्गरुचिम्।<br>मुदितोऽट कलेरपनेतुमघं<br>यदि चेच्छसि जन्म निजं सफलम्॥ |
| स्रग्विणी | कीर्त्तितैषा चतूरेफिका स्रग्विणी<br>ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | इन्द्रनीलोपलेनेव या निर्म्मिता<br>शातकुम्भद्रवालङ्कृता शोभते।<br>नव्यमेघच्छविः पीतवासा हरे-<br>र्मूर्त्तिरास्तां ममैवोरसि स्रग्विणी॥ |
| वैश्वदेवी | बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ<br>ऽऽऽ,ऽऽऽ,।ऽऽ,।ऽऽ | अर्च्चामन्येषां त्वं विहायामराणा-<br>मद्वैतेनैकं कृष्णमभ्यर्च्च भक्त्या।<br>तत्राशेषात्मन्यर्च्चिते भाविनी ते<br>भ्रातः ! सम्पन्नाराधना वैश्वदेवी॥ |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
|---|---|---|
| प्रमिताक्षरा | प्रमिताक्षरा सजससैः कथिता ।।ऽ,।ऽ।,।।ऽ ।।ऽ | अम्बुतस्य शीकरमितीरिरती<br>वरमौक्तिकामुलहरीकुरिता।<br>प्रमिताक्षरा सुररिपोर्भणिति-<br>र्मञ्जुभुवामभिजहार मन ॥ |
| द्रुतविलम्बितम् | द्रुतविलम्बितमाह नभौ भरौ ।।।,ऽ।।,ऽ।।,ऽ।ऽ | मदविजापुलिने नवचम्पकी<br>परिषदा सह कलिकुतूहलात्।<br>द्रुतविलम्बितचारविधारिणं<br>हरिमहं हृदयेन सदा वहे ॥ |
| मन्दाकिनी | ननररघटिता तु मन्दाकिनी ।।।,।।। ऽ।ऽ,ऽ।ऽ | बलिदमनविधौ बभौ सङ्गता<br>पदजलरुहि यस्य मन्दाकिनी।<br>सुरनिहितसितामुजमद्भुभा<br>हरतु जगदघं स पीताम्बरः ॥ |
| कुसुमविचित्रा | नयसहितौ न्यौ कुसुमविचित्रा ।।। ।ऽऽ ।।। ।ऽऽ | विपिनविहारे कुसुमविचित्रा<br>कुतुकितगोपीमहितचरित्रा।<br>मुररिपुमूर्तिर्मुखरितवंशा<br>चिरमवताद्वस्तरलवतंसा ॥ |
| तामरसम् | इह वद तामरसं नजजा यः ।।।,।ऽ। ।ऽ।,।ऽऽ | स्फुटसुषमामकरन्दमनोज्ञं<br>व्रजललनानयनालिनिपीतम्।<br>तव मुखतामरसं मुरशत्रो।<br>हृदयतडागविकाशि ममास्तु ॥ |
| मालती<br>यमुनेति क्वापि। | भवति ननावथ मालती जरौ ।।। ।ऽ। ।ऽ।,ऽ।ऽ | इह कलयाच्युतकेलिकानने<br>मधुरससौरभसारलोलुपः।<br>कुसुमकृतस्मितचारुविभ्रमा<br>मलिरपि चुम्बति मालतीं मुहुः ॥ |
| मणिमाला<br>अस्याः षड्वर्णैर्यतिः। | त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः<br>ऽऽ। ।ऽऽ ऽऽ। ।ऽऽ | प्रह्वामरमौली रत्नोपलक्लृप्ते<br>जातप्रतिबिम्बा शोणा मणिमाला।<br>गोविन्दपदाब्जे राजी नखराणां<br>मन्तां मम चित्ते ध्वान्तं प्रशमयन्ती ॥ |
| जलधरमाला<br>अस्याश्चतुर्भिरष्टाभिश्च यतिः। | मो भः सौ चेज्जलधरमालाब्ध्यष्टैः<br>ऽऽऽ ऽ।। ।।ऽ ऽऽऽ | या भक्तानां कलिदुरितोत्तप्तानां<br>तापोच्छेदे जलधरमाला नव्या।<br>भव्याकारा दिनकरपुत्रीकूले<br>केलीलोला हरितनुरव्यात् सा वः ॥ |
| पुटः | वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ।।। ।।। ऽऽऽ ।ऽऽ | |
| प्रमुदितवदना<br>प्रभेति मल्लिनाथः। गौरीति<br>कौमुदीकारः। | प्रमुदितवदना भवेन्नौ च रौ ।।।,।।। ऽ।ऽ ऽ।ऽ | |
| प्रियंवदा | भुवि भवेन्नभजरैः प्रियंवदा ।।। ऽ।। ।ऽ। ऽ।ऽ | |
| ललिता | धीरैरभाणि ललिता तभौ जरौ ऽऽ। ऽ।। ।ऽ। ऽ।ऽ | |
| उज्ज्वला | ननभरसहिता भतीज्ज्वला ।।। ।।। ऽ।। ऽ।ऽ | |
| नवमालिका | इह नवमालिका नजभयैः स्यात् ।।।,।ऽ।,ऽ।। ।ऽऽ | |
| ललना | पञ्चमुनि भमौ सौ सयुता ललना<br>ऽ।।,ऽऽऽ ।।ऽ ।।ऽ | |
| ललितम् | ललितमभिहितं नौ म्सौ नामतः ।।। ।।। ऽऽऽ ऽ।ऽ | |
| द्रुतपदम् | द्रुतपदं भवति नभनयाश्चेत् ।।। ऽ।। ।।। ।ऽऽ | |
| विद्याधारः | सर्वे मा यस्मिन् सोऽयं विद्याधारः स्यात्<br>ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ | |
| पञ्चचामरम् | लघुर्गुरुर्वदन्ति पञ्चचामरम् ।ऽ।ऽ।ऽ।ऽ।ऽ | |
| सारङ्गम् | सारङ्गमत्र समस्तैस्तकारैः स्त ऽऽ।,ऽऽ। ऽऽ। ऽऽ | |
| मौक्तिकदाम | समस्तजमीरय मौक्तिकदाम ।ऽ।,।ऽ। ।ऽ।,।ऽ।, | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
|---|---|---|
| मोटकम् | मोटकनाम समस्तभमीरय ऽ।।,ऽ।।,ऽ।।,ऽ।। | |
| तरलनयनम् | वरिलघु तरलनयनमिह ।।।।।।।।।।।। | |
| त्रयोदशाक्षरा वृत्तिः। अतिजगती। | | |
| प्रहर्षिणी<br>त्रिभिर्दशभिश्च यतिः। | त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्<br>ऽऽऽ,।।।,।ऽ।,ऽ।ऽ,ऽ | गोपीनामधरसुधारसस्य पाने-<br>रुत्तुङ्गस्तनकलसोपगूहनैश्च ।<br>आश्चर्य्यैरपि रतिविभ्रमैर्मुरारेः<br>संसारे मतिरभवत् प्रहर्षिणीह ॥ |
| रुचिरा<br>चतुर्भिर्नवभिश्च यतिः। | जभौ सजौ गिति रुचिरा चतुर्ग्रहैः<br>।ऽ।,ऽ।।,।।ऽ,।ऽ।,ऽ | पुनातु वो हरिरतिरासविभ्रमी<br>परिभ्रमन् व्रजरुचिराङ्गनान्तरे ।<br>समीरणोल्लसितलताकरालगो<br>यथा मरुत्तरलतमालभूरुहः ॥ |
| मत्तमयूरः<br>चतुर्भिर्नवभिश्च यतिः। | वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरः<br>ऽऽऽ,ऽऽ।,।ऽऽ,।।ऽ,ऽ | लीलानृत्यन्मत्तमयूरध्वनिकान्तं<br>नृत्यद्गोपामोदिपयोदानिलरम्यम् ।<br>कामक्रीड़ाहृष्टमना गोपवधूभिः<br>कंसध्वंसी निर्जनवृन्दावनमाप ॥ |
| चण्डी | नयुगलसयुगलगैरिति चण्डी ।।।,।।।,।।ऽ,।।ऽ,ऽ | जयति दितिजरिपुताण्डवलीला-<br>कुपितकवलकरकालियमौली ।<br>चरणकमलयुगचापलचण्डी<br>पदनखरुचिजितभोगमणिश्रीः ॥ |
| मञ्जुभाषिणी<br>सुनन्दिनीति शम्भौ | सजसा जगौ च यदि मञ्जुभाषिणी<br>।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | वल्लोन्मिश्रीतककरेण लालवं-<br>ऋतुकान्तिचोरितविलोचनो हरे ।<br>नियतं कलानिधिरसौति वल्लवी<br>मुदमच्युते व्यधित मञ्जुभाषिणी ॥ |
| चन्द्रिका<br>उत्पलिनीति क्वापि। विद्युदिति<br>क्षमेति च क्वापि। सप्तभिः षड्-<br>भिश्च यतिः। | ननततगुरुभिश्चन्द्रिकाऽश्वर्तुभिः ।।।,।।।,ऽऽ।,ऽऽ।,ऽ | शरदमलतरचन्द्रिकाधालिते<br>दिनकरतनयातीरदेशे हरिः ।<br>विहरति रभसाद्वल्लवीभिः समं<br>त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥ |
| कलहंसः<br>सिंहनादः क्वापि। | सजसाः सगौ च कथितः कलहंसः<br>।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | यमुनाविहारकुतुके कलहंसो<br>व्रजकामिनीकमलिनीकृतकेलिः ।<br>जनचित्तहारिकलकण्ठनिनादः<br>प्रमदं तनोतु तव नन्दतनूजः ॥ |
| प्रबोधिता | सजसा जगौ च भवति प्रबोधिता ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | शयिता त्वया पटुलमाननिद्रया<br>रतिकेलिकुञ्जनिलये विलासिनी ।<br>सुरवैरिणा वदनचुम्बनादिना<br>स्मितमाततान सपदि प्रबोधिता ॥ |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | गुरुभुजवीर्य्यभरं हरिं मदान्धा<br>युधि समुपेत्य न दानवा जिजीवुः ।<br>क्षुधितमृगेन्द्रमुखं मृगा उपेत्य<br>क नु खलु बिभ्रति जीवनस्य योगम् ॥ |
| चञ्चरीकावली | यमौ रौ विख्याता चञ्चरीकावली गः<br>।ऽऽ,ऽऽऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| चन्द्ररेखा | नसरयुगगैश्चन्द्ररेखर्त्तुलोकैः ।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| कन्दुकम् | इदं कन्दुकं यत्र येभ्यश्चतुर्भ्यो गः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,ऽ | |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं जसौ तसौ यदि गुरुः स्यात्<br>।ऽ।,।।ऽ,ऽऽ।,।।ऽ,ऽ | |
| मञ्जुहासिनी | जतौ सजौ गो भवति मञ्जुहासिनी<br>।ऽ।,ऽऽ।,।।ऽ,।ऽ।,ऽ | |
| नन्दिनी | इह नन्दिनी सजससैर्गसंयुक्तैः ।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| कुटजगति | कुटजगतिर्ननजौ सजगुं भजौ गुरु ।।। ।ऽ। ऽऽऽ,ऽऽ।,ऽ | |
| प्रभावती । | यस्यां प्रिये । प्रथमकमक्षरद्वयं तुर्यं तथा गुरु नवमं त्यान्तिमम् । मान्यं भवद्यतिरपि षेद्दुरागहे सा लक्ष्यतामस्तरते । प्रभावती ॥ | |
| चतुर्दशाक्षरा वृत्तिः । शक्वरी । असम्बाधा पञ्चनवभिश्च यति । | मो तो नो सौ गः असम्बाधा ऽऽऽ,ऽ,ऽ,।।।,।।। ऽऽऽ | वीर्याग्नौ येन ज्वलति रणवशात् क्षिप्ते दैत्येन्द्रे जाता धरणिरियमसम्बाधा । धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धं साधूनां बाधां प्रशमयतु स कंसारिः ॥ |
| वसन्ततिलकम् अष्टभिः षड्भिश्च यतिः । सिंहो-न्नता क्वापि । सिंहोन्नता इति काश्यपः । उद्धर्षिणी इति सैतवः ॥ | ज्ञेयं वसन्ततिलकं तभजा जगौ गः ऽऽ। ऽ।।,।ऽ।,।ऽ। ऽ,ऽ | फुल्लं वसन्ततिलकं तिलकं वनान्ता लीलापरं पिककुलं कलमत्र रौति । वात्येष पुष्पसुरभिर्मलयाद्रिवातो यातो हरिः स मथुरां विधिना हताः स्मः ॥ |
| अपराजिता सप्तभिर्यतिः । | ननरसलघुगैः स्वरैरपराजिता ।।।,।।। ऽ।ऽ,।।ऽ । ऽ | यदनवधिभुजप्रतापफलासदा यदुनिचयचमूः परैरपराजिता । जयजय समरे समस्तरिपुव्रजं स जयति जगतां गतिर्गरुडध्वजः ॥ |
| प्रहरणकलिका सप्तभिः सप्तभिर्यतिः । | ननभनलगिति प्रहरणकलिका ।।। ।।। ऽ।। ।।। । ऽ | व्यथयति कुसुमप्रहरणकलिका प्रमदवनभवा तव धनुषि सता । विरहविपदि मे शरणमिह ततो मधुमथनगुणस्मरणमविरतम् ॥ |
| वासन्ती | मात्तो नो मो गौ यदि गदिता वासन्तीयम् ऽऽऽ ऽऽ। ।।। ऽऽऽ ऽ ऽ | भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतै-र्माकन्दादिर्दुतपवनैर्मन्दान्दोला । लीलालोला पल्लवविलसद्धस्तोल्लासैः कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥ |
| लोला अष्टाभिः षड्भिर्यतिः । | द्विसप्तच्छिन्ना लोला म्सौ म्गौ गौ चरणे चेत् ऽऽऽ,।।ऽ ऽऽऽ ऽ।। ऽ ऽ | मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः । सद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥ |
| नान्दीमुखी अष्टभिः षड्भिर्यतिः । | स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ ।।।,।।।,ऽऽ। ऽऽ।,ऽ ऽ | सरसजलधुलालापनान्दीमुखीयं लहरिभुजलता चारुफेनस्मितश्रीः । सुरतरलतयार्थात्तमासाद्य किञ्चित् प्रमुदितहृदया भानुजा नृत्यतीह ॥ |
| इन्दुवदना | इन्दुवदना भजसनैः सगुरुयुग्मैः ऽ।। ।ऽ। ।।ऽ ।।।,ऽ ऽ | |
| नदी सप्तभिर्यतिः । | ननतजगुरुभिः सप्तयतिर्नदी स्यात् ।।। ।।। ऽऽ। ।ऽ। ऽ ऽ | |
| लक्ष्मी | लक्ष्मीरन्तविरामा मृसौ तभौ गुरुयुग्मम् ऽऽऽ,।।ऽ ऽऽ।,ऽ।। ऽ,ऽ | |
| सुपवित्रम् | त्रिनगमगाविति वसुयति सुपवित्रम् ।।। ।।। ।।। ।।। ऽ,ऽ | |
| मध्यक्षामा | मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ ऽऽऽ ऽ।। ।।।,।ऽऽ ऽ ऽ | |
| कुटिलम् | युगदिग्भिः कुटिलमिति सभौ न्यौ गौ चेत् ।।ऽ,ऽ।। ।।। ।ऽऽ ऽ, | |
| प्रमदा | नजभजला गुरुश्च भवति प्रमदा | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| मञ्जरी<br>पञ्चमे नवमे च यतिः। | सजसा यलौ गिति शरग्रहैर्मञ्जरी<br>IIऽ,IऽI,IIऽ,Iऽऽ,I,ऽ | |
| कुमारी<br>अष्टमे नवमे च यतिः। | नजभजगैर्गुरुश्च वसुषट् कुमारी<br>III,IऽI,ऽII,IऽI,ऽ,ऽ | |
| सुकेसरम् | नरनरैर्लगौ च रचितं सुकेसरम्<br>III,ऽIऽ,III,ऽIऽ,I,ऽ | |
| चन्द्रौरसः | म्भौ न्यौ लगौ चेदिह भवति च चन्द्रौरसः<br>ऽऽऽ,ऽII,III,Iऽऽ,I,ऽ | |
| चक्रपदम् | चक्रपदमिह भनननलगुरुभिः<br>ऽII,III,III,III,I,ऽ | |
| वासन्ती | वासन्तीयं स्यादिह खलु मतौ न्यौ गौ चेत<br>ऽऽऽ,ऽऽI,III,Iऽऽ,ऽ,ऽ | |
| पञ्चदशाक्षरा वृत्तिः। अतिशर्करी। | | |
| शशिकला | गुरुनिधनमनुलघुरिह शशिकला<br>IIIIIIIIIIIIII,ऽ | मलयजतिलकसमुदितशशिकला<br>व्रजयुवतिलसदलिकगगनगता।<br>सरसिजनयनहृदयसलिलनिधिं<br>व्यतनुत विततरभसपरितरलम्॥ |
| स्रक्<br>अस्याः षड्भिर्नवभिश्च यतिः। | सागयमपि च रसनव-रचितयतिः<br>IIIIII,III,IIIII,ऽ | अयि सहचरि! रुचिरतरगुणमयी<br>त्वदिमवसतिरनपगतपरिमला।<br>स्रगिव निवस विलसदनुपमरसा<br>सुमुखि! मुदितदनुजदलनहृदये॥ |
| मणिगुणनिकरः<br>अष्टभिः सप्तभिश्च यतिः। | वसुमुनियतिरिति मणिगुणनिकरः<br>IIIIII,I,IIIII,ऽ | नरकरिपुरवतु निखिलसुरगति-<br>रमितमहिमभरसहजनिवसतिः।<br>अनवधिमणिगुणनिकरपरिचितः<br>सरिदधिपतिरिव धृततनुविभवः॥ |
| मालिनी<br>अष्टभिः सप्तभिश्च यतिः। | ननमयययुतेयं मालिनी भोगिलोकैः<br>III,III,ऽऽऽ,Iऽऽ,Iऽऽ | मृगमदकृतचर्चा पीतकौषेयवासा<br>रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा।<br>अनृजुनिहितमंसे वंशमुत्क्वाणयन्ती<br>धृतमधुरिपुलीला मालिनी पातु राधा॥ |
| लीलाखेलः | एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेल<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,ऽऽऽ,ऽऽऽ,ऽ | पायाद्वो गोविन्दः कालिन्दीकूलच्चौणीचक्रे<br>रासोल्लासक्रीडद्गोपीभिः सार्द्धं लीलाखेलः।<br>मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लोलो<br>यद्वद्देवानामीशः स्वर्वेश्याभिः खेलन्तीभिः॥ |
| विपिनतिलकम् | विपिनतिलकं नसनरेफयुग्मैर्भवेत्<br>III,IIऽ,III,ऽIऽ,ऽIऽ | विपिनतिलकं विकसितं वसन्तागमे<br>मधुकृतमदैर्मधुकरै रणद्भिर्वृतम्।<br>मलयमरुता रचितलास्यमालोकयन्<br>व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः॥ |
| तूणकम् | तूणकं समानिकापदद्वयं विनान्तिमम्<br>ऽ,I,ऽIऽ,IऽI,ऽ,I,ऽIऽ,Iऽ | सा सुवर्णकेतकं विकाशि भृङ्गपूरितं<br>पञ्चबाणबाणजालपूर्णहेमतूणकम्।<br>राधिका वितर्क्य माधवाद्य मासि माधवे<br>मोहमेति निर्भरं त्वया विना कलानिधे!॥ |
| चन्द्रलेखा<br>सप्तमे अष्टमे च यतिः। | म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा<br>ऽऽऽ,ऽIऽ,ऽऽऽ,Iऽऽ,Iऽऽ, | विच्छेदे ते मुरारे! पाण्डुप्रकाशा कृशाङ्गी<br>म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा।<br>राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा<br>किम्वार्त्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम्॥ |
| चित्रा | चित्रा नामच्छन्दश्चित्रश्चेत् त्रयो मा यकारौ<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,Iऽऽ,Iऽऽ | गोपाली लीलालोला यद्वत् कलिन्दात्मजान्ते<br>खेलन्मुक्ताहारा वन्यस्रक्सम्मूर्द्धचित्रा।<br>कंसारातेर्मूर्त्तिस्तद्वत् हृदि क्रीड़तीयं<br>कोऽन्यः स्वर्गो मोक्षो वास्माद्भियते तन्न जाने॥ |

| छन्दसां अभिधानानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| प्रभद्रकम् | भवति नजौ भजौ रसहितौ प्रभद्रकम्<br>।।।,।ऽ। ऽ।।,।ऽ।,ऽ।ऽ | |
| एला<br>पञ्चभिर्दशभिश्च यति । | सजना नयौ शरदशयतिरियमेला<br>।।ऽ,।ऽ।,।।।,।।।,।ऽऽ | |
| कामक्रीडा | मा पञ्च स्युर्यस्यां सा कामक्रीडागंधा ज्ञेया<br>ऽऽऽ,ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ | |
| सुरेलकम् | नजभजरैर्विराजितमिदं सुरेलकम्<br>।।।, ।ऽ। ऽ।। ।ऽ।,ऽ।ऽ | |
| चन्द्रकान्ता<br>सप्तभिरष्टाभि । यति । | चन्द्रकान्ताभिधा रौ मृसौ यो विरमः स्वराष्टौ<br>ऽ।ऽ,ऽ।ऽ,ऽऽऽ,।।ऽ,।ऽऽ | |
| उपमालिनी<br>अष्टाभि सप्तभिश्च यति | ननतभरगनाष्टस्वरैरुपमालिनी<br>।।।,।।।,ऽऽ।,ऽ।।,ऽ।ऽ | |
| ऋषभ | ऋषभाख्यमेतदुदितं सजसा सयौ चेन्<br>।।ऽ,।ऽ। ।।ऽ,।।ऽ ।ऽऽ | |
| मानसहंस | कथयन्ति मानसहंसनाम सजौ जभराः<br>।।ऽ,।ऽ।,।ऽ। ऽ।।,ऽ।ऽ | |
| नलिनी | सगणैः प्रविवक्रमितैर्गदिता नलिनी<br>।।ऽ ।।ऽ,।।ऽ,।।ऽ ।।ऽ, | |
| निशिपालकम् | भंस निशिपालकमिदं भजसनाश्च रः<br>ऽ।।,।ऽ। ।।ऽ,।।।,ऽ।ऽ | |
| षोडशाक्षरा वृत्तिः । अष्टि ।<br>चित्रम् | चित्रसञ्ज्ञमीरितं समानिका पदद्वयम्<br>ऽ,। ऽ।ऽ ।ऽ।,ऽ,। ऽ।ऽ,।ऽ। | विद्रुमारुणाधरोष्ठशोभिवेणुवाद्यहृष्ट-<br>वल्लवीजनाङ्गसङ्गजातपुलककण्टकाङ्ग<br>त्वां सदैव वासुदेव । पुण्यलभ्यपादयेव<br>बर्हपुष्पचित्रकेश । संस्मरामि गोपवेश |
| ऋषभगजविलसितम्<br>गजतुरगविलसितमिति अन्यौ ।<br>सप्तभिर्नवभिश्च यति । | भत्रिनगैः स्वराङ्कऋषभगजविलसितम्<br>ऽ।।,ऽ।ऽ,।।।,।।।,।।।,ऽ | यो हरिरुदखान खरतरनखरखरै-<br>र्दुर्जयदैत्यसिंहहृदविकटहृदयतटम् ।<br>किञ्चिदपि चित्रमेव यदखिलभयहृतवान्<br>कंसनिदेशदृप्यदृषभगजविलसितम् ॥ |
| चकिता<br>वस्वर्वाणैर्यति । | भात् समसनगैरष्टच्छेदे स्यादिह चकिता<br>ऽ।।,।।ऽ,ऽऽऽ,ऽऽ।,।।।,ऽ | दुर्ज्ञेयदनुजयोगीदुश्चेष्टाभ्रमचकिता<br>यद्भुजपरिघच्छाया याता साध्वसविगमम् ।<br>दीव्यति दिवि यन्माता स्वेच्छं नन्दनविपिने<br>गच्छत शरणं शर्ण्यं तं भीता भवरिपुतः ॥ |
| पञ्चचामरम् | प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम्<br>।ऽ।,ऽ।ऽ,। ऽ,।ऽ ,ऽ।ऽ,।,ऽ | सुरद्रुमूलमण्डपे विचित्ररत्ननिर्मित<br>लसद्वितानभूषिते सलीलविभ्रमालसम् ।<br>सुराङ्गनाभवल्लवीकरप्रपञ्चचामर<br>स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥ |
| मदनललिता<br>चतुर्थे षष्ठे च यति । | म्भौ नो म्नौ गो मदनललिता वेदैः षड्ऋतुभिः<br>ऽऽऽ,ऽ।।,।।। ऽऽऽ,।।।,ऽ | विस्रस्तस्रग्गलितचिकुरा धौताधरपुटा<br>म्लायत्पत्रावलिकुचतटीक्षुद्राशोर्म्मिसरला ।<br>राधात्यर्थं मदनललितान्दोलालसवपुः<br>कंसारातेरतिरसमहो चक्रेऽतिचटुलम् ॥ |
| वाणिनी | नजभजरैर्यदा भवति वाणिनी गयुक्तैः<br>।।।,।ऽ। ऽ।।,।ऽ।,ऽ।ऽ ऽ | स्फुरतु ममाननेऽद्य ननु वाणि । नीतिरम्य<br>तव चरणप्रसादपरिपाकतः कवित्वम् ।<br>भवजलराशिपारकरणक्षमं मुकुन्दं<br>सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥ |
| प्रवरललितम् | यमौ न सौ गश्च प्रवरललितं नाम वृत्तम्<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।ऽ,ऽ | भुजोत्क्षेपं नृत्यं चलनवलयझङ्कारयुक्तौ<br>सुधा पादन्यासः प्रकटितनुलाकोटिनादः ।<br>स्मितं वक्त्रे कस्यादृगपि पटुकटाक्षोर्मिलीला<br>हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम् ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| भ्रमरपदकम् | भाद्रननना नसौ भ्रमरपदकमिदमभिहितम्<br>ऽ॥,ऽ।ऽ,।।।,।।।,।।।,।।ऽ | |
| शार्दूलम् | शार्दूलं वद मासषट्कयति मः सो जसौ रो मश्चेत्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽ।ऽ,ऽऽऽ | |
| केसरम् | अर्थाश्वाश्वैर्मभनयरयुगैर्वृत्तं मतं केसरम्<br>ऽऽऽ,ऽ॥,।।।,।ऽऽ,ऽ।ऽ,ऽ।ऽ | |
| चलम् | म्भौ नृजौ भ्नौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः<br>ऽऽऽ,ऽ॥,।।।,।ऽ।,ऽ॥,ऽ।ऽ | |
| लसा | सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता लाबसा<br>ऽऽ।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| ता | भवति नयुगलं रभौ रौ दशभिर्गजेन्द्रैर्लता<br>।।।,।।।,ऽ।ऽ,ऽ॥,ऽ।ऽ,ऽ।ऽ | |
| सिंहविस्फूर्ज्जितम् | तद्भूतर्त्वश्वैर्मौ भ्मौ विरतिश्चेत् सिंहविस्फूर्ज्जितं यौ<br>ऽऽऽ,ऽऽऽ,ऽ॥,ऽऽऽ,।ऽऽ,।ऽऽ | |
| हरनर्त्तनम्<br>विबुधप्रिया इति च कुत्रापि । | र्सौ जजौ भरसंयुतौ करिवाणखैर्हरनर्त्तनम्<br>ऽ।ऽ,।।ऽ,।ऽ।,।ऽ।,ऽ॥,ऽ।ऽ | |
| क्रीड़चक्रम् | इदं क्रीड़चक्रं सदीर्घं समस्तैर्यकारैः समेतम्<br>।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ, | |
| हीरकम् | हीरकमुदितं भसनजनैरिह रगणोऽन्ततः<br>ऽ॥,।।ऽ,।।।,।ऽ।,।।।,ऽ।ऽ | |
| ऊनविंशत्यक्षरा वृत्तिः। अतिधृतिः। | | |
| मेघविस्फूर्ज्जिता<br>षष्ठे षष्ठे सप्तमे च यतिः । | रसर्त्वश्वैर्य्मौ नृसौ ररगुरुयुतौ मेघविस्फूर्ज्जिता स्यात् ।<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेका<br>विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः।<br>निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्ज्जिता चेत्<br>प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात् किमन्यत्॥ |
| छाया<br>षष्ठे द्वादशे अन्ते च यतिः । | भवेत् सैवच्छाया तयुगगयुता स्यात् द्वादशान्ते यदा<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः<br>स्फुरन्नानारत्नस्तवकिततनुश्चित्रांशुकालम्बितः ।<br>न यस्याङ्घ्रिच्छायासुपगतवतां संसारतीव्रातप-<br>स्तनोति शोत्तापं स जगदवतात् कंसारिकल्पद्रुमः ॥ |
| शार्दूलविक्रीड़ितम्<br>द्वादशे ऊनविंशतौ च यतिः । | सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितम्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | गोविन्दं प्रणमोत्तमाङ्ग ! रसने ! त्वं घोषयाहर्निशं<br>पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम् ।<br>एवञ्चेत् कुरुताखिलं मम हितं शीर्षादयस्तद् ध्रुवं<br>न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीड़ितम् ॥ |
| सुरसा<br>सप्तमे चतुर्दशे अन्ते च यतिः । | म्नौ भ्नौ यो नो गुरुश्चेत् स्वरमुनिकरणैराह सुरसाम्<br>ऽऽऽ,ऽ।ऽ,ऽ॥,।।।,।ऽऽ,।।।,ऽ | कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात्<br>कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः ।<br>गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां<br>शङ्के पीयूषपानप्रभवकृतसुखं व्यसरदसौ ॥ |
| फुल्लदाम<br>पञ्चमे द्वादशे चान्ते च यतिः ।<br>पुष्पदाम इति केचित् । | मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम्<br>ऽऽऽ,ऽ,ऽ,।।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं<br>हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विसृष्टम् ।<br>मुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं<br>मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम ॥ |
| पञ्चचामरः | नयुगलगलघू रजौर्लगा यदा स पञ्चचामरः<br>।।।,।।।,ऽ,।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।,ऽ | |
| बिम्बम | इत्थं बिम्बाख्यं शरमुनितुरगैर्म्तौ नृमौ ततौ चेद्गुरुः<br>ऽऽऽ,ऽऽ।,।।।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| भद्रकम् | भौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम्<br>ऽ।।,ऽ।ऽ,।।।,ऽ।ऽ,।।।,ऽ।ऽ,।।।,ऽ | |
| लालित्यम् | लालित्यं भुजगेन्द्रेण भाषितमेतच्चेन् मसः सजनगुभिः<br>ऽऽऽ,।।ऽ,ऽ।ऽ,।।ऽ,ऽऽ।,।ऽ।,।।।,ऽ | |
| महास्रग्धरा | सजता नसौ ररौ गः फणितुरगहयैः स्यान्महास्रग्धराख्या<br>।।ऽ,।ऽ।,ऽऽ।,।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| त्रयोविंशत्यक्षरा वृत्तिः । विकृतिः ।<br>अद्रितनया<br>अश्वललितमित्यन्यत्र । | नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ।।,।ऽ।,ऽ।।,।,ऽ | खरतरशौर्यपावकशिखापतङ्गनिभमग्नदृप्तदनुजो<br>जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा ।<br>भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि<br>क्षितिवलयेऽस्ति कंसभयमनस्तवेति तमवोचदद्रितनया ॥ |
| मत्ताक्रीडम्<br>अष्टमे त्रयोदशे त्रयोविंशतौ च यतिः । मत्ताक्रीडा इति क्वचित् ॥ | मत्ताक्रीडं वस्विष्वाशायति मयुगगयुगमथुलघुगुरुभिः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,।।।।।।।।।।।।,ऽ | मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसात्<br>गाने याने किञ्चित्स्पन्दत्पदमरुणनयनयुगलसरसिजम् ।<br>रासोल्लासक्रीडत्कान्तव्रजयुवतिवलयरचितभुजरसं<br>सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनवचरणपरिचयम् ॥ |
| सुन्दरिका | इह सुन्दरिका पिङ्गलमुनिनोक्ता वदयतो भसता नजभगाः<br>।।ऽ,।।ऽ,ऽ।।,।।ऽ,ऽऽ।,।ऽ।,।,ऽ।।,ऽ | |
| चतुर्विंशत्यक्षरा वृत्तिः । संस्कृतिः ।<br>तन्वी<br>पञ्चमे द्वादशे चतुर्विंशतौ च यतिः । | भूतमुनीनैर्यतिरिह भतनाः सभौ भनयाश्च यदि भवति तन्वी<br>ऽ।।,ऽऽ।,।।।,।।ऽ,ऽ।।,ऽ।।,।।।,।ऽऽ | माधव मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः<br>कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यधिगततनुदाहा ।<br>पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिखिन्ने<br>निःश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी ॥ |
| किरीटम् | नाम किरीटमिदं भगणा यदि पिङ्गलनागमुनीन्द्रमतं किल<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।। | |
| दुर्मिलम् | सगणैरिह वृत्तधरं वसुभिः किल दुर्मिलमुक्तमिदं कविभिः<br>।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ | |
| पञ्चविंशत्यक्षरा वृत्तिः । अतिकृतिः ।<br>क्रौञ्चपदा<br>पञ्चमे दशमे अष्टादशे पञ्चविंशतौ च यतिः । | क्रौञ्चपदा स्यात् भो मसभाश्चेदिषुशरवसुमुनियति ननुलघुगैः<br>ऽ।।,ऽऽऽ,।।ऽ,ऽ।।,।।।।।।।।।।।।,ऽ | क्रौञ्चपदालीचित्रिततीरा मदकलखगकुलकलकलरुचिरा<br>फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी ।<br>फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः<br>पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिमकिरणजा ॥ |
| षड्विंशत्यक्षरा वृत्तिः । उत्कृतिः ।<br>भुजङ्गविजृम्भितम्<br>अष्टमे ऊनविंशतौ षड्विंशतौ च यतिः । | वस्वीशाश्वैश्छेदोपेतं ममतनननयुग रसलगैर्भुजङ्गविजृम्भितम्<br>ऽऽऽ,ऽऽऽ,ऽऽ।,।।।,।।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | हेलोद्यन्नृत्यत्पादप्रकटविकटनटनभरो रणत्करतालक<br>श्चारुप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलयसरञ्जितहारधृत् ।<br>त्रस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युतः<br>पायाद्भिन्दन् कालिन्दीह्रदकृतनिजवसतिदृढभुजङ्गविजृम्भितम् । |
| अपवाहम् | मो नाः षट् सगाविति यदि नवरसरसशरयतियुतमपवाहाख्यम्<br>ऽऽऽ,।।।,।।।,।।।,।।।,।।।,।।।,।।ऽ,ऽ,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| त्रिंशदक्षरा वृत्तिः ।<br>अर्णः | प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूत-<br>लीलाकरोद्दामशङ्खादयः<br>प्रतिचरणं चण्डवृष्टिप्रपातस्य द्व्यर्थः ।<br>।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ. | जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासा-<br>च्युतानन्त नारायण<br>त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर<br>श्रीपते माधव ।<br>गरुडगमन कृष्ण वैकुण्ठ गोविन्द विश्वम्भरोपेन्द्र चक्रायुधा-<br>धोक्षज श्रीनिधे<br>बलिदमन नृसिंह शौरे । भवाम्भोधिघोरार्णवे त्वं निमज्जन्त-<br>मभ्युद्धरोपेत्य माम् ॥ |
| सिंहविक्रीडः | यकारैः कवीच्छानुरोधाभिबद्धैः प्रसिद्धो विशुद्धो<br>ऽपरो दण्डकः सिंहविक्रीडनामा<br>।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | |
| त्रयस्त्रिंशदक्षरा वृत्तिः ।<br>अर्णवः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | अर्णार्णवादीनामप्युदाहरणानि बोद्धव्यानि |
| अशोकमञ्जरी | स्वेच्छया रजौ क्रमेण यन्निवेशयत्सुदारधीः कविः<br>स दण्डकः स्मृतो जयत्यशोकमञ्जरी<br>ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ | |
| षट्त्रिंशदक्षरा वृत्तिः ।<br>व्यालः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| ऊनचत्वारिंशदक्षरा वृत्तिः ।<br>जीमूतः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,<br>ऽ।ऽ | |
| द्विचत्वारिंशदक्षरा वृत्तिः ।<br>लीलाकरः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,<br>ऽ।ऽ,ऽ।ऽ | |
| पञ्चचत्वारिंशदक्षरा वृत्तिः ।<br>उद्दामः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ.ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,<br>ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| सिंहविक्रान्तः | नयुगलगुरुयुगेयं यकाराः कवीच्छानुरोधा-<br>द्यदा यत्र बध्यन्त एषोऽपरो दण्डकः पण्डितै-<br>रीरितः सिंहविक्रान्तनामा<br>।।।,।।।,।,ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ.।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,<br>।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | |
| अष्टचत्वारिंशदक्षरा वृत्तिः ।<br>शङ्खः<br>इत्यादयः ।<br>इति समवृत्तानि समाप्तानि ॥*॥ | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ.ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,<br>ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| अथार्द्धसमवृत्तानि ।<br>उपचित्रम् ११ । ११ वृत्तिः । | विषमे यदि सौ सलगा दले भौ युजि भाद्-<br>गुरुकावुपचित्रम् ।<br>द्विरावृत्त्या श्लोकः पूरयितव्यः | |
| प्रथमपादे तृतीयपादे च<br>द्वितीयपादे चतुर्थपादे च | ।।ऽ,।।ऽ,।।ऽ,।,ऽ<br>ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | सुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम् ।<br>गगनस्थघनामिलितं यथा शारदनीरधरैरुपचित्रम् ॥ |
| वेगवती १० । ११ वृत्तिः । | विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती<br>स्यात् | |
| प्रथमपादे तृतीयपादे च<br>द्वितीयपादे चतुर्थपादे च | ।।ऽ,।।ऽ,।।ऽ,ऽ<br>ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | स्मर वेगवती व्रजरामा केशववंशरवैरतिमुग्धा ।<br>रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| सुन्दरी १०।११ वृत्तिः । | अयुजोर्यदि सौ जगौ युजोः सभरा लगौ यदि सुन्दरी तदा | |
| प्रथमे तृतीये पादे च | ।।ऽ,।।ऽ,।ऽ।,ऽ | यदवोचदवेक्ष्य सुन्दरी परितः स्खेदमयेन चक्षुषा । |
| द्वितीये चतुर्थे पादे च | ।।ऽ,ऽ।।,ऽ।ऽ,।,ऽ | अपि कंसहरस्य दुर्वचं पवनस्तद्विदधीत विस्मयम् ॥ |
| इत्यर्द्धसमवृत्तानि समाप्तानि ॥ * ॥ | | |
| अथ विषमवृत्तानि । | | |
| उद्गता | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् । यद्यथ भनभगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे १० | ।।ऽ,।ऽ।,।।ऽ,। | विललास गोपरमणीषु नरपतितनयाप्रभोद्गता । |
| द्वितीये १० | ।।।,।।ऽ,।ऽ।,ऽ | कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्म्मिविभ्रमम् ॥ |
| तृतीये १० | ऽ।।,।।।,ऽ।।,ऽ | |
| चतुर्थे १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| अन्यविधोद्गता | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् । यद्यथ भनजलगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे १० | ।।ऽ,।ऽ।,।।ऽ,। | अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् । |
| द्वितीये १० | ।।।,।।ऽ,।ऽ।,ऽ | क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः ॥ |
| तृतीये ११ | ऽ।।,।।।,।ऽ।,।,ऽ | इति भारवावुद्गताभेदः । १२ । १ ॥ |
| चतुर्थे १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| सौरभम् | त्रयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा । जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम् ॥ | |
| प्रथमे पादे १० | ।।ऽ,।ऽ।,।।ऽ,। | परिभूतफुल्लशतपत्त्रवर्णविहतगर्व्वविभ्रमा । |
| द्वितीये १० | ।।।,।।ऽ,।ऽ।,ऽ | कस्य कृष्ण हरतीह हरे सखपद्मसौरभकला तवाङ्गता ॥ |
| तृतीये १० | ऽ।ऽ,।।।,ऽ।।,ऽ | |
| चतुर्थे १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| ललितम् | नयुगं सकारयुगलञ्च भवति चरणे तृतीयके । तदुदितसुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता । | |
| प्रथमे पादे १० | ।।ऽ,।ऽ।,।।ऽ,। | व्रजसुन्दरी समुदयेन मुदितमनसा स पीयते । |
| द्वितीये १० | ।।।,।।ऽ,।ऽ।,ऽ | हिमकरगलितमिवामृतकं ललितं मुरारिमुखचन्द्रविच्युतम् । |
| तृतीये १२ | ।।।,।।।,।।ऽ,।।ऽ | |
| चतुर्थे १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| वक्त्रम् | वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् । | |
| प्रथमे पादे ८ | ऽऽऽऽ।ऽऽऽ | वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम् । |
| द्वितीये ८ | ऽऽऽऽ।ऽऽऽ | बल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः ॥ |
| तृतीये ८ | ऽ।ऽऽ।ऽऽऽ | |
| चतुर्थे ८ | ऽऽऽऽ।ऽऽऽ | |
| पथ्यावक्त्रम् | युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम् । | |
| प्रथमे पादे ८ | ऽ।ऽ।।ऽऽ। | रासकालतल्पस्य कृष्णस्य मधुवासरे । |
| द्वितीये ८ | ऽऽ।।।ऽ।ऽ | आसीद्गोपाङ्गनाचीर्णा पथ्या वक्त्रमधुव्रतः ॥ |
| तृतीये ८ | ऽऽऽ।।ऽऽऽ | |
| चतुर्थे ८ | ऽऽऽ।।ऽ।ऽ | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| अनुष्टुप | | प्रथमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । | |
| | | गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥ | |
| | | प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् । | |
| | | लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरता मता ॥ | |
| प्रथमे चरणे | ८ | ऽ।ऽ।।ऽऽ। | प्रथमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । |
| द्वितीये | ८ | ऽ।ऽ।।ऽ।ऽ | गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥ |
| तृतीये | ८ | ।।ऽऽ।ऽऽऽ | |
| चतुर्थे | ८ | ऽऽ।।।ऽ।ऽ | |
| इति वृषमवृत्तानि समाप्तानि ॥*॥ | | | |
| अथ मात्रावृत्तानि । | | | |
| आर्या अथात गाथा | | लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः । | |
| | | षष्ठो जश्च नलघु वा प्रथमार्द्धे नियतमार्य्यायाः ॥ | |
| | | षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपद-नियमः । | |
| | | चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ | |
| प्रथमे पादे | १२ | ऽऽ।ऽ।ऽऽ | श्याम ! त्रिगुं सुतो मे वल्लवकुलटाभिराहृतो न यदि । |
| द्वितीये | १८ | ऽ।।।ऽ।ऽ।ऽ।।ऽ | पायमपि व्रजयशाविति जगाद गोष्ठां यशोदार्या ॥ |
| तृतीये | १२ | ।।।।ऽ।ऽ।। | |
| चतुर्थे | १५ | ।ऽ।ऽऽ।ऽऽऽ | |
| प्रकारान्तरो यथा | | | |
| प्रथमे पादे | १२ | ऽऽ।ऽ।ऽऽ | वृन्दावने सलीलं वल्गुद्रुमकाण्डनिहितसद्धर्यदि । |
| द्वितीये | १८ | ऽऽ।।ऽ।।।।।ऽऽ | क्षीरसुधार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः ॥ |
| तृतीये | १२ | ऽ।।ऽ।।ऽऽ | |
| चतुर्थे | १५ | ऽऽ।।।।ऽऽऽ | |
| नवधा आर्या क्रमेण यथा । | | [पथ्या । | |
| पथ्या | | प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता | |
| प्रथमे पादे | १२ | ।।।ऽ।।ऽऽ | जय जय नाथ ! मुरारे ! केशव ! कमलाक्ष काम्बुजानन ! । |
| द्वितीये | १८ | ऽ।।ऽऽ।ऽ।ऽऽऽ | कुरु करुणामिति विरतिं पथ्या भवरोगदुःखानाम् ॥ |
| तृतीये | १२ | ।।।ऽ।।।ऽ | अत्र द्वितीयपादान्तलघोर्गुरुत्वम् । |
| चतुर्थे | १५ | ऽऽ।।ऽ।ऽऽऽ | पूर्व्वपरार्द्धयोर्द्वादशमात्रायां यतिः ॥ |
| विपुला | | संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । | |
| | | यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ | |
| प्रथमे पादे | १८ | ऽऽ।।ऽऽऽ।।ऽऽ | पुंसां कलिकालव्यालदृष्टानां भाग्यप्रकृतिरप्यपि । |
| द्वितीये | १२ | ऽ।।।ऽऽऽ | सौख्यविपुला सुखे चेत् स्याद्गोविन्दाख्यमन्त्रकला ॥ |
| तृतीये | १४ | ऽ।।।ऽ।ऽऽऽ | अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् । |
| चतुर्थे | १२ | ऽऽऽ।ऽ।।ऽ | पूर्व्वपरार्द्धयोर्द्वादशमात्रा सलङ्घ्य यतिः ॥ |
| चपला | | उभयोर्द्वितीयतुर्य्यौ गणौ जकारौ तु यत्र चपला सा । | |
| प्रथमे पादे | १२ | ।।ऽ।ऽ।ऽऽ | चपला न चेत् कदाचिन्मुग्धा भवेद्भक्तिभावना कृष्णे । |
| द्वितीये | १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | धर्म्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥ |
| तृतीये | १२ | ऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १५ | ।ऽ।ऽऽ।ऽऽऽ | |
| मुखचपला | | आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः । | |
| | | शेषं पूर्व्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ | |
| प्रथमे पादे | १२ | ऽ।।।ऽ।ऽऽ | नन्दसुत ! चपलकं दृढं न ते प्रेम गच्छ सत्यैव । |
| द्वितीये | १८ | ।ऽ।ऽऽ।ऽ ऽऽऽ | यत्र भवति नो रागः कापि चमादिति मुखचपला ॥ |
| तृतीये | १२ | ऽ।।।।ऽऽऽ | अत्र द्वितीयपदान्तलघोर्गुरुत्वम् ॥ |
| चतुर्थे | १५ | ऽ।।ऽऽ।।।।।ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| जघनचपला | प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे च चपलायाः । लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ | |
| प्रथमे चरणे १२ | ऽऽऽऽ।।ऽ | कृष्णः शृङ्गारपटुर्यौवनमदचञ्चलः सुललिताङ्गः । |
| द्वितीये १८ | ऽ।।।ऽ।ऽ।।।ऽऽ | आसीद्व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥ |
| तृतीये १२ | ऽऽ।ऽ।ऽऽ | |
| चतुर्थे १५ | ।ऽ।ऽ।।।।ऽऽ | |
| गीतिः | आर्य्याप्रथमार्द्धसमं यस्या अपरार्द्धमाह तां गीतिम् । | |
| प्रथमे चरणे १२ | ऽ।।ऽऽऽऽ | केशववंशीगीतिर्लोकमनोहरिणहारिणी जयति । |
| द्वितीये १८ | ऽ।ऽ।।।ऽ।ऽ।।ऽ | गोपीमानग्रन्थिर्विमोचनी दिव्यगायनाश्चर्य्या ॥ |
| तृतीये १२ | ऽऽऽऽऽऽ | अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् ॥ |
| चतुर्थे १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | |
| उपगीतिः | आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम् । | |
| प्रथमे चरणे १२ | ।।ऽ।ऽ।ऽऽ | नवगोपसुन्दरीणां रासोल्लासे मुरारातिम् । |
| द्वितीये १५ | ऽऽऽ।ऽऽऽ | अस्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतिम् ॥ |
| तृतीये १२ | ऽऽ।।।।ऽऽ | |
| चतुर्थे १५ | ऽ।ऽऽ।ऽऽऽ | |
| उद्गीतिः | आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः । | |
| प्रथमे चरणे १२ | ऽऽ।ऽ।ऽ।। | नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या । |
| द्वितीये १५ | ऽऽऽऽ।ऽऽऽ | अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः ॥ |
| तृतीये १२ | ऽऽऽऽऽऽ | |
| चतुर्थे १८ | ऽ।ऽऽ।ऽ।ऽ।ऽ | |
| आर्य्यागीतिः | आर्य्याप्राग्दलमन्तेऽधिकगुरु तादृगपरार्द्धमार्य्यागीतिः । | |
| प्रथमे चरणे १२ | ऽऽऽ।।।ऽ | हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः । |
| द्वितीये २० | ।ऽ।ऽऽ।ऽ।ऽ।।ऽऽ | आर्य्यागीतिं भक्ता गायन्ति श्रीपतेश्चरितसम्बद्धाम् ॥ |
| तृतीये १२ | ऽऽऽऽऽऽ | लघुगुरुविपर्य्ययरूपप्रस्तारभेदेन बहुविधा आर्य्या भवन्ति ॥ |
| चतुर्थे २० | ऽऽऽऽ।ऽ।।।ऽऽऽ | |
| पूर्व्वार्द्धे विंशत्या चतुर्विंशत्या वा मात्राणां परार्द्धे षोड़शमात्राणां परे लघुवर्णचतुष्टये सति प्रथमं द्वितीयं वा लघ्वक्षरं प्राप्य आर्य्यायाः सामान्येन यतिनियमः ॥ | | |
| वैतालीयम् । अपरवक्त्रमित्येके । | षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ | |
| प्रथमे चरणे १४ | ।।ऽ।।ऽ।ऽ।ऽ | कुसुमेन मदेन चर्चितं तव यन्निन्दति राधिके कुचम् । |
| द्वितीये १६ | ।।ऽऽ।।ऽ।ऽ।ऽ | मुदमातनुतेऽत्र पश्चिमं तद्वैतालीयं फलं हरेः ॥ |
| तृतीये १४ | ।।ऽ।।ऽ।ऽ।ऽ | लघुगुरुव्यत्ययेनापि बहुधा भवति ॥ |
| चतुर्थे १६ | ऽऽऽऽ।।ऽ।ऽ | |
| औपच्छन्दसकम् | तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम् । | |
| प्रथमे चरणे १६ | ऽऽऽऽ।।ऽ।ऽऽ | आतन्वानं मुरारिकान्तास्वौपच्छन्दसकं सदा विनोदम् । |
| द्वितीये १८ | ऽऽ।।ऽ।।ऽ।ऽऽ | कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं दधानम् ॥ |
| तृतीये १६ | ऽऽऽऽ।।ऽ।ऽऽ | |
| चतुर्थे १८ | ऽऽ।।ऽ।।ऽ।ऽऽ | |
| एतद्वैतालीयभेदः ॥ | | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| पज्झटिका | | प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितमात्रा । पज्झटिकापनरत्र विवेक क्वापि न मध्य गुरुर्गण एक ॥ | |
| प्रथमे चरणे | १६ | ॥ ।ऽऽऽऽऽऽ | तरलवतंसाश्रितरत्नकलारमणज्झटिकाकटिवत्र । |
| द्वितीये | १६ | ।।।ऽ।।ऽ।।ऽऽ | मौलिचपलशिखिचन्द्रकवृन्द कालियशिरसि नटति मुकुन्द ॥ |
| तृतीये | १६ | ऽ।।।।ऽ।।ऽऽ | इय प्रतिपदयमकितषोडशमात्रा लघुगुरुव्यत्ययेनापि बहुधा |
| चतुर्थे | १६ | ऽ।।।।ऽ।।ऽऽ | यस्या नवमी मात्रा च कदाचित् लघ्वी भवति ॥ |
| दोधड़िका | | मात्रा चयोदशक यदि पूर्व लघुकविरामि । पश्चादेकादशकन्तु दोधड़िका विगुणेन ॥ | |
| प्रथमे चरणे | १३ | ऽऽऽ।।।।।। | माई दोधड़िपठव शुणि स्वामिनी काया गोपाल । |
| द्वितीये | ११ | ऽ।ऽऽ।ऽऽ। | वृन्दावनघनकुञ्ज चलिको कमलरसाल ॥ |
| तृतीये | ११ | ऽऽ।।।ऽ। | अस्यार्थः । हे मातः । दोधड़िकापाठं श्रुत्वा त्वया |
| चतुर्थे | ११ | ।।ऽ।।।ऽ। | गोपालो दृष्टः कमपि रसाल चलित कुत्र वृन्दावनघन |
| यस्या अन्त्या मात्रा लघ्वी अप भ्रंशभाषया प्रचार ॥ | | | कुञ्जे वृन्दावनस्य निविड़निकुञ्जे । राई इति क्वचित् पाठः |
| इति मात्रावृत्तानि समाप्तानि ॥*॥ | | | तस्मिन् राधिकाया दोधड़िकापाठ श्रुत्वा ॥ गुरुलघुव्यत्ययेन बहुधा भवति ॥ |

अत्र समवृत्तानि (२४७) सप्तचत्वारिंशदधिक द्विशतं, अर्द्धसमवृत्तानि (१५) पञ्चदश, विषमवृत्तानि (७) सप्त, मात्रावृत्तानि च (१५) पञ्चदश समुदायेन (२८४) चतुरशीत्यधिकद्विशतसंख्यकानि छन्दांसि लिखितानीति ॥ * ॥

छन्दकपालन पुं (छन्दकेन छद्मना पालयति लोकानिति । पल+णिच्+ल्यु ।) छद्म तापस । इति जटाधरः ॥

छन्दोग पुं (छन्दो वेदविशेष सामेत्यर्थं गाय तीति । गै+ गोपोष्टक । ३।२।८ इति टक ।) सामगः । सामवेदी । इति जटाधर ॥ (यथा, मनु । ३ । १४५ ।

यत्नेन भोजयेच्छ्राद्धे बह्वृच वेदपारगम् ।
शाखान्तगमथाध्वर्यु छन्दोगन्तु समाप्तिकम् ॥ )

छन्दोगपरिशिष्ट क्ली (छन्दोगेभ्य सामगेभ्य कात्यायनेन मुनिनेत्यर्थ । प्रणीत यत परिशिष्टम । यद्वा छन्दोगेभ्य कृत परिशिष्टम् ।) कात्यायनमुनिकृत सामवेदिकर्म्मबोधकगोभिलसूत्राणा परिशिष्टग्रन्थम् । इति स्मृति ॥

छन्दोविचिति स्त्री, (छन्दसा विचितिर्यत्र ।) श्रुतिच्छन्दसा प्रज्ञापक शास्त्रम् । इत्यमर टीकायां भरत ॥ (यथा बृहत्संहितायाम् । १ ८ ६४ ।

'विपुलामपि बुद्धा छन्दोविचितिं भवति कार्य मेतावत ।
श्रुतिसुखवृत्तकमत्र्र सममाह वराहमिहिरो ऽत ॥ )

छन्न क्ली (छद्+क्त ।) रह । निर्जनस्थानम् । इति मेदिनी । न ५ ॥

छन्न त्रि (छद्+क्त ।) छादित । इति मेदिनी । न ५ ॥ (यथा । यथा महाभारते । ३ । ८० । ८४ ।

'न यथा नन्द्यो वीर न यमा मम दारक ।
अहश्छन्न घरैश्छन्नास्त्रयाज मौक्तिकाश मे ॥ )
रह । इत्यमर । २ । ८ । २२ ॥

छम इ क सर्पे । इति कविकल्पद्रुम ॥ (चुरां परं सक सेट ।) इ क छम्पयति । सर्पो गति । इति दुर्गादास ॥

छम, उ अदे । इति कविकल्पद्रुम । (भ्वा पर सक सेट । उदित्वात् क्त्वावेट ।) छमति । उ, छमित्वा छान्त्वा । इति दुर्गादास ॥

छमण्ड पुं (छमति भक्षयति अबान्धवानपि पितर नाशयतीत्यर्थः । छम+बाहुलकादण्डन् ।) मातृपितृहीन । इत्युणादिकोष ॥ छेमड़ा इति भाषा ॥ बन्धुहीन । इति सक्षिप्तसारे उणादिवृत्ति ॥

छर्द्द क वमने । इति कविकल्पद्रुम । (चुरां परं- सक सेट ।) वमनं वान्ति । क छर्द्दयति अन्न लोक । इति दुर्गादास ॥ (तथाच, महा भारते । ५ । ८६ । ४२ ।

'स्वपन्ति च प्रवन्ति च छर्द्दयन्ति च मानवा ॥ )

छर्द्द क्ली (छर्द्द+भावे घञ् ।) वमनम् । इति हेमचन्द्र । ३ । १३३ ॥

छर्द्दन क्ली (छर्द्द+भावे ल्युट ।) वमनम । इति हेमचन्द्र ॥ (यथा सुश्रुते । ४ । १० ।

तथाशु मन्दानाभुविम्बीकोशातकीफलै ।
छर्द्दनं मधुरैश्चैवामयवान् तण्डुलाम्बुना ॥ )

छर्द्दन पुं, (छर्द्दयति नरमश्नन्तमिति भक्षितात् पुन रुद्गिरतीति । छर्द्+ल्यु ।) अलम्बुषक्षुप । (छर्द्दयति कटुगन्धेन उद्गिरयतीति । छर्द्+ल्युट ।) निम्बवृक्ष । इति हेमचन्द्र ॥ मदन वृक्ष । इति भावप्रकाश ॥

छर्द्दापनिका स्त्री (छर्द्द वमन आपयति प्राप यतीत्यर्थ । आप+णिच+ल्यु । तत स्वार्थ क । टापि अत इत्वम् ) ककटी । इति राजनिर्घण्ट ॥

छर्द्दि स्त्री, (छर्द्दयत्यनेनेति । छर्द्द वमने+इन् ।) वमिरोग । वान्ति इति भाषा । तत पर्याय । प्रच्छर्द्दिका २ छर्द्दन ३ वमथु ४ वमनम ५ वमि ६ । इति हेमचन्द्र । ३ । १३३ छर्द्दिका ७ छर्द्दीका ८ वान्ति ९ उद्गार १० । इति राजनिर्घण्ट ॥ उत्कासिका ११ छर्द्दनम १२ । इति शब्दरत्नावली ॥ तस्या निदानादि यथा —

'दुष्टैर्दोषै पृथक्सर्व्वैर्बीभत्सालोकनादिभि ।
छर्द्दय पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोजनै ॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषत ।
नार्य्याश्चापन्नसत्वायास्तथातिद्रुतमश्नत ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनै ॥
निरुच्यत छर्द्दिरिति दोषो वक्त्र प्रधावित ॥"

तस्या पूर्व्वरूप यथा —
'हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनु ।
द्वेषो ऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणम् ॥

वातजायास्तस्या रूप यथा —
हृत्पार्श्वपीड़ासुखशोषशीर्ष
नाभ्यर्त्तिकासस्वरभेदतोदै ।
उद्गारशब्दप्रबल सफेन
विच्छिन्नकृष्णं तनुक कषायम् ॥
कृच्छ्रेण चाल्प महता च वेगे
नार्त्तोऽनिलाच्छर्द्दयतीह दुःखम् ॥

तत्र पित्तजायास्तस्या रूप यथा —
'मूर्च्छा पिपासा मुखशोषमूर्द्ध
ताल्वक्षिसन्तापतमोभ्रमार्त्त ।

पीतं भक्षीरयं हरितं सतिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ॥"
आः श्लेष्मजाया रूपं यथा,—
"तन्द्राख्यमाधुर्य्यकफप्रसेक-
सन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादु कफानुविद्धं
सलोमहर्षोऽल्परुजं वमेच्च ॥"
सान्निदोषजाया रूपं यथा,—
"शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबलाप्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥"
दसाध्याया लक्षणं यथा,—
"विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्द्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं
दोषं समुद्धूय नरस्य कोष्ठात् ॥
विण्मूत्रयोस्तत्समगन्धवर्णं
तृट्श्वासहिक्कार्त्तियुतं प्रसक्तम् ॥
प्रच्छर्द्दयेद्दुष्टमिहातिवेगा-
त्तयार्द्दितश्चाशु विनाशमेति ॥"
आगन्तुजाया लक्षणं यथा,—
"बीभत्सजा दौर्हृदजामजा तु
असात्म्यजा या क्रिमिजा च या हि ।
सा पञ्चमी ताञ्च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ ॥"
क्रिमिजाया लक्षणं यथा,—
"शूलहृल्लासबहुला क्रिमिजा च विशेषतः ।
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥
क्षीणस्य या च्छर्द्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदन्त्यसाध्यां
साध्याश्चिकित्सेन्निरुपद्रवाञ्च ॥"
तस्या उपद्रवा यथा,—
"कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्य-
मेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः ॥"
इति माधवकरः ॥
तस्यौषधं यथा, गारुडे १८७ अध्याये ।
"आम्रजम्ब्वभया चैव उदकेन समं पिबेत् ।
हरीतकीकुष्ठचूर्णं लात्वा आस्यञ्च पूरयेत् ॥
शीतं शीवाय पानीयं सर्व्वच्छर्द्दिनिवारणम् ।
गुडूचीमञ्जकारिश्च धन्याकं रक्तचन्दनम् ॥
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्नमम्भितत् ॥"
अपिच ।
"विल्वमूलस्य समधु गुडूचीक्वथितं जलम् ।
शीतं हरेच्च त्रिविधां छर्द्दिं वै नात्र संशयः ॥
पीता दूर्व्वा च्छर्द्दिं नश्येत् मिश्रा तण्डुलवारिणा ॥"
इति च गारुडे १६४ अध्यायः ॥
अथ छर्द्दिचिकित्सा ।
"आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छर्द्द्यो मता लङ्घनमेव तस्मात् ।
विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥"
अत्र च्छर्द्दौ प्रयोगः ।
"हन्यात् क्षीरोदकं पीतं छर्द्दिं पवनसम्भवाम् ।
मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥
क्षीरोदकं नागरस्य क्षीरस्योदकम् ।
गुडूचीत्रिफलानिम्बपटोलैः क्वथितं जलम् ।
पिबेत् मधुयुतं तेन छर्द्दिर्नश्यति पित्तजा ॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोभागीकृते दोषे छर्द्दिः शीघ्रं निवर्त्तते ॥
विडङ्गत्रिफलाविश्वाचूर्णं मधुयुतं पिबेत् ।
विडङ्गप्लवशुण्ठीनां चूर्णं वा कफजां वमिम् ॥
प्लवं कैवर्त्तीमुस्तं गुडतची इति लोके ।
पिष्ट्वा धात्रीफलं लाजान् शर्कराञ्च पलोन्मितान् ।
दत्त्वा मधुपलञ्चापि कुडवं सलिलस्य च ॥
वाससा गालितं पीतं हन्ति छर्द्दिं त्रिदोषजाम् ।
गुडूच्या रचितं हन्ति हिमं मधुसमन्वितम् ॥
दुर्निवारामपि छर्द्दिं त्रिदोषजनितां बलात् ॥
एलालवङ्गगजकेशरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्द्दिं निहन्ति कफमारुतपित्तजाताम् ॥
इति एलादिचूर्णम् ॥
अश्वत्थवल्कलं शुष्कं दग्धं निर्व्वापितं जले ।
तज्जलं पानमात्रेण छर्द्दिं जयति दुर्ज्जयाम् ॥
यथा त्रिकटुधन्याकजीरकाणां रसो लिहन् ।
मधुना नाशयेच्छर्द्दिमरुचिञ्च त्रिदोषजाम् ॥
विल्वत्वचो गुडूच्या वा क्वाथः क्षौद्रेण संयुतः ।
छर्द्दिं त्रिदोषजां हन्ति पर्पटः पित्तजां तथा ॥
आम्रास्थिबिल्वनिर्यूहः पीतः समधुशर्करः ।
निहन्याच्छर्द्द्यतीसारं वैश्वानर इवाहुतिम् ॥
निर्यूहः क्वाथः ।
जम्ब्वाम्रपल्लवक्वाथं लाजचूर्णसंयुतं शीतम् ।
शमयति मधुना युक्तं वमिमतिसारं ज्वरान्वि-
तुग्राम् ॥
बीभत्सजां हृद्यतमैरिष्टैर्दौर्हृदजां फलैः ।
लङ्घनैरामजां छर्द्दिं जयेत् सात्म्यैरसात्म्यजाम् ॥
क्रमिहृद्रोगवद्धन्याद्वमिं क्रमिसमुद्भवाम् ।
तत्र तत्र यथा दोषं क्रियां कुर्य्याच्चिकित्सकः ॥
इति छर्द्यधिकारः ।" इति भावप्रकाशः ॥
छर्द्दिः, [स्] स्त्री, ( छर्द्दयति छर्द्द्यते इति वा ।
छर्द्द वमने + "अर्च्चिशुचिहुसृपिच्छादिछर्द्दिभ्य
इसिः ।" उणां । २ । १०८ । इति इसिः । )
वमिः । इत्युणादिकोषः ॥ ( यथा, चरके
चिकित्सितस्थाने २३ अध्याये ।
"तदग्निवेशस्य वचो निशम्य
प्रीतो भिषक्श्रेष्ठ इदं जगाद ।
छर्द्दींषि यानीह पुरोदितानि
विस्तारतस्तानि निबोध सम्यक् ॥")
छर्द्दिका, स्त्री, (छर्द्दि + स्वार्थे कन् । स्त्रियां टाप् । यद्वा,
छर्द्दिमतीति । छर्द्दि + ण्वुल् । टापि अत इत्वञ्च ।)
छर्द्दिः । विष्णुक्रान्ता । इति राजनिर्घण्टः ॥
छर्द्दिकारिपुः, पुं, (छर्द्दिकाया रिपुः नाशक इत्यर्थः ।)
क्षुद्रैला । इति शब्दचन्द्रिका ॥
छर्द्दिघ्नः, पुं, (छर्द्दिं हन्तीति । हन् + टक् ।) निम्बवृक्षः ।
इति रत्नमाला ॥ (निम्बशब्देऽस्य विवरणं ज्ञेयम् ॥)
छलं, क्ली, (छो + वृषादित्वात् कलच् । यद्वा, छल +
अच् । ) स्खलितम् । शाठ्यम् । इति मेदिनी ।
ले, १७ ॥ ( यथा, मनुः । ८ । ४६ ।
"धर्म्मेण व्यवहारेण च्छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥"
व्याजः । यथा, मार्कण्डेये । २५ । १० ।
"सा वै मदालसा पुत्त्रं बालसुपानयाविनम् ।
उल्लापनच्छलेनाह रुदमानमविश्वरम् ॥"
तात्पर्य्यान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरेण
कथनम् । यथा, न्यायसूत्रे । ५० ।
"वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥"
"अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः
कल्पः अर्थान्तरकल्पनेति यावत् तदुपपत्त्या
युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो
दूषणं तच्छलमित्यर्थः । वक्तृतात्पर्य्याविषयार्थ-
कल्पनेन दूषणाभिधानमिति फलितम् । तात्-
पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा । यथा,
नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नव-
संख्यापरत्वकल्पनया सिद्धाभिधानम् । प्रमेयं
धर्म्मित्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्धा-
भिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे
व्यभिचाराभिधानम् । तत्त्रिविधम् । वाक्छलं
सामान्यच्छलमुपचारच्छलञ्च ॥" "छलं नाम
परिशठमर्थाभासमपार्थकं वाग्वस्तुमात्रमेव ।
तद्द्विविधं वाक्छलं सामान्यच्छलञ्च । तत्र वाक्-
छलं नाम यथा कश्चिद्ब्रूयात् नवतन्त्रोऽयं
भिषगिति भिषग् ब्रूयात् नाहं नवतन्त्र एकतन्त्रो-
ऽहमिति । परो ब्रूयात् नाहं ब्रवीमि नव
तन्त्राणि तवेति अपितु नवाभ्यस्तं ते तन्त्रमिति
भिषग् ब्रूयात् न मया नवाभ्यस्तं तन्त्रं अनेक-
धाभ्यस्तं मया तन्त्रमिति । एतद्वाक्छलम् ।
सामान्यच्छलं नाम यथा, व्याधिप्रशमनायौषध-
मित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति भवा-
नाह सन्रोगः सदौषधं यदि च सत्प्रशमनाय
भवति सत्कासः सत्क्षयः सत्सामान्यात् कासस्ते
क्षयप्रशमनाय भविष्यतीति एतत्सामान्य-
छलम् ॥" इति चरके विमानस्थाने अष्टमे
अध्याये ॥)
छल्लिः, स्त्री, ( छद्यं छादनतां लातीति । ला +
बाहुलकात् किः ।) त्वक् । इति शब्दरत्नावली ॥
छाल इति भाषा ॥
छल्ली, स्त्री, (छदं छादनतां लातीति । ला + किः ।
ततः कृदिकारादिति वा ङीष् । ) वीरुत् ।
सन्तानः । वल्कलम् । कुसुमविशेषः । इति
मेदिनी । ले, १८ ॥
छविः, स्त्री, ( छ्यति सूक्ष्मं करोति यद्वा
छ्यति छिनत्ति दूरीकरोति मालिन्यादिकमनेन
मिति । छो + "कृष्टृविच्छविस्थविकिकीदिवि ।"

उणा० । ४।५६ । इति क्तिन् प्रत्ययेन निपातनात् साधु: ।) शोभा । दीप्ति: । इत्यमर: । १।३।१०।
(यथा, मेघदूते । ३५ ।
"भर्त्तु: कण्ठच्छविरिति गणै: सादरं वीक्ष्यमाण: ॥")

छष, ञ वधे । इति कविकल्पद्रुम: । (भ्वा०-उभं०-सकं०-सेट् ।) ञ, छषति छषते । अयं केश्चिन्न मन्यते । इति दुर्गादास: ।

छा, स्त्री, ( छद् + ड: टाप् च ।) आच्छादनम् । इति मेदिनी । छि, १ ॥

छा:, पुं, (छाद्यते मात्रपक्षाभ्यामसौ । छद् + "सर्वधातुभ्योऽसुन् ।" उणा० ।४।१८८। इति असुन् तत: पृषोदरात् साधु: ।) शावक: । इति त्रिकाण्डशेष: ॥

छाग:, पुं, स्त्री, ( छायते छिद्यते देवभक्तये इति । छो + "छापूखडिभ्य: कित् ।" उणा० । १।१२४। इति गन् ।) पशुविशेष: । तत्पर्याय: । वस्त: २ छगलक: ३ अज: ४ स्तुभ: ५ । इत्यमर: । २।९।७६ ॥ छग: ६ छगल: ७ छागल: ८ तभ: ९ स्तभ: १० स्तुभ: ११ । इति तट्टीका ॥ मधुकाम: १२ क्रयमद: १३ बर्कर: १४ पर्णभोजन: १५ लम्बकर्ण: १६ मेनाद: १७ बुक: १८ कम्बाग्र: १९ शिवाप्रिय: २० । इति शब्दरत्नावली ॥ अबुक: २१ मेध्य: २२ पशु: २३ पयस्वल: २४ । तन्मांसगुणा: । लघुत्वम् । स्निग्धत्वम् । नातिशीतलत्वम् । रुचिबलपुष्टिदायित्वम् । निर्दोषित्वम् । वातपित्तनाशित्वम् । मधुरत्वञ्च । इति राजनिर्घण्ट: ॥ शुक्रधातुसाम्यकारित्वम् । बृंहणत्वम् । स्निग्धत्वम् । स्वादुत्वम् । अनभिष्यन्दित्वम् । नात्युष्णत्वञ्च । इति राजवल्लभ: ॥ * ॥ छागपीतमांसगुणा: । लघुत्वम् । शीतलत्वम् । प्रमेहनाशित्वञ्च ॥ स्तनपायिच्छागस्य मांसगुणा: । ईषल्लघुत्वम् । बलदायित्वञ्च ॥ तन्मूत्रगुणा: । कटुत्वम् । उष्णत्वम् । रूक्षत्वम् । नाडीविषार्शश्लीपदोदरकफश्वासगुल्मशोफनाशित्वम् । लघुत्वञ्च । इति राजनिर्घण्ट: ॥
"छागलो बर्करश्छागो वस्तोऽजश्छगलक: स्तुभ: ।
छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत् ॥
नातिशीतमदाहि स्यात् स्वादु पीनसनाशनम् ।
परं बलकरं रुच्यं बृंहणं बलवर्द्धनम् ॥
अजाया अप्रसूताया: मांसं पीनसनाशनम् ।
शुष्क-े सेऽरुचौ शोषे हितमग्नेश्च दीपनम् ॥
अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् ।
हृद्यं ज्वरे ं श्रेष्ठं सुस्वादु बलदं स्मृतम् ॥
मांसं निष्क सितावस्य छागस्य कफरोगनुत् ।
स्रोत:शुद्धिकरं बल्यं मांसदं वातपित्तनुत् ॥
वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च ।
ऊर्द्ध्वजत्रुविकारघ्नं छागमुष्कं रुचिप्रदम् ॥"
इति भावप्रकाश: ॥
(तन्मांसं पितॄणां तृप्तिकरत्वात् श्राद्धाय देयम् । यथाह याज्ञवल्क्य: । १ । २५८ ।
"मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतै: ॥"
छागमांसेन पितॄणां षण्मासान् यावत्तृप्ति: । यथाह मनु: । ३ । २६९ ।
"षण्मासान् छागमांसेन पार्षतेन च सप्त वै ।"
मांसदानेन तृप्तिकालगणना एतत्परिशिष्टोक्ता । यथा,—
"नक्षत्राणां त्रिभिर्देवं नराणाम् गणत्रयम् ।
तेषां शुभाय निर्दिष्टं पशुवक्तत्रयं बली ।
ये कृष्णा: शुचयस्ताता: पञ्चवोऽपि तथैव च ।
देवजातिभिरुद्दिष्यान्ते सर्वाघोपनिवृत्तये ॥
ये पीता हरिता वापि नरजातिकदीरिता: ।
ये शुक्लाश्च महान्तो वा रक्षोजाते: शुभप्रदा: ॥
यो मोहाद्यवशाज्ज्ञानाद्बलिमर्थं प्रयच्छति ।
वध एव फलं तस्य नान्यत् किञ्चित् फलं भवेत् ॥"
एतस्य शरीरलक्षणादिकं विशेषतो बृहत्संहितायाम् ६५ अध्याये उक्तम् । यथा,—
"छागशुभाशुभलक्षण-
मभिधास्ये नवदशाष्टदन्तास्ते ।
धन्या: स्थाप्या वेश्मनि
सन्त्याज्या: सप्तदन्ता ये ॥
दक्षिणपार्श्वे मण्डल-
मसितं शुक्लस्य शुभफलं भवति ।
ऋष्यनिभकृष्णलोहित-
वर्णानां श्वेतमपि शुभदम् ॥
स्तनवदवलम्बते य:
कण्ठेऽजानां मणि: स विज्ञेय: ।
एकमणि: शुभफलकृ-
द्धन्यतमा द्वित्रिमणयो ये ॥
मुण्डा: सर्वे शुभदा:
सर्वसिता: सर्वकृष्णदेहाश्च ।
अर्द्धासिता: सिताद्धा
धन्या: कपिलार्द्धकृष्णाश्च ॥
विचरति यथाम्बुयाग्रे
प्रथमं चाम्भोऽवगाहते योऽजः ।
स शुभ: सितमूर्द्धा वा
मूर्द्धनि वा टिक्किका यस्य ॥
सपृषतकण्ठशिरा वा
तिलपिष्टनिभश्च ताम्रदृक् शस्त: ।
कृष्णचरण: सितो वा
कृष्णो वा श्वेतचरणो य: ॥
य: कृष्णाण्ड: श्वेतो
मध्ये कृष्णेन भवति पट्टेन ।
यो वा चरति सशब्दं
मन्दञ्च स शोभनश्छाग: ॥
ऋष्यशिरोरुहपादो
यो वा प्राक् पाण्डुरो ऽपरे नील: ।
स भवति शुभकृच्छाग:
श्लोकश्चाप्यत्र गर्गोक्त: ॥
कुट्टक: कुटिलश्चैव जटिलो वामनस्तथा ।
ते चत्वार: श्रिय: पुत्रा नालक्ष्मीके वसन्ति ते ॥
अथाप्रशस्ता: खरतुल्यनादा:
प्रदीप्तपुच्छा: कुनखा विवर्णा: ।
निकृत्तकर्णा द्विपमस्तकाश्च
भवन्ति ये चासितताशुनिका: ॥
वर्णै: प्रशस्तैर्मणिभिश्च युक्ता
मुण्डाश्च ये ताम्रविलोचनाश्च ।
ते पूजिता वेश्मसु मानवानां
सौख्यानि कुर्वन्ति यश: श्रियञ्च ॥")

छागण:, पुं, (छगण एव । स्वार्थे अण् ।) करीषाग्नि: । इति त्रिकाण्डशेष: ॥ घुंटेर आगुन इति भाषा ॥

छागभोजी, [न्] पुं, स्त्री, ( छागं भुङ्क्ते भक्षयतीति । भुज् + णिनि: ।) वृक: । इति राजनिर्घण्ट: ॥ छागभक्षके, त्रि ॥

छागरथ:, पुं, (छाग: रथो वाहनमस्य ।) वह्नि: । इति हेमचन्द्र: । ४ । १६३ ॥

छागल:, पुं, स्त्री, ( छगल एव इति प्रज्ञाद्यण् ।) छाग: । इति राजनिर्घण्ट: ॥ (यथा, पञ्चतन्त्रे । ३ । ११० ।
"बहुबुद्धिसमायुक्ता: सुविज्ञाना बलोत्कटान् ।
शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव ॥"
छगलस्य गोत्रापत्यं पुमान् इति । छगल + "त्रिकवेणुक्षुच्छगलादृष्टक्रोष्ट्राद्विष्टृ ।"
४ । २ । ११७ । इति अण् । आत्रेय ऋषिभेद: । इति सिद्धान्तकौमुदी ॥ )

छागलक:, पुं, (छागल इव कायतीति । कै + क: ।) मनुष्यविशेष: । यथा,—
"श्वेतं सुपाकं समदीर्घहस्तं
नि:श्मश्रुकं छागलकं वदन्ति ।
गले द्विकण्ठ: किल तस्य दृष्टे
कण्ठ: सुपथ्यो रुचिरो धनप्रद: ॥"
इति राजनिर्घण्ट: ॥
( स्वार्थे कन् । ) छागलश्च ॥

छागलाद्यं, क्ली, ( छागल आद्य: प्रधानो यत्र ।) छागलादिघृतम् । तच्च वातरोगस्यौषधम् । यथा
"छागं चर्मविनिर्मुक्तं त्यक्तशृङ्गखुरादिकम् ।
पञ्चमूलीद्वयस्यैव कल्कतोये विपाचयेत् ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
जीवनीयै: सयष्ट्याह्वै: क्षीरस्यैव प्रमावत: ॥
छागलाद्यमिदं नाम्ना सर्ववातविकारनुत् ।
अर्द्दिते कर्णशूले च बाधिर्ये मूकमिन्मिने ॥
जडगद्गदपङ्गूनां खञ्जे गृध्रसिकुब्जयो: ।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥
पक्षघातादितुल्ये पञ्चसङ्ख्याकमासयो: ।
नि:सार्य सन्धिवातेऽपि भार्ये पादादयेऽपि ॥"
इति चक्रपाणिच्छागलाद्यं घृतम् ॥ * ॥

एतत्सर्वं मन्त्र: ।
"ओँ काति पत्रेश्वरि ग्रसकस्य मलाधिष्ठं देहि दन्तपतनेन स्वाहा ।
आपत्यिका छागमादौ मधु दत्त्वा ललाटके ।
उदङ्मुख: प्राङ्मुखो वा भिषग्गणपतिं लभेत् ॥
छागसारवसन्त: ।
ओँ ह्रीँ क्लीँ गँ गणपतये स्वाहा ।
छागमांसतुला ग्राह्या दशमूल्या: पलं शतम् ।
अश्वगन्धापलशतं वाट्यालकशतं तथा ॥
एतादृशं पचेत्तोये चतुर्भागावशेषिते: ।

रें स्नेहसमं दद्यात् शतावर्य्या रसं तथा ॥
मसाचे हढ़े चैव शनैर्म्मृद्वग्निना पचेत् ।
रस्यौषधस्य कल्कस्य प्रत्येकं शुक्तिसम्मितम् ॥
जीवन्ती मधुकं द्राक्षाकाकोल्यौ नीलमुत्पलम् ।
मुस्तं सचन्दनं रास्ना पर्णिनीद्वयशारिवे ॥
मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी ।
दार्व्वी प्रियङ्गु त्रिफला नतं तालीशपद्मकौ ॥
एलापत्रं वरांगागजातीकुसुमधान्यकम् ।
मञ्जिष्ठा दाड़िमं दारु रेणुकं शैलवालुकम् ॥
विड़ङ्गं जीरकञ्चैव पेषयित्वा विनिक्षिपेत् ।
वस्त्रपूते च शीते च शर्करां प्रस्थसंयुतम् ॥
निधापयेत् स्निग्धभाण्डे स्वर्णे वा भाजने शुभे ।
अस्यौषधस्य सिद्धस्य स्मृतं वीर्य्यमतःपरम् ॥
देवदेवं नमस्कृत्य संपूज्य गणनायकम् ।
पिवेत् पाणितलं तस्य व्याधिं वीक्ष्यानु-
पानतः ॥
सर्व्ववातविकारेषु अपस्मारे विशेषतः ।
उन्मादे पक्षघाते च आध्माने कोष्ठनिग्रहे ॥
कर्णरोगे शिरोरोगे बाधिर्य्ये वामनत्वके ।
भूतोन्मादे च ग्रहस्यां मोहारे चाक्षिपातने ॥
पार्श्वशूले च हृच्छूले वाताध्यामादिते तथा ।
पातकण्ठकहृद्रोगमन्यकक्षे मपङ्गुले ॥
क्रोष्टुशीर्षे तथा खञ्जे कुब्जे चाभाति सिध्मिने ।
अपतानेऽन्तरायामे रक्तपित्ते नयोर्गुणे ॥
आगादिदोषविकारेषु चातुर्थकज्वरेऽपि च ।
ग्रहग्रहे तथा शोषे चीर्णे चैवाववाहुके ॥
दण्डापतानके भग्ने दाहे चाक्षेपके तथा ।
जीर्णज्वरे विषे कुष्ठे शेफःस्तम्भे मदात्यये ॥
आढ्यवातेऽग्निमान्द्ये च वातरक्तगदेषु च ।
एकाङ्गरोगिणे चैव तथा सर्व्वाङ्गरोगिणे ॥
हस्तकम्पे शिरःकम्पे जिह्वाकम्पे जड़े भ्रमे ।
क्षीणेन्द्रिये नष्टशुक्रे शुक्रनिःसरणे तथा ॥
क्षीणां वातासमाते च पटले चाक्षिस्पन्दने ।
एकाङ्गस्पन्दने चैव सर्व्वाङ्गस्पन्दने तथा ॥
नगादिपतिते वाते क्षीणानामप्राप्तिहेतुके ।
आभिचारिकदोषे च धनसन्तापसम्भवे ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
शिरोमध्यगता ये च जङ्घापार्श्वादिसंस्थिताः ॥
मात्रयाथाभिभूतश्च शिशुर्य्यश्च विमुच्यति ।
प्रक्षीणबलमांसश्च न वर्त्मगमनक्षमः ॥
एतेनानेन सिध्यन्ति वज्रमुष्टिरिवासुरान् ।
निहन्ति सकलान् रोगान् एतं परमदुर्लभम् ॥
रसायनं वह्निबलप्रदञ्च
वपुःप्रकर्षं विदधाति रूपम् ।
दन्तावलेन्द्रेण समानतेजा
दीर्घायुषं पुत्रशतं करोति ॥
क्षीणां शतं गच्छति वातिरेकं
न याति तृप्तिं सरसः समाङ्गः ।
अपुत्रिणीपुत्रशतं करोति
शताश्वं कामसमं बलिष्ठम् ।
महद्घृतं नाम तु छागलाद्यं
विनिर्म्मितं वातनिसूदनञ्च ।

शिवं शुभं रोगभयापहञ्च
प्रकारं हारीतमुनिर्विशिष्टः ॥
छागालवर्ज्जिताः पाके पुमांसं तत्र दापयेत् ।
मयूरी नकुली छागी वीर्य्यहीनाः स्वभावतः ॥
भाषितं काशिराजेन छागमेव नपुंसकम् ॥”
घृतम् १६ शेर । क्वाथार्थं छागमांसपलम् १०० ।
पाकार्थं जलं शं ६४ । शेषः शं १६ । विल्वादि-
दशमूलं प्रपलम् १० । जलं शं ६४ । शेषः
शं १६ । अश्वगन्धा १०० पलम् । जलं शं ६४ ।
शेषः शं १६ । वाट्यालकं १०० पलम् ।
जलं शं ६४ । शेषः शं १६ । दुग्धं शं १६ ।
शतमूलीरसः शं १६ । कल्कार्थं जीवन्त्या-
दीनां जीरकपर्य्यन्तानां कल्कद्रव्याणां प्रं तो ४ ।
वस्त्रपूते शीते शर्करा शं २ । इति वृहच्छागलाद्यं
घृतम् । इति भैषज्यरत्नावली ॥
(“छागमांसं तुलार्द्धं स्यात् दशमूलं तथापरम् ।
तोयद्रोणे पचेद्धीमान् यावत् स्यादंशशेषितम् ॥
तैलप्रस्थद्वयञ्चैव क्षीरञ्चैव शतावरी ।
जीवनीयं समधुकं बला रास्ना च शैलजम् ॥
मांसीस्थाद्धिमतालीशनागकावनवालुकम् ।
पृथक् पृथक् समादाय सर्व्वमेकत्र साधयेत् ॥
मञ्जिष्ठालोध्रलाक्षा च प्रत्येकं कुडवान्वितम् ।
आढ़कञ्च जलञ्चैव विधिना च विपाचयेत् ॥
छागलाद्यमिदं तैलं हारीतेन महात्मना ।
पाने बस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ।
सर्व्वज्वरगदं हन्ति सन्निपातास्थिजान्तथा ॥”
इति छागलाद्यं तैलम् ॥
इति वैद्यकरत्नमालिकायां वातरोगाधिकारे ॥)
छागलान्त्रिका, स्त्री, (छागलान्त्री + संज्ञायां कन् ।
टापि पूर्व्वह्रस्वः ।) वृद्धदारकवृक्षः । इति राज-
निर्घण्टः ॥
छागलान्त्री, [illegible], (छागलं अन्त्रयतीति बाहु-
लकात् रक् ततो ङीप् ।) वृकः । इति राज-
निर्घण्टः ॥
छागवाहनः, पुं, (छागेन आत्मानं वाहयतीति ।
वह + णिच् + ल्युः । यद्वा, छागो वाहनमस्य ।)
अग्निः । इति त्रिकाण्डशेषः ॥
छागिका, स्त्री, (छागी + स्वार्थे कन् । ततः टापि
पूर्व्वह्रस्वः ।) छागी । इति हेमचन्द्रः ।४।३४१ ॥
छागी, स्त्री, (छायते छिद्यते देवोपहारायेति ।
छो + “छापूखड़िभ्यः कित् ।” उणां ।१।१२४ ।
इति गण् छागः ततः स्त्रियां जातौ ङीष् ।)
छागमाता । बकरी इति पाँटी इति च भाषा ।
तत्पर्य्यायः । अजा २ पयस्विनी ३ भीरुः ४
मेध्या ५ गलेस्तनी ६ । इति राजनिर्घण्टः ॥
छागिका ७ मज्जा ८ सर्व्वभक्षा ९ गलस्तनी १० ।
इति हेमचन्द्रः ॥ चुलुम्पा ११ । इति त्रिकाण्ड-
शेषः ॥ मज्जा १२ सुखविलुण्ठिका १३ । इति
शब्दरत्नावली ॥ तद्दुग्धगुणाः । मधुरत्वम् ।
शीतलत्वम् । ग्राहित्वम् । दीपनत्वम् । रक्त-
पित्तविकारक्षयकासनाशित्वञ्च । यथा, राज-
निर्घण्टे ।

“अजानां लघुकायत्वान्नानाद्यनिषेवणात् ।
नात्यम्बुपानात् व्यायामात् सर्व्वव्याधिहरं पयः ॥”
कषायत्वम् । लघुत्वम् । अतीसारज्वरनाशि-
त्वञ्च । यथा, भावप्रकाशे ।
“छागं कषायं मधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
अजानामल्पकायत्वात् कटुतिक्तादिभक्षणात् ।
स्तोकाम्बुपानाद्व्यायामात् सर्व्वरोगापहं पयः ॥”
तद्दधिगुणाः । उत्तमत्वम् । ग्राहित्वम् । लघु-
त्वम् । दोषत्रयापहत्वम् । श्वासकासार्शःक्षय-
कार्श्येषु शस्तत्वम् । दीपनत्वञ्च । इति भाव-
प्रकाशः ॥ कफवातनेत्रदोषदुर्नामश्वासकास-
नाशित्वम् । उष्णत्वम् । रुच्यत्वम् । पाचनत्वञ्च ॥
तन्नवनीतगुणाः । लघुत्वम् । मधुरत्वम् । कषा-
यत्वम् । त्रिदोषनाशित्वम् । चक्षुष्यत्वम् । दीप-
नत्वम् । पथ्यत्वम् । सदा हितत्वञ्च ॥ तन्नवोत्थ-
नवनीतगुणाः । क्षयकासनेत्रामयकफनाशित्वम् ।
बलत्वम् । परमदीपनत्वञ्च ॥ तद्घृतगुणाः ।
चक्षुष्यत्वम् । दीपनत्वम् । बलवर्द्धनत्वम् । कास-
श्वासकफनाशित्वम् । राजयक्ष्मणि शस्तत्वञ्च ।
इति राजनिर्घण्टः ॥
छातः, त्रि, (छो + क्तः । “शाच्छोरन्यतरस्याम् ।”
७ । ४ । ४१ । इति विभाषायामित्वाभावः ।)
छिन्नः । दुर्बलः । इत्यमरः । ३ । १ । १०३ ॥
छात्रं, क्ली, वरटीछत्रसम्भवं मधु । तस्य गुणाः ।
श्वित्रक्रिमिरोगरक्तपित्तनाशित्वम् । गुरुत्वञ्च ।
इति राजवल्लभः ॥
(“वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥”
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित् ।
भ्रमतृण्मोहविषहृत् तर्पणञ्च गुणाधिकम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)
छा(त्त्र)त्रः, पुं, (छत्रं गुरोर्दोषावरणं तच्छील-
मस्येति । “छत्रादिभ्यो णः ।” ४ । ४ । ६२ ।
इति णः ।) शिष्यः । इत्यमरः । २ । ७ । ११ ॥
(यथा, राजतरङ्गिण्याम् । ६ । ८७ ।
“भूमुजा दानशौण्डेन मेत्रिके स्वण्डिले कृतः ।
छात्राणामार्य्यदेश्यानां तेन विद्यार्थिनां मठः ॥”)
छात्रकं, क्ली, (छात्र + स्वार्थे कन् ।) छात्रं मधु ।
यथा, राजनिर्घण्टे ।
“छत्राकारन्तु पटलं सरघाः पीतपिङ्गलाः ।
ये कुर्व्वन्ति तदुत्पन्नं मधु च्छात्रकमीरितम् ।
श्वित्रमेहक्रिमिघ्नञ्च विद्याच्छात्रं गुणोत्तरम् ॥”
अपिच भावप्रकाशे ।
“वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित् ॥
भ्रमतृड्मोहविषहृत्तर्पणञ्च गुणाधिकम् ॥”
छात्रगण्डः, पुं, (छात्रो गण्ड इव ।) पदाद्यवित् ।
विभक्त्यन्तस्य श्लोकचरणस्य वा आदिमात्रवेत्ता ।

भूशङ्कुघातः प्रभया विभक्तः
प्रजायते दीपशिखौच्च्यमेवम् ॥
त्रैराशिकेनैव यदेतदुक्तं
व्याप्तं स्वभेदैर्हरिणेव विश्वम् ॥

उदाहरणम् ।
शङ्कोर्भार्कमिताङ्गुलस्य सुमते दृष्टा किलाष्टाङ्गुला
छायाग्राभिमुखे करद्वयमिते न्यस्तस्य दैर्घ्येण च ।
तस्यैवार्कमिताङ्गुला यदि तदा छायाप्रदीपान्तरं
दीपौच्च्यञ्च कियद्वद व्यवहृतिं छायाभिधां वेत्सि चेत् ॥

यथा




भू $\frac{१२}{३}$ छा $\frac{१}{३}$ भू २ छा $\frac{१}{२}$

अत्र छायाग्रयोरन्तरमङ्गुलात्मकम् । ५२ । छाये च । ८ । १२ । अनयोरन्तरम् । ४ । इष्टमनेन । ५२ । गुणिता । ४१७ । छायाप्रमाणान्तरेण । ४ । भक्ता लब्धं भूमानम् । १०४ । इदं प्रथमच्छायाग्रदीपतलयोरन्तरमित्यर्थः । एवं द्वितीयच्छायाग्रमानम् ।१५६। भूशङ्कुघातः प्रभया विभक्त इति जातमुभयतोऽपि दीपौच्च्यं समम् एव हस्ताः $६\frac{१}{२}$ ।

एवमित्थं छायाव्यवहारे त्रैराशिककल्पनया नयनं क्रियते तद्यथा । प्रथमच्छायातो द्वितीयच्छाया १२ । यावताधिका तावता छायाग्रयोरन्तरं यदि छायाग्रान्तरतुल्यं लभ्यते तदा छायया किमिति एवं पृथक् पृथक् छायाप्रदीपतलान्तरप्रमाणं लभ्यते । ततो द्वितीयं त्रैराशिकं यदि छायातुल्ये भुजे शङ्कुः कोटिस्तदा भूतुल्ये भुजे किमिति लब्धं दीपौच्च्यमुभयत्रापि तुल्यमेव । एवं पञ्चराशिकादिकमखिलं त्रैराशिककल्पनयैव सिद्धं यथा भगवता श्रीनारायणेन जननमरणक्लेशापहारिणा निखिलजगज्जननैकबीजेन सकलभुवनभावनेन हिरण्यगर्भसुरनरासुरादिभिः स्वभेदैरिदं जगद्व्याप्तं तद्वदखिलं गणितजातं त्रैराशिकेन व्याप्तं यद्येवं तद्बहुभिः किमित्याशङ्क्याह । यत्किञ्चिद्गुणभागहारविधिना बीजेऽत्र वा गण्यते
तत् त्रैराशिकमेव निर्मलधियामेवावगम्यं विदाम् ।
एतद्यद्बहुधास्मदादिजडधीधीवृद्धिबुद्ध्या बुधै-
स्तद्भेदान् सुगमान् विधाय रचितं प्राज्ञैः प्रकीर्णादिकम् ॥

इति श्रीभास्कराचार्यविरचितायां लीलावत्यां छायाधिकारः समाप्तिमगात् ॥

छायाभृत्, पुं, (छायां छायारूपमृगलाञ्छनं यद्वा छायां शीतलकान्तिं बिभर्त्तीति । भृ + क्विप् ।) चन्द्रः । इति हेमचन्द्रः । २ । १९ ॥

छायामित्रं क्ली, (छायया छायाकरणेन मित्रमिव छायायाः मित्रमिति वा ।) छत्रम् । इति शब्दरत्नावली ॥

छायामृगधरः, पुं (छाया छायारूप एव मृगस्तं धरतीति । धृ + अच् । छायामृगस्य धरो वा ।) चन्द्रः । इति त्रिकाण्डशेषः ॥

छायासुतः, पुं (छायायाः सूर्य्यपत्न्याः सुतः पुत्त्रः ।) शनिः । इति हेमचन्द्रः । २ । ३४ ॥

छि, पुं, (छ्यति छिनत्ति कौर्त्त्यादिकं नाशयतीत्यर्थः । छो + बाहुलकात् कि ।) गल्हा । इत्येकाक्षरकोषः ॥

छिक्कनी, स्त्री, (छिक् इत्यव्यक्तानुकृतशब्दं करोत्यनया । कृ + करणे ल्युट् ततो ङीष् ।) क्षुपविशेषः । छिक्कनी इति नाकछिकनी इति हाँचोटी इति च भाषा ॥ तत्पर्य्यायः । क्षवकः २ तीक्ष्णा ३ छिक्किका ४ घ्राणदुःखदा ५ । अस्या गुणाः । कटुत्वम् । रूक्षत्वम् । तीक्ष्णत्वम् । उष्णत्वम् । वह्निपित्तकारित्वम् । वातरक्तकुष्ठकृमिवातकफनाशित्वञ्च । इति भावप्रकाशः ॥

छिक्का, स्त्री, (छिगित्यव्यक्तशब्देन कायतीति । कै + कः । ततष्टाप् ।) क्षुतम् । इति शब्दरत्नावली ॥ छिँक इति हिन्दी भाषा ॥ (यथा गारुडे ज्योतिश्चक्रे ६० अध्याये ।
'छिक्काया लक्षणं वक्ष्ये लभेत् पूर्व्वे महाफलम् ।
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात् ॥
नैरृते शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे ।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो भवेत् ।
ईशाने मरणं प्रोक्तं प्रोक्तं छिक्काफलाफलम् ॥')

छिक्किका स्त्री (छिक्का क्षुतं साध्यत्वेनास्त्यस्याः । बाहुलकात् ठन् ।) छिक्कनी । इति भावप्रकाशः ॥

[छेदनकर्त्ता ॥

छित् [द्] त्रि (छिनत्तीति । छिद् + क्विप् ।)

छित त्रि (छायते स्मेति । छो + क्त । 'शाच्छोरन्यतरस्याम् ।' ७।४।४१ । इती ।) छिन्नम् । इत्यमरः । । ३ । १ । १०३ ॥

छित्ति पु (छिद् + क्तिन् ।) करणम् च । इति शब्दचन्द्रिका ॥ छेदश्च ॥

छित्वर त्रि (छिनत्तीति । छिद् + 'छित्वरच्छत्वरेति । उणा । ३ । १ । इति ष्वरच् प्रत्ययेन निपातनात् साधुः ।) छेदनकर्त्ता । धूर्त्तः । वैरी । इत्युणादिकोषः ॥

छिद् इर् ध भ आ छेदे । इति कविकल्पद्रुमः ॥ (रुधां-उभं-सकं-अनिट् ।) छेदो द्विधाकरणम् । इर् अच्छिदत् अच्छैत्सीत् । ध भ छिनत्ति छिन्ते शाखां लोकः । वर्णौ छेत्ता । इति दुर्गादासः ।

छिदक क्ली (छिनत्तीति । छिद् + क्वुन् ।) वज्रम् । इत्युणादिकोषः ॥

छिदा, स्त्री (छिद् + "षिद्भिदादिभ्योऽङ् ।' ३ । ४ । १०४ । इत्यङ् ततष्टाप् ।) छेदनम् । इति मुग्धबोधम् ॥

छिदि स्त्री, (छिद्यतेऽनयेति । छिद् + 'कृपृकुटिभिदिछिदिभ्यश्च ।' उणां । ४ । १४२ । इति इः स च कित् ।) कुठारः । इत्युणादिवृत्तिः ।

छिदिरः, पु (छिनत्त्यनेनेति । छिद् + 'इषिमदिमुदिखिदिच्छिदिभिदीति ।" उणां । १ । ५१ । इति किरच् ।) करवालः । परश्वधः । पावकः । रज्जुः । इति मेदिनी । रे, १५५ ॥

छिदुर पु (छिनत्तीति । छिद् + 'विदिभिदिच्छिदेः कुरच् ।" ३।२।१६२ । इति कुरच् ।) छेदनशीलम् । धूर्त्तः । वैरी । इति मेदिनी । रे १५६ ॥ (स्वयं छिन्ने, त्रि । यथा रघुः । १६।६२ ।
"स लप्स्यते न छिदुरोऽपि हारः ।")

छिद्र, तु क भेदे । इति कविकल्पद्रुमः ॥ (अदन्तचुरां पर सक सेट् ।) भेद इह रन्ध्रकरणम् । छिद्रयति छिद्रापयति भाण्डं बालकः । इति दुर्गादासः ॥

छिद्र, क्ली, (छिद्यते भिद्यते यत् । छिदिर् छेदने + 'स्फायितञ्चिवञ्चीति ।' उणां । २।१३ । इति रक् ।) भेदः । छेँदा इति भाषा । तत्पर्य्यायः । कुहरम् २ शुषिरम् ३ विवरम् ४ बिलम् ५ निर्व्यथनम् ६ रोकम् ७ रन्ध्रम् ८ श्वभ्रम् ९ वपा १० शुषि ११ । इत्यमरः । १ । ८ । २ ॥ श्वभ्रम् १२ शुषी १३ । इति तट्टीका ॥ (यथा महाभारते । ३।८२।५३ ।
"ततो गच्छेत धर्म्मज्ञ । हिमवत्सुतमर्ब्बुदम् ।
पृथिव्यां यत्र वै छिद्रं पूर्व्वमासीत् युधिष्ठिर ॥")
दूषणम् । इति मेदिनी । रे, ३८ ॥ (यथा महाभारते । २ । १२ । २९ ।
'बहुविघ्नश्च नृपते । क्रतुरेष स्मृतो महान् ।
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः ॥'
अवकाशः । नवमसंख्या । इति ज्योतिषम् ॥ लग्नादष्टमस्थानम् । 'छिद्राख्यमष्टमं स्थानमिति ।' इति ज्योतिस्तत्त्वम् ॥ )

छिद्रवैदेही स्त्री, (छिद्रप्रधाना वैदेही पिप्पली ।) गजपिप्पली । इति राजनिर्घण्टः ॥

छिद्रात्मा [न्] पु (छिद्रमन्तर्मध्ये यस्य ।) नलः । इति राजनिर्घण्टः ॥

छिद्राफल, क्ली (छिद्रं दूषणमाफलतीति । आ + फल + अच् ।) मायाफलम् । इति राजनिर्घण्टः ॥

छिद्रित त्रि (छिद्र + इतच् ।) सञ्जातच्छिद्रः । तत्पर्य्यायः । वेधितः २ विद्धः ३ । इत्यमरः । ३ । १ । ९९ ॥

छिन्न त्रि (छिद्यते स्म इति । छिद् + क्त ।) कृतच्छेदनम् । कँटा इति काटा इति च भाषा । तत्पर्य्यायः । छातम् २ लूनम् ३ कृत्तम् ४ दातम् ५ दितम् ६ छितम् ७ वृक्णम् ८ । इत्यमरः । ३।१।१०३ ॥ छेद्यम् ९ छादितम् १० । इति जटाधरः ॥ छेदितम् ११ खण्डितम् १२ । इति हेमचन्द्रः ॥ (यथा मार्कण्डेये । ८० । ११ ।

"छिन्ने धनुषि दैत्येन्द्रस्तथा शक्तिमपाददे ॥"४॥
मन्त्रविशेषः, पुं। तल्लक्षणादिकं यथा, विश्वसारे।
"मन्त्रोऽयंस्यादिमध्यान्तेष्वानिलं वीजमुच्यते।
संयुक्तं वा वियुक्तं वा पराक्रान्तस्त्रिधा पुनः ॥
चतुर्धा पञ्चधा वापि स मन्त्रश्छिन्नसंज्ञकः ॥")
छिन्नग्रन्थिनिका, स्त्री, (छिन्ना ग्रन्थिनी। संज्ञायां कन् ततष्टाप् पूर्व्वह्रस्वश्च।) त्रिपर्णिका। इति राजनिर्घण्टः ॥
छिन्नपत्री, स्त्री, (छिन्नं पत्रं यस्याः। स्त्रियां ङीप्।) अम्बष्ठा। इति राजनिर्घण्टः ॥ (विवरणमस्या अम्बष्ठाशब्दे ज्ञेयम्।)
छिन्नमस्ता, स्त्री, (छिन्नं मस्तं शिरो यस्याः।) दशमहाविद्यान्तर्गतषष्ठमहाविद्या। सा च प्रचण्डचण्डिका। यथा,—
"प्रचण्डचण्डिकां वक्ष्ये सर्व्वकामफलप्रदाम्।
यस्याः प्रसादमात्रेण सदाशिवो महेश्वरः ॥
अपुत्रो लभते पुत्रं अधनो धनवान् भवेत्।
कवित्वञ्च सुपाण्डित्यं लभते नात्र संशयः ॥"
अथ प्रचण्डचण्डिकामन्त्राः। विश्वसारे आमले च।
"लक्ष्मीं लज्जां ततो मायां मात्रां द्वादशिकामपि।
वज्रवैरोचनीये द्वे माये फट्स्वाहया युतः ॥
लक्ष्मीवीजं यदाद्यं स्यात् तदा श्रीः सर्व्वतोमुखी।
लज्जावीजेन चाद्येन वश्यतां यान्ति योषितः ॥
मायावीजेन चाद्येन महापातकनाशनम्।
मात्रां द्वादशिकां वीजमाद्यं स्याद्भुक्तिदायकम् ॥
भैरवोऽस्य ऋषिर्देवि! सम्राट् छन्द उदीरितम्।
छिन्नमस्ता स्मृता देवी वीजं कूर्च्चद्वयं पुनः ॥
स्वाहा शक्तिरभीष्टार्थे विनियोग उदाहृतः ॥"
"अत्र लज्जापदं कामवीजपरम्। तथा च।
अत्र लज्जापदे देवि! कामवीजं वितन्यते।
महाकालमतं ज्ञेयं मन्त्रोद्धारं शुभावहम् ॥"
पूर्व्वमायापदे इति पाठे मायायाः पूर्व्वं लज्जावीजं तत्सन्निधेः। तथा च। पूर्व्वमायापदेन लज्जावीजमुच्यते। अन्यथा तारिण्यादिविरोधः। तथा च।
"कामाद्यां वाग्भवाद्यां वा मायाद्यां वा जपेत् सुधीः।
लक्ष्म्याद्यां वा जपेद्विद्यां चतुर्व्वर्गफलप्रदाम् ॥
अन्येषाञ्च मुनीनां मते सर्व्वत्र मायापदं कूर्च्चपरम्। तत्रैव।
शान्तं वह्निसमायुक्तं रतिविन्दुसमन्वितम्।
लक्ष्मीवीजमिदं प्रोक्तं सर्व्वकामार्थसिद्धये ॥
—मांश्च वह्निसंयुक्तं विन्दुनादविभूषितम्।
शिववीजं महेशानि! लज्जावीजमुदाहृतम् ॥
ईशानमुद्धृत्य पुरारिवीजं
सविन्दुकं नादविभूषितञ्च।
सवामकर्णं परितः प्रकल्प्य
मायां वदन्तीह मनीषिणस्ताम् ॥
द्वादशस्वरवर्णं स्यात् नादविन्दुविभूषितम्।
वाग्भवं वीजमित्युक्तं सर्व्ववाक्यविशुद्धये ॥
इति मन्त्रे चतुर्व्वीजव्याख्यानात् अयन्तु समीचीनः। भैरवमते तु माया भुवनेश्वर्य्येव ॥
लक्ष्मीः प्रथमवीजेऽस्ति लज्जावीजे मनोभवः।
तृतीयेऽस्मिन् सदा देवी महापातकनाशिनी ॥
चतुर्थे तु गुणातीता मुक्तिविद्याप्रदायिका।
वकारे वरुणः साक्षात् जकारे तु सुराधिपः ॥
रेफे हुताशनो देवो वकारे वसुधाधिपः।
एकारे त्रिपुरा देवी रेफे त्रिपुरसुन्दरी ॥
त्रैलोक्यविजया देवी सदैवौकारसंस्थिता।
चकारे चन्द्रमा देवो नकारे हि विनायकः ॥
ईकारे कमला साक्षात् यकारे च सरस्वती।
मायायुग्मे सदा देवी प्रकृत्या सह सङ्गता ॥
वैखरी चैव फट्कारे स्वाकारे कुसुमायुधः।
हाकारे च रतिस्तिष्ठेदेवं मन्त्रसमुच्चयः ॥"
इति आख्यानात् ॥ ० ॥
अस्याः पूजाप्रयोगः।
प्रातःकृत्यादिकं कृत्वा मन्त्राचमनं कुर्य्यात्। यथा,—
"लक्ष्मीमायाकूर्च्चवीजैस्त्रिभिः पीत्वाम्बु साधकः।
वाग्भवेनौष्ठौ संमृज्य मायाभ्यान्तु द्विरुन्मृजेत् ॥
कूर्च्चेन क्षालयेत् पाणी एभिर्मन्त्रैश्च विन्यसेत्।
श्रीमायाकूर्च्चवाग्कामत्रिपुटाभगवर्त्तकैः ॥
कामकलाङ्कुशाभ्याञ्च चक्षुरादिकर्णकान्।
नाभिहृन्मस्तकं चांसौ स्पृष्ट्वा शम्भुर्भवेत् क्षणात् ॥
आचम्यैवं छिन्नमस्तां वरारोहे प्रपश्यति ॥"
ततः प्राणायामान्तं विधाय षोढान्यासं कुर्य्यात्।
मन्त्रषोढां ततः कुर्य्यात् त्रैलोक्यवशकारिणीम्।
श्रीबालात्रिपुटायोनिप्रासादप्रणवैस्तथा ॥
कालीवध्वङ्कुशैः कामकलाकूर्च्चास्त्रकैः क्रमात्।
षोडशीमनुवर्णैश्च पृथगष्टादशाधरैः ॥
एभिर्वीजैर्म्मातृकार्णान् स्वेषु स्थानेषु विन्यसेत्।
एषा ब्रह्मस्वरूपा हि वीजषोढा प्रकीर्त्तिता ॥
अस्याः संन्यसनात् सर्व्वे यजुर्द्देवा भवन्ति हि।
सर्व्वैश्वर्य्ययुतास्ते हि जीवन्मुक्ता दशाब्दतः ॥"*॥
तत ऋष्यादिन्यासः।
अस्य मन्त्रस्य भैरव ऋषिः सम्राट् छन्दः छिन्नमस्ता देवता हुंकारद्वयं वीजं स्वाहा शक्तिरभीष्टार्थसिद्धये विनियोगः। यथा, शिरसि भैरवऋषये नमः। मुखे सम्राट्छन्दसे नमः। हृदि छिन्नमस्तायै देवतायै नमः। गुह्ये हूँ हूँ वीजाय नमः। पादयोः स्वाहाशक्तये नमः ॥ ततः कराङ्गन्यासौ। ओम् आं खड्गाय हृदयाय स्वाहा। इति कनीयसि। ओम् ईं सुखड्गाय शिरसे स्वाहा। इति पवित्राङ्गुलयोः। ओम् ऊं सुवज्राय शिखायै स्वाहा। इति मध्यमयोः। ओम् ऐं पाशाय कवचाय स्वाहा। इति तर्ज्जन्योः। ओम् औं अङ्कुशाय नेत्रत्रयाय स्वाहा। इत्यङ्गुष्ठयोः। ओम् अः सुरक्षरक्षासुररक्षायास्त्राय फट्। इति करतलपृष्ठयोः। एवं हृदयादिषु। तदुक्तं भैरवतन्त्रे।
"उद्धरेत् पूर्व्वमाकारं विन्दुलाञ्छितमस्तकम्।
खड्गाय हृदयायेति स्वाहायुक्तं कनीयसि ॥
ईंकारञ्च ततो देवि! चन्द्रकोटिसमप्रभम्।
सुखड्गाय ततो वाच्यं शिरसे तदनन्तरम् ॥
स्वाहायुक्तं ततो वाच्यं पवित्राङ्गुलिसंयुतम्।
ऊकारञ्च ततो वाच्यं विन्दुलाञ्छितमस्तकम् ॥
सुवज्राय ततो वाच्यं शिखायै तदनन्तरम्।
स्वाहान्तं मध्यमायाञ्च विन्यसेत्तदनन्तरम् ॥
मात्रां द्वादशिकां देवीं विन्यसेच्च ततः परम्।
पाशायेति समुच्चार्य्य प्रवदेत् कवचाय च ॥
स्वाहान्तं विन्यसेन्मन्त्रं तर्ज्जन्यां तदनन्तरम्।
औकारञ्च ततो देवि! चाङ्कुशं तदनन्तरम् ॥
नेत्रत्रयाय स्वाहान्तमङ्गुष्ठे करयोर्द्वयोः।
अकारञ्च विसर्गान्तं सुरक्षारक्षसंयुतम् ॥
असुरक्षायसंयुक्तं अस्त्रायेति ततः परम्।
फट्कारसमायुक्तं विन्यसेत् करयोर्द्वयोः ॥
हृदि मूर्द्ध्नि शिखायाञ्च कवचे नेत्रमस्तके।
यावदस्त्रं चतुर्द्दिक्षु विदिक्षु च यथाक्रमम् ॥"
विश्वसिद्धितन्त्रे भैरववाक्यम्।
"उद्धरेत् प्रणवं पूर्व्वमाकारं विन्दुसंयुतम्।"
इत्यादिवाक्यात् कराङ्गेषु प्रणवसम्वलितो न्यासः। ततो मूलेन मस्तकादिपादपर्य्यन्तं पादादिमस्तकपर्य्यन्तं वारत्रयं न्यसेत् ॥ * ॥
ततो ध्यानम्।
"स्वनाभौ नीरजं ध्यायेदर्कं विकसितं सितम्।
तत्पद्मकोषमध्ये तु मण्डलं चण्डरोचिषः ॥
जवाकुसुमसङ्काशं रक्तबन्धूकसन्निभम्।
रजःसत्त्वतमोरेखायोनिमण्डलमण्डितम् ॥
मध्ये तु तां महादेवीं सूर्य्यकोटिसमप्रभाम्
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम् ॥
प्रसारितमुखीं देवीं लेलिहानाग्रजिह्विकाम्।
पिबन्तीं रौधिरीं धारां निजकण्ठविनिर्गताम् ॥
विकीर्णकेशपाशाञ्च नानापुष्पसमन्विताम्।
दक्षिणे च करे कर्त्रीं मुण्डमालाविभूषिताम् ॥
दिगम्बरीं महाघोरां प्रत्यालीढपदे स्थिताम्।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ॥
रतिकामोपरिष्ठाञ्च सदा ध्यायन्ति मन्त्रिणः।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम्
विपरीतरतासक्तौ ध्यायेद्रतिमनोभवौ।
डाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः ॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीम्।
वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगम्बरीम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः।
नागयज्ञोपवीताढ्यां ज्वलत्तेजोमयीमिव ॥
प्रत्यालीढपदां दिव्यां नानालङ्कारभूषिताम्।
सदा द्वादशवर्षीयामस्थिमालाविभूषिताम् ॥
डाकिनीं वामपार्श्वे तु कल्पसूर्य्यानलोपमाम्।
विद्युज्जटां त्रिनयनां दन्तपंक्तिवलाकिनीम् ॥
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम्।
महादेवीं महाघोरां मुक्तकेशीं दिगम्बरीम् ॥
लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः ॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीम्।
करस्थितकपालेन भीषणेनातिभीषणाम् ॥

ानुष्टुभं मन्त्रराजं सहस्रं प्रजजाप ह ॥
शाखस्यामले पक्षे अष्टम्यां पुष्ययोगतः ।
ता प्रतिष्ठा भो विप्राः शोभने गुरुवासरे ॥"
महाप्रसादमाहात्म्यं यथा,—
बहून् नियोजयेत्तत्र लोकान् त्रैवर्गिकानुत ।
ैकिकव्यवहारोऽयं पचति श्रीः स्वयं ध्रुवम् ।
ुङ्क्ते नारायणो नित्यं तथा पक्वं शरीरवान् ॥
अन्नं तद्धि नैवेद्यं पायसं स्वर्ह्णि धारणात् ।
न्नवाम्मत्यपानादिमहादुरितनाशनम् ॥
गाणाणाम्मानसं पापं दर्शनाद्दृष्टिजं तथा ।
आसादाद्वाकृतं पापं श्रावणश्च यपोहति ॥
स्पर्शनात् त्वकृतं पापं मिथ्यालापं तथा द्विजाः ॥
मात्रे लेपाद्दहेत् पापं शारीरं वै न संशयः ॥

महापवित्रं हि हरेर्निवेदितं
नियोजयेद्यः पितृदेवकर्म्मसु ।
तृप्यन्ति सर्व्वे पितरः सुराश्च
प्रयान्ति लोकं मधुसूदनस्य ॥

गातः परं हि वक्ष्यामि हयकथेषु भो द्विजाः ॥
नराणां रूपमास्थाय तदश्नन्ति दिवौकसः ॥
विष्णवालयगतं तद्धि निर्म्माल्यं पतितादयः ।
स्पृशन्ति चेन्न दुष्टं हि यथा विष्णुस्तथैव तत् ॥
निन्दन्ति ये तदन्नं मूढ़ाः पण्डितमानिनः ।
स्वयं दण्डधरस्तेषु सहते नापराधिनः ॥
येषामत्र न दण्डश्चेद्ध्रुवा तेषां हि दुर्गतिः ।
कुम्भीपाके महाघोरे पच्यन्ते तेऽतिदारुणे ॥
चिरस्थमपि संशुष्कं नीतं वा दूरदेशतः ।
यथा तथोपयुक्तं तत् सर्व्वपापापनोदनम् ॥
नैवेद्यान्नं जगन्नाथस्य गाङ्गं वारि समं द्वयम् ।
दृष्टिस्पर्शनचिन्ताभिर्भक्षणादघनाशनम् ॥"

इत्युत्कलखण्डम् ॥ * ॥

स च कलेर्दशसहस्रवर्षपर्य्यन्तं पृथिव्यां स्थास्यति। यथा,—

"शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् ।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

(स्वनामख्यातो बहुलग्रन्थकर्त्ता पण्डितविशेषः। अयं हि तैलङ्गवंशोद्भवः। अस्य पिता पेरमभट्ट इति ख्यातः। असौ पण्डितराजजगन्नाथो दिल्लीप्रभोः शाहजहान्-ज्येष्ठसूनोर्यवनस्य दाराशाहस्य सभायामासीत्। यतोऽनेन जगदाभरणकाव्ये दाराशाहस्यैव यशोवर्णनं कृतम्। अपिच भामिनीविलाससमाप्तौ "दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः" इत्युक्तम्। दाराशाहस्तु १५८१ एकाशीत्यधिकपञ्चदशशतशकाब्दपर्य्यन्तं जीवित आसीत्। अतः पण्डितराजजगन्नाथोऽयं तात्कालिक इत्येवायातम्। अनेन पण्डितराजपदवी शाहजहान्सम्राजो दिल्लीप्रभोः प्राप्तेति तत्कृतासफविलासनामकग्रन्थादेवागम्यते यथा,—

"अथ सकललोकविस्तारविस्तारितमहोपकारपरम्पराधीनमानसेन प्रतिदिनमुदयदनवद्यगद्यपद्याद्यनेकविद्याविद्योतितान्तःकरणैः कविभिरुपास्यमानेन कृतयुगीकृतकलिकालेन कुमतिदृणजालसमाच्छादितवेदवनमार्गविलोकनाय समुद्दीपितसुतर्कदहनज्वालाजालेन मूर्त्तिमतेव नव्वावासफखानमनःप्रसादेन माथुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन सार्व्वभौमश्रीशाहजहान्प्रसादाधिगतपण्डितराजपदवीविराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्येयमाख्यायिका निरमीयत। सेयमनुग्रहेण सहृदयानामनुदिनमुल्लासिता भवतात् ॥"

एतत्पण्डितविरचिता बहवो ग्रन्थाः सन्ति। तेषु अद्यावधि ज्ञातास्त्वेते, रसगङ्गाधरः १, यमुनावर्णनचम्पूः २, रतिमन्मथनाटकम् ३, वसुमतीपरिणयनाटकम् ४, जगदाभरणकाव्यम् ५, प्राणाभरणकाव्यम् (कामरूपदेशाधिपस्य प्राणनारायणमहीपस्य स्तुतिरूपोऽयं ग्रन्थः) ६, पीयूषलहरी ७, अमृतलहरी (यमुनास्तुतिरूपोऽयं ग्रन्थः) ८, सुधालहरी (सूर्य्यस्तवरूपोऽयं ग्रन्थः) ९, करुणालहरी (विष्णुलहरी वा) १०, लक्ष्मीलहरी ११, भामिनीविलासः १२, मनोरमाकुचमर्द्दिनी १३, अश्वधाटीकाव्यम् १४, आसफविलासः १५ ॥ * ॥

तर्कपञ्चाननोपाधिकोऽपरपण्डितविशेषः। अयं हि विवादभङ्गार्णवसेतु-रामचरितादिग्रन्थानां प्रणेता। पितास्य रुद्रदेवः माता च अम्बिका। रुद्रदेवस्तु चतुःषष्टितमवयसि पूर्व्वसहधर्म्मिण्यां सन्ततायां मृतायां संसारविरक्तः काशीवाससुखमभिलषन् चिरसुहृदं त्रिवेणीनन्दपुरनिवासिनं ज्योतिर्विद्याविशारदं सुप्रसिद्धं चन्द्रशेखरवाचस्पतिमभिगम्य स्वीयान्तिमदशाफलाफलं पृष्टवान्। चन्द्रशेखरस्तु रुद्रदेवस्य जन्मलग्नानुसारतश्चरमे वयसि सुप्रसिद्धपुत्त्रलाभरूपं शुभफलमवगम्य वासुदेवनाम्नः कस्यचिद् विप्रवरस्याम्बिकानाम्नीं कन्यामुद्वाहयामास। रुद्रदेवस्तु ज्योतिर्विद्यापारदर्शिनश्चन्द्रशेखरस्य वाक्यादम्बिकां परिणीय सत्पुत्त्रप्राप्तिकामो काशीमभिगम्य विश्वेश्वरमुद्दिश्यैकविंशतिपुरश्चरणं कृतवान्। चरमपुरश्चरणदिवसीययामिन्याः शेषयामे प्राप्तसत्पुत्त्रलाभस्वप्नः प्रहृष्टमनाः पुनः स्वस्थानं त्रिवेणीप्रदेशं प्रत्यावृत्य गार्हस्थ्यधर्म्मानुरक्तो बभूव। अथ गच्छति काले पतिपरायणाम्बिका गर्भमुपलभ्य १६१६ शके (११०१ परिमितवङ्गाब्दे) सौराश्विनस्य देवीपक्षीयपञ्चम्यां पुत्त्ररत्नं जगन्नाथं प्रसूतवती। रुद्रदेवस्तु नवजातपुत्त्रस्य जातसंस्कारादिकं विधाय राश्यनुसारतो रामराम इति नाम चक्रे परं कुमारस्य मातामहो वासुदेवः अस्मिन्नेव समये श्रीजगन्नाथक्षेत्रात् तीर्थस्थानात् प्रत्यावृत्य दौहित्रमुखं दृष्ट्वा जगन्नाथ इत्याख्ययैनमयोजयत्। ततः प्रभृत्येवायं जगन्नाथ इति नाम्ना प्रसिद्धोऽभूत्।

अयन्तु बाल्यावस्थायामतीवचञ्चलप्रकृतिर्दुर्द्दान्तोऽपि स्मृतिशक्तिसत्यवादितादिगुणनिकरेण बहूनां नितरां प्रियपात्रमासीत्। अयं प्रथमतः पितृसन्निधाने व्याकरणमधीत्य ततो ज्येष्ठतातस्य न्यायलङ्कारोपनामकस्य भवदेवस्य समीपे साहित्यादिकमधीतवान्। ततो भवदेवस्य परलोकप्राप्त्यनन्तरं कामालपुरनिवासिनं रघुदेवविद्यावाचस्पतिं अध्यापकत्वेन स्वीकृत्य दर्शनशास्त्रादिचिन्तया कालं यापयामास। अस्य एतादृशी प्रखरा स्मृतिशक्तिरासीत् यदनधीतस्यापि भिन्नदेशीयभाषायां निबद्धस्य ग्रन्थस्य द्वित्रिपत्राणि एकवारमात्रमाकर्ण्यैवायं अनर्गलं अभ्रान्त इव आवर्त्तयितुं समर्थः। एतादृशीमेधाशक्तिरेवैनं अल्पसमयेन बहुशास्त्रपारयायिनमकरोत्।

पञ्चदशवर्षवयस्क एवायं द्रौपदीनाम्नीं सुलक्षणां कन्यामुपनीतवान्। विवाहात् परमेवास्य ज्येष्ठतातो भवदेवः परलोकं गतः। माता तु पूर्व्वमेव कालधर्म्ममुपगता पिता च चतुर्व्विंशतिवयस्कमेनमवलोक्यैव इह लोकं तत्याज। पितृवियोगानन्तरमेवायं छात्रानध्यापयितुं प्रवृत्त आसीत्।

अथ कदाचित् वर्द्धमानाधिपतिर्महाराजत्रिलोकचन्द्रवाहादुरोऽस्य पाण्डित्यप्रभावमवगम्य राजसभामधिरोहयितुं निमन्त्रयामास। जगन्नाथस्तु राजप्रसादमुपलब्धुं राजसभां प्रविश्य तर्कजालेन तत्रस्थान् पण्डितान् जितवान्। महीपतिस्तु जगन्नाथस्य तादृशीं बुद्धिशक्तिं मेधाशक्तिञ्चावलोक्य विशेषेण परीक्षितुं पथि दृष्टस्य समग्रवस्तुनो वार्त्तां विज्ञापयितुमादिदेश। जगन्नाथस्तु नृपतेर्मनोऽभिप्रायमवगम्य त्रिवेणीप्रदेशात् वर्द्धमानपर्य्यन्तं यावत् पथि स्थितानां प्रत्येकपादपमन्दिराणामपि वृत्तान्तं कथयामास। राजा तु स्वकर्म्मचारिभिरेतद्वृत्तान्तस्य याथार्थ्यमुपगम्य सातिशयेनानन्दितो बभूव।

एकदा मुर्शिदाबादाख्यप्रदेशनृपतेर्यवनस्य मन्त्री नन्दकुमारोऽस्य पाण्डित्यमवगम्य (नवाब) महीपतिसमीपमेनमानयामास। नृपतिस्तु बहुविधैर्दुरूहप्रश्नैरेनं वञ्चयितुमभिललाष परं जगन्नाथः स्वीयबुद्धिप्राखर्य्येण नृपतिकृतप्रश्नानां सदुत्तरं दत्त्वा तं सन्तोष्य च तस्माद् बहुलार्थप्रदां भूम्यादिसम्पत्तिं लब्धवान्।

अथ कालचक्रगत्यनुसारतो यवनराजानां वैभवरविरस्तं गतः इंराजराजानां सौभाग्यसमयः समुपागतश्च। तदा इंराजनृपतयस्तदानीन्तनप्रजारञ्जनार्थं विचारकार्य्यस्य सौकर्य्याय जगन्नाथतर्कपञ्चाननं समाहूय व्यवहारोपयोगिनं ग्रन्थमेकं प्रणेतुमादिदेश। जगन्नाथस्तु नवीननृपतिभिस्तथादिष्टः "विवादभङ्गार्णवसेतु" नामकं ग्रन्थं प्रणीतवान्।

अस्य द्विषष्टितमवयसि सहधर्म्मिणी द्रौपदी बहुपुत्त्रपौत्त्रादिकं संरक्ष्य परलोकं गता। अस्य द्वौ पुत्त्रौ तिस्रः कन्याश्चाभवन्। पुत्त्रयोर्धनश्यामसार्व्वभौम एव ज्येष्ठः प्रतिभाशाली बहुशास्त्र-

पारदर्शी च। जगन्नाथोऽयमन्तिमावस्थायां वृद्ध-प्रपौत्रादिसुखसमवलोक्य अतिदुर्लभमेनादृशं संसारसुखमनुभूय शकनरपतेः १७२९ वत्सरे (१२१३ वङ्गाब्दे) आश्विनशुक्लपक्षीयषष्ठीयां गङ्गातीरे प्रयातुं तस्थौ। अस्यौः प्राक्काल-पर्य्यन्तमेवास्येन्द्रियवैपरीत्यं न जातम्। गङ्गा-तीरं गतेन मुमूर्षुणामुना अन्तःप्रभाते कृतः श्लोको यथा,—

“केचिद्वदन्ति ब्रह्म निराकारं नराकारञ्च केचन।
वयन्तु दीर्घयोगेन नीराकारमुपास्महे।” इति।)

जगन्नुः, पु, (जगता विश्वस्थजीवजातेन नम्यते इति। जगत्+नम्+बाहुलकात् डुः। यद्वा, नु+क्विप् दृशो। नु वेदनं स्तुतिरित्यर्थः जगति विश्वसंसारे नुः स्तुतिर्यस्य। सर्व्वजीवस्तुत्य-त्वादस्य तथात्वम्।) अग्निः। वायुः। इति विश्वः शब्दरत्नावली च॥ जगनुरपि पाठः॥

जगरः, पुं, (जागर्त्ति संग्रामेऽनेनेति। जागृ+अप्। पृषोदरादित्वात् साधुः।) कवचः। इति हेमचन्द्रः। ३। ४३०॥

जगलः, पुं, (पुनःपुनरतिशयेन वा गलतीति। गल स्रवणे+यङ्लुगन्तात् अच्। संज्ञापूर्व्वक-त्वात् “दीर्घोऽकितः।” ७।४।८३। इति न दीर्घः। यद्वा, जन्+डः। जः जातः सन् गलति निर्गच्छ-तीति। गल+अच्।) सुराकल्कम्। मेदा इति भाषा॥ तत्पर्य्यायः। मेदकः २। इत्यमरः। २। १०। ४२॥ (यथा, शार्ङ्गधरे मध्य-खण्डे दशमेऽध्याये।

“मदधौ जगलो ज्ञेयो मेदको जगलाह्वयः।”)

मदनवृक्षः। पिष्टमद्यम्। (तद्गुणा यथा,—

“कृतप्रवाहिकाटोपकफवातार्शसां हितः।
जगलो ग्राहिरूक्षोष्णो दीपनो मलपाचनः॥”
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये।

“ग्राह्युष्णो जगलः पक्ता रूक्षस्तृट्कफशोषकृत्।
भेदः प्रवाहिकाटोपदुर्नामानिलशोथहृत्॥”
इति सुश्रुते सूत्रस्थाने ४५ अध्याये।)

धूर्त्ते त्रि। इति मेदिनी। ले, ८१॥ कवचः। इत्यजयपालः। गोमये, क्ली। इति रत्नमाला॥ (यथा, वैद्यकरत्नमालायाम्।

“गोमयं जगलं गोविट् गोवरं तच्च गोमलम्।”)

जग्धं, त्रि, (अद्यते स्म इति। अद् भक्षणे+क्तः। “अदो जग्धिर्ल्यप्ति किति।” २। ४। ३६। इति जग्ध्यादेशः। इकार उच्चारणार्थः।) भुक्तम्। इत्यमरः। ३। २। ११०॥ (“खिन्नं चर्म्म कुटजवल्कमनस्तु भावम्।” इति वैद्यकचक्रपाणिसंग्रहेऽतीसाराधिकारे।)

जग्धिः, स्त्री, (अद भक्षणे+क्तिन्। “अदो जग्धि-र्ल्यप्ति किति।” २। ४। ३६। इति जग्ध्या-देशः।) भोजनम्। इत्यमरः। २। ९। ५५॥ भक्षणम्। इति हेमचन्द्रः। (यथा, मनौ। ३। ११५।

“अदत्त्वा तु य एतेभ्यः पूर्व्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः॥”)

जग्मिः, पुं, (गच्छति सततो वातीति। गम+“आदृगमहनजनः किकिनौ लिट् च।” ३।२।१७१। इत्यस्य “भाषायां धाञ्कृसृजनिगमिनमिभ्यः।” इति वार्त्तिकोक्त्या किः लिड्वच्च।) वायुः। इति केचित्॥

जघनं, क्ली, (हन्यते इति। हन्+“हन्तेः शरीरा-वयवे द्वे च।” उणां। ५। ३२। इति अच् द्वित्वञ्च। “अभ्यासाच्च।” ७। ३। ५५। इति कुत्वम्।) स्त्रीकट्याः पुरोभागः। (यथा, माघे। ५। २९।

“नाभिह्रदैः परिगृहीतरयाणि यत्र
स्त्रीणां बृहज्जघनसेतुनिवारितानि॥”)

कटिः। इति मेदिनी। ने, ६७॥ (यथा, देवी-भागवते। १। ९। ८१।

“भगवान् त्रिगुणं चक्रे जघनं विमलौ तदा।
शीर्षे सन्दधतां तत्र जघने परमाद्भुते॥”)

जघनकूपकौ, पु, (जघनकूपे इव कायतः इति। कै+कः।) कुकुन्दरौ। इति हलायुधः॥ द्विवचनान्तोऽयं शब्दः॥

जघनेफला, स्त्री, (जघने इव मध्यभागे फलमस्याः।) काकोडुम्बरिका। इत्यमरः। २। ४। ६१॥

जघन्यः, त्रि, (कुत्सितं हन्यते निन्द्यते इति। हन+यङन्तात् अचो यत्। अनित्यमागमशासन-मिति नुगमादनुनासिकान्तस्येति न नुक्। यद्वा, जघनमिव। “शाखादिभ्यो यत्।” ५। ३। १०३। इति यत्।) चरमः। (यथा, वैद्यकचक्र-पाणिसंग्रहे स्वेदाधिकारे।

“उत्तमस्य पलं मात्रा त्रिभिरक्षैश्च मध्यमे।
जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च॥”)

गर्हितः। (यथा, महाभारते। २। ३५। १२।

“तत्र द्यूतमभवन्नो जघन्यं
तस्मिन् जिताः प्रव्रजिताश्च सर्व्वे॥”॥

जघने कटिदेशे भवम्। दिगादित्वात् यत्।) मेहने, क्ली। इति मेदिनी। ये, ८३॥ पुं, शूद्रः। इति शब्दरत्नावली॥ (हीनजातिमात्रम्। यथा, मनौ। ८। २६६।

“उत्तमो वैश्यमावस्तु जघन्यो वधमर्हति॥”
“हीनजातिस्तूत्तमजातीयां कन्यामिच्छन्ती-मनिच्छन्तीं वा गच्छन् आत्मपेयाऽङ्गच्छेदन-मारणात्मकं वधमर्हति।” इति तट्टीकायां कुल्लूकभट्टः॥ *॥ पृष्ठभागः। यथा, रामा-यणे। २। १०३। २८।

“गतो जघन्यं सहितैः स्वमन्त्रिभिः
पुरप्रधानैश्च तथैव सैनिकैः।
अनेन धर्म्मज्ञतमेन धर्म्मवा-
नुपोपविष्टो भरतस्तदाग्रजम्॥”

“जघन्यं जघनभागं पृष्ठभागमाश्रितः सन्।” इति तट्टीकायां रामानुजः॥ *॥ राजानुचर-विशेषः। यथा, बृहत्संहितायाम्। ६९। ११, ३१—३४।

“मध्यामरे वामनको जघन्यः
कुब्जोऽपरो मण्डलकोऽथ सामी।
पूर्व्वोक्तभूपानुचरा भवन्ति
सङ्कीर्णसंज्ञाः प्रथु लक्षणैस्तान्॥”

“मालव्यसेवी तु जघन्यनामा
खण्डेन्दुतुल्यश्रवणः सुसन्धिः।
शुक्रेण सारः पिशुनः कविश्च
रूक्षच्छविः स्थूलकराङ्गुलीकः॥
क्रूरो धनी स्थूलमतिः प्रतीत-
स्ताम्रच्छविः स्यात् परिहासशीलः।
उरोऽङ्घ्रिहस्तैर्बलवान् सिरालः
परन्ध्रधाम्नश्च जघन्यनामा॥”)

जघन्यजः, पुं स्त्री, (जघन्ये चरमे जायते इति। जन्+“सप्तम्यां जनेर्डः।” ३। २। ९७। इति डः।) शूद्रः। कनिष्ठे, त्रि। इति मेदिनी। जे, ३९॥ (यथा, महाभारते। १। ६५। ११।

“एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते।
जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः॥”)

जघ्निः, पुं, (हन्यते इति। हन+“आदृगमहन-जनेति।” ३। २। १७१। इति किन् द्वित्वञ्च।) हननयोग्यास्त्रम्। इति संक्षिप्तसारः॥ (यथा, ऋग्वेदे। ९। ६१। २०।

“जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवे दिवे।”)

जघ्नुः, त्रि, (हन्तीति। हन हिंसे+“कुर्भ्रश्च।” उणां। १।२३। चकारात् हन्तेरपि कुः द्वित्वञ्च।) हन्ता। हननकर्त्ता। इत्युणादिकोषः॥

जङ्गमः, त्रि, (पुनः पुनरतिशयेन वा गच्छतीति। गम्+यङ्+अच्।) अस्थावरः। गतिशक्तिविशिष्टः। तत्-पर्य्यायः। चरिष्णुः २ चरः ३ चलः ४ इङ्गः ५ चराचरः ६। इत्यमरः। ३। १। ७३॥ (यथा, रघौ। २। ४४।

“मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः॥”

“ओषधयस्तावद्द्विविधाः स्थावरा जङ्गमाश्च।”
“जङ्गमास्त्वपि चतुर्व्विधा जरायुजाण्डजस्वेद-जोद्भिज्जाः। तत्र पशु मनुष्य-व्यालादयो जरा-युजाः। खग-सर्प सरीसृप-प्रभृतयोऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्र-गोपमण्डूकप्रभृतय उद्भिज्जाः।” इति सुश्रुते सूत्रस्थाने प्रथमेऽध्याये।)

जङ्गमकुटी, स्त्री, (जङ्गमा गतिशक्तिविशिष्टा कुटी गृहमिव।) छत्रम्। इति त्रिकाण्डशेषः॥

जङ्गलं, त्रि, (पुनः पुनरतिशयेन वा गलतीति। गल+यङ्+अच्। पृषोदरादित्वात् साधुः।) निर्ज्जलदेशः। इति शब्दरत्नावली॥ निर्ज्जन-स्थानम्। पिशिते, क्ली। इति मेदिनी। ले, ८१॥

जङ्गालः, पु, (जङ्गं कुटिलगतिं जलमपि आलो-तीति। अल+“कर्म्मण्यण्।” ३।२।१। इत्यण्।) दीर्घसेतुः। जाङ्गाल इति भाषा॥ तत्-पर्य्यायः। आलिः २ संहारः ३ सेतुः ४ संवरः ५। इति जटाधरः॥

जङ्गुल, क्ली, विषम्। इति त्रिकाण्डशेषः॥

जङ्घा, स्त्री, (जङ्घन्यते कुटिलं गम्यतेऽनया। हन गतौ च यङ्लुगन्तात्+“अचोऽन्येष्वपि दृश्यते।”

ड: ।) गुल्फोर्द्ध्वजान्वधोभाग: । जाङ् इति भाषा ॥ तत्पर्य्याय: । प्रसृता २ । इत्यमर: ॥ टङ्गा ३ टङ्कम् ४ टङ्किका ५ । इति शब्दरत्नावली ॥ ( यथा, महाभारते । ५ । १३३ । १६ ।
"शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ॥")

जङ्घाकरिक:, पुं, (जङ्घा तत्साध्यगतिरेव आकरो निधि: जीविकानिर्व्वाहवस्त्वित्यर्थ: । सोऽस्यास्तीति। जङ्घाकर+"अत इनिठनौ ।" ५ । २ । ११५ । इति ठन् ।) धावक: । तत्पर्य्याय: । जाङ्घिक:२ । इत्यमर: । २ । ८ । ७३ ॥ जाकपत्नी ३ । इति शब्दरत्नावली ॥

जङ्घात्राणं, क्ली, ( त्रायतेऽनेनेति । त्रै + करणे ल्युट् । त्राणं वर्म्म । ततो जङ्घायास्त्राणमिति । ) जङ्घावमाद्द: । तत्पर्य्याय: । मङ्क्षुयम् २ । इति त्रिकाण्डशेष: ॥

जङ्घाल:, त्रि, ( प्रशस्ता वेगवती जङ्घा अस्त्यस्येति । जङ्घा+"सिध्मादिभ्यश्च ।"५।२।९७। इति लच् । जङ्घाबलेनैव वेगस्य जनकत्वात् ।) अतिवेगवान् । तत्पर्य्याय: । अविजव: २ । इत्यमर: । २ । ८ । ७३ ॥ ( यथा, काशीखण्डे गङ्गामाहात्म्ये । २९ । ६४ ।
"जाह्नवीच्छा जगन्माता जप्या जङ्घालदीर्घिका ॥" )
हरिण: । रुरु: । कुरङ्ग: । ऋश्य: । पृषत: । न्यङ्कु: । शम्बर: । राजीव: । मुण्डी । ( यथा,—
"एणहरिणर्क्ष्यकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जङ्घाला मृगा: कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च ॥" इति सुश्रुते सूत्रस्थाने ४६ अध्याय: ॥)
एषां मांसगुणा: ।
"जङ्घाला: प्रायश: सर्व्वे पित्तश्लेष्महरा: स्मृता: ।
किञ्चिद्वातकराश्चापि लघवो बलवर्द्धना: ॥"
इति भावप्रकाश: ॥

जङ्घाशूलं, क्ली, ( जङ्घाया: शूलं रोगविशेष: । ) जङ्घावेदना । तदौषधं यथा,—
"हरीतकी शृङ्गवेरं देवदारु च चन्दनम् ।
काञ्जिकेनातुरस्येन अपामार्गस्य मूलकम् ॥
जङ्घाशूलमुग्रं हन्ति सप्तरात्रे तु नाशयेत् ॥"
इति गारुडे १८७ अध्याय: ॥

जज, युधि । इति कविकल्पद्रुम: ॥ (भ्वां-परं-अकं-सेट् ।) जजति । युधि योधने । इति दुर्गादास: ॥

जञ्ज, इ युधि । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-अकं-सेट् । ) इ, जञ्जति । युधि योधने । इति दुर्गादास: ।

जञ्जपूक:, त्रि, (पुन:पुनरतिशयेन वा जपतीति । जप+यङ्+"यजजपदशां यङ: ।"३।२।१६६। इति ऊक: ।) पुन:पुनर्जपकर्त्ता । इति मुग्धबोधम् ॥

जट, संहतौ । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-अकं-सेट् । ) जटति केश: परस्परं लग्न: स्यादित्यर्थ: । इति दुर्गादास: ॥

जटा, स्त्री, ( जटति परस्परं संलग्ना भवतीति । जट्+अच् । यद्वा, जायते प्रादुर्भवतीति । जन्+"जनेष्टन् लोपश्च ।" उणां । ५ । ३० । इति टन् अन्त्यलोपश्च ।) व्रतिनां शिखा । लग्नकच: । तत्पर्य्याय: । सटा २ । इत्यमर: ॥ जटि:३ जटी४ जूट:५ जुटकम्६ शटम्७ कोटीरम् ८ जूटकम् ९ हस्तम् १० । इति शब्दरत्नावली ॥ (यथा, महाभारते ।७।११२।२।
"नीला: प्रसन्नाश्च जटा: सुगन्धा
हिरण्मयरज्ज्वग्रथिता: सुदीर्घा: ॥")
मूलम् । यथा,—
"यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणि: ॥"
इति श्रीभागवते श्रुतिस्तवे ८७ अध्याय: ॥
मांसी । इति मेदिनी । टे, १५ ॥ रुद्रजटा । ( यथा, सुश्रुते कल्पस्थाने ७ अध्याये ।
"कालेयकं पद्मकञ्च मधुकं नागरं जटाम् ॥")
शतावरी । इति राजनिर्घण्ट: ॥ कपिकच्छु: । इति रत्नमाला ॥ ( वेदपाठविशेष: । यथा,—
"जटा माला शिखा रेखा ध्वजो दण्डो रथो घन: ।
अष्टौ विकृतय: प्रोक्ता: क्रमपूर्व्वं महर्षिभि: ॥")

जटाजूट:, पुं, ( जटानां जूट: समूह: । ) जटासमूह: । यथा, महानाटके ।
"जटाजूटग्रन्थिं दृढयति रघूणां परिवृढ: ॥"
शिवजटा च ॥

जटाज्वाल:, पुं, (जटेव ज्वाला यस्य ।) प्रदीप: । इति हारावली । २४ ॥

जटाटङ्क:, पुं, ( जटा टङ्क इवास्य । ) शिव: । इति त्रिकाण्डशेष: ॥

जटाटीर:, पुं, ( जटामटतीति । अट्+बाहुलकादीरन् ।) शिव: । इति त्रिकाण्डशेष: ॥

जटाधर:, पुं, ( धरतीति । धृ+अच् । जटाया धर: । ) शिव: । इति शब्दरत्नावली ॥ (यथा, महाभारते । १३ । १७ । १२६ ।
"त्रिनेत्रश्च विषमाक्षो मणिविद्धो जटाधर: ॥")
बुद्धभेद: । इति त्रिकाण्डशेष: ॥ पर्य्यायनानार्थकोषाख्याभिधानतन्त्रकारश्च ॥ ( स्कन्दस्यानुचरविशेष: । यथा, महाभारते । ९ । ४५ । ५९ ।
"परिश्रुत: कोकनद: शुक्लकेशो जटाधर: ॥"
देशविशेष: । स तु दाक्षिणात्यप्रदेश: । यथा, बृहत्संहितायाम् । १४ । १३ ।
"अथ दक्षिणेन ।" इत्युक्त्वा,—
"क्रौञ्चद्वीपजटाधरकावेर्य्यो रिष्यमूकश्च ॥"
इत्युक्तवान् ॥

जटाधारिन्, त्रि । यथा, रामायणे ।२।८६।२५।
"जटाधरौ तौ द्रुमचीरवाससौ
महाबलौ कुञ्जरयूथपोपमौ ॥" )

जटामांसी, स्त्री, ( जटां जटाकृतिं मन्यते इति । मन+ "मनेर्दीर्घश्च ।" उणां ।३ । ६४। इति सो दीर्घश्च । ) सुगन्धिद्रव्यविशेष: । तत्पर्य्याय: । नलदम् २ वह्निनी ३ पेषी ४ मांसी ५ कृष्णजटा ६ जटी ७ किरातिनी ८ जटिला ९ लोमशा १० तपस्विनी ११ । इति रत्नमाला ॥ भूतजटा १२ । इति भावप्रकाश: ॥ पेशी १३ क्रव्यादि १४ मिशिका १५ पिशी १६ पेशिनी १७ जटा १८ हिंसा १९ मांसिनी २० जटाला २१ नलदा २२ मेषी २३ तामसी २४ चक्रवर्त्तिनी २५ माता २६ अमृतजटा २७ जननी २८ जटावती २९ जटाभद्रा ३० जड़ामांसी ३१ मिंसी ३२ मिसि: ३३ मिसी ३४ मिषिका ३५ मिषि: ३६ । इति शब्दरत्नावली ॥ अस्या गुणा: । सुरभित्वम् । कषायत्वम् । कटुत्वम् । शीतलत्वम् । कफभूतदाहपित्तनाशित्वम् । कान्तिमोदकारित्वञ्च । इति राजनिर्घण्ट: ॥ तिक्तत्वम् । मेध्यत्वम् । बलप्रदत्वम् । स्वादुत्वम् । त्रिदोषास्रवीसर्पकुष्ठनाशित्वञ्च । इति भावप्रकाश: ॥ अनुलेपनेन ज्वरदाहपतानाशित्वम् । इति राजवल्लभ: ॥

जटायु:, पुं, (जटां याति प्राप्नोतीति । या+"मृगय्वादयश्च" इति निपातनात् कु: । शान्तमध्ये जटं संहतमायुर्यस्य ।) स्वनामख्यातपक्षी । स तु अरुणपुत्र: सम्पातेरनुज: दशरथराजसख: सीताहरणसमये रावणेन हत: । इति रामायणम् ॥ ( यथा, च महाभारते । ३ । २७८ । १—७ ।
"सखा दशरथस्यासीत् जटायुररुणात्मज: ।
गृध्रराजो महावीर: सम्पातिर्यस्य सोदर: ॥
स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम् ।
सक्रोधोऽभ्यद्रवत् पक्षी रावणं राक्षसेश्वरम् ॥
अथैनमब्रवीद्गृध्रो मुञ्च मुञ्च मैथिलीम् ।
ध्रियमाणे मयि कथं हरिष्यसि निशाचर ! ॥
नहि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे वधूम् ।
उक्त्वैवं राक्षसेन्द्रं तं चकर्त्त नखरैर्भृशम् ॥"
"स वध्यमानो गृध्रेण रामप्रियहितैषिणा ।
खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिण: ॥
निहत्य गृध्रराजं स भिन्नाभ्रशिखरोपमम् ।
ऊर्द्ध्वमाचक्रमे सीतां गृहीत्वाङ्केन राक्षस: ॥")
गुग्गुलु । इति मेदिनी । ये, ८४ ॥
("गुग्गुलुर्देवधूपश्च जटायु: कौशिक: पुर: ।
कुम्भोलूखलकं क्लीबे महिषाक्ष: पलङ्कष: ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
"जटायु: कालनिर्य्यास: कौशिको गुग्गुलु: पुर: ॥"
इति वैद्यकरत्नमालायाम् ॥)
सम्पातिः ? — [illegible] सान्तोऽप्ययम् । इति द्विरूपकोष: ॥ ( यथा, महाभारते । १ । ६६ । ७० ।
"अरुणस्य भार्य्या श्येनी तु वीर्य्यवन्तौ महाबलौ ।
सम्पातिं जनयामास वीर्य्यवन्तं जटायुषम् ॥")

जटाल:, पुं, ( जटास्त्यस्येति । जटा+"सिध्मादिभ्यश्च ।" ५ । २ । ९७ । इति लच् । ) कर्च्चूर: । वट: । मुष्कक: । गुग्गुलु: । इति राजनिर्घण्ट: । जटायुक्ते, त्रि । इति शब्दरत्नावली ॥ ( यथा, हरिवंशे । १८० । २२ ।
"चीरिण: शिखिनश्चान्ये जटालोर्द्ध्वशिरोरुहा: ॥")

जनङ्गम पुं (जनभ्यो गच्छतीति । गमश्च । ३ । २ । ४३ । खच मुमागमश्च ।) चाण्डाल । इत्यमर । २ । १० । १६ ॥ (यथा माघे । १५ । २५ ।

अवधीज्जनङ्गम इव
यदि हत धौ इव ननु ।
स्पृशमशुचिवपुरहति न
प्रतिमाननात्तु नितरां नृपोचितम् ॥ )

जनता स्त्री (जनानां समूह । जन + "ग्राम जनबन्धुभ्यस्तल । ४ । २ । ४३ । इति तल ।) जनसमूह । इत्यमर । ३ । ३ । ४२ ॥ (यथा रघौ ११ । ८२ ।

तावुभावपि परस्परस्मितौ
वर्द्धमानपरिहीनतेजसौ
पश्यति स्म जनता दिनात्यये
पार्वणौ शशिदिवाकराविव ॥"* ।
जनस्य भाव ।) जनत्वञ्च ॥

जनन क्ली (जायतेऽस्मिन्निति । जन + अधिकरणे ल्युट् ।) वंश । (जन + भावे ल्युट् ।) जन्म । इति मेदिनी । ने ६६ ॥ (यथा महानिर्वाण तन्त्रे । ३ । ५० ।

जननमरणभीतिभ्रंशि सच्चितस्वरूप
सकलभुवनबीज ब्रह्मचैतन्यमीडे ॥'
उत्पत्ति । यथा कुमारे । १ । ४२ ।

अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभाव ॥

पुं जनयति उत्पादयति जीवानिति । जन + णिच + कर्त्तरि ल्यु । विष्णु । यथा महाभारते । १३ । १४६ । ११२ ।

जननो जनजन्मादिर्भीमो भीमपराक्रम ॥

जनयतीति । जनि + ल्यु उत्पादक त्रि यथा महाभारते । ३ । २६ । २५ ।
"एकत्र चिरवासो हि न प्रीतिजननो भवत ॥ )

जननि स्त्री (जनयति प्राणसुखमिति । जन + णिच + बाहुलकात् अनि ।) जनीनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥

जननी स्त्री, (जनयतीति । जनि + बाहुलकादनि । कृदिकारादिति वा ङीष । यद्वा कृत्यल्युटो बहुलमिति ल्युट टित्वात् ङीप ।) माता । (यथा पञ्चतन्त्रे । १ । २६ ।

निरतिशय गरिमाणं
तेन जनन्या स्मरन्ति विद्वांस ।
यत कमपि वहति गर्भ
महतामपि यो गुरुर्भवति ॥ )

दया । इति मेदिनी । ने ६६ ॥ जनीनामगन्धद्रव्यम् (पर्य्याया यथा —
"पर्पटी रञ्जनी कृष्णा जतुका जननी जनी ।
जतुकृष्णाग्निसंस्पर्शा जतुरसचक्रवर्त्तिनी ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
चर्म्मचटी । इति शब्दरत्नावली ॥ यूथिका । इति शब्दचन्द्रिका ॥ कटुका । मञ्जिष्ठा । अलक्तक । इति राजनिर्घण्ट ॥

जनपद पुं (जनस्य लोकस्य पद आश्रयस्थान यत्र । जन पद वस्तु यत्रेति वा ।) देश । (यथा चाणक्यशतके । ३१ ।

त्यजेदेक कुलस्यार्थे ग्रामस्यार्थे कुल त्यजेत् ।
ग्राम जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥
जनपदनामानि महाभारते भीष्मपर्व्वणि ९ अध्याये कथितानि अतस्तत्रैव विशेषतो द्रष्टव्यानि ॥ )
जन । इति मेदिनी । द ४८ ॥

जनप्रवाद पुं (जनेषु लोकेषु प्रवादोऽपवाद ।) लोकापवाद । तत्पर्य्याय । कौलीनम् २ विगानम् ३ वचनीयता ४ । इति हेमचन्द्र । । २ । १८४ ॥ (यथा महाभारते । २ । ७२ । १६ ।

जनप्रवादान् सुबहून् शृण्वन्नपि नराधिप ।
ह्रिया च धर्म्मसंयोगात् पार्था द्यूतमियात्
पुन ॥ )

जनप्रिय पुं (जनानां प्रिय ।) धान्यकम् । शोभाञ्जनवृक्ष । इति राजनिर्घण्ट ॥ (लोकप्रिये त्रि ॥ )

जनमेजय पुं (जनान् शत्रुजनान् एजयति प्रतापै कम्पयतीति । एजृ कम्पने + णिच + एजे खश । ३ । २ । २८ । इति खश ततो मुमागम ।) परीक्षितराजपुत्त्र । तत्पर्य्याय । राजर्षि २ पारीक्षित ३ । इति त्रिकाण्डशेष ॥ यथा देवीभागवते । २ । ११ । ६ ।

पौरजानपदा लोकाश्चक्रुस्त नृपति शिशुम् ।
जनमेजयनामान राजलक्षणसंयुतम् ॥
जन्मजय इति पाठोऽपि क्वचित् दृश्यते । तत्रि रुक्तिस्तच्छब्दे द्रष्टव्या ॥

अयं हि चतुरशीतिवर्षाणि राज्य कृतवान् । तत्र अश्वमेधादिक बहुयज्ञ कृत्वा पितृवधामर्षात् सर्पसत्र चकार । अन्तेवासी जरत्कारुपुत्त्रेण आस्तीकेन प्रार्थित सर्पसत्रात् विरराम ततश्चिरसंश्रममनाथ भारतादिक श्रुतवान् । वृत्तान्तोऽयं क्रमश प्रदर्श्यते । यथा राजावल्यां १ परिच्छेद ।

पारीक्षितस्तदा राजा नीतिमान् ज्ञाननीतित ।
पृथिवीं पालयामास निवसन् गजसाह्वये
कृत्वा पितृवधामर्षी सर्पेष्टि मुनिभि समम् ।
नाशयामास सर्पाणां कुलानि कुलनायक
हयमेधक्रतूंश्चक्रे समाप्तैर्बहुविस्तरै ।
ब्रह्महत्याभवत्तत्र यागेऽकालकृते तदा ॥
तत पापमभवत् तस्य दारुण पृथिवीपते ।
वैशम्पायनतो व्यासशिष्यात्तपोनिधे ।
श्रुत्वा भारतमाख्यान तत्पापात् मुक्तिमाप स ।
चतुरशीतिवर्षाणि कृत्वा राज्य सुनिर्म्मलम् ।
शतानीक सुत राज्ये स्थापयित्वैव दिव गत ॥'
सोमश्रवसमृषिमसौ पौरोहित्याय वृतवान् ।
तत्कथा यथा महाभारते । १ । ३ । १—२० ।

जनमेजय पारिक्षित सह भ्रातृभि कुरुक्षेत्रे दीर्घसत्रमुपास्ते । तस्य भ्रातरस्त्रय श्रुतसेन उग्रसेनो भीमसेन इति । तेषु तत्सत्रमुपासीनेष्वागच्छत् सारमेय । स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातु समीपमुपागच्छत् । त माता रोरूयमाणमुवाच किं रोदिषि केनास्यभिहत इति । स एवमुक्तो मातर प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति । त माता प्रत्युवाच व्यक्त त्वया तत्रापराद्ध येनास्यभिहत इति । स ता पुनरुवाच नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिह इति । तच्छ्रुत्वा तस्य माता सरमा पुत्त्रदु खार्त्ता तत् सत्रमुपागच्छद्यत्र स जनमेजय सह भ्रातृभिर्दीर्घ सत्रमुपास्ते । स तया क्रुद्धया तत्रोक्तोऽय मे पुत्त्रो न किञ्चिदपराध्यति नावेक्षते हवींषि नावलेढि किमयमभिहत इति न किञ्चिदुक्तवन्तस्ते सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्ट त्वा भयमागमिष्यतीति । जनमेजय एवमुक्तो देवशुन्या सरमया भृश सम्भ्रान्तो विषण्णश्चासीत् । स तस्मिन् सत्रे समाप्ते हास्तिनपुर प्रत्येत्य पुरोहितमनुरूपमन्विच्छमान पर यत्नमकरोत् यो मे पापकृत्या शमयेदिति । स कदाचित् मृगया गत पारीक्षितो जनमेजय कस्मिंश्चित् स्वविषये आश्रममपश्यत् । तत्र कश्चिदृषि रासाञ्चक्रे श्रुतश्रवा नाम तस्य तपस्यभिरत पुत्त्र आस्ते सोमश्रवा नाम । तस्य त पुत्त्रमभिगम्य जनमेजय पारीक्षित पौरोहित्याय वव्रे । स नमस्कृत्य तमृषिमुवाच भगवन्नय तव पुत्त्रो मम पुरोहितोऽस्त्विति । स एवमुक्त प्रत्युवाच जनमेजय भो जनमेजय पुत्त्रोऽय मम सर्प्यां जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपोवीर्य्यसम्भृतो मच्छुक्रपीतवत्यास्तस्या कुक्षौ जात । समर्थोऽय भवत सर्व्वा पापकृत्या शमयितुमन्तरेण महादेवकृत्याम् । अस्य त्वेकमुपांशुव्रत यदेन कश्चिद्ब्राह्मण कञ्चिदर्थमभियाचेत् तस्मै अयमदद्यात् यद्येतदुत्सहसे ततो नयस्वैनमिति । तेनैवमुक्तो जनमेजयस्त प्रत्युवाच भगवस्तत्तथा भविष्यतीति ॥ * ॥
अस्य सर्पसत्रविवरणकथा यथा देवीभागवते २ । ११ । ४८—६० ।

इति तस्य वच श्रुत्वा राजा जन्मेजयस्तदा ।
नेत्राभ्यामश्रुपातञ्च चकारातीव दु खित ॥
धिग्जन्म मे सुदुर्बुद्धेर्दुर्भाग्यकरस्य वै ।
पिता यस्य गति घोरां प्राप्त पन्नगपीडित ॥
अद्यापि मखमारभ्य करोम्यपचिति पितु ।
हत्वा सर्पानसन्दिग्धो दीप्यमाने विभावसौ ॥
आहूय मन्त्रिण सर्व्वान् राजा वचनमब्रवीत् ।
कुर्व्वन्तु यज्ञसम्भार यथार्ह मन्त्रिसत्तमा ॥
गङ्गातीरे शुभां भूमि मापयित्वा द्विजोत्तमै ।
कुर्व्वन्तु मण्डप स्वस्था शतस्तम्भ मनोहरम् ॥
वेदी यज्ञस्य कर्त्तव्या ममाद्य सचिवा खलु ।
तदङ्गत्वे विधेया वै सर्पसत्र सुविस्तर ॥
तक्षकस्तु पशुस्तत्र होतोत्तङ्को महामुनि ।
श्रोत्रियमाहूयता विप्रा सर्व्वज्ञा वेदपारगा ॥
मन्त्रिणस्तु तदा चक्रुर्भूपवाक्यैर्विचक्षणा ।

यज्ञस्य सर्व्वसम्भारं वेदीं यज्ञस्य विस्तृताम् ॥
हवने वर्त्तमाने तु सर्पाणां तक्षको गतः ।
इन्द्रं प्रति भयार्त्तोऽहं त्राहि मामिति चाब्रवीत् ॥
भयभीतं समाश्वास्य स्वासने सन्निवेश्य च ।
ददावभयमव्यर्थं निर्भयो भव पन्नग ! ॥
तमिन्द्रशरणं ज्ञात्वा मुनिर्द्दत्ताभयं तथा ।
उत्तङ्कोऽग्नयदुद्विग्नः सेन्द्रं ज्ञात्वा निमन्त्रणम् ॥
स्तुतस्तदा तक्षकेण यायावरकुलोद्भवः ।
आस्तीको नाम धर्म्मात्मा जरत्कारुसुतो मुनिः ॥
तत्रागत्य मुनेर्बालस्तुष्टाव जनमेजयम् ।
राजा तमर्च्चयामास दृष्ट्वा बालं सुपण्डितम् ॥")

जनयित्री, स्त्री, (जनयितृ + ङीप् ।) माता । इत्यमरः । २ । ६ । २८ ॥ ( यथा, रघुः । १० । ७० ।
"कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलञ्चक्रे यः प्रश्रय इव श्रियम् ॥")

जनरवः, पुं, ( जनेषु लोकेषु रवः प्रवादः ।) लोकवादः । यथाह लक्ष्मणसेनः
"परीवादस्तथ्यो भवति वितथो वापि महतां
तथाप्युच्चैर्धाम्नां हरति महिमानं जनरवः ॥"

जनलोकः, पुं, ( जन एव लोकः । ) महर्लोकोपरिभुवनम् । यथा,—
"अयं स हि महर्लोकः स्वर्लोकात् परमाद्भुतः ।
कल्पायुषो वसन्त्यत्र तपसा धुतकल्मषाः ॥
इत्थं कथां कथयतोर्भगवद्गणयोः प्रिये ! ।
क्षणार्द्धेन विमानन्तज्जनलोकं निनाय तान् ॥
निवसन्त्यमला यत्र मानसा ब्रह्मणः सुताः ।
सनन्दनाद्या योगीन्द्राः सर्व्वे ते ऊर्द्धरेतसः ॥
अन्ये तु योगिनो ये वै त्वखण्डब्रह्मचारिणः ।
सर्व्वद्वन्द्वविनिर्म्मुक्तास्ते वसन्त्यत्र निर्म्मलाः ॥
महर्लोकः क्षितेरूर्द्धमेककोटिप्रमाणतः ।
कोटिद्वयेतिसंख्यातो जनो भूर्लोकतो जनैः ॥"
इति स्कान्दे काशीखण्डम् ॥

जनवल्लभः, पुं, ( जनानां लोकानां वल्लभः प्रियः ।) श्वेतरोहितवृक्षः । इति राजनिर्घण्टः ॥ लोकप्रिये, त्रि ॥

जनवादः, पुं, (जनेषु लोकेषु वादोऽपवादः ।) जनप्रवादः । इति हलायुधः ॥ ( यथा, आर्य्यासप्तशत्याम् । ४१८ ।
"भस्मपरुषेऽपि गिरिशे स्नेहमयी त्वमुचितेन सुभगासि ।
मोघस्त्वयि जनवादो यदोषधिप्रस्थदुहितेति ॥")

जनश्रुतिः, स्त्री, ( जनेभ्यः श्रुतिः श्रवणम् । ) सत्यमसत्यं वा लोकप्रवादः । तत्पर्य्यायः । किंवदन्ती २ । इत्यमरः । १ । ६ । ७ ॥ ( यथा, आर्य्यासप्तशत्याम् । ३६५ ।
"पुंसां दर्शय सुन्दरि ! मुखेन्दुमीषत्त्रपामपाहाय ।
जायाजित इति रूढ़ा जनश्रुतिर्मे यशो भवतु ॥")

जनस्थानं, क्ली, ( जनस्य स्थानं भूभागः । ) दण्डकारण्यम् । इति जटाधरः ॥ दण्डकारण्यसमीपस्थानविशेषः । यथा । इक्ष्वाकुराजपुत्त्रो दण्डः शुक्राचार्य्यकन्यामरजां बलाद्गृहीत्वा मैथुनं गतवान् स मुनिस्तत् श्रुत्वा राजानं शशाप । यथा,—
"सप्तरात्रेण राजासौ सभृत्यबलवाहनः ।
पापकर्म्मसमाचारो वधं प्राप्स्यति दुर्म्मतिः ॥
सर्व्वसत्त्वानि यानीह जङ्गमानि स्थिराणि च ।
सर्व्वेषां पांशुवर्षेण क्षयः क्षिप्रं भविष्यति ॥
दण्डस्य विषयो यावत् तावत् सवनमाश्रमम् ।
पांशुभूतमिवाकस्मात् सप्तरात्राद्भविष्यति ॥
इत्युक्त्वा क्रोधसन्तप्तस्तदाश्रमनिवासिनम् ।
जनं जनपदस्यान्ते स्थीयतामित्यवोचत ॥
सप्ताहाद्भस्मसाद्भूतः स चापि ब्रह्मतेजसा ।
तस्य दण्डस्य विषयो विन्ध्यशैलस्य सानुषु ॥
तदाप्रभृति काकुत्स्थ ! दण्डकारण्यमुच्यते ।
तपस्विनः स्थिता यत्र तज्जनस्थानमुच्यते ॥"
इति रामायणम् ॥
( अत्र रावणस्य खरदूषणप्रभृतीनि सैन्यान्यासन् । यथा, रामायणे । १ । १ । ४६ ।
"तेन तत्रैव वसता जनस्थाननिवासिनी ।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥"
"जनस्थानं नाम दण्डकारण्ये रावणबलनिवेशस्थानम् ।" इति तट्टीकायां रामानुजः ॥ )

जना, स्त्री, ( जननमिति । जन + बाहुलकात् अङ् । ) उत्पत्तिः । इति मुग्धबोधम् ॥

जनान्तः, पुं, ( जनस्य प्रदेशस्य अन्तः । ) देशः । इति धनञ्जयः । वेला इति पारस्यभाषा ॥

जनान्तिकम्, क्ली, अप्रकाशः । इति त्रिकाण्डशेषः ॥ (एतल्लक्षणं यथा, साहित्यदर्पणे ।
"त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥"
एतल्लक्षणोक्तमप्रकाशकथनम् । नाटके एव अस्य भूरिप्रयोगो दृश्यते ॥ जनस्य अन्तिकम् । जनसमीपञ्च ॥ )

जनार्द्दनः, पुं, विष्णुः । इत्यमरः । १ । १ । १८ ॥ तन्नामव्युत्पत्तिर्यथा । "समुद्रान्तवासिनो जननाम्नोऽसुरान् अर्द्दितवान् जनार्द्दनः । अर्द्द वधे अर्द्दकञ्च नन्द्यादित्वादनः । किंवा जनैर्लोकैरर्द्द्यते याच्यते पुरुषार्थानसौ जनार्द्दनः । अर्द्द यातनागतियाचने कर्म्मणि अनट् । किंवा जननं जनः भावे घञ् । जनं जन्म अर्द्दयति हन्ति भक्तस्य मुक्तिदत्वादिति जनार्द्दनः । किंवा जनान् लोकान् अर्द्दति हररूपेण संहारकत्वादिति जनार्द्दनः । किंवा जनयति उत्पादयति लोकान् ब्रह्मरूपेण सृष्टिकर्त्तृत्वादिति जनः जनेर्ण्यन्तात् पचाद्यच् । अर्द्दति हन्ति लोकान् हररूपेण संहारकारित्वादिति अर्द्दनः जनश्चासौ अर्द्दनश्चेति जनार्द्दनः । किंवा जनान् लोकान् अर्द्दति गच्छति प्राप्नोति रक्षणार्थं पालकत्वादिति जनार्द्दनः ।" इत्यमरटीकायां भरतः ॥ * ॥ गयायां तस्य हस्ते जीवितस्य पिण्डदानविधिर्यथा,—
"जनार्द्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः ।
आत्मनोऽप्यथवान्येषां सव्येनैव तिलैर्विना ॥
जीवता दधिसंमिश्रं सर्व्वे ते विष्णुलोकगाः ।
यस्तु पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ! ॥
यमुद्दिश्य त्वया देयस्तस्मिन् पिण्डो भवते प्रभो ! ॥
एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ! ॥
अन्तकाले गते मह्यं त्वया देयो गयाशिरे ।
जनार्द्दन ! नमस्तुभ्यं नमस्ते पितृमोक्षद ! ॥
पितृपात्र नमस्तुभ्यं नमस्ते पितृरूपिणे ।
गयायां पितृरूपेण स्वयमेव जनार्द्दनः ॥
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ।
नमस्ते पुण्डरीकाक्ष ! ऋणत्रयविमोचन ! ॥
लक्ष्मीकान्त ! नमस्तेऽस्तु पितृमोक्षप्रदो भव ।
वामजानु च सम्पात्य नत्वा भीमो जनार्द्दनम् ॥
श्राद्धं सपिण्डकं कृत्वा भ्रातृभिर्ब्रह्मलोकभाक् ।
पितृभिः सह धर्म्मात्मा कुलानाञ्च शतेन च ॥
शिलायां व्यक्तरूपेण व्यक्ताव्यक्तात्मना स्थितः ।
लक्ष्मीशो विबुधैः सार्द्धं तस्माद्देवमयी शिला ॥"
इति श्रीवायुपुराणे श्वेतवाराहकल्पे गयामाहात्म्ये ४ अध्यायः ॥ * ॥ शालग्रामशिलाविशेषः । तल्लक्षणं यथा,—
"शङ्खचक्राब्जगदं जनार्द्दनमिहो नमः ।
उपेन्द्रं गदिनं साविपद्मशङ्ख ! नमोऽस्तु ते ॥"
इति पाद्मे पातालखण्डे १० अध्यायः ॥
"आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ज्ञानञ्च शङ्करादिच्छेन्मुक्तिमिच्छेज्जनार्द्दनात् ॥"
इति कर्म्मलोचनम् ॥

जनाशनः, पुं, ( जनानश्नाति भक्षयतीति । अश + ल्युः । ) वृकः । इति राजनिर्घण्टः ॥

जनाश्रयः, पुं, (जनानां लोकानामाश्रयः ।) मण्डपः । इत्यमरः । २ । २ । ६ ॥

जनिः, स्त्री, ( जननमिति । जन + "जनिघसिभ्यामिण् ।" उणां ४ । १२६ । इति इण् । जनिवध्योश्चेति वृद्धिनिषेधः । ) उत्पत्तिः । इत्यमरः । १ । ४ । ३० ॥ ( यथा, हरिवंशे । २०८ । ४० ।
"वनस्पत्योषधीश्चैव युगपत् प्रतिपद्यसे ।
बालभावाय वसुधां पक्षे पक्षे जनिस्तव ॥"
जायते यस्याम् । जन + आधारे इण् ।) नारी । माता । इति शब्दरत्नावली ॥ ( जायते सुखमनयेति । करणे इण् ।) जनीनामगन्धद्रव्यम् । इत्यमरटीकायां रायमुकुटः ॥

जनिका, स्त्री, ( जायते वंशो यस्यामिति जनिः । ततः स्वार्थे कन् टाप् च । ) स्नुषा । इति शब्दरत्नावली ॥ (जनिशब्दार्थः ॥) जननकर्त्री च ॥

जनितं, त्रि, ( जन्यते स्मेति । जन + णिच् + क्तः ।) उत्पादितम् । यथा,—
"सेनाचरी भवदिभाननदानवारि-
वासेन यस्य जनिता सुरभी रणश्रीः ॥"
इति नैषधम् ॥
( यथा च हरिवंशे । १६१ । ३१ ।
"अतोऽहं कामयामि त्वां नहि त्वं जनितो मया ।
रूपन्ते सौम्य ! पश्यन्ती सीदामि हृदि दुर्ब्बला ॥")

स्थानश्रवणाभावो जड़िमा सोऽभिधीयते ॥"

इत्युज्ज्वलनीलमणिः ॥

जट्टल:, पुं, (जटुल: पृषोदरादित्वात् टस्य डत्वम्।) देहस्थितिलक:। इति हेमचन्द्र: ॥

जतु, क्ली, (जायते वृक्षादिभ्य इति। जन+"फलिपाटिनमिमनिजनामिति।" उणां १। १८। इति उ: तोऽन्तादेशश्च।) वृक्षनिर्य्यासविशेष:। जौ इति ला इति च भाषा॥ तत्पर्य्याय:। राचा २ लाचा ३ याव: ४ अलक्त: ५ द्रुमामय: ६। इत्यमर: ।२।६।१२५॥ रक्ता ७। इति रभस:॥ कीटजा ८ क्रिमिजा ९ जतुका १० जन्तुका ११ गवाधिका १२। इति रत्नमाला॥ जतुकम् १३ यावक: १४ अलक्तक: १५ रक्त: १६। इति शब्दरत्नावली॥ पलङ्कषा १७ क्रमि: १८ वरवर्णिनी १९। इति जटाधर:॥ (यथा, महाभारते। १। १४७। १३।

"जिघ्रन् सोऽस्य वसागन्धं सर्पिर्जतुविमिश्रितम्॥")

जतुकं, क्ली, (जतु इव कायतीति। कै+क:।) हिङ्गु। (जतु एव। स्वार्थे कन्।) लाचा। इति मेदिनी। के, ६१॥

जतुका, स्त्री, (जतु इव आकृत्या कायतीति। कै+"आतोऽनुपसर्गे क:।" ३। २। ३। इति क:।) जनीनामगन्धद्रव्यम्। इत्यमरटीकायां भरत:॥ चर्म्मचटिका। इति शब्दरत्नावली॥ (यथा, वैद्यकचक्रपाणिसंग्रहे अपस्माराधिकारे।

"जतुकाशकृता तद्वद्गवेष्वा वस्तरोमभि:।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभि:॥")

पर्पटी। इति भावप्रकाश:॥ लताविशेष:। सा तु मालवे प्रसिद्धा। तस्या: पर्य्याया:। जतुकारी २ जननी ३ चक्रवर्त्तिनी ४ तिर्य्यक्फला ५ निशान्धा ६ वहुपुत्री ७ सुपुत्रिका ८ राजहया ९ जनेष्टा १० कपिकच्छुफलोपमा ११ रञ्जनी १२ ह्रस्ववल्ली १३ भ्रमरी १४ छायावल्लिका १५ विच्छुलिका १६ छायारुहा १७ ग्रन्थिपर्णा १८ सुवर्चिका १९ तरुवल्ली २० दीर्घफला २१। अस्या गुणा:। शिशिरत्वम्। तिक्तत्वम्। रक्तपित्तकफदाहव्रणविषनाशित्वम्। रुचिकारित्वम्। दीपनत्वञ्च। इति राजनिर्घण्ट:॥ जन्तुकापि पाठ:। निशान्धाछायारुहयोरित्यत्र क्रमेण निशाङ्का वृक्षरुहा च पाठ:॥ (लाचा। तत्पर्य्याया यथा,—

"कीटजा क्रिमिजा लाचा जतुका च गवाधिका॥"

इति वैद्यकरत्नमालायाम्॥)

जतुकारी, स्त्री, (जतु करोतीति। जतु+कृ+"कर्म्मण्यण्।" ३।२।१। इत्यण् तत: स्त्रियां ङीष्।) जतुकालता। इति राजनिर्घण्ट:॥ (गुणादयोऽस्या जतुकाशब्दे व्याख्याता:॥)

जतुकृत्, स्त्री, (जतु करोति उत्पादयतीति। कृ+क्विप्। जतो: कृदिति वा।) जनीनामगन्धद्रव्यम्। इत्यमर:। २। ४। १५३॥ (अस्या: पर्य्याया यथा,—

"पर्पटी रञ्जना कृष्णा जतुका जननी जनी
जतुकृष्णाग्निसंस्पर्शा जतुकाचक्रवर्त्तिनी॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

जतुकृष्णा, स्त्री, (जतु इव कृष्णा।) पर्पटी। इति भावप्रकाश:॥

जतुनी, स्त्री, (जतु इव नयति जत्वाकारेण प्रापयति संश्लिष्टद्रव्यमिति। नी+क्विप्। अस्या: संश्लेषात् द्रव्यस्य जतुवद्रूपत्वात्तथात्वम्।) चर्म्मचटिका। इति त्रिकाण्डशेष:॥

जतुपुत्त्रक:, पुं, (जतुनिर्म्मित: पुत्त्र इव। इवार्थे कन्।) पाशकगुटिका। नय:। इति त्रिकाण्डशेष:॥

जतुमणि:, पुं, क्षुद्ररोगविशेष:। (जडुल इति भाषा॥) तस्य निदानं यथा,—

"समसुत्सन्नमरुजं मण्डलं कफरक्तजम्।
सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिश्च स:॥"

इति माधवकर:॥

तच्चिकित्सा यथा—

"चर्म्मकीलं जतुमणिं मशकान् तिलकालकान्।
उत्कृत्य शस्त्रेण दहेत् चाराग्निभ्यामशेषत:॥"

इति भावप्रकाश:॥

जतुरस:, पुं, (जतुनो रस:।) अलक्तक:। इति राजनिर्घण्ट:॥ (विवृतिरस्यालक्तकशब्दे ज्ञातव्या॥)

जतूका, स्त्री, (जतुका निपातनात् दीर्घ:।) जनीनामगन्धद्रव्यम्। इत्यमर:। २।४।१५३॥ चर्म्मचटी। इति शब्दरत्नावली॥

जत्रु, क्ली, (जायते वाहुरसात्। जन्+"जन्दाद्यश्च।" उणां ४। १०२। इति रुनकारस्य तकारश्च।) स्कन्धसन्धि:। इत्यमर:। २।६।७८॥ माखरा इति भाषा॥ (यथा, महाभारते। ३। १७। २२।

"हृदि च विद्धो महावाहु: प्रद्युम्न: समरे स्थित:।
जत्रुदेशे भृशं वीरो ववाचोद्गमये तदा॥")

जत्रुकं, क्ली, (जत्रु एव। स्वार्थे कन्।) जत्रु। इति शब्दरत्नावली॥

जत्वश्मकं, क्ली, (जतुरूपमश्मकम्।) शिलाजतु। इति राजनिर्घण्ट:॥

जन, ई म य ङ जनौ। इति कविकल्पद्रुम:॥ (दिवां-आत्मं-अकं-सेट्।) ई, जात:। म, जनयति। य ङ, जायते जन्यते। जनिर्ज्जन्म। प्रादुर्भावे इति प्राञ्च:। प्रादुर्भाव: स्फुटीभाव:। प्राकाश्ये प्रादुराविः स्यादित्यमर:। वीजाङ्कुरो जायते घटकाण्डादिभेदेन प्रकाशते इत्यर्थ:। प्रादुर्भावोऽसदुत्पत्तिरिति केचित्। घटो जायते। इति दुर्गादास:॥

जन, म लि र जनौ। इति कविकल्पद्रुम:॥ (ह्लां-परं-अकं-सेट्।) म, जनयति। लि, जजन्ति। रवैदिक:। इति दुर्गादास:॥

जन:, पुं, (जायते इति। जन+अच्।) लोक:। (यथा, महाभारते। १। १४९। ९।

"अथ प्रवाते तुमुले निशि सुप्ते जने तदा।
तदुपादीपयत् भीम: शेते यत्र पुरोचन:॥")

महर्लोकादूर्द्धलोक:। पामर:। इति मेदिनी ने, ६॥ (असुरविशेष:। जनार्द्दन इति शब्ददर्शनात्॥)

जनक:, पुं, (जनयतीति। जन+णिच्+ण्वुल्।) पिता। राजभेद:। स तु मिथिलाधिपति:। इति मेदिनी। के, ६०॥ इक्ष्वाकुराजपुत्रो निमिर्वशिष्ठं त्यक्त्वा यज्ञं कृतवान् वशिष्ठस्तद्यज्ञस्थानमागत्य राजानं आह्वययामास राजा तदा निद्रित आसीत्। मुनिस्तु क्रोधात् त्वं विदेहो भव इत्युक्त्वा तमभिशशाप। तत:,—

"दृष्ट्वा विदेहं राजानमृषय: सर्व्व एव ते।
तञ्च ते याजयामासुर्यावद्दीक्षां मनीषिण:॥
नरेन्द्रस्यापि तं देहमरक्षन्नृषिपुङ्गवा:।
वस्त्रैर्माल्यैश्च गन्धैश्च पूज्यमानं मुहुर्मुहु:॥
ऋषयोऽपि महात्मानो निमिदेहं ममन्थिरे।
अरणिन्तस्य देहात्तु मन्थानञ्चापि चक्रिरे॥
मन्त्रहोमैर्महात्मान: पुत्त्रहेतोर्निमेस्तदा।
अरण्यां मथ्यमानायां प्रादुर्भूतो यतश्च स:॥
अतो मिथिरिति ख्यातो जननाज्जनकोऽभवत्।
विदेहश्चाभवद्यस्मान्महात्मा स महातपा:॥
तस्माद्विदेहा: प्रोच्यन्ते सर्व्वे तद्वंशजा नृपा:।
एवं विदेहराजस्तु पूर्व्वको जनकोऽभवत्॥
मिथिर्नाम महावीर्य्यो येन सा मिथिलाभवत्॥"

इति रामायणम्॥

(ऋषिविशेष:। स तु वेदसन्देहभञ्जनग्रन्थस्य प्रणेता। यथा, ब्रह्मवैवर्त्ते। १। १६। १६।

"चकार जनको योगी वेदसन्देहभञ्जनम्॥"

शम्बरासुरस्य पुत्त्रविशेष:। यथा, हरिवंशे। १६१। ४४।

"श्रुत्वा तु शम्बराद्वाक्यं सुतास्ते शम्बरस्य ह।
सन्नद्धा निर्ययुर्हृष्टा: प्रद्युम्नवधकाम्यया॥"

इत्युपक्रम्याह।

"सेनस्कन्धोऽतिसेनश्च सेनको जनकस्तत:॥")

उत्पादके, त्रि॥ (यथा, ब्रह्मवैवर्त्ते।१।१६।२७।

"जनक: सर्व्वरोगाणां दुर्व्वारो दारुणो ज्वर:॥")

जनकतनया, स्त्री, (जनकस्य विदेहनृपतेस्तनया।) सीता। इति रामायणम्॥ (यथा, मेघदूते।१।

"यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु॥")

जनकनन्दिनी, स्त्री, (जनकस्य नन्दिनी।) सीता। इति रामायणम्॥

जनकसुता, स्त्री, (जनकस्य सुता।) सीता। इति रामायणम्॥

जनकात्मजा, स्त्री, (जनकस्य आत्मजा।) सीता। इति शब्दरत्नावली॥ (यथाह कश्चित्।

"युष्मत्कृते खञ्जनगञ्जनाचि!
शिरो मदीयं यदि यातु यातु।
लूनानि नूनं जनकात्मजार्थे
दशाननेनापि दशाननानि॥")

जनकारी, [न्], पुं, (जनान् किरति आच्छादयति स्ववर्णेनेति। कृ आच्छादने+णिनि:।) अलक्तक:। इति राजनिर्घण्ट:॥

ज्वरांश्च निखिलान् हन्याभाग्यकाथ्या विषारणा।
पृथग्द्वन्द्वागन्तुजांश्च धातुस्थान् विषमांस्तथा।
सन्निपातोद्भवांश्चापि मानसानपि नाशयेत्॥
शीतान्नेनपि दाहादीन् मोह तन्द्रीं भ्रम तृषाम्।
कास श्वासञ्च पाण्डुञ्च हृद्रोग कामलामपि॥
त्रिकपृष्ठकटीजानुपार्श्वशूलञ्च नाशयेत्।
शीताम्बुना पिबेदेतत् सर्व्वज्वरनिवृत्तये॥
सुदर्शनं यथा चक्रं दानवानां विनाशनम्।
तद्वज्ज्वराणां सर्व्वेषां चूर्णमेतत् प्रणाशनम्॥
पुष्करमूलाभावे कुष्ठमपि दद्यात्। भाग्यभावे कण्टकारीमूलम्। सौराष्ट्राभावे स्फटिकां दद्यात्। तगरालाभे कुष्ठं देयम्। जीवकर्षभकयोरलाभे विदारीकन्दस्य भागद्वयं दद्यात्। पुण्डरीकं श्वेतकमलम्। काकोल्यभावे अश्वगन्धामूलं दद्यात्। तालीशपत्रकाभावे स्वर्णतालो प्रदीयते। इति। अथवा कण्टकारीजटा देया। इति सुदर्शनचूर्णम्। *।

शटी निशाद्वयं शुण्ठी दारु पुष्करमूलकम्।
इला गुडूची कटुका पर्पटश्च सवासकः॥
भार्गी किराततिक्तश्च दशमूलं तथैव च।
क्वाथमेषां पिबेत् कृष्णासिन्धुत्थयुतं नरः॥
ज्वरान् सर्व्वान् द्रुतं हन्ति शाठ्यं कार्थ्यां विषारणा।'

अनुभूतमद्भुतममेतत्॥ *

हरीतकीचित्रकभद्रदारुकाणां पृथग्भवेत्।
पलद्वयं कणा शुण्ठी गुडूची गोक्षुरो वरी॥
सहदेवी विडङ्गञ्च प्रत्येकं पलसम्मितम्।
मधुना वटिकां कृत्वा खादेत् ज्वरमपोहति॥
कासं श्वासं मलस्तम्भं वह्निमान्द्यं नियच्छति॥

लाक्षा दशाक्षा अरुणा षडक्षा
सचन्दनं लोहितचन्दनञ्च।
त्वकपत्रकं वारि सुरा समुस्ता
प्रत्येकमेतानि पलोन्मितानि॥
किराततिक्तस्त्रिवृतासतिक्ता
स्वलाकणापर्पटकण्टकाश्च।
विडङ्गविश्वामलकानि वासा
रास्नानिशावारुणसिन्धुवारा॥
एतानि दद्यानि पृथक् पलार्द्ध
मानानि सर्व्वाणि च भेषजानि।
कल्कानमीषां विदधीत गव्य
दुग्धेन वै साद्धतुलामितेन॥
तैलं तिलानान्तु तुलानुमानं
तेनैव कल्केन शनैः पचेत्तु।
हन्यात् ज्वरान् तैलमिदं समस्तान्
कुर्य्याद्बलं वीर्य्यमतीवपुष्टिम्॥
विमर्द्दनादाशु परिश्रमं श्रमं
भ्रमं नयेत् सञ्जनयेत् द्युतिं तथा।
तथा यथामस्थिसमुद्भवामपि
ग्रहण्य निद्रां समुपाक्षयेत सुखम्॥'

अरुणा मञ्जिष्ठा। वारि बाला। रक्षा रास्ना। इति लाक्षादितैलम्॥ *॥
'लाक्षारससमं तैलं तैलाम्भस्तु चतुर्गुणम्
अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः।
समूर्व्वारोहिणीरास्नाशताह्वामधुकैः समैः।
सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिना॥
सर्व्वज्वरविनिर्मुक्त्यास्मामवारवातनुत्।
यमराक्षसभूतघ्नं गर्भिणीनाञ्च शस्यते॥"

मस्तु दधिजलम्। कौन्ती रेणुका। चन्दनमत्र श्वेतमेव न तु रक्तम्। रोहिणी कटुकी। इति च लाक्षाग्नितैलम्॥ *॥

'लाक्षा हरिद्रा मञ्जिष्ठा पिनिल मधुकं बला।
लामज्जकं चन्दनञ्च चम्पकं नीलमुत्पलम्॥
प्रत्येकमेषां पञ्चशतपलं तोये चतुर्गुणे।
चतुर्भागावशेषे तु गर्भे चैतत् समापयेत्॥
रेणुका पद्मकञ्चैव वाजिगन्धा तथैव च।
वैनस्य चोरकं कुष्ठं देवदारु नखं त्वचम्॥
शतपुष्पा पुण्डरीकं मांसी मधुकमेव च।
एभिरम्नमितैः कल्कैः कषायेणैव पेषितैः॥
मस्तुयुक्तारनालानामाढ़काढ़कमावपेत्।
क्षीराढकसमायुक्तं तैलप्रस्थं विपाचयेत्॥
अभ्यङ्गात्तैलमेतद्धि शीघ्रं दाहमपोहति।
अपोहति तथा वातपित्तश्लेष्मभवं ज्वरम्॥
सप्रलापं सतृष्णञ्च तालुशोषभ्रमान्वितम्।
ग्रहोपसृष्टा ये बाला रक्षसा दूषिताश्च ये॥
तेषां कष्टप्रशमनं तैलं लाक्षादिकं महत्॥'

पेनिलं चन्दनम्। लामज्जकमुशीरवत् पीतच्छवि तृणविशेषः।

लामज्जकं यदा न स्यादुशीरं दीयते तदा।
चम्पकमित्यस्य स्थाने क्वचापि गैरिकं इति पाठः।
नीलोत्पलस्यालाभे तु कुमुदं दयमिष्यते।

समापयेत प्रक्षिपेदित्यर्थः। चोरकं ग्रन्थिपर्णस्य भेदः भटिटउर इति नेपालदेशे भवति। तदलाभे ग्रन्थिपर्णं देयम्। पुण्डरीकं श्वेतकमलम्। मस्तु दधिजलम्। शुक्तं सन्धानभेदः। आरनालमपि सन्धानभेदः। इति महालाक्षादितैलम्॥ *॥ अथ नवज्वरे रसाः।

'सूतो गन्धष्टङ्कणः शोधितश्च
सर्व्वैस्तुल्या शर्करा मत्स्यपित्ते।
भूयो भूयो मर्द्दयेत् त्रिरात्रं
वल्लो देयः शृङ्गवेराम्बुयुक्तः॥
नापि शीतं वीजनैस्तक्रभक्तं
हन्त्याकाद्यं पथ्यमेतत् प्रदिष्टम्।
यत्नौ चोयं हन्ति सद्यो ज्वरन्तु
पित्ताधिक्ये मूर्द्ध्नि तोयञ्च दद्यात्॥'

अस्य प्रक्रिया। पारदशुद्ध भाग १ गन्धकशुद्ध भाग १ सोहागाभस्म भाग १ मरिच भाग १ शर्करा भाग ४ रोहुमत्स्यकपित्त भाग ३। आमु प्रतिदिनं सर्व्वं दिनत्रयं मर्द्दयेत्। रसमिमं रक्तित्रयमितमाद्रकरसेन दद्यात्। ओदनं तक्रं हन्ताकफलं भोक्तुं दद्यात्। व्यजनादौ शीतलमुपचारं कुर्य्यात्। उदकमञ्जरीरसो नवज्वरेषु॥ *॥ रसरत्नप्रदीपे।

"अदात सम सूतसमुन्फेन
हिङ्गुलगन्धं परिमृद्य याममम्।
नवज्वरे वल्लयुगं त्रिघस
मार्द्राम्भमाय ज्वरधूमकेतु॥'

प्रक्रिया। पारा शुद्धगन्धकशुद्धहिङ्गुलशुद्धसमुद्रफेनसभागं सर्व्वं याममेकमार्द्रकरसेन मर्द्दयित्वा रक्तिकाद्वयमितमार्द्रकरसेन दिनत्रयं नवज्वरी भक्षयेत्। दिनत्रयान्नवज्वरो नश्येत्। इति ज्वरधूमकेतुः॥ *॥ रसेन्द्रचिन्तामणौ।

'शुद्धं सूतो विषो गन्धः प्रत्येकं शाणसम्मितः।
धूर्त्तवीजं त्रिशाणं स्यात् सर्व्वेभ्यो द्विगुणा भवेत्।
हेमाह्वा कारयेदेषां चूर्णं सूक्ष्मं प्रयत्नतः।
जम्बीरनीरैर्द्दिनमर्दयं गुञ्जाद्वयोन्मितम्॥
आर्द्रकस्य रसेनापि ज्वरं हन्ति त्रिदोषजम्।
ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्च चतुर्थकम्॥
विषमञ्च ज्वरं हन्याद्भव लोकेषु सर्व्वथा।
महाज्वराङ्कुशो नाम्ना रसोऽयं सर्व्वसम्मतः॥"

प्रक्रिया। शुद्धपारा शुद्धगन्धक शुद्धविष प्रत्येक टङ्क १ धतूरबीज टङ्क ३ चोकटङ्क १२ सर्व्वेषां चूर्णमतिसूक्ष्मं कर्त्तव्यम्। इति महाज्वराङ्कुशः॥ *॥ सर्व्वज्वरेषु शार्ङ्गधरे।

'एको भागो रसात् शुद्धाच्छैलेयं पिप्पली शिवा।
आकारकरभो गन्धः कटुतैलेन शोधितः॥
फलानि चेन्द्रवारुण्याश्चतुर्भागमिता अमी।
एकत्र मर्द्दयेच्चूर्णमिन्द्रवारुणिकारसैः॥
माषाम्मितां वटीं कृत्वा दद्यात् सर्व्वज्वरे बुधः।
छिन्नारसादुपानेन ज्वरघ्नी वटिका मता॥"

शैलेयं छड इति लोके। शिवात्र हरीतकी। आकारकरभः अकरकरहा इति लोके। चतुर्भागमिता अमी शैलेयादयः अष्ट समुदिता भागचतुष्टयमिताः। इति ज्वरघ्नीवटिका॥ *॥ शार्ङ्गधरे।

'रस गन्धञ्च दन्ती जैपाल क्रमवर्द्धितम्।
दन्तीरसेन सम्पिष्य वटी गुञ्जामिता कृता॥
प्रभाते सितया सार्द्धमचिता शीतवारिणा।
एकेन दिवसेनैषा नवज्वरहरी भवेत्॥"

इति च ज्वरघ्नीवटिका॥ *॥ रसरत्नप्रदीपे।

'रसो गन्धो विषं शुण्ठी पिप्पली मरिचानि च।
पथ्या विभीतकं धात्री दन्तीवीजञ्च शोधितम्॥
चूर्णमेषां समांशानां द्रोणपुष्पीरसैः पुटेत्।
वटीं माषनिभां कुर्य्यात् भक्षयेन्नूतने ज्वरे॥"

इति नवज्वरेभहरीवटी। इति नवज्वरे रसाः॥ *॥ अथ सामान्यज्वरे रसाः।

'शुद्धं सूतं विषं गन्धं धूर्त्तवीजं त्रिभिः समम्।
चतुर्णां द्विगुणं व्योषं चूर्णं गुञ्जाद्वयोन्मितम्॥
आर्द्रकस्य रसैः किंवा जम्बीरस्य रसैर्युतम्।
महाज्वराङ्कुशो नाम्ना सर्व्वज्वरविनाशनः॥
ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्च चतुर्थकम्।
विषमं वा त्रिदोषं वा ज्वरं हन्ति न संशयः॥"

प्रक्रिया। शुद्धपारा टङ्क १ शुद्धविष टङ्क १ शुद्ध गन्धक टङ्क १ धतूरबीज टङ्क ३ शुण्ठि टङ्क ४ पीपरी टङ्क ४ मरिच टङ्क ४ सर्व्वेषां चूर्णमतिसूक्ष्मं कर्त्तव्यम्। इति महाज्वराङ्कुशः॥ *॥

सर्व्वज्वरेषु सर्व्वरसप्रन्थेषु ।
"सूतं गन्धं विषञ्चैव टङ्कणञ्च मनःशिला ।
एतानि टङ्कमात्राणि मरिचं त्वष्टटङ्ककम् ॥
कटुत्रयं टङ्कषट्कं सर्व्वं पिष्ट्वा विचूर्णयेत् ।
रसः श्वासकुठारोऽयं श्वाससर्व्वज्वरापहः ॥"

इति श्वासकुठारो रसः ॥ ६ ॥

श्वासे सर्व्वज्वरे रसरत्नावल्यां ।
"दारदश्चां शिखिग्रीवां रसकञ्च पृथक् पृथक् ।
टङ्कत्रयानुमानेन गृहीत्वा कणकानवैः ॥
मर्द्दयेत्त्रिदिनं कार्य्या वटी चणकमापया ।
मरिचैरेकविंशत्या सप्तभिस्तुलसीदलैः ॥
खादेद्वटीद्वयं पथ्यं दुग्धभक्तं सशर्करम् ।
तरुणं विषमं जीर्णं हन्यात् सर्व्वज्वरं ध्रुवम् ॥"
दारदश्चा दारदमूषी । शिखिग्रीवा तुतिया । रसकं खपरिया । प्रत्येकं टङ्क ३ धत्तूरमन्त्र-स्वरसेन मर्द्दयेत् । इति ज्वराङ्कुशः ॥ ८ ॥
सर्व्वज्वरेषु ।
"नागरं कर्षमात्रं स्यात् कर्षमात्रञ्च टङ्कणम् ।
मरिचं सार्द्धकर्षं स्यात् तावद्गन्धवराटकम् ॥
विषं कर्षचतुर्थांशं सर्व्वमेकत्र चूर्णयेत् ।
रसो हुताशनो नाम्ना खादेत् गुञ्जामितो ज्वरे ॥"

इति हुताशनो रसो ज्वरे ॥ ७ ॥

"शुद्धनेपालटङ्कन्तु कर्षटङ्कद्वयोन्मितम् ।
गैरिकं टङ्कमेकञ्च कन्यानीरेण मर्द्दयेत् ॥
कलायतुल्या कार्य्या वटिका ताञ्च भक्षयेत् ।
शीतलेन जलेनैषा वटी शीतज्वरापहा ॥"

इति ज्वरगौवटी ॥

"द्विभागतालेन हतञ्च ताम्रं
रसञ्च गन्धञ्च समेनमायुः ।
विषं समञ्च द्विगुणञ्च ताम्रं
त्रिसप्तरात्रेण दिवाकरांशैः ॥
विमर्द्दयेद्ध्मरसेन चूर्णं
गुञ्जैकदत्तं सितया समेतम् ।
ज्वराङ्कुशोऽयं रविसुन्दराख्यो
ज्वरान्निहन्त्यष्टविधान् समस्तान् ॥"
अस्य प्रक्रिया । पारा टङ्क १ गन्धकटङ्क १ विष-टङ्क १ द्विगुणतालकहततास्रटङ्क २ रोहुमतुस्यक-पित्त १ ए सबको खलमें जवचूर्ण करि मिले तब नाविके पातको स्वरसकभावना २१ घामे मध देवइ माना रती एक अनुपान श्वेत-शर्करा रती २ खाइ । इति सर्व्वज्वरे रवि-सुन्दरो रसः ॥ ६ ॥
"शुद्धं सूतं तथा गन्धं खल्वे तावद्विमर्द्दयेत् ।
सूतं न दृश्यते यावत् किन्तु कज्जलवद्भवेत् ॥
एषा कज्जलिका ख्याता दृंहणी वीर्य्यवर्द्धिनी ।
नानानुपानयोगेन सर्व्वव्याधिविनाशिनी ॥" ॥
कज्जलिकाविधानं तद्गुणाश्च रसरत्नप्रदीपे ।
"जयापत्ररसेनाथ वर्द्धमानरसेन च ।
शृङ्गराजरसेनापि काकमाच्या रसेन च ॥
रसं संशोध्य यत्नेन ततसमं शोधयेद्बलिम् ।
भृङ्गराजरसैः पिष्ट्वा शोधयेदर्करश्मिभिः ॥
सप्तधा वा त्रिधा वापि मत्वाप्यूर्णन्तु कारयेत् ।
चूर्णयित्वा समं तेन रसेन सह मर्द्दयेत् ॥
गन्धसूतं यदा चूर्णं भवेत् कज्जलसन्निभम् ।
निर्धूमे बदराङ्गारे द्रवीकुर्य्यात् प्रयत्नतः ॥
तत्र तं मधिगोविष्ठास्थापित कदलीतले ।
निःक्षिप्य तदुपर्य्यन्यत् पत्रं दत्त्वा प्रपीडयेत् ॥
शीतलाङ्गात् ततः पत्रात् समुद्धृत्य विचूर्णयेत् ।
एषं निहा भवेद्व्याधिघातिनी रसपर्पटी ॥
नरादिव्याधिभिर्व्याप्तं विश्वं दृष्ट्वा पुरा हरः ।
चकार कृपया युक्तः सुधारसपर्पटीम् ॥
रक्तिकासंमितां तावद्भृष्टजीरकसंयुताम् ।
गुञ्जाष्टकेऽष्टकैर्भाजा भक्षयेद्रसपर्पटीम् ॥
रोगानुरूपमैषज्यैरपि तां भक्षयेद्बुधः ।
पिबेच्चदनुपानीयं शीतलं चुलुकत्रयम् ॥
प्रत्यहं वर्द्धयेत्तस्या एकैकां रक्तिकां भिषक् ।
नाधिकां दशगुञ्जातो भजेत्तां कदाचन ॥
एकादशदिनारम्भात् तां तथैवापकर्षयेत् ।
एवमेताः समश्नीयाद्यो विंशतिवासरान् ॥
शिवं गुरुं तथा विप्रान् पूजयित्वा प्रणम्य च ।
अथवा भक्षयेदेतां क्षीरमांसरसाशनः ॥
ज्वरञ्च ग्रहणीञ्चापि तथार्त्तिसारमेव च ।
कामलां पाण्डुरोगञ्च शूलगुल्मजलोदरम् ॥
एवमादीन् गदान् हत्वा हृष्टः पुरुष वीर्य्यवान् ।
जीवेद्वर्षशतं साग्रं वलीपलितवर्ज्जितः ॥"

इति रसपर्पटी ॥ ६ ॥

अथ ज्वरिते अन्नदानसमयः । तत्र चरकः ।
"क्षुत् सम्भवति पक्वेषु रसदोषमलेषु च ।
काले वा यदि वाकाले सोऽन्नकाल उदाहृतः ॥"
अन्यच्च ।
"आमे पाकं गते नॄणां यदा भोजनलालसा ।
भवेत् काले त्वकाले वा सोऽन्नकाल उदाहृतः ॥"
तत्र कालमाह । ज्वरस्य पाकावस्थान्नदानकालः ज्वरस्य पाककालश्च ।
"वातिकः सप्तरात्रेण दशरात्रेण पैत्तिकः ।
श्लैष्मिको द्वादशाहेन ज्वरः पाकमुपैति हि ॥"
ज्वरस्य पाक उपशमः ॥ ज्वरपाकेनैव रसपाके दोषपाकोऽपि कथितः । यतो दोषपाकं विना ज्वरपाको न भवति रसपाकं विना दोषपाकश्च न भवति ॥*॥ ननु यथा पैत्तिको ज्वरो दशाहो-रात्रेण पाकं याति । एकादशे दिनेऽन्नं दीयते । तथा श्लैष्मिको ज्वरो द्वादशाहोरात्रेण पाकं याति त्रयोदशदिवसेऽन्नं दीयते । तथा वातिको ज्वर सप्ताहोरात्रेण पाकं याति । अष्टमे दिवसेऽन्नं कथं न दीयते । कथं सप्तम एव दिवसेऽन्नं दीयते । इति । उच्यते ।
"कफपित्ते द्रवे धातू सहेते लङ्घनं बहु ।
आमक्षयादूर्द्ध्वमपि वायुर्न सहते क्षणम् ॥"
इति वचनादामरसपाके जाते आहारलाभं विना वायुः क्षणमात्रमपि सोढुं न शक्नोति । स आशुकारित्वाम् क्षयादाक्षेपकादीन् विकारान् संजनयति ॥ अतो वातिके ज्वरे पाक-क्रियाभासन्निभे सप्तम एव दिनेऽन्नं दीयते । तथा च धन्वन्तरिः ।
"ज्वराभिभूतः षडहे व्यतीते
विपक्वदोषः क्षतलङ्घनादिः ।
यो भेषजं खादति वैद्यवश्यो
निःसंशयं हन्त्यचिरात् स रोगान् ॥"
ज्वराभिभूतः वातज्वराभिभूतः । विपक्वदोषः पक्वपानः । [illegible] क्षत-पक्वनलपाननिर्व्वातशय्यास्नगुरुव्यायवसनधार-णादिः । भेषजमित्यन्नस्याप्युपलक्षणम् । अतएव चरकः ।
"ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजितम् ।
पाचनं शमनीयं वा कषायं पाययेत्तु तमिति ॥"
ज्वरितं वातज्वरिणम् ॥ षडहेऽतीते इत्युपलक्षणम् ॥ पित्तज्वरिणं दशाहेऽतीते ॥ श्लेष्मज्वरिणं द्वादशाहेऽतीते ॥ लघ्वन्नं भोजितं ज्वरिणं पाचनं शमनीयं वा कषायं पाययेत् । पुनः स एव ।
"सर्व्वज्वरेषु ज्वरितं दिनान्ते भोजयेल्लघु ॥"
दिनान्तोऽन्तशब्दोऽत्र मध्यवाची तेन त्रिधा विभक्तस्य दिनस्य मध्यभागे पित्तप्राधान्यसमये ॥ उक्तञ्च वाग्भटेन ।
"वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमा-दिति ।"
ते वातपित्तश्लेष्माणः ॥ पित्तकालेऽपि मध्याह्ना-दर्व्वाक् । यत आह ।
"याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् ।
याममध्ये रसोत्पत्तिर्यामयुग्माद्बलक्षयः ॥" इति ॥
एतत् सुस्थपरमिति चेत्तन्न । यत आह ।
"श्लेष्मक्षये प्रवृद्धोष्मा बलवाननलस्तदा ।
वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम् ॥"
तदा पित्तप्राधान्यसमये । अन्यथा उक्तसम-यादन्यदा । वेगापाये जठराग्निवेगनाशे । तत् भोजनं ज्वरवेगाभिवर्द्धनं भवतीत्यर्थः ॥ ७ ॥
अत्र विषमज्वरिणेऽन्नं दातुं कालविशेषमाह चरकः ।
"सर्व्वज्वरेषु सप्ताहं मात्रावल्लघु भोजयेत् ।
वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम् ॥"
सर्व्वज्वरेषु सर्व्वविषमज्वरेषु । वेगापाये ज्वर-वेगापाये भोजयेत् । अन्यथा ज्वरवेगापायं विना । तत् भोजनं ज्वरवेगाभिवर्द्धनं भवती-त्यर्थः ॥ * ॥ अथान्नग्रहणाय स्थानमाह ।
"आहारनिर्हारविहारयोगाः
सदैव सद्भिर्विजने विधेयाः ॥" इति ॥*॥
अथ बलस्य ज्वरितस्य भोजनार्थमुपवेशनप्रकार-माह सुश्रुतः ।
"ज्वरे प्रमेहो भवति स्वल्पैरपि विचेष्टितैः ।
नियतं भोजयेत्तस्मान्मूत्रोच्चारौ च कारयेत् ॥"
नियतं यथास्थानस्थितमेव न तु स्थानान्तरं नीतम् ॥ * ॥ अन्नग्रहणसमये प्रथमं ज्वरितेन कवलः कर्त्तव्य इत्याह ।
"यथा दोषोचितैर्द्रव्यैः कर्त्तव्यः कवलग्रहः ।
अरोचकास्यवैरस्यमलपूतिप्रसेकाहृत् ॥
भृष्टजीरकचूर्णेन सिन्धुजन्मयुतेन च ।
जिह्वां दन्तान् मुखस्यान्तर्घृष्ट्वा कवलमाचरेत्

चूर्णयित्वा समं तेन रसेन सह मर्द्दयेत् ॥
नष्टस्तं यदा चूर्णं भवेत् कज्जलसन्निभम् ।
ज्वरेषु [illegible] दवीकुर्य्यात् प्रयत्नतः ॥
[illegible] कदलीतले ।
धातुगे ज्वरे । अन्यस्मिन् [illegible]
भवति ॥ * ॥

अथ ज्वरमुक्तस्य लक्षणमाह ।
"देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षवः प्रकृतियोगिमनोऽन्नलिप्सा
कण्डूश्च मूर्द्ध्नि विगतज्वरलक्षणानि ॥"
सुश्रुतोऽप्याह ।
"स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च ।
क्षवथुश्चान्नकाङ्क्षा च ज्वरमुक्तस्य लक्षणम् ॥" * ॥
अथ ज्वरमुक्तस्य नियमाः ।
"व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥"
अन्यच्च ।
"व्यायामञ्च व्यवायञ्च प्रवातं शिशिरं जलम् ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥
अपि ज्वरविमुक्तस्य स्नानं कुर्य्यात् पुनर्ज्वरम् ।
तस्माज्ज्वरविमुक्तोऽपि स्नानं विषमिव त्यजेत् ॥
बलवर्णाग्निवपुषां यावन्न प्रकृतिर्भवेत् ।
तावज्ज्वरेण मुक्तोऽपि वर्ज्जनीयानि वर्ज्जयेत् ॥"
अथ वातज्वराधिकारः । तत्र वातज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्व्विकां संप्राप्तिमाह ।
"वातलाहारचेष्टाभ्यां वायुरामाशयाश्रयः ।
वहिर्निरस्य कोष्ठाग्निं ज्वरकृत् स्याद्रसानुगः ॥"
अथ तस्य पूर्व्वरूपमाह । जृम्भात्यर्थं समीरणादिनि । समीरणात् ज्वरे उत्पत्स्यति अत्यर्थं जृम्भा स्यात् । जृम्भा च श्रमादिपूर्व्विका भवति ॥
अथ वातज्वरस्य लक्षणमाह ।
"वेपथुर्व्विषमो वेगः कण्ठौष्ठमुखशोषणम् ।
निद्रानाशः क्षवस्तम्भो गात्राणां रौक्ष्यमेव च ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता ।
शूलाध्माने जृम्भणञ्च भवत्यनिलजे ज्वरे ॥"
एतानि लक्षणानि प्रायो भाविन्येन सुश्रुतेन निर्द्दिष्टानि । चकारादन्यान्यपि चरकनिदानोक्तानि बोद्धव्यानि । तान्येव श्लोकेन प्रदर्श्यन्ते ।
"भवन्ति विविधा वातवेदना स्यादसुप्तता ।
पिण्डिकोद्वेष्टनं कर्णस्वनो वक्त्रकषायता ॥
ऊरुसादो हनुस्तम्भो विश्लेषः सन्धिजानुनोः ।
शुष्ककासो वमिर्लोमदन्तहर्षः श्रमभ्रमौ ॥
अरुणं नेत्रमूत्रादि तृट् प्रलापोष्णकामिता ॥"
विषमो वेगः शरीरोष्णतादिरूपो ज्वरवेगो विषमो भवतीत्यर्थः । क्षवस्तम्भः छिक्काया अभावः । तथा च वाग्भटः ।
"हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः ॥" इति । ज्वरकोऽपि । क्षवथूद्गारनिग्रह इति । शिरोहृद्गात्ररुक् गात्रपदे प्रयुक्ते शिरोहृच्छब्दप्रयोगस्तत्र विशेषेण वेदनाबोधनार्थः ॥ * ॥

"ज्वराभिभूतः षडहे व्यतीते
विपक्वदोषः क्षतलङ्घनादिः ।
यो भेषजं खादति वैद्यवश्यो
निःसंशयं हन्त्यचिरात् स रोगान् ॥"
ज्वराभिभूतः वातज्वराभिभूतः । विपक्वदोषः दारोग्यदर्शने [illegible] ।
लङ्घनविधाने विशेषमाह चरकः ।
"ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजितम् ।
पाचनं शमनीयं वा कषायं पाययेद्भिषक् ॥"
सुश्रुतोऽप्याह ।
"वातिके सप्तरात्रेण दशरात्रेण पैत्तिके ।
श्लैष्मिके द्वादशाहेन ज्वरे युञ्जीत भेषजमिति ॥"
ननु अन्नं वै प्राणिनां प्राणा इति श्रुतिः तदन्नं विना प्राणिभिः कथं स्थातव्यमित्याह ।
"दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता ।
न हि दोषक्षये कश्चित् सोढुं शक्नोति लङ्घनम् ॥
कफपित्ते द्रवे धातू सहेते लङ्घनं बहु ।
आमक्षयादूर्द्ध्वमपि वायुर्न सहते क्षणम् ॥" * ॥
भेषजमाह ।
"श्रीफलः सर्व्वतोभद्रा कामदूती च शोणकः ।
तर्कारी गोक्षुरः क्षुद्रा बृहती कलसी स्थिरा ॥
रास्ना कणा कणामूलं कुष्ठं शुण्ठी किरातकः ।
मुस्तामृता बला बालं द्राक्षा यासः शताह्विका ॥
एषां क्वाथो निहन्त्येव प्रभञ्जनकृतं ज्वरम् ।
सोपद्रवञ्च योगोऽयं सर्व्वयोगवरः स्मृतः ॥"
श्रीफलो विल्वः । सर्व्वतोभद्रा गम्भारी । कामदूती पाटला । शोणकः शोनापाढ़ा इति लोके । तर्कारी गणिकारिका । कलसी पृश्निपर्णी । स्थिरा शालिपर्णी । बालं सुगन्धवाला । यासो यवासः । इति दशमूलादिक्वाथः ॥ * ॥
सुश्रुतस्तु ।
"पञ्चमूली कषायन्तु पाचनं वातिके ज्वरे ।" इति ।
अत्र पञ्चमूली बृहत्पञ्चमूली । अतएव त्रिशती ।
"श्रीपर्णी तर्कारी श्रीफलटुण्टुकपाटलामूलैः ।
पाचनमुदितं मारुतजनितज्वरहारिवारिणि क्वथितैः ॥"
इति बृहत्पञ्चमूली क्वाथः ॥ * ॥
"किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः ।
त्रिपर्णीकलसीविश्वैः क्वाथो वातज्वरापहः ॥"
उदीच्यं वालकम् । त्रिपर्णी शालिपर्णी । कलसी पृश्निपर्णी । इति किरातादिक्वाथः ॥ * ॥
"गुडूचीपिप्पलीमूलनागरैः पाचनं कृतम् ।
वातज्वरे तथा पेयं कालिङ्गं सप्तमेऽहनि ॥"
कालिङ्गं कृतं ऐन्द्रयवं कृतम् ॥ * ॥
त्रिशती ।
"विश्रान्तताम्रन्धिकसिद्धतोयं
मरुज्ज्वरस्याभिवतः कुतोऽयम् ।
क्वाथोऽथ कुस्तुम्बुरुदेवदारुक्षुद्रौषधैः पाचनमत्र चारु ॥"
औषधं शुण्ठी । क्वाथः पाचनमिति । वेदाः प्रमाणमितिवत् ।
"[illegible]मूलीबलारास्नाकुलत्थैः सह पुष्करैः ।
कृत्वाम्भिरःकम्पं पर्व्वभेदं मरुज्ज्वरम् ॥"
[illegible]दिः । इति बृहत्पञ्चमूल्यादिक्वाथः ॥
[illegible]सीनामृतवह्निविश्वा-
कासिन्धुकभूमिनिम्बैः ।
[illegible]रचितः कषायो
[illegible]हताशनो हन्ति गदानिमांस्तु ॥
ज्वरं मरुद्दुष्टिसमुद्भवं तथा
बलासजश्वानलमन्दताश्च ।
कण्ठावरोधं हृदयावरोधं
स्वेदञ्च रोमाञ्चहिमत्वमोहान् ॥"
इति कणादिक्वाथः ॥ * ॥
"शुद्धं शङ्करशुक्रमक्षतुलितं मारारिनारीरजस्तावत्तावदुमापतिस्फुटगलालङ्कारवस्तु स्मृतम् ॥
तावत्येव मनःशिला च विमला तावत्तथा टङ्कणं
शुण्ठी हारघमिता कणा च मरिचं दिक्पालसंख्याक्कम् ॥
विषादि वस्तूनि शिलोपरिष्टा-
द्विचूर्णयेद्वासरमि शोधयेच्च ।
ततस्तु खल्ले रसगन्धकौ च
चूर्णञ्च तद्यामयुगं विमर्द्द्य ॥
कल्पतरुनामधेयो यथार्थनामा रसः श्रेष्ठः ।
समीरणश्लेष्मगदान् हरते मात्रास्य गुञ्जैका ॥
आर्द्रकेण समेन भक्षितो
हन्ति वातकफसम्भवं ज्वरम् ।
श्वासकासमुखसेकशीतता-
वह्निमान्द्यविरुचींश्च नाशयेत् ॥
नस्येनाश्वेव हरति शिरोऽर्त्तिं कफवातजाम् ।
मोहं महान्तमपि च प्रलापं क्षवथुग्रहम् ॥"
कल्पतरुरसः ॥ सामान्यज्वरचिकित्सोक्तो महाज्वराङ्कुशः प्रदेयोऽत्र ॥ * ॥
"विषमहौषधमागधिकोग्रया
द्युमणिरक्तकमार्द्रकमर्द्दितम् ।
क्रमविवर्द्धितमुद्दलितज्वर-
स्त्रिपुरभैरव एव रसो वरः ॥"
द्युमणिः मारितं ताम्रं तस्य भागाः पञ्च । रक्तकं हिङ्गुलं तस्य भागाः षट् । मात्रास्य रक्तिकार्द्धम् । त्रिपुरभैरवो रसो ज्वरे ॥ * ॥
"वातश्लेष्मज्वरे स्वेदं जङ्घापार्श्वास्थिमूलिनि ।
पीनसश्वासबाधिर्य्ये कारयेत्तद्विधानवित् ॥
शीतशां मार्द्दवं कृत्वा नीत्वा पावकमाश्रयम् ।
हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति ॥
"खर्परभ्रष्टपटस्थितकाञ्जिकसंसिक्तवालुकास्वेदः ।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥"
वालुकास्वेदः कम्पे शिरोहृदयगात्रव्यथायां जृम्भायाम् । पादसुप्ततायां पिण्डिकोद्वेष्टने ऊरुसादे हनुस्तम्भे लोमहर्षे च ॥ * ॥
"मातुलुङ्गफलकेशरो धृतः
सिन्धुजन्मसरिपान्वितो मुखे ।
हन्ति वातकफरोगमास्यगं
शोषमाशु जड़तामरोचकम् ॥"
इति कवलः कण्ठौष्ठमुखशोषे ॥ * ॥

अन्यच्च ।
"शर्करादाडिमाभ्याञ्च द्राक्षादाडिमयोस्तथा ।
कल्कं विभावयेदास्ये शोषवैरस्यनाशनम् ॥
द्राक्षामलकयोः कल्कं सघृतं वदने क्षिपेत् ।
तेन दृष्टा सुरसन्ताप' सशोषस्तेन शाम्यति ॥
सुरस जायते वक्त्रं रुचिर्भवति भोजने ॥" * ॥
निद्रानाशस्य निदानमाह ।
"लाघवं लङ्घनं चिन्ता व्यायाम' शोकभीक्रुधः ।
एभिरेव भवेन्निद्रानाशः श्लेष्मास्तिसञ्चयात् ॥"
अस्य चिकित्सामाह ।
'भङ्गस्तु विजयाचूर्णं मधुना निशि भक्षयेत् ।
निद्रानाशेऽतिसारे च ग्रहण्यां पावकक्षये ॥
गुडं पिप्पलीमूलस्य चूर्णेनालोड्य लिहन् ।
चिरादपि च नष्टां निद्रामाप्नोति मानवः ॥
वायसजङ्घामूलं मूलं वा शिरसि काकमाच्याश्च ।
विष्टतं निद्राजनकं कुडमूलं वा घृतं सगुडम् ॥'
पीतमिति शेषः ॥
"मूलन्तु काकमाच्या सह सूत्रेण मस्तके नियतम् ।
विन्यस्तानि नष्टनिद्रो निद्रामाप्नोत्येव सिद्धमिदम् ॥
शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ।
अभ्यङ्गोद्वर्त्तनस्नानमूर्द्धकर्णाक्षितर्पणम् ॥"
रस मांसरसम् ।
'कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ।
मनोऽनुकूला विषया काम निद्रासुखप्रदा ॥
रसः शाकं च सूपे च सर्पिर्यूषपय सु च ।
निद्रां सञ्जनयन्त्याशु पलाण्डुरुपयोजितः ॥'
रसः मांसरसः ।
"ऐक्षवं पीतकौ माषा' सुरा मांसरस' पय' ॥
गोधूमतिलमत्स्याश्च निद्रां कुर्व्वन्ति देहिनाम् ॥'
निद्रानाशे ॥ * ॥
'दारु हैमवती कुष्ठशताह्वाहिङ्गुसैन्धवैः ।
लिम्पेत् कोष्णैरम्लपिष्टैः शूलाध्मानयुतोदरम् ॥"
हैमवती श्वेतवचा । दारुषट्कलेपः शूलाध्मानयोः ॥ * ॥
"कटुतैलं कणाहिङ्गुवचालशुनसाधितम् ।
उष्णं विनिहितं हन्ति कर्णयोर्निस्वनं व्यथाम् ॥"
तैलं कर्णस्वने ॥ * ॥
"कणासुगन्धिवचया यवान्या च समन्विता ।
ताम्बूलसहिता हन्ति शुष्ककासं मुखे धृता ॥"
शुष्ककासे ॥ * ॥ पथ्यान्नमाह ।
'अमापवासानिलजे हितो नित्यं रसौदनः ।
मुद्गामलकयूषस्तु बद्धविट्काय दीयते ॥"
रसो विष्किरमांसरसः ॥
'पेयां वा रक्तशालीनां वस्तिपार्श्वशिरोरुजि ।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरीं पिबेत् ॥
कासी श्वासी च हिक्की च पञ्चमूलीशृतां
पिबेत् ॥"
पेयमिति शेषः । इति वातज्वराधिकारः ॥ * ॥
अथ पित्तज्वराधिकारः । तत्र पित्तज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्व्विकां सम्प्राप्तिमाह ।
'पित्तलाहारचेष्टाभ्यां पित्तमामाशयाश्रयम् ।
वह्निर्निरस्य कोष्ठाग्निं ज्वरकृत्स्यादसानुगम् ॥"
पित्तस्य पङ्गुत्वात्तेन कोष्ठाग्निरुष्मा बहिर्नेतुं न शक्यते । यत आह ।
'पित्तं पङ्गु कफः पङ्गु पङ्गवो मलधातवः ।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् ॥"
इति ॥
ततोऽत्र पित्तं वायुसहायं बोद्धव्यम् । यत आह ।
"ज्वरमेकरसं नास्ति न रोगोऽप्येकदोषजः ।
एकस्तु कुपितो दोषः इतरानपि कोपयेत् ॥" इति ।
अथ तस्य पूर्व्वरूपमाह । पित्तान्नयनयोर्दाह इति । पित्तात् ज्वरे उत्पत्स्यति नेत्रदाहः स्यात् । स च श्रमादिपूर्व्वको भवति ॥ * ॥
अथ पित्तज्वरस्य लक्षणमाह ।
"वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ।
कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते ॥
प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा ।
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥"
अतिसारः पित्तस्य सरत्वात् सद्रवत्वात् प्रशस्तिः स्वतोऽसार एव तस्य ज्वरोपद्रवत्वात् । वमिः यदा पित्तं कफस्थानं याति तदा बोद्धव्या । प्रलापोऽनर्थकं वचः । मूर्च्छादयः पूर्व्वरक्तानम् । मदः पूगकोद्रवधत्तूरभक्षणादिव मत्तता । भ्रमः चक्रारूढस्येव ज्ञानम् । चकारात् रक्तकोठादयो बोद्धव्याः ॥ * ॥ अथ पित्तज्वरस्य चिकित्सा ।
'आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधा-
यतः ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥"
इति वचनात् सामान्यतो ज्वरिमात्रस्य यावदारोग्यदर्शनं लङ्घनाभिधाने पित्तज्वरिणो लङ्घनविधाने विशेषमाह सुश्रुतः । पैत्तिके दशरात्रेण ज्वरं युञ्जीत भेषजमिति । दशरात्रेण लङ्घनवता अतीतेनेत्यर्थः ॥ * ॥
किन्तद्भेषजं तदाह ।
'तिक्तासुस्तायवै पाठाकटफलाभ्यां सहोदकम् ।
पक्वं सशर्करं पीतं पाचनं पैत्तिके ज्वरे ॥"
इति तिक्तादिक्वाथः ॥ * ॥
'पर्पटो वासकस्तिक्ता कैरातो धन्वयासकः ।
प्रियङ्गुश्च कृतः क्वाथ एषां शर्करया युतः ॥
पिपासादाहपित्तास्रयुक्तं पित्तज्वरं हरेत् ॥"
इति पर्पटादिक्वाथः ॥ * ॥
'द्राक्षा हरीतकी मुस्ता कटुका कृतमालकः ।
पर्पटश्च कृतः क्वाथ एषां पित्तज्वरापहः ॥
मुखशोषप्रलापान्तर्दाहमूर्च्छाभ्रमप्रयुत ।
पिपासारक्तपित्तानां शमनो भेदनो मत ॥"
इति द्राक्षादिक्वाथः ॥ * ॥
"पटोलयवधान्याकमधूकं मधुसंयुतम् ।
हन्ति पित्तज्वरं दाहं तृष्णां चातिप्रमाथिनीम् ॥"
इति पटोलादिक्वाथः ॥ * ॥
'गुडूच्यामलकीयुक्तः क्वथो वापि पर्पटः ।
पित्तज्वरं हरेत्तूर्णं दाहशोषभ्रमान्वितम् ॥"
इति गुडूच्यादिक्वाथः ॥ * ॥
एक पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ।
किं पुनर्यदि युज्येत चन्दनोशीरवालकैः ॥" * ॥
"ह्रीवेरं चन्दनोशीरघनपर्पटसाधितम् ।
दद्यात् सुशीतलं वारि तृट्छर्द्दिज्वरदाहनुत् ॥"
इति ह्रीवेरादिक्वाथः ॥ * ॥
"भूनिम्बातिविषालोध्रमुस्तकन्यवदान्तता ।
वासकं धान्यकं बिल्वं कषायो माक्षिकान्वितः ॥
विड्भेदश्वासकासांश्च रक्तपित्तज्वरं हरेत् ॥'
इति भूनिम्बादिक्वाथः ॥ * ॥
"द्राक्षाचन्दनपद्मानि मुस्ता तिक्तामृतापि च ।
धात्री बालमुशीरञ्च लोध्रेन्द्रयवपर्पटाः ॥
परूषकं प्रियङ्गुश्च यवासो वासकस्तथा ।
मधूकं कुलकं चापि किरातो धान्यकं तथा ॥
एषां क्वाथो निहन्त्येव ज्वरं पित्तसमुत्थितम् ।
तृष्णां दाहं प्रलापञ्च रक्तपित्तं भ्रमं क्लमम् ॥
मूर्च्छां छर्द्दिं तथा शूलं मुखशोषमरोचकम् ।
कासं श्वासञ्च हृल्लासं नाशयेन्नात्र संशय ॥'
इति महाद्राक्षादिक्वाथः ॥ * ॥
"सञ्चितो निशि पर्य्युषितः प्रातर्धान्याकतण्डुल
क्वाथः ।
पीतः शमयत्यचिरादन्तर्दाहं ज्वरं घोरम् ॥'
इति धान्याकक्वाथः ॥ * ॥
"अमृतायाः हिमः प्रातः भक्षितः पैत्तिकज्वरम् ।
वासायाश्च तथा कासरक्तपित्तज्वरान् जयेत् ॥"
"गुडूची भूमिनिम्बश्च बालं वीरणमूलकम् ।
मधु मुस्ता त्रिवृद्धात्री द्राक्षा वासा च पर्पटः ॥
एषां क्वाथो हरत्येव ज्वरं पित्तकृतं द्रुतम् ।
सोपद्रवमपि प्रातर्निपीतो मधुना सह ॥'
इति गुडूच्यादिक्वाथः ॥ * ॥
"पलाशस्य बदर्या वा निम्बस्य मृदुपल्लवैः ।
अम्लपिष्टैः प्रलेपोऽयं हन्याद्दाहयुतं ज्वरम् ॥ * ॥
उत्तानसुप्तस्य गभीरताम्र-
कांस्यादिपात्रे निहिते च नाभौ ।
शीताम्बुधारा बहुला पतन्ती
निहन्ति दाहं त्वरितं ज्वरञ्च ॥ * ॥
पथ्यां तैलघृतक्षौद्रैर्लिंह्याद्दाहज्वरापहः ।
क्वाथाद्यकपित्तदोषपञ्चश्वासान् हन्ति वमीरपि ।
तैलघृतक्षौद्रैरित्यत्र न समुच्चयस्तेन केवलेन क्षौद्रेणापि लिह्यात् ॥ * ॥
'काञ्जिकार्द्रपटेनावगुण्ठनं दाहनाशनम् ।
अथ शीतकषायस्त्विन्नशीतलीतलवारिभिः ॥ * ॥
द्राक्षामलककल्केन कवलोऽत्र हितो मतः ।
पक्वदाडिमबीजैर्वा धान्याकल्केन च क्षिपेत् ॥'
धानाका धान्याकम् । इति कवल ॥ * ॥
अथान्नमाह ।
"दाहवम्यर्द्दितं क्षामं निरन्नं तृषयान्वितम् ।
शर्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ॥"
लाजतर्पणं लाजाशक्तुरूपं तर्पणम् । तन्त्र पैत्तस्वरूपमुक्तं सामान्यज्वरचिकित्सायाम् ॥ * ॥
'मुद्गयूषोदनो देयः सितया पैत्तिके ज्वरे ।
हर्म्ये शुभ्राभ्रसङ्काशे शशाङ्ककरशोभिते ॥
मलयोद्भवसंसिक्ते स्यात् पित्तज्वरी नरः ॥
हारावली चन्दनशीतलानां
सुगन्धपुष्पाम्बरभूषितानाम् ।

नितम्बिनीनां सुपयोधराणा-
मालिङ्गनान्याशु हरन्ति दाहम् ॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ।
नार्य्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ॥”
इति पित्तज्वराधिकारः ॥ * ॥ * ॥
अथ श्लेष्मज्वराधिकारः । तत्र श्लेष्मज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां संप्राप्तिमाह ।
“श्लेष्मलाहारचेष्टाभ्यां कफ आमाशयाश्रयः ।
वह्निर्निरस्य कोष्ठाग्निं ज्वरकृत् स्याद्रसानुगः ॥”
कफस्य कोष्ठाग्नितेजसो वह्निर्नयनेन पक्तुत्वादाशङ्कायां जातायां पित्तस्येव सिद्धान्तो बोद्धव्यः ॥ * ॥ अथ तस्य पूर्ब्बरूपमाह ।
कफान्नानभिनन्दनमिति । कफात् ज्वरे उत्पत्स्यति अन्नानभिलाषः स्यात् । स च श्रमादिपूर्ब्बको भवति ॥ * ॥ अथ श्लेष्मज्वरस्य लक्षणमाह ।
“स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता ।
शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ॥
गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता ।
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ॥”
स्तैमित्यं अङ्गानामार्द्रपटावगुण्ठितत्वमिव । स्तिमितो वेगः ज्वरस्य मन्दवेगः । आलस्यं समर्थस्यापि कर्म्मण्यप्रवृत्तत्वाद्यः । स्तम्भः अङ्गानम्रता । तृप्तिः अन्नाभिलाषे सत्यपि भोजनासामर्थ्यम् । गौरवं गात्राणाम् । शीतं शीतं लगति । उत्क्लेदः वमनोपस्थितिरिव । अतिनिद्रता निद्राधिक्यम् । प्रतिश्यायो नासारोगविशेषः । अरुचिः भोजनानिच्छा । चकारात् पिडका शीता मुखप्रसेकश्छर्द्दिस्तन्द्रा हृदयोपलेप उष्णाभिलाषो वह्निमान्द्यमिति । यत उक्तम् ।
“प्रसेकः पिड़का शीतास्छर्द्दिस्तन्द्रोष्णकामिता ।
कफेन लिप्तहृदयं भवेदग्नेश्च मन्दता ॥”
अथ श्लेष्मज्वरचिकित्सा ।
“आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥”
इति वचनात् सामान्यतो ज्वरिमात्रस्य यावदारोग्यदर्शनं लङ्घनाभिधाने श्लेष्मज्वरिणो लङ्घनविधाने विशेषमाह सुश्रुतः । श्लैष्मिके द्वादशाहेन ज्वरे युञ्जीत भेषजमिति । द्वादशाहेन लङ्घनवता यतीतेनेत्यर्थः ॥ * ॥ किन्तु श्लेषणं तदाह ।
“पिप्पल्यादिकषायन्तु कफजे परिपाचनमिति ।”
पिप्पल्यादिगणमाह ।
“पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली ।
नागरं चित्रकं चव्यं रेणुकैलाजमोदिकाः ॥
सर्षपो हिङ्गु भार्गी च पाठेन्द्रयवजीरकाः ।
महानिम्बश्च मूर्व्वा च विषा तिक्ता विडङ्गकम् ॥
पिप्पल्यादिगणो ह्येष कफमारुतनाशनः ।
गुल्मशूलज्वरहरो दीपनश्चामपाचनः ॥”
इति पिप्पल्यादिक्वाथः ॥
“क्षौद्रोपकुल्यासंयोगः श्वासकासज्वरापहः ।
प्लीहानं हन्ति हिक्काञ्च बालानामपि शस्यते ॥
पिप्पलीं त्रिफलाञ्चापि समभागां ज्वरी लिहन् ।
मधुना सर्पिषा वापि कासी श्वासी सुखी भवेत् ॥ * ॥
कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह ।
श्वासकासज्वरहरो लेहोऽयं कफनाशनः ॥”
इति चातुर्भद्रिकावलेहः ॥ * ॥
“कट्फलं पौष्करं शृङ्गी यवानी कारवी तथा ।
कटुत्रयञ्च सर्व्वाणि समभागानि चूर्णयेत् ॥
आर्द्रकस्य रसैर्लिह्यान्मधुना वा कफज्वरी ।
कासश्वासारुचिच्छर्द्दिश्लेष्मानिलनिवृत्तये ॥”
इत्यष्टाङ्गोऽवलेहः ॥ * ॥
“सिन्धुवारदलक्वाथं कणाढ्यं कफजे ज्वरे ।
जङ्घयोश्च बले क्षीणे कर्णे च पिहिते पिबेत् ॥
यवानी पिप्पली वासा तथा खाखसवल्कलम् ।
एषां क्वाथं पिबेत् कासे श्वासे च कफजे ज्वरे ॥
वासाक्षुद्रामृताक्वाथः क्षौद्रेण ज्वरकासहृत् ॥”
इति वासादिक्वाथः ॥ * ॥
“मरिचं पिप्पलीमूलं नागरं कारवी कणा ।
चित्रकं कट्फलं कुष्ठं ससुगन्धिवचा शिवा ॥
कण्टकारी जटा शृङ्गी यवानी पिचुमर्द्दकः ।
एषां क्वाथो हरत्येव ज्वरं सोपद्रवं कफात् ॥”
इति मरिचादिक्वाथः ॥
वातज्वराधिकारोक्तकल्पतरुरसोऽपि श्लेष्मज्वरे दातव्यस्तस्य कफवाधिहरत्वात् ॥ * ॥
“सिन्धुत्रिकटुराजीभिरार्द्रकेण कफे हितः ॥”
कवल इति शेषः ॥ * ॥ अथान्नमाह ।
“मुद्गयूषौदनो देयो ज्वरे कफसमुत्थिते ॥”
इति श्लेष्मज्वराधिकारः ॥ * ॥
अथ वातपित्तज्वराधिकारः । तत्र द्वन्द्वजज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां संप्राप्तिमाह । तत्र वातपित्तज्वरस्य ।
“वातपित्तकरैर्व्वातपित्ते आमाशयाश्रये ।
वह्निन्निरस्य कोष्ठाग्निं रसगे ज्वरकारिणी ॥”
स्यातामिति शेषः ॥ * ॥
अथ तस्य पूर्ब्बरूपमाह ।
“प्रायूपे वातपित्तस्य भवतो वातपैत्तिके ॥”
ज्वर इति शेषः ॥ * ॥
अथ वातपित्तज्वरस्य लक्षणमाह ।
“तृष्णा मूर्च्छा भ्रमो दाहो निद्रानाशः शिरोरुजा ।
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तमः ॥
पर्व्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥”
पर्व्वभेदः पर्व्वाणि भिद्यन्त इवेति सन्धिषु व्यथा ॥
अथ वातपित्तज्वरस्य चिकित्सा ।
“वातपित्तज्वरे देयमौषधं पञ्चमेऽहनि ।
किराततिक्तममृतां द्राक्षामामलकीं शटीम् ।
निष्क्वाथ्य सगुडं क्वाथं वातपित्तज्वरे पिबेत् ॥”
इति किरातादिक्वाथः ॥ * ॥
“गुडूची पर्पटो मुस्तं किराती विश्वभेषजम् ।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥”
इति पञ्चभद्रक्वाथः ॥ * ॥
“त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकैः ।
शृतमम्बु हरत्याशु वातपित्तभवं ज्वरम् ॥”
इति त्रिफलादिक्वाथः ॥ * ॥
“मधुकं सारिवा द्राक्षा मधूकं चन्दनोत्पलम् ।
काश्मीरफलकं लोध्रं त्रिफला पद्मकेशरम् ॥
परूषकं मृणालञ्च क्षिपेत् संचूर्ण्य वारिणि ।
निशोषितं सिताक्षौद्रलाजयुक्तञ्च तत् पिबेत् ।
वातपित्तज्वरं दाहं तृष्णामूर्च्छारुचिभ्रमान् ॥
शमयेद्रक्तपित्तञ्च जीमूतमिव मारुतः ॥”
अत्र मधुकादिम्मृणालान्तं समुदितं पलपरिमितं संचूर्ण्य क्षिपेत् वारिणि षट्पलपरिमिते । मधुकादिर्हिमो द्वाहे ॥ * ॥
अथान्नमाह ।
“मुद्गामलकयूषस्तु वातपित्तज्वरे हितः ।
महादाहे प्रशस्तौ यूषश्चणकसम्भवः ॥”
दाड़िमामलकमुद्गसम्भवो यूष उक्त इति वातपैत्तिके ।
“कफपित्तहरा मुद्गाः कारवेल्लादयस्तथा ।
प्रायेण न च ते देया वातपित्तोत्तरे ज्वरे ॥
दग्धास्तु ज्वरविष्टम्भशूलोदावर्त्तकारिणः ॥”
इति वातपित्तज्वराधिकारः ॥ * ॥
अथ वातश्लेष्मज्वराधिकारः । तत्र तस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां सम्प्राप्तिमाह ।
“वातश्लेष्मकरैर्व्वातकफावामाशयाश्रयौ ।
वह्निन्निरस्य कोष्ठाग्निं रसगौ ज्वरकारिणौ ॥”
पूर्ब्बरूपमाह ।
“प्राग्रूपे वातकफयोः स्याता वातकफज्वरे ॥”
तस्य लक्षणमाह ।
“स्तैमित्यं पर्व्वणां भेदो निद्रागौरवमेव च ।
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनम् ॥
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥”
स्वेदाप्रवर्त्तनं स्वेदस्य व्याधमन्ताद्भावेन प्रवृत्तिः ॥
तथाह हारीतः ।
“शिरोग्रहः स्वेदभवश्च कासो
ज्वरस्य लिङ्गं कफवातजस्येति ॥”
स्वेदभवः स्वेदोत्पत्तिः ॥ * ॥
ननु स्वेदः पित्तस्य धर्म्मः अतएव पित्तज्वरे कफक्षौष्ठमुखगामीनां पाकः स्वेदश्च जायत इत्युक्तम् । तस्मात् कथं वातश्लेष्मज्वरे स्वेदस्यातिप्रवृत्तिः । उच्यते । विकृतिविषमसमवायारब्धत्वान्न दोष इति वार्त्तिकः । प्रकृतिसमसमवायस्य विकृतिविषमसमवायस्य चायमर्थः प्रकृत्या हेतुभूतया समः कारणानुरूपः समवायः कार्य्यकारणभावः सम्बन्धः प्रकृतिसमसमवायः कारणानुरूपं कार्य्यमिति यावत् । यथा प्रकृतेर्यथाश्रितैः शुक्लैस्तन्तुभिः समवायकारणैरारब्धः पटः शुक्ल एव भवति । यथा प्रकृतेन कैवलेन वातेन पित्तेन कफेन वा जनितो ज्वरो वातादुक्तैर्धर्म्मैर्मद्वेगादिक-

तत्र कस्यागन्तोः को निजो दोष इत्यपेक्षाया-
माह ।
"कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः ।
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः ॥"
कामशोकभयात् कामशोकभयजादागन्तोर्वायुः
कुप्यति । क्रोधात् क्रोधजादागन्तोः पित्तं
कुप्यति । भूताभिषङ्गात् भूतावेशजादागन्तोः
त्रयो मला दोषाः कुप्यन्ति इत्यर्थः । भूत-
सामान्यलक्षणाः भूतस्य भूतलक्षणस्य सामान्यं
समानता येषां तानि भूतसामान्यानि भूतसा-
मान्यानि लक्षणानि येषां ते भूतसामान्य-
लक्षणाः मलाः ॥ * ॥
अथागन्तुज्वराणां हेतुभेदैर्लक्षणभेदानाह ।
"श्यावास्यता विषकृते तथातीसार एव च ।
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥"
विषकृते स्थावरजङ्गमविषभक्षणकृते ज्वरे ।
श्यावः शुक्लानुविद्धः कृष्णो वर्णः शाकवर्णो वा ।
अतीसारः स्थावरविषेणैव तस्याधोगामित्वात् ।
तोदः सूचीव्यधनेनेव व्यथा ॥ * ॥
"ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुस्तथा ।
कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम् ॥
हृदये वेदना चास्य गात्रञ्च परिशुष्यति ॥"
कामजे समीहितकान्ताद्यप्राप्तिनिमित्तके ज्वरे ।
चकारात् वाग्भटोक्तान्यपि लक्षणानि बोद्ध-
व्यानि । तानि यथा,—
"कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः ।
भयात् प्रलापः शोकाच्च भवेत् कोपाच्च वेपथुः ॥"
भयात् भयजे ज्वरे प्रलापः । शोकाच्च चकारेण
प्रलाप एवानुकृष्यते । कोपाच्च कोपादपि
वेपथुर्भवति ॥ * ॥ ननु वेपथुर्वातस्य धर्मः तत्
कथं क्रोधजे ज्वरे वेपथुः । यत उक्तम् । क्रोधात्
पित्तमिति । उच्यते ।
"एकः प्रकुपितो दोष इतरानपि कोपयेत् ॥"
इति वचनात् पित्तकोपितवातजन्य एवात्र
वेपथुः ॥ * ॥ किञ्च क्रोधाद्वायुरपि भवति ।
यत उक्तं विदेहेन । क्रोधशोकौ स्मृतौ वात-
पित्तरक्तप्रकोपनाविति । यत उक्तम् ।
"भूताभिषङ्गादुद्वेगो हास्यं रोदनकोपने ।
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥"
भूताभिषङ्गोत्थो विषमज्वरो भवति । कदा-
चिदपि वेगवान् कदाचिच्छान्तवेग इत्यर्थः ॥
"अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ।"
तृष्णा चेति चकारेण हारीताशुवादि वाग्-
भटोक्तञ्च बोद्धव्यम् । तद्यथा,—
"यत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ।
पूर्ब्बं मनस्ततो देहस्ततो विस्फोटविभ्रमैः ।
सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्द्धते ज्वर इति ॥"
अथ तेषां चिकित्सा ।
"चागन्तुजे ज्वरे नैव नरः कुर्ब्बन्ति लङ्घनम् ॥"
तथा च वाग्भटः ।
"शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् ॥"
नेष्यते इति शेषः । अन्यच्च ।

"लङ्घनं न हितं कामशोकचिन्ताग्रहादिजे ।
भयभूतश्रमक्रोधलङ्घनैश्च कृते ज्वरे ॥
किन्तु दीप्ताग्नये तत्र दद्यान्मांसरसौदनम् ।
अभिघातज्वरे युञ्ज्यात् क्रियामुष्णविवर्ज्जिताम् ॥
कषायं मधुरं स्निग्धं यथादोषमथापि वा ।
अभिघातज्वरो नश्येत् पानाभ्यङ्गेन सर्पिषः ॥
रक्तावसेकैर्म्मेध्यैश्च तथा मांसरसौदनैः ॥"
मेध्यैर्म्मेधाय हितैः ॥ * ॥
"वधवन्धश्रमाध्वभङ्गभ्रंशसमुद्भवान् ।
ज्वरानुपाचरेत् पूर्ब्बं क्षीरमांसरसौदनैः ॥"
वधस्ताड़नं कर्णादिवेधो वा । भङ्गश्छेदभेदादिकः ।
भ्रंशो वृक्षादितः पतनम् ॥ * ॥
"अध्वश्रान्तेषु चाभ्यङ्गं दिवानिद्राञ्च कारयेत् ।
ओषधीगन्धविषजौ विषपित्तप्रबाधनैः ।
जयेत् कषायैर्म्मतिमान् सर्व्वगन्धकृतैर्भिषक् ॥"
सर्व्वगन्धमाह ।
"चातुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् ।
लवङ्गसहितञ्चैव सर्व्वगन्धं विनिर्द्दिशेत् ॥ * ॥
क्रोधजे पित्तजे काम्ये नार्य्याः सद्वाक्यमेव च ।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ।
कामैरथ मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ॥
सद्वाक्यैश्च शमं याति ज्वरः क्रोधसमुत्थितः ॥"
कामैः कामायेष्टैः । मनोज्ञैः धिक्कारादिभि-
र्भयजनकवचनैर्व्वा ॥ * ॥
"कामात् क्रोधज्वरो नश्येत् क्रोधात् कामज्वर-
स्तथा ।
घातिताभ्यामुभाभ्याञ्च कामक्रोधज्वरक्षयः ॥"
घातिताभ्यामुभाभ्यां मनसि निगृहीताभ्यां काम-
क्रोधाभ्याम् ॥ * ॥
"भूतविद्यासमुद्दिष्टैर्बन्धावेशनताड़नैः ।
जयेद्भूताभिषङ्गोत्थं मनःसान्त्वैश्च मानसम् ॥"
ताड़नैरित्यस्य स्थाने केचित् पूजनैरिति पठन्ति ॥
"सहदेवाया मूलं विधिना कण्ठे निवद्धमपहरति ।
एकद्वित्रिचतुर्भिर्द्दिवसैर्भूतज्वरं पुंसाम् ॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिभिर्जयेत् ।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहदुष्टिजौ ॥"
इत्यागन्तुज्वराधिकारः ॥ * ॥
अथ विषमज्वराधिकारमाह । तत्र विषम-
ज्वरस्य निदानादिचिकित्सापर्य्यन्तं विषमज्वर-
शब्दे द्रष्टव्यम् ॥ * ॥
अथ जीर्णज्वराधिकारः । तस्य निदानादिकं
जीर्णज्वरशब्दे द्रष्टव्यम् ॥ * ॥
अथ दुर्ब्बलजनितस्य ज्वरस्य चिकित्सामाह ।
"हरीतकी निम्बपत्रं नागरं सैन्धवोऽनलः ।
एषां चूर्णं सदा खादेत् दुर्ब्बलज्वरशान्तये ॥"
इति हरीतक्यादि चूर्णम् ॥ * ॥
"अरुचिमनलमान्द्यं पीनसश्वासकासा-
नुदरमुदकदोषानाशु हन्यादशेषान् ।
जनयति तनुकान्तिं चित्तनेत्रप्रसादं
पलपरिमितशुण्ठीचोदविद्धः कषायः ॥"
इति शुण्ठीक्वाथः ॥ * ॥

"विषं भागद्वयं दग्धकपर्द्दः पञ्चभागकः ।
मरिचं नवभागञ्च चूर्णं वस्त्रेण शोधयेत् ॥
आर्द्रकस्य रसेनास्य कुर्य्यान्मुद्गनिभां वटीम् ।
वारिणा वटिकायुग्मं प्रातः सायञ्च भक्षयेत् ॥
अयं रसो ज्वरे योज्यः सामे दुर्ब्बलकेऽपि च ।
अजीर्णाध्मानविष्टम्भशूलेषु श्वासकासयोः ॥"
इति दुर्ब्बलजेता रसः ॥ * ॥
"पटोलमुस्तामृतवल्लिवासकं
सनागरं धान्यकिराततिक्तकम् ।
कषायमेषां मधुना पिबन्नरो
निवारयेन् दुर्ब्बलदोषमुल्वणम् ॥"
इति पटोलादिक्वाथः ॥ * ॥
"किराततिक्तत्रिवृदम्बुपिप्पली-
विड़ङ्गविश्वाकटुरोहिणीरजः ।
निहन्ति लीढं मधुनातिसत्वरं
सुदुस्तरं दुर्ब्बलदोषजं ज्वरम् ॥"
इति किराततिक्तादिचूर्णम् ॥ * ॥
"भोजनादौ नरैर्भुक्तं शुण्ठीराज्यभयोत्थितम् ।
कल्कं तु सहते नित्यं नानादेशोद्भवं जलम् ॥
महार्द्रकयवक्षारौ पीत्वा चोष्णेन वारिणा ।
नानादेशसमुद्भूतंवारिदोषमपोहति ॥" * ॥
अथ साध्यस्य ज्वरस्य लक्षणमाह ।
"बलवत्स्वपि दोषेषु ज्वरः साध्योऽनुपद्रवः ॥"
ज्वरस्योपद्रवानाह ।
"श्वासमूर्च्छारुचिच्छर्द्दितृष्णातीसारविड्ग्रहाः ।
हिक्काकासाङ्गभेदाश्च ज्वरस्योपद्रवा दश ॥" * ॥
प्रसङ्गादुपद्रवाणां चिकित्सायां विशेषमाह ।
"संजातोपद्रवो व्याधिस्त्याज्यो न स्याच्चिकित्-
सकैः ।
व्याधौ शान्ते प्रणश्यन्ति सद्यः सर्व्वेऽप्युपद्रवाः ॥
अतो व्याधिं जयेद्यत्नात् पूर्ब्बं पश्चादुपद्रवम् ।
भिषग्यः कुशलः सोऽत्र जयेत् पूर्ब्बमुपद्रवम् ॥
तेष्वपि प्रचुरेषु प्राङ्नाशयेदाशुकारिणम् ।
मूलव्याधिं जयेत् पूर्ब्बं जेयो यो वा भवेद्बली ॥
अविरोधेन वा कुर्य्यादुभयोरपि च क्रियाम् ॥"
तत्र ज्वरे श्वासस्य चिकित्सा ।
"सिंही व्याघ्री ताम्रमूली पटोली
शृङ्गी पद्मा पुष्करं रोहिणी च ।
शाकं शटी शैलमल्लाश्च बीजं
श्वासं हन्यात् सन्निपाते दशाङ्गः ॥"
सिंही वड़ोकटैया । व्याघ्री कटैया । ताम्रमूली
दुरालभा । पद्मा भार्गी । रोहिणी कटुकी ।
शैलमल्ली कोरैया । इति दशाङ्गो योगः ॥ * ॥
"भार्गीनिम्बघनाभयामृतलताभूनिम्बवासाविषा-
त्रायन्तीकटुकावचात्रिकटुकश्योनाकशक्रद्रुमैः ।
रास्नायासपटोलपाटलिशटीदार्व्वीविशाला-
त्रिवृद्-
ब्राह्मीपुष्करसिंहिकाद्वयनिशाधात्र्यघदेव-
द्रुमैः ॥
क्वाथोऽयं खलु सन्निपातनिवहान् द्वात्रिंशतो
पागतो ।
दुर्द्धर्षान्निजतेजसा विजयते सर्पान् गरुत्मानिव

अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् ।
कराग्रं यो न धुनुयात् विस्फोटो वा न जायते ।
शुद्धो भवति धर्म्मेण पितामहवचो यथा ॥
कल्पान्तरमाह ।
सौवर्णे राजते ताम्रे आयसे मृण्मयेऽपि वा ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीमायसीञ्च सुशोधिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये न नखस्पर्शगोचरे ।
परीक्षेतार्द्रपर्णेन चुचुकारं सघोषकम् ॥
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रमम्टतं घृत ! त्वं यज्ञकर्म्मसु ॥
दह पावक ! पापं त्वं हिमशीतः शुचौ भव ।
उपोषितं ततः स्नातमार्द्रवाससमागतम् ॥
ग्राहयेन्मुद्रिकां तान्तु घृतमध्यगतान्तथा ।
प्रदेशिनीञ्च तस्याथ परीक्षेयुः परीक्षकाः ॥
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाशुचिः॥
प्रयोगस्तु । मध्यविधाष्टयवतण्डुलमध्यमिताङ्गुलिषोड़शाङ्गुलमितप्रस्तारे तथाविधाङ्गुलिचतुष्टयखाते ताम्रादिघटितेऽशक्तौ मृण्मये वा चक्राकारे वर्त्तुले पात्रे लौकिकाष्टरत्तिकाधिकमाषद्वयाधिकत्रयस्त्रिंशत्तोलकरूप- ३३ । २ ।८। वैदिकपलदशकमितं घृतं एवं तैलञ्च निक्षिप्य लौकिकचतुरत्तिकाधिकपञ्चमाषकषट्षष्टितोलकरूप- ६६।५ । ४ । वैदिकविंशतिपलपरिमितं केवलं गव्यं घृतं वा निक्षिप्य तस्मिन् सुतप्ते सकृद्धौतां पञ्चरत्तिकामितां काञ्चनमुद्रिकां रजतादिकां वा निक्षिपेत् । धर्म्मावाहनादिहवनान्तं तुलोक्तं सदक्षिणं कर्म्म कृत्वा,—
ओम् परं पवित्रमम्टतं ! घृत त्वं यज्ञकर्म्मसु ।
दह पावक ! पापं त्वं हिमशीतः शुचौ भव ॥
इत्यनेनाभिमन्त्रयेत् प्राड्विवाकः । ततः कृतोपवासः स्नातार्द्रवासाः शोध्यशिरसि प्रतिज्ञापत्रं निधाय,—
ओम् त्वमग्ने ! सर्व्वभूतानामन्तश्चरसि पावक !!
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं करे मम ॥
इत्यनेनाभिमन्त्र्य आर्द्रपत्रनिक्षेपकृतचुचुकशब्दात् घृतात् मुद्रिकां तर्ज्जन्यङ्गुष्ठाभ्यां उत्तोलयत् । घृततैलाभ्यां वा तप्तमाषकमुत्तोलयेत् । अदग्धश्चेत्तदा शुद्ध इति ततो दक्षिणां दद्यात् ॥"
इति दिव्यतत्त्वम् ॥

तप्तमुद्रा, स्त्री, (तप्ता अग्निसन्तप्ता मुद्रा।) शरीरधार्य्याग्नितप्तधातुमयभगवदायुधचिह्नम् । यथा,
"आषाढ़शुक्लद्वादश्यां हरौ शिशयिषौ सति ।
वैष्णवः पारणं कृत्वा तप्तमुद्राश्च धारयेत् ॥
ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रश्चैकान्तितद्धिये ।
कुर्व्वन्नात्मार्पणं तप्तमुद्राभिर्देहमङ्कयेत् ॥*॥
तप्तमुद्राधारणं वाराहे तप्तमुद्राप्रसङ्गे ।
चक्रादिधारणं पुंसां परं सम्बन्धवेदनम् ।
पातिव्रत्यनिमित्तं हि वलयादिविभूषणमिति ॥*
अथ तप्तमुद्राधारणविधाता । वायुपुराणे ।
अग्निनैव च सन्तप्तं चक्रमादाय वैष्णवः ।
धारयेत् सर्व्ववर्णानां हरिसालोक्यसिद्धये ॥"
ब्रह्मखण्डे ।
कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनूम् ।
चक्रादिचिह्नितां भूप ! धारयेद्वैष्णवो नरः ॥
नारदीयपञ्चरात्रे ।
द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् ।
हरेः सुदर्शनं तप्तं धारयेत्तद्विचक्षणः ॥
सौपर्णे च श्रीभगवद्गरुड़सम्वादे तप्तमुद्राप्रकरणे ।
गरुत्मन्विशेषेण सर्व्ववर्णेष्वयं विधिः ।
विप्रो वा क्षत्त्रियो वापि वैश्यः शूद्रस्तथैव च ॥
पाद्मे ।
अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ।
ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥
किञ्च । तत्रैवोत्तरखण्डे श्रीशिवोमासम्वादे ।
शङ्खचक्राङ्कनं कुर्य्याद्ब्राह्मणो वाहुमूलयोः ।
हुताग्निनैव सन्तप्य सर्व्वपापापनुत्तये ॥
चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा ।
धारयित्वैव विधिवद्ब्रह्मकर्म्म समारभेत् ॥*॥
किञ्च । तत्प्रसङ्ग एव ।
अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ॥
किञ्च ।
न तस्य किञ्चिदश्नीयादपि कृत्यचर्हसिण: ।
सर्व्ववेदविदो वापि सर्व्वशास्त्रविशारदः ॥
अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् ॥
किञ्च ।
तप्तेनैवाङ्कनं कुर्य्यात् ब्राह्मणस्य विधानतः ।
श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च ॥
हरेः पूजाधिकारार्थं चक्रं धार्य्यं विधानतः ।
वैष्णवत्वस्य सिद्ध्यर्थं भक्तिसिद्ध्यै विशेषतः ॥
किञ्च ।
उपवीतादिवद्धार्य्याः शङ्खचक्रादयस्तथा ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥*॥
श्रुतयश्च । यो ह वै सुश्लोकमौलेर्धर्म्मानतुतिष्ठमानोऽग्निनाचक्रं धत्ते । अग्निर्व्वै सहस्रारः सहस्रारो नेमिर्न्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीति ॥
चक्रं विभर्त्ति वपुषाभितप्तं
बलं देवानाममृतस्य विष्णोः ।
स एति नाकं दुरितं विधूय
विशन्ति यद्यतयो वीतरागा इति ॥"
ऋक्परिशिष्टे । अतप्ततनुर्नतदामो अश्नुतेऽश्नुता सह इद्वहन्तस्तत्समासतेति यजुः ॥ ऋग्वेदीयाश्वलायनशाखायाञ्च ।
प्रतद्विष्णोररजचक्रे सुतप्ते
जन्माम्भोधिं वर्त्तते चर्षणीन्द्राः ।
मूले वाह्वोर्द्दधतेऽन्ये पुराणा
लिङ्गान्यङ्गे तप्तायुधान्यर्पयन्ते इति ॥
छन्दोगपरिशिष्टे । सहोवाच यज्ञवल्कास्तत्पुमानात्महिताय प्रेम्णा हरिम्भजेत् । सुश्लोकमौलेर्धर्म्माण्यङ्गेष्वग्निनाधत्ते इति शतपथी श्रुतिः ।
अथर्व्वपरिशिष्टे तप्तचक्रादिप्रकरणे ।
देवासो यत्र वितनेन वाहुना
सुदर्शनेन प्रयताः स्वर्गमायन् ।
येनाङ्किता मनवो लोकस्रष्टं
वितन्वते ब्राह्मणास्तद्वहन्तीति ॥*॥
किञ्च । पाद्मे श्रीशिवेन तप्तमुद्राप्रसङ्गे ।
विष्णुचक्राङ्कितं विप्रं पूजयेत् सर्व्वकर्म्मणि ।
विष्णुचक्रविहीनन्तु प्रयत्नेन विवर्ज्जयेत् ॥
नारदीये तप्तमुद्राप्रसङ्गे ।
श्रीकृष्णचक्राङ्कविहीनगात्रः
श्मशानतुल्यः पुरुषोऽथ नारी ।
दृष्ट्वा नरस्तं नृपते ! सवासाः
स्नात्वा समर्च्चेद्धरिमङ्ग सद्य इति ॥*॥
वहुश्च वेङ्कटाचार्य्यपादप्रभृतिभिर्व्वुधैः ।
श्रुतयः स्मृतयोऽप्यत्र विख्याता लिखिताः पराः ॥
अतएव तदनादरे दोषाः । पाद्मे ।
तप्तचक्राङ्कितं दृष्ट्वा ये निन्दति नराधमाः ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ॥
अग्निपुराणे च । दशरथहतपुत्त्रविप्रविलापे ।
शिलाबुद्धिः कृता किंवा प्रतिमायां हरेर्म्मया ।
किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् ॥
तन्मुद्राङ्कितदेहस्य चेतसा नादरः कृतः ।
येन कर्म्मविपाकेन पुत्त्रशोको ममेदृशः ॥*॥
अथ तप्तमुद्राधारणमाहात्म्यं सौपर्णे ।
अशुचिर्व्वाप्यनाचारः सर्व्वधर्म्मवहिष्कृतः ।
प्रतप्तशङ्खचक्राभ्यामङ्कितः पङ्क्तिपावनः ॥
वाराहे तप्तमुद्राधारणप्रसङ्गे ।
म्लेच्छदेशे शुभे वापि चक्राङ्को यत्र तिष्ठति ।
योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ! ॥
ब्रह्मखण्डे ।
आयुधैर्व्वैष्णवैः सर्व्वैस्तापितैः स्वतनुं यदि ।
चिह्नयेद्वैष्णवो यस्तु स याति परमां गतिम् ॥
पाद्मे च तत्रैव ।
अग्नितप्तं पवित्रञ्च धृत्वा तु वाहुमूलयोः ।
त्यक्त्वा यमपुरं घोरं यान्ति विष्णोः परं पदम् ॥
हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् ।
तेन तीर्थानि यज्ञाश्च लभ्यन्ते नात्र संशयः ॥
अग्नितप्तेन चक्रेण ब्राह्मणो वाहुमूलयोः ।
अङ्कयित्वा जपन्मन्त्रं संसारान्मोक्षभाग्भवेत् ॥
अग्नितप्तेन चक्रेण वाहुमूलेषु लाञ्छिताः ।
ते सर्व्वे पापनिर्म्मुक्ता यान्ति विष्णोः परं पदम् ॥
किञ्च ।
अप्राकृता महात्मानो विष्णुचक्रेण लाञ्छिताः ।
विष्णुचिह्नविहीनास्तु प्राकृताः पतिताः स्मृताः ॥
इति ॥
इत्थं निषेधवचनं निर्मूलं सदनादृतम् ।
समूलं यच्च तत् सम्यग्विध्यभावादितत्परम् ॥*॥
अथ तप्तमुद्राधारणविधिः ।
तप्तमुद्राधारणार्थमुपचारैस्तु पञ्चभिः ।
कृष्णमभ्यर्च्य संपूज्य चक्राद्यौ तथा यजेत् ॥
तत्र मन्त्रः ।
सुदर्शन ! नमस्तेऽस्तु पाञ्चजन्य नमोऽस्तु ते इति ।

अग्निमभ्यर्च्य मन्त्रेण हुत्वा चाज्याहुतीः सती।
चक्रशङ्खगदादीनि मुद्राण्यग्नौ प्रतापयेत्॥
ततः स्वैरेवाथवा तान्यभ्यर्च्य प्रणम्य च।
गुरुं तथाच सम्पूज्य भक्त्या विज्ञापयेदिदम्॥
उच्छिष्टभोजनादेव किङ्कर: शरणागतः।
तप्तचक्रगदादीनि त्वया धार्याणि धारये। इति।
अथ चक्रादीनामावाहनादिमन्त्र:।
ओम् नमो भगवते सुदर्शनाय निखिलसकल-
रिपुध्वंसनाय भगवन्नारायणकराम्भोरुहपर्य्यङ्क-
दुर्ललिताय।
एह्येहि त्वं सहस्रार चक्रराज सुदर्शन॥
यज्ञभागं प्रगृह्णीष्व पूजाञ्चैव नमो नमः॥
ओम् नमो भगवते पाञ्चजन्याय विष्णुमुखाय
गम्भीरधीरध्वन्याकुलीकृतकौरवसाहिनीनाथाय
चिरेणाभिमतापर्णाय नित्यप्रसन्नाय।
एह्येहि पाञ्चजन्य। त्वं नारायणकरस्थित॥
यज्ञभागं प्रगृह्णीष्व पूजाञ्चैव नमो नमः॥
ओम् र श म न पाञ्चजन्याय नमः। ओम्
भगवते खड्गाय नन्दकाय त्रैलोक्यपाविनाय
जयिने सकलसुरासुरसुन्दरीनेत्रोत्पलार्च्चिताय।
एह्येहि खड्गरत्न। त्वं नन्दकाख्य सुरार्च्चित॥
यज्ञभागं प्रगृह्णीष्व पूजाञ्चैव नमो नमः॥
ओम् खड्गाय नमः। ओम् नमो भगवत्यै
कौमोदक्यै गदायै दानवकुलनिसूदनायै भगवद्
भट्टारकवासुदेववल्लभायै।
एह्येहि त्वं गदे देवि कौमोदक्यायुधेश्वरि॥
यज्ञभागं प्रगृह्णीष्व पूजाञ्चैव नमो नमः॥
ओम् र ख च क स गदायै नमः। एवं पद्माय
नमः। शार्ङ्गाय धनुषे नमः। इति। ७।
अथ धारणमन्त्र:।
सुदर्शन। महाज्वाल सूर्य्यकोटिसमप्रभ॥
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय॥
तथा।

*पाञ्चजन्य। निजध्वानध्वस्तपातकसञ्चय।*
पाहि मां पापिनं घोरसंसारार्णवपातिनमिति॥
इत्युच्चारयन् मन्त्रं दक्षिणादिक्रमेण तु।
भुजयोश्चक्रपूर्व्वाणि तप्तान्यायुधानि धारयेत्॥
कलत्रापत्यदीवारान् निजान् सम्बोध्य वैष्णवः।
भगवत्यपयन् तप्तमुद्राभिरङ्कयेत्॥
तथा च। वाराहे।
अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः।
कण्ठाधस्ताद्धृदि(?) स्तनयोः पार्श्वयोश्च समस्तदे॥
किञ्च
आयसं विधिवत् कृत्वा यथानुरूपविधानतः।
तत्तन्मन्त्रेण मन्त्रज्ञ प्रतिष्ठाप्य पृथक् पृथक्॥
ललाटे च गदा धार्य्या मूर्द्ध्नि चापं शरस्तथा।
नन्दकश्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये॥
किञ्च।
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्।
सव्ये च शङ्खं बिभृयादिति ब्रह्मविदो विदुः॥
अथ चक्रादिप्रतिष्ठातिदेशः। सप्तमभञ्च
राज्ञे।

शौर्यं राजत ताम्रं कांस्यमायसमेव वा।
चक्रं कृत्वा तु मेधावी धारयेत विचक्षण इति॥
एवमेव प्रबोधिन्यां द्वादश्यां भागवतैः।
तप्तमुद्रा धृतं धाम्ना द्वारकायां विशेषतः॥
इति श्रीहरिभक्तिविलासे १४ विलासः॥

तमःकूपक, क्ली, (तम इव तमोयुक्त कूपक कूपम्।) गुह्यरोगम्। इति राजनिर्घण्टः॥

तमःशूर्म्मिकुण्ड, क्ली, (तमाः अग्निमयी शूर्म्मि-लौहमयनिर्म्मितम्। तथाविधं कुण्डं यस्मिन्।) नरकविशेषः। इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम्॥

तमःसुराकुण्डं, क्ली, (तमायाः सुरायाः कुण्डमिव।) नरकविशेषः। इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम्॥

तम उ इर् भ य खेदे। इच्छायाम्। इति कविकल्पद्रुमः॥ (दिवां पर-अक सेट्।) उ, तमित्वा तान्त्वा। इर्, अतमत् अतमीत्। अशाम पुषादित्वात् नित्यं ङ इत्यन्ये। भ य, ताम्यति लोकः उत्तमः स्यादित्ययं। इति दुर्गादासः॥

तमं, क्ली, (ताम्यत्यन्धकारेनेव वा। तम+अच्‌ दाने करणे वा बाहुल्यात् घः।) अन्धकारः। इति शब्दरत्नावली॥ पापम्। इति शब्दचन्द्रिका॥

तमः पुं (ताम्यत्यनेनेति। तम+घञर्थे घः।) तमोगुणः। इत्यमरटीकायां रायमुकुटः॥ तमालवृक्षः। इति शब्दचन्द्रिका॥ (राहुः। इत्यमरः।१।३।२६। यथा, ज्योतिषे होरायाम्। "अगुतमकुयजौ इति। कितवस्तमसोति वराह॥" इति उणादिवृत्तिटीकायां उज्ज्वलदत्तः।४।१८८॥)

तमः, [स्] क्ली, (ताम्यत्यनेनेति। तम+"सर्व्वधातुभ्योऽसुन्।" उणां।४।१८८। इति असुन्।) प्रकृतेर्गुणविशेषः। यथा,—
"सत्त्वं रजस्तम इति इमन्ते पुरुषे गुणाः।
कालस्या इतालेऽपि परिवर्त्तन्त आत्मनि॥
प्रभूतञ्च यदा सत्त्वं मनोबुद्धीन्द्रियाणि च।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रतिः॥
यदा कर्म्मसु काम्येषु भक्तिर्यशसि देहिनाम्।
तदा त्रेता रजोवृत्तिरिति जानीहि शौनक॥
यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः।
कर्म्मणाञ्चापि काम्यानां द्वापरं तद्रजस्तमः॥
यदा सदानृतं तन्द्री निद्रा हिंसादिसाधनम्।
शोकमोहभयं दैन्यं स कलिस्तु तदा स्तवः॥"
इति गारुडे २२७ अध्यायः॥ ७।
अपि च।
'तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत॥
सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा॥'
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन॥
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते॥
रजसि प्रलयं गत्वा कर्म्मसङ्गिषु जायते।
तथा प्रलीनस्तमसि मूढयोनिषु जायते॥
कर्म्मणः सुकृतस्याहुः सात्त्विकं निर्म्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम्॥
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च॥
ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः॥"
इति श्रीभगवद्गीतायाम्।१४।८-१८।
तत्तु आवरकं मोहहेतुः। इत्यमरभरतौ॥ अस्य कार्य्यं अहङ्कारः। इति श्रीधरस्वामी॥ तस्य धर्म्मो यथा। प्रमादः १ मोहः २ मदः ३ क्रान्तिः ४ विषादः ५ शोकः ६ अरतिः ७ अनार्य्यता ८। इति मोक्षधर्म्मः॥ तमः ९ तन्द्रा १०। इत्याध्यात्मिकधर्म्मः॥ अन्धकारः। (यथा, महाभारते।१।१०५।१०। "तमसा लोकमावृत्य नौगतामेव भारत॥")
तत्पर्य्यायः। तमसम् २ निशाचर्म्म ३ ध्वान्तम् ४ रजोवसम् ५ दिवान्धक ६ चिरज्योतिः ७ अनुकम्पम् ८। इति त्रिकाण्डशेषः॥ दशेरम् १० दिवान्धकम् ११ अन्धकम् १२। इति शब्दरत्नावली॥ अमरोक्तपर्य्यायोऽन्धकारशब्दे द्रष्टव्यः॥ शोकः। इति मेदिनी। स २४॥ पापम्। इति शब्दचन्द्रिका॥ (राहुः। इति मेदिनी। से, ५४। यथा रघुः। ८।३०।
"शिशिरश्मिः नरोत्तमप्रिया
धुवमन्द्रा तमसेव कौमुदी॥")

तमङ्गक, पुं इन्द्रकोषः। मञ्चकः। इति हेमचन्द्रः त्रिकाण्डशेषश्च॥

तमत, त्रि, (तम+"भृमृदृशियजिपर्व्विपच्यमितमिनमिहर्य्येभ्योऽतच्।" उणां।३।११०। इति अतच्।) इच्छितः। वाञ्छितः। इत्युणादिकोषः॥

तमप्रभः पुं, (तम इव प्रभाऽस्य अस्मिन् वा।) नरकभेदः। इति हेमचन्द्रः॥

तमरं, क्ली (तमः रातीति। रा+कः।) वङ्गम्। इति हेमचन्द्रः॥

तमराजः, पुं (तम इव राजते। राज+अच्।) शर्कराविशेषः। गवान इति ख्यात इति कश्चित्। तत्पर्य्यायः। खासकः २। तस्य गुणः। छर्द्दिज्वरदाहरक्तपित्तनाशित्वम्। इति राजवल्लभः॥

तमस, क्ली (तम+"अत्यविचमितमिनमीति।" उणां।३।११७। इति असच्।) अन्धकारः। इति त्रिकाण्डशेषः॥ नगरम्। इति संक्षिप्तसारे उणादिवृत्तिः॥

तमसः, पुं. (तम+असच्।) कूपः। अन्धकारः। इति संक्षिप्तसारे उणादिवृत्तिः॥

तमसा, स्त्री, (तमइव जलमस्त्यस्याः। अच् टाप् च।) नदीविशेषः। इति संक्षिप्तसारे उणादिवृत्तिः॥ (यथा, महाभारते।३।२२१।२४।
"तमसा नर्म्मदा चैव नदी गोदावरी तथा॥")

तमस्तति:, स्त्री, ( तमसस्ततिः समूहः । ) अन्धकारसमूहः । इति तमिस्राशब्दार्थे मेदिनी ॥

तमस्विनी, स्त्री, ( तमो विद्यतेऽस्यामिति विनिः ङीप् च । ) रात्रिः । ( यथा, महाभारते । ४ । २१ । ३९ ।
"अद्यप्रभातस्तस्याद्य तमस्विन्यामनिन्दिते ।
नागोदिवानिराक्रम्य पोषयिष्याम्यहं गिरः ॥")
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥

तमा, स्त्री, ( तमोऽस्त्यस्यामिति । तम + अच् टाप् च । ) रात्रिः । इति हेमचन्द्रः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥

तमाः, [ स् ] पुं, राहुः । इति मेदिनी । से, २४ ॥

तमालं, क्ली, (ताम्यते काङ्क्ष्यते इति । तमु काङ्क्षायाम् + "तमिविशिबिडीति ।" उणां ।१।११७। इति कालन् । ) पत्रकम् । इति राजनिर्घण्टः ॥

तमालः, पुं, ( तमु काङ्क्षायाम् + कालन् । ) वृक्षविशेषः । तत्पर्य्यायः । कालस्कन्धः २ तापिच्छः ३ । इत्यमरः । २ । ४ । ६८ ॥ तापिञ्छः ४ । इति भरतः ॥ नीलतालः ५ तमालकः ६ नीलध्वजः ७ कालतालः ८ महाबलः ९ । ( यथा, भागवते । ३ । १३ । ३३ ।
"तमालनीलं सितदन्तकोट्या
क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग ॥")
अस्य गुणाः । मधुरत्वम् । बल्यत्वम् । हृद्यत्वम् । शिशिरत्वम् । गुरुत्वम् । कफपित्ततृष्णादाह- श्रमशान्तिकरत्वञ्च । इति राजनिर्घण्टः ॥ तिलकम् । ( यथा, कुट्टनीमते । १६ ।
"यस्यास्तु पवनवीथ्यां तमालपत्राणि युवतिवदने च ।
नखरप्रहाररचितं तन्नीवाग्रेषु सुरतकलहेषु ॥"
तमालस्तापिच्छवृक्षः युवतिवदनचये तिलकमिति ॥ ) खड्गः । वरुणवृक्षः । इति मेदिनी । ले, ८७ ॥ कृष्णखदिरः । इति शब्दचन्द्रिका ॥ वृक्षभेदे वंशत्वचि च पुं क्ली । इति लिङ्गादिसंग्रहे अमरभरतौ ॥

तमालकं, क्ली, ( तमालपत्रवत् वर्णेन कायतीति । कै + कः । ) सुनिषण्णशाकम् । इति त्रिकाण्डशेषः ॥ ( तमालमेव । स्वार्थे कन् । ) पत्रकम् । इति राजनिर्घण्टः ॥ तेजपात इति भाषा ॥

तमालकः, पुं, क्ली, ( तमाल एव । स्वार्थे कन् ।) तमालवृक्षः । ( यथा, रामायणे । २ । ९१ । ५० ।
"ततः सरलतालाश्च तिलकाः सतमालकाः ।
प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाथ वामनाः ॥")
वंशत्वक् । इति शब्दरत्नावली ॥

तमालपत्रं, क्ली, ( तमालस्य पत्रमिव वर्णोऽस्यास्तीति । अर्श आदित्वात् अच् । ) तिलकम् । पत्रकम् । ( यथास्य पर्य्यायाः ।
"पत्रन्तमालपत्रञ्च तथा स्यात् पत्रनामकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) तमालवृक्षः । इति मेदिनी । रे, ३०२ ॥ (तमालस्य पत्रम् । यथा, रघुः । ६ । ६४ ।
"तमालपत्रास्तरणासु रन्तुं
प्रसीद शश्वन्मलयस्थलीषु ॥")

तमालिका, स्त्री, ( तमालाः सन्त्यत्र । तमाल + ठन् । ) ताम्रलिप्तदेशः । इति त्रिकाण्डशेषः ॥ ताम्रवल्ली । भूम्यामलकी । इति राजनिर्घण्टः ॥

तमालिनी, स्त्री, ( तमालो तमालवर्णोऽस्त्यस्या इति । इनिः ततो ङीप् ।) भूम्यामलकी । इति राजनिर्घण्टः ॥ ताम्रलिप्तदेशः । इति हेमचन्द्रः ॥

तमाली, स्त्री, ( तम + कालन् । गौरादित्वात् ङीप् । ) ताम्रवल्ली । वरुणवृक्षः । इति राजनिर्घण्टः ॥

तमिः, स्त्री, ( ताम्यते ग्लायतेऽत्र । तम + "सर्व्वधातुभ्य इन् ।" उणां । ४ । ११७ । इतीन् । ) रात्रिः । इत्यमरटीकायां भरतः ॥

तमिस्रं, क्ली, (तमोऽस्त्यत्र । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । यद्वा, तमिसा ग्लानिरस्त्यत्र अर्श आदित्वात् अच् ।) अन्धकारम् । इत्यमरः ॥ (यथा, महाभारते । ४ । २१ । १७ ।
"यदेतन्नर्त्तनागारं मत्स्यराजेन कारितम् ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥
तमिस्रे तत्र गच्छेथा गन्धर्व्वास्तत्र जानते ॥" )
क्रोधः । इति मेदिनी । रे, ६१ ॥ (नरकविशेषः । यथा, भागवते । ४ । ७ । ४४ ।
"अमङ्गलानाञ्च तमिस्रमुल्वणं
विपर्य्ययः केन तदेव कस्यचित् ॥" )

तमिस्रपक्षः, पुं, ( तमिस्रमन्धकारं तत्प्रधानः पक्षः । ) कृष्णपक्षः । यथा, तमिस्रपक्षत्रुटि- कूटभक्षितमिति श्रीहर्षः ॥

तमिस्रा, स्त्री, ( तमोबहुलमस्ति यस्याम् । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । ) अन्धकाररात्रिः । कृष्णपक्षनिशा । इत्यमरः ॥ तमोयुक्तरात्रिमात्रम् । इति रायमुकुटः ॥ दर्शरात्रिः । इति वाचस्पतिः ॥ तमस्ततिः । इति मेदिनी । रे, १६१ ॥ ( यथा, रघुः । ५ । १३ ।
"सर्व्वे तपःसरणाय इष्टे:
कल्पेन लोकस्य कथं तमिस्रा ॥")

तमी, स्त्री, ( तमिः कृदिकारादिति वा ङीप् । ) रात्रिः । ( यथा, माघे । ९ । २३ ।
"दहशेऽपि भास्करकराद्भिर्न यः
स तमीं तमोभिरभिगम्य ततम् ॥")
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥

तमोघ्नः, पुं, ( तमोऽन्धकारं मोहमज्ञानं वा हन्तीति । हन + टक् ।) वह्निः । सूर्य्यः । (यथा, महाभारते । ७ । १४४ । १३६ ।
"स देवशत्रूनिव देवराजः
किरीटमाली व्यधमत् समन्तात् ।
यथा तमांस्यभ्युदितस्तमोघ्न:
पूर्व्वप्रतिज्ञां समवाप्य वीरः ॥" )
चन्द्रः । बुद्धः । केशवः । शम्भुः । इति मेदिनी । ने, ७१ ॥

तमोज्योतिः, [ स् ] पुं, ( तमसि ज्योतिर्यस्य ।) ज्योतिरिङ्गणः । इति शब्दरत्नावली ॥

तमोनुत्, [ द् ] पुं, ( तमोऽन्धकारं नुदतीति । नुद + क्विप् ।) अग्निः । सूर्य्यः । चन्द्रः । दीपः । इति शब्दरत्नावली ॥ (तमोनाशके, त्रि । यथा महाभारते । १३ । १६६ । ८ ।
"एवमुक्तस्तदाचिर्वै तमोनुदभवच्छशी ।
अभवत् सौम्यभावाच्च सोमवत् प्रियदर्शनः ॥")

तमोनुदः, पुं, ( तमोऽन्धकारं नुदतीति । नुद + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः । ) सूर्य्यः । इति शब्दरत्नावली ॥ (अग्निः । चन्द्रः । इति विश्वः ॥ यथा, रघुः । ३ । ३३ ।
"नरेन्द्रकन्यास्तमवाप्य सत्पतिं
तमोनुदं दक्षसुता इवाबभुः ॥"
प्रकाशप्रेरकः । यथा, मनुः । १ । ६ ।
"ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥")

तमोपहः, पुं, (तमोऽन्धकारं अपहन्तीति । अप + हन + "अपे क्लेशतमसोः ।" ३ । २ । ५० । इति डः । ) सूर्य्यः । चन्द्रः । बुद्धः । अग्निः । इति मेदिनी । हे, ३० ॥ ( अज्ञाननाशके, त्रि । यथा, किरातार्ज्जुनीये । ५ । २२ ।
"आगमादिव तमोपहादितः
सम्भवन्ति मतयो भवच्छिदः ॥" )

तमोभित्, [ द् ] पुं, ( तमस्तिमिरं भिनत्ति खण्डयति प्रकाशनेन नाशयतीति । भिद + क्विप् । ) खद्योतः । इति शब्दमाला ॥

तमोमणिः, पुं, ( तमसि अन्धकारे मणिरिव । ) खद्योतः । इति त्रिकाण्डशेषः ॥ गोमेदकमणिः । इति राजनिर्घण्टः ॥

तमोलिप्ती, स्त्री, ( तमसा लिप्यते इति । लिप + क्तः निपातनात् ङीप् । ) देशविशेषः । तमोलुक इति भाषा ॥ तत्पर्य्यायः । ताम्रलिप्तः २ वेलाकूलम् ३ तमालिका ४ । इति शब्दरत्नावली ॥ ताम्रलिप्तम् ५ ताम्रलिप्ती ६ । इति त्रिकाण्डशेषः ॥ दामलिप्तम् ७ तमालिनी ८ स्तम्बपूः ९ विष्णुगृहम् १० । इति हेमचन्द्रः ॥

तमोविकारः, पुं, (तमसैव विकारो यत्र ।) रोगः । इति राजनिर्घण्टः ॥

तमोहरः, पुं, ( तमो हरतीति । हृ + अच् । तमसः हर इति वा ।) चन्द्रः । इति शब्दरत्नावली ॥ ( अग्निः । सूर्य्यः । इति शुक्रयजुर्वेदः ॥ )

तम्पा, स्त्री, ( तम्पति गच्छतीति । तम्प + अच् । पृषोदरादित्वात् साधुः । ) गौः । इति हेमचन्द्रः । ४ । ३३ ॥

तम्ब, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । ) ओष्ठ्यवर्गशेषोपधः । तम्बति । इति दुर्गादासः ॥

तम्बा, स्त्री, ( तम्बति गच्छतीति । तम्ब + अच् ।) गौः । इति हेमचन्द्रः । ४ । ३३२ ॥

तय, ङ गतौ । रक्षे । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-सकं-सेट् । ) ङ, तयते । इति दुर्गादासः ॥

यः खड्गे जायते शब्दो नखदण्डादिनाहते।
स ध्वनिस्तुलनामानं ज्ञानमस्त्वविशन्निदम्॥
मध्वाद्या निपुणैः खड्गे सम्भाषन्तेऽपि ऋत्रिमाः।
अन्यावक्रत्रिमौ ज्ञेयौ तावेव सङ्ख्याविति॥
शतमङ्गानि चत्वारि रूपाणि जायतस्तथा।
त्रिंशन्नेत्राणि जानीयाद्दरिष्टानि तथैव च॥
भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः।
मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मतः॥"

अथ खड्गस्य शताङ्गगणना लौहार्णवे।

"रूप्यस्वर्णगजोरुवृकदमनस्थूलाङ्गछायारुख-श्वेता-श्रोणगदातिलानलकणाग्रन्थिस्थिरातित्तिराः।
मालाजीरकषट्पदोर्द्धमरिचपद्मालाश्ववर्द्धाञ्जन-चौदत्तुद्रकमक्षिकातुषयवव्रीहिक्षुमासर्षपाः॥
सिंहीलखुलगोशिराशिवनखयाहाक्षिकेशोत्पल-श्रोणीकाककपालमन्ततुवरीविम्बीफलीसर्षभाः।
गोलीरक्तवचारसोनसुमनाजिङ्गीशमीरोहित-प्रोठीमारिषमार्कवाखरतडि[illegible]दिशुङ्गाशराः॥
दूर्वाविल्वमसूरटुण्टुकपटीमार्जारिकाकेतकी-स्त्रवावचकलायचम्पकचलन्यग्रोधवंशाखगाः।
व्योष्ठीजालपिपीलिकानलरजः श्मश्रुकरोम-सूची
कर्कन्धुर्नकुलारनालमहिषस्कन्धुवक्रा इति॥
प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदाः क्रमात्॥"

अथ तस्य चत्वारि रूपाणि।

"नीलः श्यामः पिशङ्गश्च धूम्रश्चेति चतुर्विधः।
वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः॥"

अथ चतस्रो जातयः।

"ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधः।
जातिभेदो विनिर्दिष्टः खड्गानां मुनिपुङ्गवैः॥"

अथ त्रिंशन्नेत्राणि।

"चक्रं पद्मं गदा शङ्खो डमरुर्द्धनुरङ्कुशः।
छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्दवः॥
कुम्भः शूलश्च शार्दूलः सिंहः सिंहासनं गजः।
हंसो मयूरो जिह्वा च दशनः खड्ग एव च॥
पुत्रिका चामरं शैलः पुष्पमाला भुजङ्गमः।
त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै॥"

अथ त्रिंशदरिष्टानि।

"छिद्रं काकपदं रेखा भिन्नं भेकश्च सूचिकाः।
बिडालः शर्करा नीली मशको भृङ्गवृश्चिके॥
त्रिविन्दुः कालिका दारी कपोतः काक एव च।
खर्परः शकली क्रोडी कुशपत्र कजालिके॥
करालकङ्कखर्जूरस्तङ्गपुच्छखनित्रकम्।
लाङ्गलं वड़िशाखाश्च मुनिना तत्त्ववेदिना॥
प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि॥"

अथ द्विविधा भूमिः।

"दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत्।"

अथाष्टधा ध्वनिः।

"हंसकांस्याश्वघण्टानां काकतन्त्रीखराश्मनाम्।
ध्वनयोऽष्टविधाः प्रोक्ता नागार्जुनमुनेर्मताः॥"

अथ द्विविधं मानम्।

"उत्तमाधमभेदेन मानं तद्द्विविधं भवेत्।
इति प्रोक्तानि सूत्राणि खड्गानां ज्ञानहेतवे॥
एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजितः॥"

इति सूत्राध्यायः॥ *॥

तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत॥

लौहप्रदीपे।

"रूप्यपत्रसमा भूमिरङ्गं श्वेतं प्रतीयते।
जर्द्धं तत्तु महान्लक्ष्मं रूप्यवज्ञसुपन्ति तम्॥
एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशो बलम्॥१॥
स्वर्णरेखा वली तन्वी यद्भूमौ निकषोपमा।
स्वर्णवचमिति प्राहुरायुर्लक्ष्मीजयप्रदम्॥२॥
गजशुण्डाकृतिर्भूमौ छायायामङ्गसम्भवः।
गजवचमिति प्राहू रक्तसर्पं तु तद्विशेत्॥
ज्वरादियाधिशमनं तस्य प्रक्षालनाम्भसा।
अपि क्षीणोऽपि भूपालस्तद्वीर्यात् साधयेन्महीम्॥३॥
एरण्डवीजप्रतिममङ्गं भूमिः सितेतरा।
वृकवचमिदं नाम्ना शत्रुदर्पक्षयङ्करः॥
एतस्य स्पर्शमात्रेण नरः सम्यग्विमुच्यते।
महिषाखरमिदं वचं केचिदाहुर्मनीषिणः॥४॥
अङ्गं दमनपत्राभं खड्गे यस्मिन् प्रतीयते।
विद्याद्दमनवच्च तन्मेयं द्विविधं बुधैः॥
नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी।
तस्मिन् पर्युषितं तोयं गन्धे दमनकोपमम्॥
तत्प्रभावान्महीपालः शत्रुणां पृथ्वीं हि साधयेत्॥५॥"

शार्ङ्गधरस्य।

"एका स्थूला चिता रेखा भूमिर्नीला दृढ़ा यदि।
स्थूलाङ्गमङ्गवचं तद्विद्याल्लक्ष्मीयशःप्रदम्॥
एतत्तृचते भवेच्छोथः स्थूलश्चिरतरस्थितिः।
एतं महान्तमपरे वदन्ति खड्गकोविदाः॥६॥
छायायां दृश्यते भूमौ अङ्गश्च प्रतिविम्बितम्।
अङ्गं[illegible] भवेत्तस्य द्विधाभूमिः सिताषिता॥७॥"

लौहप्रदीपेऽपि।

"निरङ्गं रूप्यपत्राभमीषन्मणिनिभञ्च यत्।
दुर्लभं तन्महान्लक्ष्मं कान्तलौहं प्रचक्षते॥
छाया भूमिर्भवेत् स्वच्छा पीता वज्राङ्गसङ्गता।
छायावचमिति प्राहुस्तत्तृचते मोह उच्यते॥"

प्रदीपेऽपि।

"छाया भूमिः सुवर्णाभमीषच्छुक्लाङ्गसङ्गतम्।
डाहुलीवचकं विद्यात् कालसंज्ञमथापरे॥८॥
अरुणं स्वच्छमूर्द्धेदङ्गं भूमिः सितेतरा।
अरुणाखरमिदं वचं शत्रुदर्पनिसूदनम्॥
सूर्यांशुस्पर्शमात्रेण वह्निरूपां वमेत् शिखाम्।
तस्य स्पर्शनमात्रेण महाकोषः स्फुटेन्निशि॥
दुर्लभं तन्मनुष्याणां भाग्यैः क्वापि लभ्यते।
तद्योगनवहस्तस्य रिष्टं नाशयति ध्रुवम्॥६॥
श्वेतासिते यदा रेखा चाम्लाद्दुपलक्ष्यते।
श्वेताङ्गमिति तद्विद्याद्दयशोलक्ष्मीविलप्रदम्॥१०॥
अम्भोजदलसङ्काशमङ्गं भूमिः सितेतरा।
अम्भोजवचं तन्मेयं कथितं मनिपुङ्गवैः॥११॥
अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा।
गदावचमिदं ब्रूयात् तत्तृचते मूलसम्भवः॥१२॥
अङ्गं छायातिलाकारं भूमिश्चैव सितासिता।
तिलवचमिदं ज्ञेयं लक्ष्मीबलयशःप्रदम्॥
तत्तृचते तिलतैलाभा वसा प्रश्रवतेऽधिकम्॥१३॥
धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम्॥
अग्निवचमिदं ज्ञेयं शत्रूणां दाहकारकम्।
अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात्॥
शाणे वह्निं वमेद्यस्तु तथा सूर्यांशुसङ्गमात्।
तत्तृचते बलवान् दाहो दग्धवच्च व्रणो भवेत्।
एतत् परमभाग्येन लभ्यते धरणीतले॥१४॥
भूमिः चिता तिला वापि अङ्गश्चेत् पिप्पली-प्रभम्॥
कणावचमिदं ज्ञेयमन्तर्दाहस्तु तत्तृचते॥१५॥
छायाभूमिर्यदैवाङ्गे दृश्यते ग्रन्थिसञ्चयः॥
ग्रन्थिवचमिदं ज्ञेयं वैरिपक्षविनाशनम्।
तत्तृचते बलवान् दाहस्तृषा च ज्वर एव च॥१६॥
शालपर्णीदलाकारमङ्गं छायासिपुत्रिका।
स्थिरावचमिदं प्राहुस्तत्तृचते वेपथुर्भवेत्॥१७॥
यदा तित्तिरिमध्याभमङ्गं भूमिः सितेतरा।
एतत्तित्तिरिवचं स्यात् तत्तृचते बहुवेदनम्॥१८॥
घनमालासमा यस्मिन् माला खड्गे प्रदृश्यते।
मालाङ्गमिति तद्विद्यात्तत्तोयं गन्धवद्भवेत्॥
अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात्।
एष दाहपरीतानामृते पित्तहताम्मनाम्॥
भवेत् परमभैषज्यं भाग्यैनैतद्धि लभ्यते॥१६॥
यदा जीरकसङ्काशमङ्गं भूमिः सितासिता॥
एतज्जीरकवचं स्यात्तत्तृचते तत्क्षणाज्ज्वरः॥२०॥
भूमिः सितासितच्छेत्रा अङ्गं भृङ्गाभमिष्यते॥
तत्र चेन्मधमन्यस्तं शोषमाप्नोति केवलम्।
एतद्भ्रमरवचं स्यात्तत्तृचते स्याद्विसूचिका॥२१॥
जर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते।
जर्द्धवचमिदं प्राहुर्विषवेगनिसूदनम्॥"

लौहप्रदीपेऽपि।

"जर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते।
लाङ्गलाङ्गन्तु तद्विद्यात् स्पर्शे तस्याहिनाशनम्॥२२॥
अङ्गं मरीचसङ्काशं भवेद्भूमिः सितेतरा।
मरीचाङ्गमिदं वचं तत्तृचते कटुरक्तता॥
तत्प्रक्षालनतोयेन नश्यन्ति मीनसादयः॥२३॥
यदा सर्पफणाकारमङ्गं भूमिस्तु निर्मला॥
भुजङ्गवचं तद्विद्यात्तत्तृचते विषवद्रुजा।
तस्य स्पर्शनमात्रेण भेकः प्राणैर्विमुच्यते॥
एकस्यास्य प्रसादेन शत्रुणां शास्ति महीं नृपः॥२४॥
यदाश्वखुरसङ्काशमङ्गं भूमिस्तु निर्मला॥
अश्वाङ्गमिति तं विद्यात् खड्गं परमदुर्लभम्।
तस्य संयोगमात्रेण वाजी मन्दोऽपि धावति॥
तस्य क्षालनतोयेन हयानां रोगनाशनम्।
एतत्तृचते भ्रमो मूर्च्छा दाहश्च भ्रम एव च॥२५॥
मयूरपिच्छसदृशमङ्गं भूमिः सितेतरा।
वर्हाङ्गमिति तं विद्यात्तत्तृचते वान्तिरिष्यते॥
सर्पाणामिह सर्वेषामस्य स्पर्शोऽसहिष्णुता।
एतदेव नृपतिभिर्भाग्यैः क्वापि लभ्यते॥२६॥

विद्यान् केतकवज्रं तत् वाराणससमुद्भवम् ॥”७७
लौहप्रदीपस्य ।
“अङ्गं मूर्व्वातन्तुनिभं भूमिर्मूर्व्वादलच्छविः ।
घ्राणेन वमते शुक्लां शिखां मौर्व्वीं भवेत्ततः ॥
मौर्व्वाङ्गमिदमुत्कृष्टं यशःकीर्त्तिबलावहम् ॥७८॥
लिङ्गं तीक्ष्णं खरं गाढ़ं घ्राणे वह्निर्व्वमेत् कणम् ॥
छिन्नत्यन्यविधं लौहं वज्राङ्गमिति तद्वदेत् ॥७९॥
कलायपुष्पसदृशमङ्गं भूमिः सितासिता ।
कलायवज्रं जानीयात् तत्क्षते पाकः प्रदृश्यते ॥८०॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता ।
शिखां घ्राणे वमेच्छीतं तिक्तं तस्य जलं भवेत् ।
इदं चम्पकवज्रं स्यात् सर्व्वत्र विजयप्रदम् ॥८१॥
अङ्गं बलादलसमं भूमिः शुक्ला तथेतरा ।
बलावज्रमिदं ज्ञेयं नागाभावं भवेद्द्रुतम् ॥
इत्ययं वातरोगाणां नाशने परमौषधम् ॥८२॥
अङ्गं वटारोहसमं भूमिर्व्वटदलच्छविः ।
वटवज्रमिदं ज्ञेयं खरं खड्गाधमं बुधैः ।
एतस्य स्पर्शमात्रेण नरो मुच्येत सम्पदा ॥८३॥
वंशनीलीसमा भूमिः खरधारा सिताकृतिः ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम् ॥८४॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एष खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं घ्राणे वमेद्वह्निं धारा चाप्यथवा भवेत् ॥८५॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवज्रमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ॥
८६ ॥
पुराणशालसदृशमङ्गं भूमिः सितासिता ॥
जालवज्रमिदं पूज्यं शत्रुसम्पत्तिनाशनम् ।
यदि घ्राणे वमेन्नीलां शिखां वह्निं वमेच्च वा ॥
तदेव दुर्लभः खड्गो नान्यथा भयहेतुकः ॥८७॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ॥
पिपीलिकाङ्ग इत्येष तत्क्षते कण्डुसम्भवः ।
स्वयं यदि भवेद्धूम्रः घ्राणे पूज्यतमस्तदा ॥८८॥
नलपत्रसमा भूमिरङ्गन्तत्कुसुमोपमम् ।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ॥
८९ ॥
निरङ्गा निर्म्मला भूमिर्घृष्टं पृष्टं वमेद्रजः ।
दृढ़ा धारा भृशं स्थूला आघातं सहते न च ॥
रजोवज्रमिदं निन्द्यं शत्रूणां विजयावहम् ॥९०॥
कुष्माण्डबीजसदृशमङ्गं भूमिः सितासिता ॥
कुष्माण्डवज्रं जानीयात्तत्क्षते वेगनिग्रहः ॥९१॥
अङ्गं शरोमसदृशं भूमिर्धूम्रा सितासिता ।
रोमाङ्गमिति जानीयात्तत्क्षते पिड़कोद्गमः ॥९२॥
भूमिः स्नुहीदलसमा अङ्गं तत्कण्टकोपमम् ॥
धारा तीक्ष्णा रवस्तीक्ष्णो लघुमानं खरा स्पृशा ।
सुधाङ्गः खड्ग इत्येष तत्क्षते दाहटङ्कभ्रमाः ॥
सुखाक्षिकर्णनासानां दाहः पाकश्च जायते ।
अयं यदि च सर्पाणां फणास्वपरि विध्यते ॥
फणाविदारमाप्नोति सर्पो लोटयते शिरः ।
अस्य धावनतोयेन कुष्ठरोगविनाशनम् ॥९३॥
कर्कन्धुदलपृष्ठाभा भूमिरङ्गन्तु तत्समम् ।
कर्कन्धुवज्रं जानीयात्तत्क्षते दाहनाशनम् ॥
एष खड्गाधमस्त्याज्यो धेतथा यदि विद्विषः ॥
९४ ॥
रङ्गं वकुलपुष्पाभं भूमिस्तत्फलसन्निभा ॥
वकुलाङ्गमिदं पूज्यं घ्राणे सुरभिगन्धवत् ।
तन्नास्ति जगतीमध्ये यदनेन न साध्यते ॥९५॥
अङ्गं संमिश्रितं यस्मिन्न किञ्चिद्व्यक्तमीक्ष्यते ।
सर्व्वेषां दर्शनं वापि तीक्ष्णधारः खरस्वरः ॥
एष काञ्चिकवज्रः स्याद्यत्नादेवोपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते श्रेयांसि नादयोऽपि च ॥
९६ ॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढ़ापि च ।
आघातं सहते घोरं रक्तं स्पर्शेन यो विशेत् ॥
घ्राणेन वह्निं वमति ध्रुवं वाप्यतिघर्षणात् ।
महिषाङ्गः स वै खड्गः पृथिव्यां नातिदुर्लभः ॥
९७ ॥
अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिबिम्बितम् ।
धारा तीक्ष्णा स्वरस्तीक्ष्णः स्वच्छाङ्गं तद्विनि-
र्द्दिशेत् ॥९८॥
तस्मिन् यदा भवेद्रेखा ऊर्द्धा शलाकाकृतिस्तदा ॥९९
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत् ॥१००॥
एतत्त्रितयमुद्दिष्टं खड्गानां प्रवरं बुधैः ।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥
इतीदं निखिलं प्रोक्तं वज्राणां लक्षणं मया ।
प्रयत्नैर्लिखितं यत्तं सर्व्वेषां हितकाम्यया ॥
इतः परन्तु लौहानां लक्षणं यच्च लक्ष्यते ।
तस्य दासी भवाम्येष प्रतिज्ञेति कृता मया ॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत् ।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत् ॥”
इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः ॥ * ॥
खड्गस्य रूपाणि यथा,—
“नीलीकलायकुसुमच्छविरञ्जनाभा
या चन्द्रनीलमणिकाचमणिप्रभा च ।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥
तत्र चेन्निन्दितान्यङ्गान्यरिष्टानि बहून्यपि ।
दृश्यन्ते बहुदोषापि तथापि गुणवत्तरम् ॥१॥
या कालकाम्बुदमसीरसकालसर्प-
शङ्कान्धकारकचभारसमा विभाति ।
भूमिश्च या भ्रमरबन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥
अत्र नेत्राणि सम्पत्त्यै अरिष्टान्यशुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥२॥
या प्रावृषेण्यनवभेकसमानवर्णा
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्यशोबलधनक्षयकारणाय ॥३॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्यशोबलधनाबलिवर्द्धनाय ॥४॥
द्विरूपं मिश्रितं कृत्वा शङ्करं प्रवदेद्बुधः ।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरसञ्ज्ञितम् ॥
रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तमम् ॥”
इति लौहार्णवस्य खड्गपरीक्षायां वर्णा-
ध्यायस्तृतीयः ॥ * ॥
“जातिश्चतुर्व्विधा प्रोक्ता खड्गानां या पुरा मया ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः ।
मृदुस्पर्शः सुसन्धेयस्तीक्ष्णधारो महागुणः ॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः ।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते ।
अष्टष्टं त्रिफलाकल्कराहैरात्रिन्दिवोषितम् ।
मलिनत्वं न सम्प्राप्तं निर्म्मलं कृयते परम् ।
तरुणादित्यकिरणस्पर्शादेव रवौ स्थितः ॥
धृष्टेत् सर्व्वं न तु करं पुरुषस्य हि धारिणः ।
नायकुपाचारमात्रेण खरतां व्रजति स्फुटम् ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुषस्त्रिलोकामपि साधयेत् ॥
तस्मादेष मनुष्याणां सुलभो न हि भूतले ।
दृश्यन्ते प्रायशः स्वर्गे कुशद्वीपे हिमालये ॥१॥
धूम्रवर्णं महासारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वनेत्रवर्ज्यस्वराकरम् ॥
खड्गं क्षत्त्रियजातिं तं जानीयात् खड्गकोविदः ।
अस्य क्षते भवेद्दाहस्तृष्णामाह्ना ज्वरो भ्रमः ॥
मृत्युश्च जायते घ्राणे वमेद्वह्निकणान् बहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य लक्ष्यते ॥
घ्राणेऽप्यघ्राणे खरता बहिं चात्यन्ततीक्ष्णता ।
रक्तस्पर्शनमात्रेण विशेदन्तरमन्तरम् ॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते ॥२॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत् ॥
घ्राणेन खरता चास्य घाततुल्यं निहन्ति ।
वैश्यजातिरयं खड्गः क्षते त्वक्षानदर्शनम् ॥
नात्युत्कृष्टो नातिहीनं सर्व्वत्रैवोपलभ्यते ॥३॥
सजलाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः ॥
संस्कारे चैव मलिनः घ्राणे चापि खरेतरः ।
शूद्रजातिरयं खड्गः क्षते नाल्पापि वेदना ॥
दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः ।
प्रायशः सर्व्वलोकेषु स्वयमेवोपदृश्यते ॥४॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ।
त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत् ।
चतुर्णां लक्षणेनैव जातिसङ्करमुच्यते ॥”
इति लौहार्णवस्य खड्गपरीक्षायां जात्य-
ध्यायः ॥ * ॥
अथ त्रिंशन्नेत्राणां लक्षणानि ।
“चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥
अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् ॥१॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥२॥
ऊर्द्धा स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिसूदनम् ॥३॥
शक्त्याकारं यदा नेत्रं खड्गमध्ये निदृश्यते ।

तत्र तद्गोलकं हृत्वा पुनस्तेनैव पूरयेत् ॥
ग्याकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे ।
स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत् ॥
दिनान्यन्तरशून्यानि पञ्चवह्निं प्रदापयेत् ।
एवं तन्म्रियते तालं मात्रा तुल्यैकरक्तिका ॥
अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत् ॥"
अन्यच्च ।
"तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम् ।
शोधितं कुरुते कान्तिं वीर्य्यवृद्धिं तथायुषम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥
अन्याप्यविधं हरितालमारणम् । यथा, वैद्यक-रसेन्द्रसारसंग्रहे जारणमारणाधिकारे ।
"तालकं कणशः कृत्वा सुस्वच्छं चुल्लिकान्तरे ।
चूर्णोदकेन संपिष्टमपामार्गजटोद्भवैः ॥
क्षारोदकैश्च संपिष्टद्वर्धो यावन्मूत्रकलम् ।
चूर्णं दत्त्वा निरुध्याथ कुम्भाण्डेष्व प्रपूरयेत् ॥
पुनर्मुखं निरुध्याथ चतुर्यामं क्रमाग्निना ।
पचेदेवं हि तच्चूर्णं कुष्ठादौ परियोजयेत् ॥"
मतान्तरम् ।
"अम्ललोनीजलैर्भाव्यं तालं द्वादशयामकम् ।
तथैव निम्बनीरेण ततश्चूर्णोदकेन च ।
प्रक्षाल्य शाल्मलीक्षारैर्द्विगुणैः खातमध्यगम् ।
विधाय काचघोयन्तं वालुकाभिः प्रपूरयेत् ।
द्वादशप्रहरं पक्त्वा स्वाङ्गशीतञ्च चूर्णयेत् ।
खादयेद्रक्तिकामेकां कुष्ठशोषदशान्तये ॥"
इति हरितालमारणम् ॥ )
( तालमिव कायतीति । कै + कः । ) हार-यन्त्रम् । इति हेमचन्द्रः । ४ । ७१ ॥ ताला इति भाषा ॥ तुवरिका । इति शब्दरत्नावली ॥
तालकाभः, पुं, ( तालकस्य हरितालस्य आभा इव आभा यस्य । ) हरितवर्णः । इति हेम-चन्द्रः । ६ । ३१ ॥ तद्वति, त्रि ॥
तालकी, स्त्री, ( तालकस्य तालवृक्षस्य इयम् । तालक + अण् + ङीप् । ) तालसुरा । इति त्रिकाण्डशेषः ॥ ताड़ी इति भाषा ॥
तालक्षीरकं, क्ली, ( तालजातं क्षीरमिव । ततः इवार्थे स्वार्थे वा कन् । ) तालसम्भूततवक्षीरम् । इति राजनिर्घण्टः ॥
तालध्वजः, पुं, ( तालो ध्वजो यस्य । ) बलदेवः । इति हलायुधः ॥ ( यथा, महाभारते । ६ । ५४ । १० ।
"नातिदूरं ततो गत्वा नगं तालध्वजो बली ।
पुण्यं तीर्थवरं दृष्ट्वा विस्मयं परमं गतः ॥"
पर्व्वतविशेषः । यथा, शत्रुञ्जयमाहात्म्ये ।१।३५२।
"शत्रुञ्जयो रैवतश्च सिद्धिश्चैत्र सुतीर्थराट् ।
टङ्कः कपर्दी लौहित्यस्तालध्वजकदम्बकौ ॥")
तालध्वजा, स्त्री, ( तालस्तालवृक्षो ध्वजचिह्नं यस्याः । ) पुरीविशेषः । यथा, क्रियायोगसारे ।
"अस्ति तालध्वजा नाम नगरी त्रिदिवोपमा ॥"
तालनवमी, स्त्री, ( तालोपहारा नवमी । शाक-पार्थिववत् समासः । ) भाद्रशुक्लनवमी । यथा,
"मासि भाद्रपदे या स्यान्नवमी बहुलेतरा ।
तस्यां संपूज्य वै दुर्गामश्वमेधफलं लभेत् ॥"
इति संवत्सरकौमुदीधृतगरुड़पुराणवचनम् ॥
इयमेव तालनवमी ख्याता ॥ ( अस्यां नवम्यां सौभाग्यफलकाङ्क्षिणीभिः स्त्रीभिर्यथाविधानं नारायणं लक्ष्मीञ्च संपूज्य व्रतकथा श्रोतव्या ।
तत्कथा यथा,—
"मेरुपृष्ठे सुखासीनं कृष्णं कमलया सह ।
उवाच मधुरं वाक्यं स्मितपूर्व्वं सुदाम्बिका ॥
शृणु मे वचनं देव ! स्त्रीणां सौभाग्यकारणम् ।
केन वा सुभगा चासीत् केन वा दुर्भगा भवेत् ॥
किं कृतेन विमुच्येत किं कृतेन फलं लभेत् ।
तन्मे ब्रूहि सुरश्रेष्ठ ! नारीणां कारणं ध्रुवम् ॥
श्रीभगवानुवाच ।
पूर्व्वं हि मम भार्य्ये द्वे सत्यभामा च रुक्मिणी ।
रुक्मिणी सुभगा साध्वी सत्यभामा च दुर्भगा ॥
तस्याः कर्म्मविपाकेन सौभाग्यमन्यथा गतम् ।
केनचिद्वाक्यदोषेण सत्यभामा च दुर्भगा ॥
दुःखार्त्ता शोकसन्तप्ता रुदती बहुशो मुहुः ।
कियत्काले च सम्पन्ने व्रजन्ती च तपोवने ॥
अरण्ये विजने गत्वा कस्मिन्मुनिवराश्रमे ।
वन्दित्वा च विधानेन सर्व्वं दुःखं न्यवेदयत् ॥
तच्छ्रुत्वा तु मुनिश्रेष्ठः प्रोवाच रुदतीं शुभाम् ।
भये पुत्त्रिणि ! मा रोदीः सौभाग्यं ते भविष्यति ॥
सत्यभामोवाच ।
दुःखं मे बहुशस्तात ! शरीरं दुर्भगं कथम् ।
कथ्यतां मुनिशार्दूल ! स्वामिसौभाग्यकारणम् ॥
मुनिरुवाच ।
भाद्रे मासि सिते पक्षे नवमी या तिथिर्भवेत् ।
तस्यां नारायणं लक्ष्मीं पूजयेच्च विधानतः ॥
सत्यभामोवाच ।
विधानं कीदृशं तस्य किं दानं किञ्च पूजनम् ।
तन्मे ब्रूहि मुनिश्रेष्ठ ! कारणं किन्तदुच्यताम् ॥
मुनिरुवाच ।
स्थण्डिले मण्डलं कृत्वा घटं तत्र निवेशयेत् ।
तत्र नारायणं लक्ष्मीं गन्धपुष्पादिनार्च्चयेत् ॥
नैवेद्येन सदा भक्त्या पूजयेत् भक्तवत्सलाम् ।
तालेन पूजयेत् देवीं तालेनैव विनिर्म्मितम् ॥
तस्मै तत् पिष्टकं दत्त्वा ब्राह्मणायोपपादयेत् ।
गन्धमाल्यैः समभ्यर्च्य विप्रहस्ते समर्पितम् ॥
स्वस्तीति ब्राह्मणो ब्रूयात् व्रतं साङ्गं समाचरेत् ।
एवं क्रमेण साध्वीभिः कर्त्तव्यमतियत्नतः ॥
नवमं वत्सरं यावत् मासि भाद्रपदे तथा ।
पुत्त्रपौत्त्रैः परिवृता सौभाग्यमतुलं भवेत् ॥
धनधान्यसमृद्धिश्च अवैधव्यश्च निश्चयः ।
अभीष्टफलमाप्नोति नवमीव्रतकारणात् ॥
सम्पूर्णे तु व्रते भूते प्रतिष्ठां तदनन्तरम् ।
विप्राय दक्षिणा देया सुभोज्यञ्च विधानतः ॥
एवं कुरु सदा विप्रे ! शृणु भाग्यमनुत्तमम् ॥
तथा चक्रे च सा साध्वी मुनेर्व्वचनगौरवात् ।
व्रते सम्पूर्णतां याते केशवस्तामुपागतः ॥
उवाच प्रहसन् देवो वचनं मधुरं शुभम् ।
असौभाग्येन यद्दुःखं तत् ते सर्व्वं विनश्यतु ॥
सौभाग्यमतुलं प्राप्य यथा गौरी हरस्य च ।
शचीव पुरुहूतस्य रतीव मदनस्य च ॥
यथा नारायणे लक्ष्मीस्तथा त्वं भव शोभने ! ।
इति तस्यै वरं दत्त्वा गृहीत्वा तां पुरं ययौ ॥
इदं या कुरुते साध्वी व्रतं सा सुभगा भवेत् ।
एवं व्रतञ्च या नारी करोति धर्म्मतत्परा ॥
तस्याश्च भवने लक्ष्मीश्चञ्चला निश्चला भवेत् ।
जन्मान्तरे भवेत् साध्वी अवैधव्यं सदा पुनः ॥
पत्युश्च सुभगा साध्वी पुत्त्रपौत्त्रान्विता भवेत् ।
धनधान्यसमृद्धिञ्च ततो मोक्षमवाप्नुयात् ॥"
इति भविष्यपुराणोक्ततालनवमीव्रतकथा समाप्ता ॥ * ॥ व्रतेऽस्मिन् नवफलानि दातव्यानि । तानि यथा,—
"पिण्डखर्ज्जूरं जातिश्च एला चैव हरीतकी ।
नारिकेलं तथा पूगं रम्भापक्वफलन्तथा ।
तत्र मुख्यं प्रदातव्यं तालस्य फलमुत्तमम् ॥" * ॥)
तालपत्रं, क्ली, ( तालस्य पत्रमिव । ) ताड़ङ्कः । इत्यमरः । २ । ६ । १०३ ॥ तालवृक्षस्य पर्णञ्च ॥ ( एतस्य व्यजनगुणा यथा,—
"तालपत्रमरुद्रूक्षः कोष्णो वातस्य शान्तिकृत् ।
निद्राकरः प्रीतिकरः शोषरोगविकारहा ॥
दाहपित्तश्रमग्लानिनाशनो भ्रमशान्तिकृत् ।
मधुरोऽतिश्रमघ्नः स्यादार्द्रत्वे कफकोपनः ॥"
इति हारीते प्रथमे स्थाने पञ्चमेऽध्याये ॥ )
तालपत्त्रिका, स्त्री, ( तालपत्त्री + स्वार्थे कन् टाप् ह्रस्वश्च । ) मुषली । तालमूली । इति राज-निर्घण्टः ॥ ( तालमूलीशब्देऽस्या विवृति-र्ज्ञातव्या ॥ )
तालपत्त्री, स्त्री, (तालस्य पत्रमिव पत्रमस्याः ।) मूषिकपर्णी । इति मेदिनी । रे, २६३ ॥ (यथा,
"गोजी च पिप्पा सह तालपत्त्र्या
शस्यौ विधेयोऽनिलजे प्रलेपः ॥"
इति सुश्रुते चिकित्सितस्थाने १८ अध्याये ॥ )
तालपर्णं, क्ली, स्त्री, ( तालः खड्गमुष्टिरिव पर्ण-मस्य । ) मुरानामगन्धद्रव्यम् । इति शब्द-चन्द्रिका ॥
तालपर्णी, स्त्री, ( तालस्य पर्णमिव पर्णमस्याः । ङीप् । ) मधुरिका । इति जटाधरः ॥ मुरा । इत्यमरः । २ । ४ । १२३ ॥
तालपुष्पकं, क्ली, ( तालस्य पुष्पमिव पुष्पमस्य । कप् । ) प्रपौण्डरीकम् । इति शब्दरत्नावली ॥
तालभृत्, पुं, ( तालं बिभर्त्ति ध्वजरूपेणेति । भृ + क्विप् । ) बलदेवः । इति त्रिकाण्डशेषः ॥
तालप्रलम्बं, क्ली, ( ताले तालवृक्षे प्रलम्बते इति । प्र + लम्ब + अच् । ) तालजटा । यथा,—
"तथा तालप्रलम्बञ्च रक्तं चातरणापहम् ॥"
इति राजवल्लभः ॥
तालमूलिका, स्त्री, ( तालमूली + स्वार्थे कन् टाप् ह्रस्वश्च । ) तालमूली । इत्यमरः । २।४।११६ ॥
तालमूली, स्त्री, ( तालस्य मूलमिव मूलमस्याः । ङीप् । ) स्वनामख्यातवृक्षः । तत्पर्य्यायः । अर्शोघ्नी २ मुषली ३ ताली ४ खलिनी ५ ।

प्रायो मात्राड्डंभाजि हृतवपुषि सघोरड्डंनादेन घात ॥

इति तालघातनप्रकार ॥ * ॥

श्रीरङ्गो मणिबन्धकङ्कणवद्यो मुक्तावलीमण्डन क्रीडाहेतुवसन्तरक्तहृदयो गन्धर्व्वलीलारत ।
साश्चान्नीचपतिश्चतुर्मुखगतो यो राजचूडामणि सोऽयं तालमयस्तृषोद्धुत्यवन् संसारवन्ध हरि ॥
अपि च ।
नन्दीप्रोऽहंतनुर्भुखेन वगतस्तश्चन्द्रविभोदय कन्दर्पो नलकवरश्च तुलितौ यस्यातिरूपे तुले ।
कण्ठान्त किल कोकिलारवभवो वाद्यो जय श्रीरङ्गो
तालात्मा मुरजिच्छिनत्तु सगुण संसारपाशावलीम् ॥
ख्यातो य कविचक्रवर्त्तिपदतो विद्याघनैरर्च्चित सोऽभद्रयमिम यमर्ज्जुनयशा सोऽजीजनत श्रीधर ।
नस्य श्रीलशुभङ्करस्य भणितौ सङ्गीतदामोदरे तालाख्य स्तवकोऽच्युतस्तवकृतौ यातस्तृतीय पटु ॥ * ॥

अन्यच ।
आन्नावष्टस्तथा रुद्रो ब्रह्म इन्द्रश्चतुर्दश ।
दशावतारबन्धानि नृत्यनाटा तत परम् ॥
अथाष्टतालभेदा । आड १ दोज २ ज्योति ३ चन्द्रशेखर ४ गञ्जनम् ५ पञ्चताल ६ रूपक ७ समताल ८ ॥ अथ रुद्रतालस्य भेदा । वीरविक्रम १ विषमसमुद्र २ घरणम ३ वीर दम्भक ४ मण्डूक ५ कन्दर्प ६ डाम्रपाहिड ७ ध्रुवचरणम् ८ दम्भकौषी ९ गजेन्द्रगुरु १० छुटका ११ । अथ ब्रह्मतालभेदा । ब्रह्म १ विराम ब्रह्म २ षटकला ३ सप्तमात्रा ४ ॥ अथेन्द्रताल भेदा । देवसार १ देवपाली २ मदनदोला ३ गुरुगान्धर्व्व ४ पञ्चाली ५ इन्द्रभाष ६ ॥ अथ चतुर्दशतालभेदा । चिह्नताल १ चन्द्र मात्रा २ देवमात्रा ३ अर्द्धज्योतिका ४ स्वग सार ५ समाष्ट ६ धराधरा ७ वसन्तवाक ८ काककला ९ कीरमन्दा १० ताण्डवी ११ हर्ष धारिका १२ भाषा १३ अर्द्धमात्रा १४ ॥
तेषां लक्षणानि यथा,—
एकतालस्तत शून्य युगल तालिका परे ।
सङ्गीते प्रथम सार आडताल प्रकीर्त्तित १ ॥
एकतालश्च शून्यश्च क्रमेणापि त्रिधा भवेत् ।
प्रान्तशून्य कलाभेदे दोजाख्यश्च भवेत् पृथक् २ ॥
प्रथम युगल ताल एक एकस्तथापरे ।
कलाभेदे तान्ते ज्योतिश्च परिकीर्त्तितम् ३ ॥
चन्द्रश्चन्द्रस्तथा युग्म तथा चन्द्रस्तथापरे ।
चन्द्र तालो विभवत्येवं चन्द्रशेखरभाषित ४ ॥
एकतालो भवेच्छून्य क्रमेणापि चतुष्टयम् ।
अन्तशून्य गञ्जनश्च सर्व्वतो मुनिभाषितम् ५ ॥
प्रथम युगलश्चैव ततपर तालमेककम् ।
शेषे युग्म तथा शून्य पञ्चताल प्रकीर्त्तितम् ६ ॥
शेषे च युगल ताल रूपक परिकीर्त्तितम् ७ ॥
एकताल तथा शून्य क्रमेण द्विविध भवेत् ।
शेषे युगलतालश्च समताल भवेत परम् ८ ॥
एकताल तथा शून्य क्रमेण त्रिविध भवेत् ।
ततपरं युगल तालमित्येव वीरविक्रम १
युग्मताल तथा शून्य ततपर द्वयतालकम् ।
शेषे च युगल ताल समुद्रविषम स्मृतम् २ ॥
युग्मतालश्च शून्यश्च एकतालश्च ततपरे ।
शेषेकञ्च त्रिशून्यश्च विषम घरण भवेत् ३ ॥
एकताल तथा शून्य क्रमेणापि त्रिधा भवेत ।
युगल युगल पश्चात स वीरदम्भक स्मृत ४ ॥
प्रथम एकतालश्च ततपर शून्यमेककम् ।
शेषेकञ्च त्रितालश्च मण्डूकस्य गतिर्यथा ५ ॥
समताल यथा दृष्ट तथा कन्दर्पश्चितम् ।
समताले भवेत शून्य कन्दर्पे नास्ति तत पुन ६ ॥
पञ्चतालात् पर शून्य डाम्रपाहिडमुत्तमम् ।
अन्त्यर्द्धश्च भवेत त्रस्त सप्तामस्य यथा गति ७ ॥
एकताल तथा शून्य क्रमेणापि द्विधा भवेत ।
शेषेकञ्च त्रितालश्च ध्रुवचरणभाषितम् ८ ॥
एकतालमेकशून्यमित्येवञ्च भवेत क्रमात् ।
विराम एकतालश्च वागभेदे दम्भकौषिका ९ ॥
युगल युगल पश्चात तदन्तोऽप्येकतालकम् ।
शेषे च युग्मशून्यश्च गजेन्द्रगुरुभाषितम् १० ॥
युग्मशून्य विरामे च एकताल भवेत् क्रमे ।
छुटकाख्यानक धीर सङ्गीतपरिनिष्ठितम ११ ॥

युग्मश्च त्रस्त प्रथमैकताल
किञ्चिद्विरामे पुनरेकतालम ।
ब्रह्मस्य तालश्च सङ्गीतमध्ये
यथा कपोती हि करोति शब्दम १ ॥

युग्मताल भवेत्त्रस्त एकतालश्च तत्परे ।
शेषे द्वितीयशून्ये च विरामब्रह्मतालकम २ ॥
प्रथमञ्चैकतालश्च युग्मशून्य तथा परे ।
शेषेकञ्च त्रितालेति षटकला खलु कथ्यते ३ ॥
आदौ युग्म तथा युग्म त्रितालश्च तथा परे ।
सप्तमात्रा भवत्येषा ब्रह्मतालान्तरे शुभे ४ ॥
सविराम त्रितालश्च एक शून्य तथापरे ।
शेषे त्रस्त त्रितालश्च देवसार इतीष्यते १ ॥
द्वितयशून्य विरामे भवति ततश्च त्रितालानि ।
शेषेण द्विशून्यमित्येवं देवपाली २ ॥
प्रथममेव युग्मताल ततपश्चादेकशून्य विरामे ।
शेषे त्रितयताल भवतीति मदनदोला ३ ॥
युग्मताल समारभ्य पञ्चताल भवेत्तथा ।
अन्त्यद्वैश्च तथा त्रस्त गुरुगान्धर्व्व इरित ४ ॥
मार्जवस्य यथा धारास्तथा तालो भवेद्वन ।
पञ्चतालान्तराणीति पञ्चालीति प्रकीर्त्तिता ५ ॥
सविराम चतुस्ताल त्रिताल शून्यमन्तत ।
मेघारम्भे यथा केका रूपन्ते इन्द्रभाषित ६ ॥
एकतालश्च शून्यश्च क्रमेण त्रितय तत ।
शेषे चतुष्टयं त्रस्त चिह्नताल इतीर्य्यते १ ॥
एकपञ्चस्तथा युग्मं ताल प्रत्येकसञ्चयम ।
शेषे त्रीणि च शून्यानि चन्द्रमात्रा भवेत् परा २ ॥
शेषे युग्म तथा शून्य देवमात्रा च सोच्यते ३ ।
चन्द्रशून्य त्रितालश्च विरामेण क्रमेण तु ।
अन्तद्वन्द्वम् भवत्येव अर्द्धज्योतिरिति स्थिति ४ ॥

एकैकतालान्तरयुग्मतालात
शून्यत्रय ततपरमेकतालम ।
कलाभिन्न शून्यभिन्न समाख्या
स स्वर्गसाराख्यनवीनताल ५ ॥

युग्मशून्य विरामेण द्वैतालमिति क्रमात ।
समाष्टाख्योऽन्तरे शून्य इति सर्व्वत्र भाषितम ६ ॥

नवाम्बुदे दामिनि शोभयान
तथा सुसम्बद्धसुतालभानम ।
युग्म सत्रस्त क्रमतश्च ताल
शेषे त्रितालश्च धराधराख्या ७ ॥

एकतालश्च शून्यश्च क्रमेणापि चतुष्टयम् ।
क्रमात्तालत्रयश्चैव वसन्तवागुदाहृत । ८ ॥
सविराम द्वय ताल युग्मताल तथा परे ।
शेषेकञ्च त्रितालश्च भवेत् काककलेति सा । ९ ॥
त्रितालश्च भवेत्त्रस्त ततपर स्वैकतालकम ।
शेषेऽपि च त्रितालश्चेत कीरमन्दा प्रचक्ष्यते १० ॥
युग्म युग्म तथा युग्म तालश्चैक भवेत क्रमात ।
शेषशून्य कलाभेदे ताण्डवीति भवेत् पृथक ११ ॥
सविराम द्वय ताल युग्मशून्यश्च ततपरम ।
शेषेऽद्वैस्तु त्रितालश्च हर्षधारा प्रकीर्त्तिता १२ ॥
चन्द्रशून्य विरामेण द्वय ताल भवेत क्रमात ।
अन्त्यद्रुतस्तु भवेत्त्रस्त भाषाख्य तालमुत्तमम १३ ॥
अन्तद्रुतस्तु त्रितालश्च द्वय ताल विरामकम ।
इत्यर्द्धमात्रा विज्ञेया सङ्गीतभुवि सर्व्वत ॥

इति सङ्गीतदामोदर ॥

दशावतारप्रबन्धलक्षण प्रबन्धशब्दे नृत्यनाद प्रबन्धवाद्यलक्षण वाद्यशब्दे द्रष्टव्यम् ॥ * ॥
करतलम् । अङ्गुष्ठमध्यमाभ्यां सम्मितम् । करास्फाल । ( यथा मेघदूते । ७९ ।
'तालै शिञ्जद्वलयसुभगैर्नर्त्तित कान्तया मे यामध्यास्ते दिवसविगमे नीलकण्ठ सुहृद ।")
कांस्यनिर्म्मितवाद्यभाण्डम् । तत्पर । इति मेदिनी । ले २९ ॥ ( महादेव । यथा महाभारते । १३ । १७ । १२८ ।
'तलस्ताल करस्थाली ऊर्द्धसंहननो महान् । )

तालक क्ली ( तालमेव । ताल+स्वार्थे कन् । )
हरितालम् । इति राजनिर्घण्ट ॥ ( अथ तालकस्याशुद्धस्य दोषमाह ।
"अशुद्ध तालमायुर्घ्नं तकफमारुतमेहकृत ।
तापस्फोटाङ्गसङ्कोच कुरुते तेन शोधयेत् ॥
अथ तालकस्य शोधनविधि ।
तालक कणश कृत्वा तच्चूर्णं काञ्जिके पचेत् ।
दोलायन्त्रेण यामैक तत कुष्माण्डजैर्द्रवै ॥
तिलतैले पचेद्याम यामञ्च त्रिफलाजले ।
एवं यन्त्रे चतुर्याम पक्व शुध्यति तालकम् ॥
अथ तालकस्य मारणविधि ।
सदल तालकं शुद्धं पौनर्नवरसेन तु ।
खल्वे विमर्द्दयेदेव दिनं पश्चाद्विशोषयेत् ॥

तत्र तक्तोलकं धृत्वा पुनस्तेनैव पूरयेत् ॥
आकाखं पिठरं तस्य पिधानं धारयेन्मुखे ।
स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत् ॥
दिनान्यन्तरशून्यानि पञ्चवह्निं प्रदापयेत् ।
एवं तन्म्रियते तालं मात्रा तुल्यैकरक्तिका ॥
अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत् ॥"
अन्यच्च ।
"तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम् ।
शोधितं कुरुते कान्तिं वीर्य्यवृद्धिं तथायुषम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥
अन्यान्यविधं हरितालमारणम् । यथा, वैद्यक-
रसेन्द्रसारसंग्रहे जारणमारणाधिकारे ।
"तालकं कणशः कृत्वा सुशुद्धं टुण्डिकान्तरे ।
चूर्णोदकेन संपिष्टमपामार्गजटोद्भवैः ॥
चारोदकैश्च संपिष्टमर्द्धाधो यावमूकजम् ।
चूर्णं दत्त्वा निरुध्याथ कुम्भाण्डेष प्रपूरयेत् ॥
पुनर्मुखं निरुध्याथ चतुर्यामं क्रमाग्निना ।
पचेदेवं हि तच्चूर्णं कुष्ठादौ परियोजयेत् ॥"
मतान्तरम् ।
"अम्ललोनीजलैर्भाव्यं तालं द्वादशयामकम् ।
तथैव निम्बनीरेण ततश्चूर्णोदकेन च ।
प्रचाल्य शाल्मलीचारैर्द्विगुणैः खातमध्यगम् ।
विधाय कवचीयन्तं वालुकाभिः प्रपूरयेत् ।
द्वादशप्रहरं पक्का स्वाङ्गशीतश्च चूर्णयेत् ।
खादयेद्रक्तिकामेकां कुष्ठशीमदशान्तये ॥"
इति हरितालमारणम् ॥ )
( तालमिव कायतीति । कै+कः । ) द्वार-
यन्त्रम् । इति हेमचन्द्रः । ४ । ७१ ॥ ताला
इति भाषा ॥ तुवरिका । इति शब्दरत्नावली ॥
तालकाभः, पुं, ( तालकस्य हरितालस्य आभा
इव आभा यस्य । ) हरितवर्णः । इति हेम-
चन्द्रः । ६ । ३१ ॥ तद्वति, त्रि ॥
तालकी, स्त्री, ( तालकाख तालवृक्षस्य इयम् ।
तालक+अण्+ङीप् । ) तालसुरा । इति
त्रिकाण्डशेषः ॥ ताड़ी इति भाषा ॥
तालचीरकं, क्ली, ( तालजातं चीरमिव । ततः
इवार्थे स्वार्थे वा कन् । ) तालसम्भूतवचीरम् ।
इति राजनिर्घण्टः ॥
तालध्वजः, पुं, ( तालो ध्वजो यस्य । ) वलदेवः ।
इति हलायुधः ॥ ( यथा, महाभारते । ८ ।
५४ । १० ।
"नातिदूरं ततो गत्वा नगं तालध्वजो वली ।
पुण्यं तीर्थवरं दृष्ट्वा विस्मयं परमं गतः ॥"
पर्व्वतविशेषः । यथा, शत्रुञ्जयमाहात्म्ये । १ । ३५२ ।
"शत्रुञ्जयो रैवतश्च सिद्धिचेत्रं सुतीर्थराट् ।
टङ्कः कपर्द्दी लौहित्यस्तालध्वजकदम्बकौ ॥")
तालध्वजा, स्त्री, ( तालस्तालवृक्षो ध्वजचिह्नं
यस्याः । ) पुरीविशेषः । यथा, क्रियायोगसारे ।
"अस्ति तालध्वजा नाम नगरी त्रिदिवोपमा ॥"
तालनवमी, स्त्री, ( तालोपहारा नवमी । शाक-
पार्थिववत् समासः । ) भाद्रशुक्लनवमी । यथा,
"मासि भाद्रपदे या स्यान्नवमी वहुवेतरा ।
तस्यां संपूज्य वै दुर्गामश्वमेधफलं लभेत् ॥"
इति संवत्सरकौमुदीधृतगरुड़पुराणवचनम् ॥
इयमेव तालनवमी ख्याता ॥ ( अस्यां नवम्यां
सौभाग्यफलकाङ्क्षिणीभिः स्त्रीभिर्यथाविधानं
नारायणं लक्ष्मीञ्च संपूज्य व्रतकथा श्रोतव्या ।
तत्कथा यथा,—
"मेरुपृष्ठे सुखासीनं कृष्णं कमलया सह ।
उवाच मधुरं वाक्यं स्मितपूर्व्वं सुदाम्भिका ॥
शृणु मे वचनं देव ! स्त्रीणां सौभाग्यकारणम् ।
केन वा सुभगा चासीत् केन वा दुर्भगा भवेत् ॥
किं कृतेन विमुच्येत किं कृतेन फलं लभेत् ।
तन्मे ब्रूहि सुरश्रेष्ठ ! नारीणां कारणं ध्रुवम् ॥
श्रीभगवानुवाच ।
पूर्व्वं हि मम भार्य्ये द्वे सत्यभामा च रुक्मिणी ।
रुक्मिणी सुभगा साध्वी सत्यभामा च दुर्भगा ॥
तस्याः कर्म्मविपाकेन सौभाग्यमन्यथा गतम् ।
केनचिद्दाम्पत्यदोषेण सत्यभामा च दुर्भगा ॥
दुःखार्त्ता शोकसन्तप्ता रुदती वहुशो मुहुः ।
कियत्काले च सम्पन्ने व्रजन्ती च तपोवने ॥
अरण्ये विजने गत्वा कस्मिन्मुनिवराश्रमे ।
रुदित्वा च विधानेन सर्व्वं दुःखं न्यवेदयत् ॥
तच्छ्रुत्वा तु मुनिश्रेष्ठः प्रोवाच रुदतीं शुभाम् ।
भये पुत्त्रिणि ! मा रोदीः सौभाग्यं ते भविष्यति ॥
सत्यभामोवाच ।
दुःखं मे वहुशस्तात ! शरीरं दुर्भगं कथम् ।
कथ्यतां मुनिशार्दूल ! स्वामिसौभाग्यकारणम् ॥
मुनिरुवाच ।
भाद्रे मासि सिते पक्षे नवमी या तीथिर्भवेत् ।
तस्यां नारायणं लक्ष्मीं पूजयेच्च विधानतः ॥
सत्यभामोवाच ।
विधानं कीदृशं तस्य किं दानं किञ्च पूजनम् ।
तन्मे ब्रूहि मुनिश्रेष्ठ ! कारणं किन्तदुच्यताम् ॥
मुनिरुवाच ।
स्थण्डिले मण्डलं कृत्वा घटं तत्र निवेशयेत् ।
तत्र नारायणं लक्ष्मीं गन्धपुष्पादिनार्चयेत् ॥
नैवेद्येन सदा भक्त्या पूजयेत् भक्तवत्सलाम् ।
तालेन पूजयेत् देवीं तालेनैव विनिर्म्मितम् ॥
तस्यं तत् पिष्टकं दत्त्वा ब्राह्मणायोपपादयेत् ।
गन्धमाल्यैः समभ्यर्च्य विप्रहस्ते समर्पितम् ॥
स्वस्तीति ब्राह्मणो ब्रूयात् व्रतं साङ्गं समाचरेत् ।
एवं क्रमेण साध्वीभिः कर्त्तव्यमतियत्नतः ॥
नवमं वत्सरं यावत् मासि भाद्रपदे तथा ।
पुत्त्रपौत्त्रैः परिवृता सौभाग्यमतुलं भवेत् ॥
धनधान्यसमृद्धिश्च अवैधव्यश्च नित्यशः ।
अभीष्टफलमाप्नोति नवमीव्रतकारणात् ॥
सम्पूर्णे तु व्रते भूते प्रतिष्ठां तदनन्तरम् ।
विप्राय दक्षिणा देया सुभोज्यश्च विधानतः ॥
एवं कुरु सदा विप्रे ! शृणु भाषणमुत्तमम् ॥
तथा चक्रे च सा साध्वी मुनेर्व्वचनगौरवात् ।
व्रते सम्पूर्णतां याते केशवस्तामुपागतः ॥
उवाच प्रहसन् देवी वचनं मधुरं शुभम् ।
असौभाग्येन यद्दुःखं तत् ते सर्व्वं विनश्यतु ॥
सौभाग्यमतुलं प्राप्य यथा गौरी हरस्य च ।
शचीव पुरुहूतस्य रतीव मदनस्य च ॥
यथा नारायणे लक्ष्मीस्तथा त्वं भव शोभने ! ।
इति तस्यै वरं दत्त्वा गृहीत्वा तां पुरं ययौ ॥
इदं या कुरुते साध्वी व्रतं सा सुभगा भवेत् ।
एवं व्रतञ्च या नारी करोति धर्म्मतत्परा ॥
तस्याश्च भवने लक्ष्मीश्चञ्चला निश्चला भवेत् ।
जन्मान्तरे भवेत् साध्वी अवैधव्यं सदा पुनः ॥
पत्युश्च सुभगा साध्वी पुत्त्रपौत्त्रान्विता भवेत् ।
धनधान्यसमृद्धिश्च ततो मोक्षमवाप्नुयात् ॥"
इति भविष्यपुराणोक्ततालनवमीव्रतकथा
समाप्ता ॥*॥ व्रतेऽस्मिन् नवफलानि दातव्यानि ।
तानि यथा,—
"पिण्डखर्ज्जूरं जातिश्च एला चैव हरीतकी ।
नारिकेलं तथा पूगं रम्भापक्कफलन्तथा ।
तत्र मुख्यं प्रदातव्यं तालस्य फलमुत्तमम् ॥"*॥)
तालपत्त्रं, क्ली, ( तालस्य पत्त्रमिव । ) ताड़ङ्कः ।
इत्यमरः । २ । ६ । १०३ ॥ तालवृक्षस्य पर्णञ्च ॥
( एतस्य अजनगुणा यथा,—
"तालपत्त्रमरुद्भूचः कोष्णो वातस्य शान्तिकृत् ।
निद्राकरः प्रीतिकरः शोषरोगविकारहा ॥
दाहपित्तश्रमग्लानिनाशनो भ्रमशान्तिकृत् ।
मधुरोऽतिश्रमघ्नः स्यादार्द्रत्वे कफकोपनः ॥"
इति हारीते प्रथमे स्थाने पञ्चमेऽध्याये ॥ )
तालपत्त्रिका, स्त्री, ( तालपत्त्री+स्वार्थे कन् टाप्
ह्रस्वश्च । ) मुषली । तालमूली । इति राज-
निर्घण्टः ॥ ( तालमूलीशब्देऽस्या विवृति-
र्ज्ञातव्या ॥ )
तालपत्त्री, स्त्री, (तालस्य पत्त्रमिव पत्त्रमस्याः ।)
मूषिकपर्णी । इति मेदिनी । रे, २६३ ॥ (यथा,
"गोजी च पिष्टा सह तालपत्त्रा
अर्शौ विशेयोऽनिलजे प्रलेपः ॥"
इति सुश्रुते चिकित्सितस्थाने १८ अध्याये ॥ )
तालपर्णं, क्ली, स्त्री, ( तालः खड्गमुष्टिरिव पर्ण-
मस्य । ) मुरानामगन्धद्रव्यम् । इति शब्द-
चन्द्रिका ॥
तालपर्णी, स्त्री, ( तालस्य पर्णमिव पर्णमस्याः ।
ङीप् । ) मधुरिका । इति जटाधरः ॥ मुरा ।
इत्यमरः । २ । ४ । १२३ ॥
तालपुष्पकं, क्ली, ( तालस्य पुष्पमिव पुष्पमस्य ।
कप् । ) प्रपौण्डरीकम् । इति शब्दरत्नावली ॥
तालभृत्, पुं, ( तालं विभर्त्ति ध्वजरूपेणेति । भृ
+क्विप् । ) वलदेवः । इति त्रिकाण्डशेषः ॥
तालप्रलम्बं, क्ली, ( ताले तालवृक्षे प्रलम्बते इति ।
प्र+लम्ब+अच् । ) तालजटा । यथा,—
"तथा तालप्रलम्बस्य रसं चतरुजापहम् ॥"
इति राजवल्लभः ॥
तालमूलिका, स्त्री, ( तालमूली+स्वार्थे कन् टाप्
ह्रस्वश्च । ) तालमूली । इत्यमरः । २।४।११६ ॥
तालमूली, स्त्री, ( तालस्य मूलमिव मूलमस्याः ।
ङीप् । ) स्वनामख्यातवृक्षः । तत्पर्यायः ।
अर्शोघ्नी २ मुषली ३ ताली ४ खलिनी ५ ।

तावीषी, स्त्री, (ताविषी + पृषोदरादित्वात् दीर्घः।) चन्द्रकन्या। इति मेदिनी। ते, ३८ ॥ (इन्द्रकन्या। इति ज्ञानचित् ॥)

ताशुरिः, पुं, हयराशिः। इति दीपिका ॥

तिक, ऋ ङ गत्याम्। इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट्।) ऋ, अतितेकत्। ङ, तेकते। इति दुर्गादासः ॥

तिक, न आस्कन्दे। वधे। इति कविकल्पद्रुमः ॥ (स्वां-परं-सकं-सेट्।) न, तिक्नोति। इति दुर्गादासः ॥

तिक्तं, क्ली, (तेजयतीति। तिज + बाहुलकात् क्तः।) पर्पटिकौषधिः। इति हेमचन्द्रः ॥

तिक्तः, पुं, (तेजयतीति। तिज + सामान्यापेक्षज्ञापकात् चुरादीनां णिजभावे गत्यार्थाकर्म्मकेति क्तः।) रसविशेषः। तित इति भाषा ॥ (यथा, सुश्रुते। १। ४२।
"यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिञ्चापादयति हर्षञ्च स तिक्तः ॥")
स वाय्वाकाशगुणबाहुल्यात् भवति। इति शिवदासः ॥ तस्य गुणाः। जन्तुकुष्ठज्वरारोचिकासदाहनाशित्वम्। रोचनत्वन्। इति राजनिर्घण्टः ॥ शीतत्वम्। तृषामूर्च्छापित्तकफविषोत्क्लेशरक्तगदनाशित्वम्। स्वयमरोचिष्णुत्वम्। कण्ठस्तन्यास्यशोधनत्वम्। वातलत्वम्। अग्निकारित्वम्। नासाशोषणत्वम्। रूक्षत्वम्। लघुत्वञ्च। अतियुक्तस्य तस्य गुणाः। शिरःशूलमन्यास्तम्भश्रमार्त्तिकम्पमूर्च्छातृष्णाकारित्वम्। बलशुक्रक्षयप्रदत्वञ्च। इति भावप्रकाशः ॥ * ॥
("तिक्ताख्यो रस वातलोऽपि हि नृणां कुष्ठादिदोषापहः
सोऽन्तः सर्व्वदनापहो श्रमहरो रुच्योऽपि संक्लेदहृत्।
जिह्वास्फोटकनाशनोऽथ भवति क्षीणक्षतानां हितो
यक्ष्मोत्क्लान्तिहरः प्रशस्तगुणहृत् निम्बादिकानां रसः ॥"
इति हारीते प्रथमे स्थाने सप्तमेऽध्याये ॥) सुगन्धः। इति मेदिनी। ते, २१ ॥ (सुरभिः। यथा, माघे। ५। ३३।
"मारानुमद्यकरिशुक्तसङ्गामुतिक्तं
चूताङ्कुरेण न विहातुमपीक्षुताम्भः ॥")
तिक्तस्तिक्तरसोऽस्यास्तीति। अर्श आदित्वात् अच्।) कुटजवृक्षः। इति शब्दचन्द्रिका ॥ वरुणवृक्षः। इति शब्दमाला ॥ तिक्तरसयुक्ते, त्रि। इत्यमरः। १। ५। ९ ॥

तिक्तकः, पुं, (तिक्तेन तिक्तरसेन कायतीति। कै + कः।) पटोलः। इत्यमरः। २। ४। १५५ ॥ चिरतिक्तः। इति शब्दरत्नावली ॥ चिरता इति भाषा ॥ (यथा, वाभटे चिकित्सितस्थाने। ३।
"पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्।
युञ्ज्यात् विरेकाय युतां घनश्लेष्मणि तिक्तकैः ॥")
कृष्णखदिरः। इति शब्दमाला। इङ्गुदीवृक्षः। इति भावप्रकाशः ॥ (तिक्तप्रधाने, त्रि। यथा, सुश्रुते। ४। २४।
"निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥")
ज्वरघ्नो गणः। यथा चक्रपाणिसंग्रहे ज्वराधिकारे।
"ह्यते सलिलस्थौघं दद्याद्वातकफज्वरे।
मद्योत्थे पैत्तिके वापि शीतलं तिक्तकैः शृतम् ॥"
"मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥"
"तिक्तकैः शृतमिति यदुक्तं तदाह मुस्तेत्यादि।"
इति तट्टीका ॥)

तिक्तकन्दिका, स्त्री, (तिक्तरसप्रधानः कन्दो मूलं सोऽस्त्यस्या इति। तिक्तकन्द + ठन्।) गन्धपत्रा। इति राजनिर्घण्टः ॥

तिक्तका, स्त्री, (तिक्तेन रसेन कायतीति। कै + कः।) कटुतुम्बी। इति शब्दरत्नावली ॥ (कटुतुम्बीशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

तिक्तगन्धिका, स्त्री, (तिक्तो गन्धो यस्याः। कप् ततष्टाप् अत इत्वञ्च।) वराहक्रान्ता। इति शब्दमाला ॥

तिक्तगुञ्जा, स्त्री, (गुञ्जेव तिक्ता। राजदन्तादित्वात् प्राङ्निपातः।) करञ्जः। तत्पर्य्यायः। चुद्ररसा २ रसघा ३ विषमर्कटी ४। इति हारावली। १०१ ॥

तिक्ततण्डुला, स्त्री, (तिक्तास्तण्डुला अन्तःशस्यं यस्याः।) पिप्पली। इति राजनिर्घण्टः ॥ (अस्याः पर्य्याया यथा,—
"पिप्पली चपला शौण्डी वैदेही मागधी कणा।
कृष्णोपकुल्या मगधी कोला स्यात्तिक्ततण्डुला ॥"
इति वैद्यकरत्नमालायाम् ॥)

तिक्ततुण्डी, स्त्री, (तिक्ततुम्बी। पृषोदरादित्वात् साधुः।) कटुतुम्बीलता। इति राजनिर्घण्टः ॥

तिक्ततुम्बी, स्त्री, (तिक्ता तुम्बी।) कटुतुम्बी। इति रत्नमाला ॥

तिक्तदुग्धा, स्त्री, (तिक्तं दुग्धं क्षीरं यस्याः।) क्षीरिणी। अजशृङ्गी। इति राजनिर्घण्टः ॥

तिक्तधातुः, पुं, (तिक्तस्तिक्तरसप्रधानो धातुः।) पित्तम्। इति राजनिर्घण्टः ॥

तिक्तपत्त्रः, पुं, (तिक्तानि पत्त्राणि यस्य।) कर्कोटकः। इति हेमचन्द्रः। ४। २५६ ॥ काकरोल इति भाषा ॥

तिक्तपर्व्वा, [न्] पुं, (तिक्तं पर्व्व ग्रन्थिर्यस्य।) दूर्व्वा। इति जटाधरः ॥ स्त्री, हिलमोची। गुडूची। यष्टिमधु। इति मेदिनी। ने, २३७ ॥

तिक्तपुष्पा, स्त्री, (तिक्तानि पुष्पाणि यस्याः।) पाठा। इति राजनिर्घण्टः ॥ (पाठाशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

तिक्तफलः, पुं, (तिक्तानि फलानि यस्य।) कतकवृक्षः। इति राजनिर्घण्टः ॥

तिक्तफला, स्त्री, (तिक्तानि फलानि यस्याः।) यवतिक्तालता। वार्त्ताकी। मङ्गुणा। इति राजनिर्घण्टः ॥

तिक्तभद्रकः, पुं, (तिक्तस्तिक्तरसप्रधानो भद्रो हितकारी चेति कर्म्मधारयः। ततः स्वार्थे कन्।) पटोलः। इति शब्दचन्द्रिका ॥

तिक्तमरिचः, पुं, (तिक्तो मरिच इव।) कतकवृक्षः। इति राजनिर्घण्टः ॥

तिक्तरोहिणिका, स्त्री, (तिक्तरोहिणी + स्वार्थे कन् टाप् पूर्व्वह्रस्वश्च।) कटुका। इति रत्नमाला ॥

तिक्तरोहिणी, स्त्री, (तिक्ता सती रोहतीति। रुह + णिनिः + ङीप्।) कटुका। इति राजनिर्घण्टः ॥ (कटुरोहिणीशब्देऽस्या विवृतिर्ज्ञातव्या ॥)

तिक्तवल्ली, स्त्री, (तिक्ता वल्ली।) मूर्व्वालता। इति रत्नमाला ॥

तिक्तवीजा, स्त्री, (तिक्तं वीजमस्याः।) कटुतुम्बी। इति राजनिर्घण्टः ॥

तिक्तशाकः, पुं, (तिक्तः शाको यस्य।) खदिरवृक्षः। वरुणवृक्षः। (अस्य पर्य्याया यथा,—
"वरुणस्तिक्तशाकश्च सेतुवृक्षोऽश्मभेदपतिः ॥"
इति वैद्यकरत्नमालायाम् ॥)
पत्रसुन्दरवृक्षः। इति मेदिनी। के, १६१ ॥

तिक्तसारं, क्ली, (तिक्तः सारो निर्य्यासो यस्य।) दीर्घरोहिषकतृणम्। इति राजनिर्घण्टः ॥

तिक्तसारः, पुं, (तिक्तः सारो निर्य्यासोऽस्य।) खदिरवृक्षः। इति रत्नमाला ॥ (खदिरशब्देऽस्य गुणादयो ज्ञेयाः ॥)

तिक्ता, स्त्री, (तिक्तस्तिक्तरसोऽस्त्यस्याः। अच् ततष्टाप्।) कटुरोहिणी। इति मेदिनी। ते, २२ ॥ (यथास्याः पर्य्यायाः।
"कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा।
अशोका मत्स्यशकला चक्राङ्गी शकुलादनी ॥
मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) पाठा। इति रत्नमाला। यवतिक्तालता। मङ्गुणा। इति राजनिर्घण्टः ॥ छिक्कनी। इति भावप्रकाशः ॥

तिक्ताख्या, स्त्री, (तिक्ता आख्या अभिधानं यस्याः।) कटुतुम्बी। इति राजनिर्घण्टः ॥

तिक्ताङ्गा, स्त्री, (तिक्तं अङ्गं यस्याः।) पातालगरुडीलता। इति राजनिर्घण्टः ॥

तिक्तिका, स्त्री, (तिक्ता + स्वार्थे कन्। टापि अत इत्वम्।) कटुतुम्बी। इति शब्दरत्नावली ॥

तिग, न हिंसायाम्। आस्कन्दे। इति कविकल्पद्रुमः ॥ (स्वां-परं-सकं-सेट्।) न, तिग्नोति। आस्कन्दः वीचिन्न मन्यते। इति दुर्गादासः ॥

तिग्मं, क्ली, (तेजयति उत्तेजयतीति। तिज + "युजिरुजितिजां कुश्च।" उणां। १। १४५। इति मक् कवर्गश्चान्तादेशः।) तीक्ष्णम्। खरम्। तद्वति, त्रि। इत्यमरः। १। ४। ३५ ॥ (यथा, महाभारते। १। २०। ११।
"तिग्मवीर्य्यविषा ह्येते दन्दशूका महाबलाः।")
वज्रम्। इति निघण्टुः। २। २० ॥ पुं, क्षत्रियविशेषः। यथा, विष्णुपुराणे। ४। २१। ३।

ाविषी, स्त्री, (ताविषी+पृषोदरादित्वात् दीर्घः।) चन्द्रकन्या। इति मेदिनी। ते, ३८॥ (इन्द्रकन्या। इति क्वचित्॥)

ावुरिः, पुं, हयराशिः। इति दीपिका॥

तिक, ऋ ङ गत्याम्। इति कविकल्पद्रुमः॥ (भ्वां-आत्मं-सकं-सेट्।) ऋ, अतितिकत्। ङ, तिकते। इति दुर्गादासः॥

तिक, न आस्कन्दे। वधे। इति कविकल्पद्रुमः॥ (स्वां-परं-सकं-सेट्।) न, तिक्नोति। इति दुर्गादासः॥

तिक्तं, क्ली, (तेजयतीति। तिज+बाहुलकात् क्तः।) पर्पटिकौषधिः। इति हेमचन्द्रः॥

तिक्तः, पुं, (तेजयतीति। तिज+सामान्यापेक्षज्ञापकात् चुरादीनां णिजभावे गत्यार्थाकर्म्मकेति क्तः।) रसविशेषः। तित इति भाषा॥ (यथा, सुश्रुते। १। ४२।

"यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिञ्चापादयति हर्षञ्च स तिक्तः॥")

स वाय्वाकाशगुणबाहुल्यात् भवति। इति शिवदासः॥ तस्य गुणाः। जन्तुकुष्ठज्वरार्त्तिकासदाहनाशित्वम्। रोचनत्वम्। इति राजनिर्घण्टः॥ शीतलत्वम्। तृष्णामूर्च्छापित्तकफविषोन्मादशरक्तगदनाशित्वम्। स्वयमरोचिष्णुत्वम्। कण्ठस्तन्यास्यशोधनत्वम्। वातलत्वम्। अग्निकारित्वम्। नावाशोषणत्वम्। रूक्षत्वम्। लघुत्वञ्च। अतियुक्तस्य तस्य गुणाः। शिरःशूलमन्यास्तम्भश्रमार्त्तिकम्पमूर्च्छाद्याधकारित्वम्। बलशुक्रक्षयप्रदत्वञ्च। इति भावप्रकाशः॥ ५॥

("तिक्ताख्यो बत वातलोऽपि हि गुणां कुष्ठादिदोषापहः

सोऽन्तः सर्व्वदलापहो रसहरो रुच्योऽपि वंक्षिद्धृत्।

जिह्वास्फोटकनाशनोऽय भवति चौर्य्यघ्नतानां हितो

यक्षोतुल्यान्तिहरः प्रशस्तगुणहृत् निम्बादिकानां रसः॥"

इति चारोते प्रथमे स्थाने सप्तमेऽध्याये॥) [illegible]। इति मेदिनी। ते, २१॥ (सुरभिः। [illegible] माघे। ५। ३३।

"[illegible]तिक्तं

[illegible] न विरतामुपमीच्छताम्भः॥"

तिक्तस्तिक्तरसोऽस्यास्तीति। अर्श आदित्वात् अच्।) कुटजवृक्षः। इति शब्दचन्द्रिका॥ वरुणवृक्षः। इति शब्दमाला॥ तिक्तरसयुक्ते, त्रि। इत्यमरः। १। ५। ६॥

तिक्तकः, पुं, (तिक्तेन तिक्तरसेन कायतीति। कै+कः।) पटोलः। इत्यमरः। २। ४। १५५॥ चिरतिक्तः। इति शब्दरत्नावली॥ चिरता इति भाषा॥ (यथा, वाभटे चिकित्सितस्थाने। ३।

"पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्।

युञ्ज्यात् विरेकाय युतां घनश्लेष्मणि तिक्तकैः॥")

कृष्णखदिरः। इति शब्दमाला। इङ्गुदीवृक्षः।

इति भावप्रकाशः॥ (तिक्तप्रधाने, त्रि। यथा, सुश्रुते। ४। २४।

"निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा॥")

कृषायां गणः। यथा चक्रपाणिसंग्रहे ज्वराधिकारे।

"तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे।

मद्योत्थे पैत्तिके वापि शीतलं तिक्तकैः शृतम्॥"

"मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः।

शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये॥"

"तिक्तकैः शृतमिति यदुक्तं तदाह मुस्तेत्यादि।"

इति तट्टीका॥)

तिक्तकन्दिका, स्त्री, (तिक्तरसप्रधानः कन्दो मूलं सोऽस्त्यस्या इति। तिक्तकन्द+ठन्।) गन्धपत्रा। इति राजनिर्घण्टः॥

तिक्तका, स्त्री, (तिक्तेन रसेन कायतीति। कै+कः।) कटुतुम्बी। इति शब्दरत्नावली॥ (कटुतुम्बीशब्देऽस्या विवरणं ज्ञातव्यम्॥)

तिक्तगन्धिका, स्त्री, (तिक्तो गन्धो यस्याः। कप् ततष्टाप् अत इत्वञ्च।) वराहक्रान्ता। इति शब्दमाला॥

तिक्तगुञ्जा, स्त्री, (गुञ्जेव तिक्ता। राजदन्तादित्वात् प्राङ्निपातः।) करञ्जः। तत्पर्य्यायः। चुव्ररसा २ रसघा ३ विद्यमर्कटी ४। इति हारावली। १०१॥

तिक्ततण्डुला, स्त्री, (तिक्तास्तण्डुलोऽन्तःशस्यं यस्याः।) पिप्पली। इति राजनिर्घण्टः॥ (अस्याः पर्य्याया यथा,—

"पिप्पली चपला शौण्डी वैदेही मागधी कणा।

कृष्णोपकुल्या मगधी कोला स्यात्तिक्ततण्डुला॥"

इति वैद्यकरत्नमालायाम्॥)

तिक्ततुण्डी, स्त्री, (तिक्ततुम्बी। पृषोदरादित्वात् साधुः।) कटुतुम्बीलता। इति राजनिर्घण्टः॥

तिक्ततुम्बी, स्त्री, (तिक्ता तुम्बी।) कटुतुम्बी। इति रत्नमाला॥

तिक्तदुग्धा, स्त्री, (तिक्तं दुग्धं क्षीरं यस्याः।) क्षीरिणी। अजशृङ्गी। इति राजनिर्घण्टः॥

तिक्तधातुः, पुं, (तिक्तस्तिक्तरसप्रधानो धातुः।) पित्तम्। इति राजनिर्घण्टः॥

तिक्तपत्रः, पुं, (तिक्तानि पत्राणि यस्य।) कर्कोटकः। इति हेमचन्द्रः। ४। २५६॥ काकरोल इति भाषा॥

तिक्तपर्व्वा, [न्] पुं, (तिक्तं पर्व्व ग्रन्थिर्यस्य।) दूर्व्वा। इति जटाधरः॥ स्त्री, हिलमोची। गुडूची। यष्टिमधु। इति मेदिनी। ने, २३७॥

तिक्तपुष्पा, स्त्री, (तिक्तानि पुष्पाणि यस्याः।) पाठा। इति राजनिर्घण्टः॥ (पाठाशब्देऽस्या विवरणं ज्ञातव्यम्॥)

तिक्तफलः, पुं, (तिक्तानि फलानि यस्य।) कतकवृक्षः। इति राजनिर्घण्टः॥

तिक्तफला, स्त्री, (तिक्तानि फलानि यस्याः।) यवतिक्तालता। वार्त्ताकी। षड्भुजा। इति राजनिर्घण्टः॥

तिक्तभद्रकः, पुं, (तिक्तस्तिक्तरसप्रधानो भद्रो हितकारी चेति कर्म्मधारयः। ततः स्वार्थे कन्।) पटोलः। इति शब्दचन्द्रिका॥

तिक्तमरिचः, पुं, (तिक्तो मरिच इव।) कतकवृक्षः। इति राजनिर्घण्टः॥

तिक्तरोहिणिका, स्त्री, (तिक्तरोहिणी+स्वार्थे कन् टाप् पूर्व्वह्रस्वश्च।) कटुका। इति रत्नमाला॥

तिक्तरोहिणी, स्त्री, (तिक्ता सती रोहतीति। रुह+णिनिः+ङीप्।) कटुका। इति राजनिर्घण्टः॥ (कटुरोहिणीशब्देऽस्या विवृतिर्ज्ञातव्या॥)

तिक्तवल्ली, स्त्री, (तिक्ता वल्ली।) मूर्व्वालता। इति रत्नमाला॥

तिक्तवीजा, स्त्री, (तिक्तं वीजमस्याः।) कटुतुम्बी। इति राजनिर्घण्टः॥

तिक्तशाकः, पुं, (तिक्तः शाको यस्य।) खदिरवृक्षः। वरुणवृक्षः। (अस्य पर्य्याया यथा,—

"वरुणस्तिक्तशाकश्च सेतुवृक्षोऽश्मसां पतिः॥"

इति वैद्यकरत्नमालायाम्॥)

पत्रसुन्दरवृक्षः। इति मेदिनी। के, १६१॥

तिक्तसारं, क्ली, (तिक्तः सारो निर्य्यासो यस्य।) दीर्घरोहिषकतृणम्। इति राजनिर्घण्टः॥

तिक्तसारः, पुं, (तिक्तः सारो निर्य्यासोऽस्य।) खदिरवृक्षः। इति रत्नमाला॥ (खदिरशब्देऽस्य गुणादयो ज्ञेयाः॥)

तिक्ता, स्त्री, (तिक्तस्तिक्तरसोऽस्त्यस्याः। अच् ततष्टाप्।) कटुरोहिणी। इति मेदिनी। ते, २२॥ (यथास्याः पर्य्यायाः।

"कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा।

अशोका मत्स्यशकला चक्राङ्गी शकुलादनी॥

मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

पाठा। इति रत्नमाला। यवतिक्तालता। षड्भुजा। इति राजनिर्घण्टः॥ छिक्कनी। इति भावप्रकाशः॥

तिक्ताख्या, स्त्री, (तिक्ता आख्या अभिधानं यस्याः।) कटुतुम्बी। इति राजनिर्घण्टः॥

तिक्ताङ्गा, स्त्री, (तिक्तं अङ्गं यस्याः।) पातालगरुडीलता। इति राजनिर्घण्टः॥

तिक्तिका, स्त्री, (तिक्ता+स्वार्थे कन्। टापि अत इत्वम्।) कटुतुम्बी। इति शब्दरत्नावली॥

तिग, न हिंसायाम्। आस्कन्दे। इति कविकल्पद्रुमः॥ (स्वां-परं-सकं-सेट्।) न, तिग्नोति। आस्कन्दः शोषणमिति मन्यते। इति दुर्गादासः॥

तिग्मं, क्ली, (तेजयति उत्तेजयतीति। तिज+"युजिरुजितिजां कुश्च।" उणां। १। १४५। इति मक् कवर्गश्चान्तादेशः।) तीक्ष्णम्। खरम्। तद्वति, त्रि। इत्यमरः। १। ४। ३५॥ (यथा, महाभारते। १। २०। ११।

"तिग्मवीर्य्यविषा ह्येते दन्दशूका महाबलाः।"

वज्रम्। इति निघण्टुः। २। २०॥ पुं, क्षत्रियविशेषः। यथा, विष्णुपुराणे। ४। २१। ३।

राजा शतक्रतुर्भवति। तानि चोक्तानि नीति शास्त्रे यथा,—

'मन्त्री पुरोहितश्चैव युवराजश्च भूपतिः।
पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वंशिकस्तथा॥
कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा।
कृत्याकृत्येषु चार्थानां नवमो विनियोजकः॥
प्रदेष्टा नगराध्यक्षः कार्य्यनिर्म्माणकृत्तथा।
धर्म्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः॥
षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः।
अटवीपालकान्तानि तीर्थान्यष्टादशैव तु॥
चारान् विचारयेत्तीर्थे स्वात्मनश्च परस्य च।
पाषण्डादीनविज्ञातानन्योन्यमितरेष्वपि॥
मन्त्रिणं युवराजञ्च हित्वा स्वेषु पुरोहितम्॥
इत्येषा तीर्थशब्दवाच्यत्वम्॥ हलायुधः।
योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि।
पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात् दर्शनेष्वपि॥"

इति तट्टीकायां नीलकण्ठः॥)

योनिः। दर्शनम्। घट्टः। इति हेमचन्द्रः॥ विप्रः। आगमः। निदानम्। अग्निः। इति सङ्क्षिप्तसारे उणादिवृत्तिः॥ (पुण्यकालः। इति स्वामी॥ यथा भागवते। १।१२।१४।

'हिरण्यं गां महीं ग्रामान् हस्त्यश्वान् नृपतिर्वरान्।
प्रादात् स्वन्नञ्च विप्रेभ्यः प्रजातीर्थे स तीर्थवित्॥"

पुं सन्न्यासिनामुपाधिविशेषः। यथा, प्राणतोषिण्यां अवधूतप्रकरणे।

'त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे।
स्नायात्तत्त्वार्थभावेन तीर्थनामा स उच्यते॥)

तीर्थकरः पुं (करोतीति करः। तीर्थस्य शास्त्रस्य पुण्यक्षेत्रस्य वा करः।) जिनः। इति हेमचन्द्रः।१।२४॥ (विष्णुः। यथा महाभारते।१३।१४९।८७।

'मनोजवस्तीर्थकरो वसुरेता वसुप्रदः॥"

"चतुर्दशविद्यानां बाह्यविद्यासमयानाञ्च प्रणेता प्रवक्ता चेति तीर्थकरः।' इति तद्भाष्यम्॥)

तीर्थकृत् पुं (तीर्थं करोतीति। कृ + क्विप् तुगागमश्च।) जिनः। इति धरणिः॥

तीर्थङ्करः पुं (तीर्थं करोतीति। कृ + खच् मुम् च।) जिनः। इति हेमचन्द्रः।१।२४॥

तीर्थयात्रा, स्त्री (तीर्थे यात्रा गमनम्।) तीर्थगमनम्। तद्विधिनिषेधौ यथा—

ऋषय ऊचुः।

'कस्येषा तीर्थयात्रास्मिन् लोके केन कथं हिजे।
श्रोतुं न इहेच्छामो यन्न वह्निमतान् मुने॥

सूत उवाच।

एतत् श्रुत्वा ततः सूतः पुराणो हृषितस्ततः।
प्राहाथ तान् मुनिश्रेष्ठान् मधुरया सुश्रुतया गिरा॥

यज्ञाधिकारे च गते द्विजेन्द्रा
ब्रह्मस्वनाथः क्षितिपोऽथ वैश्यः।
शुश्रूषणार्थं वणिजोऽम्बरीन
शूद्रस्तु तीर्थानि भजन् सुदान्तः॥
सतस्तु भिक्षुस्तीर्थगतिर्मुनीन्द्रे
कार्येतथा तत्पदस्थाद्विभिक्ष।
तां ब्रह्मचारी विधिवत् करोति
स्वयं यतो गुरुणा सन्नियुक्तः॥
नित्यं गृहस्थाश्रमसंस्थितस्य
मनीषिभिस्तीर्थगतिर्निषिद्धा।
मातुः पितुर्भक्तिमना गृहस्थः
सुतो न कुर्य्यात् खलु तीर्थयात्राम्॥
गङ्गाजलेनानुदिनं मनुष्यो
ह्यहोमयेनापि सदा मुनीन्द्राः।
स्नातीह सम्यक् यदि भावशुद्धः
फलं तदाप्नोति न चान्यदेतत्॥
सर्व्वाणि तीर्थानि हि यानि तानि
स्वर्गेऽन्तरीक्षेऽपि पुनः पृथिव्याम्।
तुल्यानि सम्यक् मुनयोऽग्निहोत्रैः
सत्यं गृहस्थाश्रमसंश्रितस्य॥
यस्येह यज्ञेष्वधिकारितास्ति
गृहेऽन्वहं दानवतो मुनीन्द्राः।
सञ्जुकृतं कल्कविवर्ज्जितस्य
तीर्थे गतिः पूर्व्वतरैर्निषिद्धा॥"

इति वह्निपुराणे १ अध्यायः॥

तीर्थराजी, स्त्री (तीर्थानां राजी श्रेणिरिव। यद्वा तीर्थेषु राजते शोभते इति। राज + इन्। ततो वा ङीष्।) काशी। इति त्रिकाण्डशेषः॥

तीर्थवाकः पुं, (तीर्थस्येव वाको वचनमस्य। उत्तमाङ्गस्थित्या प्रशंसनीयत्वादस्य तथात्वम्।) कचः। इति हेमचन्द्रः।३।२३१॥

तीर्थसेवी, [न्] पुं स्त्री, (तीर्थं घट्टादिजलप्रान्तस्थानं सेवते इति। सेव + णिनिः।) वकपक्षी। इति राजनिर्घण्टः॥ तीर्थवासिनि, त्रि॥

तीव, स्थौल्ये। इति कविकल्पद्रुमः॥ (भ्वां परं अकं सेट्।) तीवति। इति दुर्गादासः॥

तीवरः पुं, (तीव्यते इति। तृ प्लवनतरणयोः + 'छित्वरच्छत्वरेति।' उणां ३।१। इति ष्वरच्प्रत्ययेन निपातनात् साधुः।) समुद्रः। (तीरयति कर्म्मसमाप्तिं करोतीति। तीर + ष्वरच्। गुणाभावो रेफलोपश्च। इत्युज्ज्वलदत्तः।) व्याधः। इति मेदिनी। रे, १६३॥ वर्णसङ्करजातिविशेषः। तियोर इति भाषा। स तु राजपुत्त्रस्त्रियां क्षत्त्रियाज्जातः। इति ब्रह्मवैवर्त्तम्॥ चूर्णकभार्य्यायां पुण्ड्रकाज्जातः। इति पराशरपद्धतिः॥

तीवरी, स्त्री, (तीवर + षित्वात् ङीष्।) व्याधपत्नी। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

तीव्रं, क्ली, (तीव स्थौल्ये + बाहुलकात् रक्। तिज निशाने + बाहुलकात् रन्। दीर्घत्वम्। जकारस्य वकारः। इत्युज्ज्वलदत्तः। २।२८॥) अतिशयः। इत्यमरः।१।२।७०॥ तीरम्। तीक्ष्णम् च। इत्युणादिकोषः॥ लोहम्। इति राजनिर्घण्टः॥

तीव्रः त्रि (तिज + बाहुलकात् रन्।) दीर्घत्वादि कथं। अत्युष्णः। नितान्तः। (यथा, रघुः।५।६५।

"तान् हत्वा गजकुलबद्धतीव्रवैरान्
काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान्॥")

कटुः। इत्युणादिकोषः॥ (कटु सह। यथा आर्य्यासप्तशत्याम्। ६९१।

'इन्त विरह समन्तात् ज्वलयसि दुर्व्वारतीव्रसंवेग॥"

तीक्ष्णः। यथा, तत्रैव।५५२।

"कृतकृत्यापि मदीयश्वासध्वनिदत्तकर्णं। किं तीव्रे।
विध्यसि मां निश्वासे स्मर स्मरे शब्दवधीव॥")

शिवे, पुं। इति शब्दरत्नावली॥

तीव्रकण्ठः, पुं (तीव्रः कण्ठो यस्मात्। अस्य भक्षणेन हि कण्ठदेशे पीडोत्पत्तेस्तथात्वम्।) शूरणः। इति राजनिर्घण्टः॥

तीव्रगन्धा स्त्री, (तीव्रः कटुर्गन्धो यस्याः।) यवानी। इति राजनिर्घण्टः॥

तीव्रज्वाला, स्त्री (तीव्रं यथा स्यात् तथा ज्वालयति उत्तेजयति वह्निमिति। ज्वल + णिच् + अण् टाप् च।) धातकी। इति राजनिर्घण्टः॥

तीव्रवेदना, स्त्री (तीव्रा अत्यन्ता वेदना।) यातना। अतिशयवेदना। इत्यमरः।१।९।३॥

तीव्रा स्त्री (तीव्र + टाप्।) कटुरोहिणी। गण्डदूर्व्वा। राजिका। इति मेदिनी। रे, ४५॥ नदीविशेषः। इति शब्दरत्नावली॥ महाज्योतिष्मती। तरदीरुघः। तुलसी। इति राजनिर्घण्टः॥

तु स वृत्तौ। हिंसायाम्। पूर्त्तौ। इति कविकल्पद्रुमः॥ (अदां परं अकं सकं च सेट्।) तौति तवीति। इति दुर्गादासः॥

तु अ, पादपूरणम्। (यथा मनुः।११।२०७।

"अवगूर्य्य त्वब्दशतं सहस्रमभिहत्य च।
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते॥")

भेदः। अवधारणम्। इत्यमरः॥ समुच्चयः। (यथा, मनुः।११।२०२।

'उष्ट्रयानं समारुह्य खरयानन्तु कामतः।
स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति॥")

पक्षान्तरम्। नियोगः। प्रशंसा। विनिग्रहः। इति शब्दरत्नावली॥

तुक [ज्] पुं, (तुद्यते चौर्य्यतेऽनेनेति। तुज प्राणे + क्विप्।) अपत्यम्। इति हेमचन्द्रः॥

तुकाक्षीरी, स्त्री, (तुगाक्षीरी + पृषोदरादित्वात् गस्य कः।) तुगाक्षीरी। इति हेमचन्द्रः।४।२२०॥

तुगा, स्त्री, (तुज + बाहुलकात् घ किच्।) वंशरोचना। इति राजनिर्घण्टः॥ (पर्य्यायोऽस्या यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे।

"स्याद्वंशरोचना वंशी तुगाक्षीरी तुगा शुभा।
त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी च वैणवी॥")

तुगाक्षीरी, स्त्री (तुगा सा एव क्षीरी।) वंशरोचना। इति राजनिर्घण्टः॥ वंशलोचना भेदः। अस्या गुणाः। कषायत्वम्। मधुरत्वम्। हिमत्वम्। इति राजवल्लभः॥ (यथा, भावप्रकाशे मध्यखण्डे २ भागे कास रोगाधिकारे।

"द्राक्षा च तुगाक्षीरी सिता धन्वयवगुडाः॥")

तुङ्गः, पुं, (तुजि हिंसायाम् + घञ् ।) पुन्नागवृक्षः । ( यथा, वैद्यकरत्नमालायाम् ।
"कुम्भीकः पुरुषस्तुङ्गः पुन्नागो रक्तकेशरः ॥")
पर्व्वतः । बुधग्रहः । इति हेमचन्द्रः । ६ । ६४ ॥
नारिकेलः । गण्डकः । इति राजनिर्घण्टः ॥
योगभेदः । इति शब्दरत्नावली ॥ स तु ग्रहाणां उच्चराशिः । यथा,—
"सूर्य्यादुच्चान् क्रियवृषमृगस्त्रीकुलीरान्त्ययूके
दिग्वह्नीन्द्रद्वयतिथिशरान् सप्तविंशांश्च विंशान् ।
स्वंशानेतान् वदति यवनस्तान्यतुङ्गान् सुतुङ्गां-
स्तानेवांशान् मदनभवनेष्वाह नीचान् सुनी-
चान् ॥"
इति दीपिका ॥
"आदित्यमेषे वृषभे शशाङ्के
कन्यागते ज्ञे च गुरौ कुलीरे ।
मीने च शुक्रे मकरे महीजे
शनौ तुलायामिति तुङ्गगेहाः ॥"
इति समयान्टतम् ॥ * ॥
अथ तुङ्गस्थग्रहफलम् ।
"तुङ्गेऽर्कः शुभसंयुतः शुभकरैर्मित्रैश्च दृष्टो यदा
दैवात् पश्यति सोऽपि वा शुभकरानेकं द्विकं वा
त्रिकम् ।
विख्यातः प्रथितो विमर्द्दितरिपुः शौर्य्येशमान्यो
यदा
क्ष्मापालार्च्चितपादपद्मयुगलो राजा त्रिकोणे
यदा ॥
तुङ्गे चन्द्रमसि प्रसन्नवपुषि त्वष्टादनष्टद्युतौ
प्रख्यातोऽरिविमर्द्दकोऽगदतनू राजेश्वरो रूप-
वान् ।
क्ष्मापालार्च्चितपादपद्मयुगलो वा धर्म्मशीलो
महान्
सौख्यैरेव युतोऽथवा प्रियतमैर्द्दृष्टे त्रिकोणेऽपि
च ॥
यदि भवति मृगस्थो भूमिपुत्त्रस्तदा वै
न दिनकरमयूखाद्भ्रष्टरश्मिर्नरेन्द्रः ।
व्यसनतनुरभीतः शत्रुदर्पापहारी
प्रबलरिपुनरेन्द्रः स्यात्त्रिकोणेऽपि जातः ॥
कन्यांशः शशलाञ्छनस्य तनयस्तिग्मांशुकैः
संयुतो
दृष्टो वा यदि संयुतः शुभकरैर्ज्ञातस्तदा
भूपतिः ।
यात्रायां तुरगोग्रमत्तकरिणां यातैर्मही कम्पते
सम्यग्वैरिवधूदृशा विगलिता यान्ति त्रिकोणे-
ऽपि च ॥
तुङ्गे गुरौ मित्रखगेन दृष्टो
राजा भवेदिन्द्रसमानमूर्त्तिः ।
गजाश्वनौकानरपूर्णलक्ष्मीः
पृथ्वीपतिः स्यात् त्रिकोणगेऽपि ॥
तुङ्गे भृगौ शुभयुक्तप्रयुते च दृष्टे
दैवात् पुनः स यदि पश्यति मित्रसंघान् ।
भूपाधिपो भवति कीर्त्तिकरप्रधानो
दीर्घायुरुग्रसुखसुग्भृगुजे त्रिकोणे ॥
तुङ्गे शनौ मित्रखगेन दृष्टे
प्रचण्डदण्डो नृपतिप्रधानः ।
न दृश्यते दिग्गमने च धुर्व्वौ
त्रिकोणगे चापि नरेन्द्रमूर्त्तिः ॥
भवति धरणिपालो नीचबुद्धिः प्रतापी
हयगजधनपूर्णो जातिवर्गे विरक्तः ।
कुटिलमतिरनीतो भूरिभाण्डारयुक्त-
स्तमसि मिथुनसंस्थे जायते मानवेन्द्रः ॥
मृगपतिमृगकन्याकर्कटस्थे च राहौ
भवति विपुललक्ष्मी राजराजाधिपो वा ।
हयगजनरनौकामण्डितः सार्व्वभौमो
नृपतिरमरपूज्यो राहुतुङ्गी चिरायुः ॥
अरिनिधनव्ययतुङ्गे कीर्त्तितमेतत् फलं यथेम् ।
केन्द्रत्रिकोणे लाभे वा तुङ्गफलं यथोद्दिष्टम् ॥"
इति कोष्ठीप्रदीपः ॥
तुङ्गः, त्रि, ( तुजि हिंसायाम् + घञ् । ) उग्रः । प्रधानम् । उन्नतः । इति शब्दरत्नावली ॥ (यथा, रघुः । ६ । ३ ।
"शिलाविभङ्गैर्मृगराजशाव-
स्तुङ्गं नगोत्सङ्गमिवारुरोह ॥"
प्रचुरः । यथा, तत्रैव । ४ । ७० ।
"तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ॥" )
किञ्जल्के क्ली । इति राजनिर्घण्टः ॥
तुङ्गकः, पुं, (तुङ्ग + स्वार्थे संज्ञायां वा कन् ।) पुन्नागवृक्षः । इति शब्दरत्नावली ॥ ( अरण्यरूप-तीर्थविशेषे, क्ली । यथा, महाभारते । ३ । ८५ । ४६-५४ ।
"तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः ।
वेदानध्यापयत् तत्र मुनीन् सारस्वतः पुरा ॥
तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः ।
ऋषीणामुत्तरीयेषु सूपविष्टो यथासुखम् ॥
ओँकारेण यथान्यायं सम्यगुच्चारितेन ह ।
येन यत् पूर्व्वमभ्यस्तं तत् सर्व्वं समुपस्थितम् ॥
ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
हरिर्नारायणस्तत्र महादेवस्तथैव च ॥
पितामहश्च भगवान् देवैः सह महाद्युतिः ।
भृगुं नियोजयामास यजनार्थं महाद्युतिम् ॥
ततः स चक्रे भगवानृषीणां विधिवत्तदा ।
सर्व्वेषां पुनराधानं विधिदृष्टेन कर्म्मणा ॥
आज्यभागेन तत्राग्निं तर्पयित्वा यथाविधि ।
देवाः स्वभवनं याता ऋषयश्च यथाक्रमम् ॥
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ! ।
पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा ॥
तत्र मासं वसेद्धीरो नियतो नियताशनः ।
ब्रह्मलोकं व्रजेद्राजन् ! कुलञ्चैव समुद्धरेत् ॥")
तुङ्गभद्रः, पुं, ( तुङ्ग उच्चोऽपि भद्रः । ) मदोत्-कटहस्ती । इति मेदिनी । रे, २६३ ॥
तुङ्गभद्रा, स्त्री, (तुङ्गा प्रधाना भद्रा निर्म्मला च ।) नदीविशेषः । सा दक्षिणे प्रसिद्धा । ( यथा, मत्स्यपुराणे । ११३ । २८ ।
"तुङ्गभद्रा सुप्रयोगा वाह्या कावेरी चैव तु ।
दक्षिणापथनद्यस्ताः सह्यपादाद्विनिःसृताः ॥")
तस्या जलस्य गुणाः । स्निग्धत्वम् । निर्म्मलत्वम् । स्वादुत्वम् । गुरुत्वम् । कण्डुपित्तास्रदाहत्वम् । प्रायःशाल्मलत्वम् । मेधाकारत्वञ्च । इति राजनिर्घण्टः ॥
तुङ्गशेखरः, पुं, (तुङ्गान्युच्चानि शेखराणि शृङ्गाणि यस्य ।) पर्व्वतः । इति शब्दमाला ॥
तुङ्गा, स्त्री, (तुङ्ग + टाप् ।) वंशलोचना । शमी । इति राजनिर्घण्टः ॥ (अस्याः पर्य्याया यथा,—
"शमी शक्तुफला तुङ्गा केशहन्त्री शिवा फला ।
मङ्गल्या च तथा लक्ष्मीः शमीरः शल्पिका
स्मृता ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
तुङ्गिनी, स्त्री, ( तुङ्गो वृक्षविशेषस्तद्वदाकृति-रस्त्यस्याः । तुङ्ग + इनिः । ङीप् । ) महाशता-वरी । इति राजनिर्घण्टः ॥
तुङ्गी, स्त्री, (तुङ्ग + गौरादित्वात् ङीष् ।) हरिद्रा । वर्व्वरी । इति मेदिनी । गे, ८ ॥ ( अस्याः पर्य्याया यथा, भावप्रकाशस्य पूर्व्वखण्डे १भागे ।
"वर्व्वरी तुवरी तुङ्गी खरपुष्पाजगन्धिका ।
पर्णाशस्तत्र कृष्णे तु कठिलककुठेरकौ ॥"
रात्रिः । इति त्रिकाण्डशेषः ॥ )
तुङ्गी, [ न् ] पुं, ( तुङ्गः उच्चस्थानं आश्रयत्वेन अस्त्यस्य । इनिः । ) तुङ्गस्थानस्थितः । उच्चस्थग्रहः । इति ज्योतिषम् ॥
तुङ्गीपतिः, पुं, ( तुङ्ग्या निशायाः पतिः । ) चन्द्रः । इति त्रिकाण्डशेषः ॥
तुङ्गीशः, पुं, ( तुङ्गी सर्व्वप्रधान ईशः प्रभुश्च । ) शिवः । कृष्णः । सूर्य्यः । इति शब्दरत्नावली ॥
तुच्छं, क्ली, ( तौति असारत्वं गच्छतीति । तु + "छोऽदिकचिभ्यां स्तुतुभ्यान्तु कित् पीपूडोः स्वच ।" २ । ३३ । उणादिकोषटीकाधृतसूत्रात् छः स च कित् । ) पुलाकजम् । इत्युणादिकोषः ॥ भुषि इति भाषा ॥
तुच्छः, त्रि, ( तुद् + क्विप् । तेन तं वा छ्यतीति । छो + कः । ) शून्यः । इत्यमरः । ३ । १ । ५६ ॥ हीनः । इत्युणादिकोषः ॥ ( यथा, भागवते । ७ । ७ । ४५ ।
"किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ॥")
अल्पः । इति हेमचन्द्रः । ६ । ६२ ॥
तुच्छद्रुः, पुं, ( तुच्छो हीनो द्रुर्वृक्षः । ) एरण्ड-वृक्षः । इति शब्दचन्द्रिका ॥
तुच्छधान्यकं, क्ली, ( तुच्छं धान्यम् । अल्पार्थे कन् । ) पलाकः । इति रत्नमाला ॥ आगड़ा इति भाषा ॥
तुच्छा, स्त्री, ( तुच्छ + टाप् । ) तुत्था । नीली-वृक्षः । इति भावप्रकाशः ॥ ( सूक्ष्मैला । गुज-राट्देशीया एलाची । अस्याः पर्य्याया यथा,
"सूक्ष्मोपकुञ्चिका तुच्छा कोरङ्गी द्राविड़ी
त्रुटिः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
तुज, हिंसे । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । ) तोजति । इति दुर्गादासः ॥

तुन्दपरिमृजः, त्रि, ( तुन्दमुदरं परिमार्ष्टीति । परि+मृज+“तुन्दशोकयोः परिमृजापनुदोः ।” ३ । २ । ५ । इत्यत्र “आलस्यसुखाहरणयो-रिति वक्तव्यम् ।” इति वार्त्तिकोक्त्या कः । ) अलसः । इत्यमरः । २ । १० । १८ ॥

तुन्दि, स्त्री, ( तुद+इन् बाहुलकात् नुम् च । ) उदरम् । इति हेमचन्द्रः । ३ । २६८ ॥ गन्धर्व्व-विशेषे, पुं । इति जटाधरः ॥

तुन्दिः, स्त्री, ( तुद+इन् बाहुलकात् नुम् च । ) नाभिः । इति त्रिकाण्डशेषः ॥

तुन्दिकः, त्रि, ( अतिशयितं तुन्दमुदरमस्यस्य । “तुन्दादिभ्य इलच ।” ५ । २ । ११७ । इति चकारात् ठन् । ) विशालजठरो जनः । इति शब्दरत्नावली ॥

तुन्दिका, स्त्री, ( तुन्दमुदरं आश्रयत्वेनास्त्यस्याः । तुन्द+ठन् टाप् च । ) नाभिः । इति शब्द-रत्नावली ॥

तुन्दितः, त्रि, तुन्दिलः । इति भरतस्य द्विरूप-कोषः ॥

तुन्दिभः, त्रि, (तुन्दिर्वृद्धा नाभिरस्त्यस्येति । तुन्दि +“तुन्दिवलिवटेर्भः ।” ५ । २ । १३६ । इति भः । ) तुन्दिलः । इति शब्दरत्नावली ॥

तुन्दिलः, त्रि, ( तुन्दं विशालमुदरमस्त्यस्येति । तुन्द+“तुन्दादिभ्य इलच ।” ५ । २ । ११७ । इतीलच् । ) विशालजठरो जनः । भुँड़े इति भाषा ॥ तत्पर्य्यायः । पिचिण्डिलः २ वृहत्-कुक्षिः ३ तुन्दिकः ४ तुन्दिभः ५ तुन्दी ६ । इति शब्दरत्नावली ॥

तुन्दिलफला, स्त्री, ( तुन्दिलवत् फलमस्याः । ) त्रपुषी । इति राजनिर्घण्टः ॥

तुन्दी, स्त्री, ( तुन्दि+वा ङीष् । ) नाभिः । इति शब्दरत्नावली ॥

तुन्दी, [ न् ] त्रि, (तुन्दं विशालमुदरमस्त्यस्येति । “तुन्दादिभ्य इलच ।” ५ । २ । ११७ । इति चकारात् इनिः । ) तुन्दिलः । इति शब्द-रत्नावली अमरश्च ॥

तुन्नः, पुं, (तुद्यते इति । तुद+क्तः । ) नन्दी-वृक्षः । तुँद इति भाषा । इत्यमरः । २ । ४ । १२७ ॥ त्रि, व्यथितः । ( यथा, रामायणे । २ । १४ । २३ ।
“स तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः । राजा प्रचोदितोऽभीक्ष्णं कैकेयीमिदमब्रवीत् ॥”
छिन्ने । द्विधाकृते च ॥ )

तुन्नवायः, पुं, ( तुन्नं छिन्नं वयतीति । वे+“ह्वावा-मश्च ।” ३ । २ । २ । इत्यण् । ) सौचिकः । इत्यमरः । २ । १० । ६ ॥ दरजी इति भाषा ॥ ( यथा, मनुः । ४ । २१४ ।
“शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥”)

तुन्प, वधे । इति कविकल्पद्रुमः ॥ (भ्वा-परं-सकं-सेट् । ) तुम्पति । इति दुर्गादासः ॥

तुन्प, श वधे । क्लेशे । इति कविकल्पद्रुमः ॥ ( तुदां-सकं-अकं च-सेट् । ) श, तुम्पति तुतुम्प । तुप प श तुन्प श क्लिशि वधे इत्येताभ्यामेव तुम्पति तुपतीति सिद्धौ तुन्प वधे इत्यस्य भ्वादौ पाठस्तु वेदे शवन्तस्य शान्तस्य चोचा-रणभेदार्थः । इति दुर्गादासः ॥

तुन्फ, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) तुम्फति । इति दुर्गादासः ॥

तुन्फ, श वधे । क्लेशे । इति कविकल्पद्रुमः ॥ ( तुदां-परं-सकं-अकं च-सेट् । ) श, तुफति तुतुम्फ । इति दुर्गादासः ॥

तुप, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) तोपति । इति दुर्गादासः ॥

तुप, इ क अर्द्दने । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् । ) पञ्चमस्वरी । इ क, तुम्प-यति । अर्द्दनं वधः । इति दुर्गादासः ॥

तुप, प श क्लेशे । वधे । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सकं च-सेट् । ) प श, तुम्पति तुतोप । इति दुर्गादासः ॥

तुफ, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) तोफति । इति दुर्गादासः ॥

तुफ, प श क्लेशे । वधे । इति कविकल्पद्रुमः ॥ ( तुदां-परं-अकं-सकं च-सेट् । ) प श, तुम्फति तुतोफ । इति दुर्गादासः ॥

तुब, इ कि अर्द्दे । इति कविकल्पद्रुमः ॥ ( चुरां-पक्षे भ्वां-परं-सकं-सेट् । ) तवर्गाद्यादिः । पञ्चम-स्वरी । इ, तुम्बते । कि, तुम्बयति तुम्बति । अर्द्दो वधः । इति दुर्गादासः ॥

तुभ, ऌ ङ हिंसे । इति कविकल्पद्रुमः ॥ ( भ्वा-आत्म-सकं-सेट् । ) ऌ, अतुभत् । ङ, तोभते । इति दुर्गादासः ॥

तुभ, य ग हिंसे । इति कविकल्पद्रुमः ॥ (दिवां-क्र्यां च-परं-सकं-सेट् । ) य, तुभ्यति । ग, तुभ्नाति । तुतोभ । इति दुर्गादासः ॥

तुमरः, पुं क्ली, ( तुमुलः । रस्य लः । ) तुमुलः ॥ इत्यमरटीकायां रायमुकुटः ॥ ( क्षत्त्रियजाति-विशेषः । यथा, मात्स्ये । ११३ । ५३ ।
“तुमुरास्तुम्बराश्चैव मद्रका गेमघैः सह ॥”)

तुमुलं, क्ली, ( तु सौत्रो धातुः+बाहुलकात् मुलक् । ) रणसङ्कुलम् । सङ्कीर्णयुद्धम् । इत्य-मरमेदिनीकरौ ॥ परस्परसम्बाधो रणसंघट्टः । इति भरतः ॥ (यथा, देवीभागवते । ५।४१।२८।
“तत्राभूत्तुमुलं युद्धं देवदानवसैन्ययोः ॥”)

तुमुलः, पुं, ( तु+बाहुलकात् मुलक् । ) कलि-वृक्षः । इति मेदिनी । ले, ९८ ॥ व्याकुलो रवः । इति त्रिकाण्डशेषः ॥ ( प्रचण्डे उग्रे सङ्कुलमात्रे च त्रि । यथा, राजतरङ्गिण्याम् । ४ । ५४१ ।
“एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्ज्जितैः । सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ॥”
तथा, महाभारते । १ । ५३ । १२ ।
“ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा ॥”)

तुम्बः, पुं स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुम्ब अर्द्दने+अच् । ) अलावुः । इत्यमर-टीकायां भरतः ॥ ( अलावोः शुष्कत्वक् । यथा, हरिवंशे । ६४ । ५ ।
“सद्विवयतुम्बकरकौ गोपवेणुप्रवादकौ ॥”)

तुम्बकः, पुं, (तुम्बति अरुचिमिति । तुम्ब+ण्वुल् ।) अलावुः । इति शब्दरत्नावली ॥ राजालावुः । इति राजनिर्घण्टः ॥

तुम्बा, स्त्री, ( तुम्ब+टाप् । ) अलावुः । इति शब्दरत्नावली ॥ ( यथा, आर्य्याशतके । ७ ।
“युग्मायतीसमविडम्बा शनैन नवतुम्बाभवीण-सविधा
शं बाहुलेयशशिविम्बाभिरामसुखसंबाधित-स्तनभरा ॥”)
गवी । इति त्रिकाण्डशेषः ॥

तुम्बिः, स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुबि अर्द्दने+“सर्व्वधातुभ्य इन् ।” उणा० ४ । ११७ । इतीन् । ) अलावुः । इति शब्दरत्नावली ॥ ( अलावुशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

तुम्बिका, स्त्री, (तुम्ब अर्द्दने+ण्वुल् । टापि अत इत्वम् । ) अलावुः । इति शब्दरत्नावली ॥ कटुतुम्बी । इति राजनिर्घण्टः ॥

तुम्बिनी, स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुम्ब+णिनिः ङीप् । ) कटुतुम्बी । इति राज-निर्घण्टः ॥

तुम्बी, स्त्री, ( तुम्बि+कृदिकारादिति वा ङीष् ।) अलावुः । इत्यमरः । २ । ४ । १५६ ॥ ( यथा, शान्तिशतके । ३ । १६ ।
“अरे चेतोमीन ! भ्रमणमधुना यौवनजले त्यज त्वं स्वच्छन्दं युवतिषणधौ पश्यसि न किम् । तनूजालीजालं स्तनयुगलतुम्बीफलयुगं मनोभूः कैवर्त्तः क्षिपति परितस्त्वां प्रति सद्यः ॥”
“अलावुः कथिता तुम्बी द्विधा दीर्घा च वर्त्तुला । मिष्टं तुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु ॥ वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ ) कुलिकवृक्षः । इति रत्नमाला ॥

तुम्बीपुष्प’, क्ली, (तुम्ब्याः पुष्पमिव पुष्पमस्य ।) कासा-मुन्नम् । अलावुपुष्पम् । इति हारावली ।२०२॥

तुम्बुकं, क्ली, (तुम्ब+बाहुलकात् उकः ।) अलावु-फलम् । इति हेमचन्द्रः ॥

तुम्बुकः, पुं, (तुम्ब+बाहुलकात् उकः ।) अलावुः । इति भरतधृतहेमचन्द्रः ॥

तुम्बुरी, स्त्री, ( तुम्बवदाकारं रातीति । रा+कः । ङीप् । पृषोदरादित्वादुत्वम् । ) कुक्कुरी । धान्या-कम् । इति मेदिनी । रे, १६३ ॥

तुम्बुरु, क्ली, कुस्तुम्बुरु । इत्यमरटीकायां भरतः ॥ ( यथा, वैद्यके ।
“तुम्बुरुश्टङ्गवत्साङ्कन्दकं कटुरोहिणी ॥”
अस्य तैलगुणाः ।
“तुम्बुरुत्थं करञ्जोत्थं ज्योतिष्मत्युद्भवन्तथा । अर्शःकुष्ठकमिश्लेष्मशुक्रमेदोऽनिलापहम् ॥”
इति हारीते प्रथमे स्थाने नवमेऽध्याये ॥)

तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः ॥"
इति ॥ ● ॥

"संक्रान्त्यादौ निषिद्धोऽपि तुलस्यवचयः स्मृतः ।
परं श्रीविष्णुभक्तैस्तु द्वादश्यामेव नेष्यते ॥" ● ।

अथ तुलस्यवचयनिषेधकालः । विष्णुधर्म्मोत्तरे ।
"न छिन्द्यात् तुलसीं विप्रा द्वादश्यां वैष्णवः
क्वचित् ॥"

गारुड़े ।
"भानुवारं विना दूर्व्वां तुलसीं द्वादशीं विना ।
जीवितस्याविनाशाय न विचिन्वीत धर्म्मवित् ॥"
पाद्मे च ।
श्रीकृष्णसत्यासंवादीयकार्त्तिकमाहात्म्ये ।
"द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके ।
लुनाति स नरो गच्छेन्निरयानतिगर्हितान् ॥"
अतएवोक्तम् ।
"देवार्थे तुलसीच्छेदो होमार्थे समिधान्तथा ।
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥
एवं कृत्वा महापूजामङ्गोपाङ्गादिकं प्रभोः ।
क्रमादृयथा सम्प्रदायं तत्तत्स्थानेषु पूजयेत् ॥"
इति श्रीहरिभक्तिविलासे ७ विलासः ॥ ● ॥
अथ तुलसीविवाहः प्रतिष्ठाविधिश्च ।
श्रीवशिष्ठ उवाच ।
"विवाहं संप्रवक्ष्यामि तुलस्यास्तु यथाविधि ।
यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा ॥
आरामे च वनेऽवाप्य तुलसीं स्वगृहेऽपि वा ।
वर्षत्रयेण पूर्णेन ततो यजनमारभेत् ॥
सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा ।
अथवा कार्त्तिके मासि भीष्मपञ्चदिनेषु च ॥
वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः ।
मण्डपं कारयेत्तत्र कुण्डवेदीं तथा पुनः ॥
शान्तिकञ्च प्रकर्त्तव्यं मातॄणां स्थापनं तथा ।
मातृश्राद्धादिकं सर्व्वं विवाहवत् समाचरेत् ॥
ब्राह्मणांश्च शुचिस्नातान् वेदवेदाङ्गपारगान् ।
ब्रह्मा चादेशकश्चैव चत्वारश्च तथर्त्विजः ॥
वैष्णवेन विधानेन वर्द्धनीकलसं यजेत् ।
मण्डपं कारयेत्तत्र लक्ष्मीनारायणं शुभम् ॥
ग्रहयज्ञं पुरः कृत्वा मातॄणां यजनं तथा ।
कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम् ॥
कृत्वारोप्य च तुलसीं लग्ने त्वस्तमिते रवौ ।
वासः शतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् ॥
यदा बध्नाति मन्त्रेण कङ्कणं पाणिपल्लवे ।
कोऽदादिति च मन्त्रेण पाणिग्राहो विधीयते ॥
ततः कुण्डे समागत्य आचार्य्यः सह तां द्विजैः ।
आचार्य्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः ॥
विवाहकर्म्मवत् सर्व्वं वैष्णवं देशिकोत्तमैः ।
कर्त्तव्यश्च ततो होमो विधिवद्विधिपूर्व्वकम् ॥"
ॐ नमो भगवते केशवाय नमः स्वाहा ।
नारायणाय स्वाहा । माधवाय । गोविन्दाय ।
विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वामनाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय ।
दामोदराय । उपेन्द्राय । अनिरुद्धाय । अच्युताय । अनन्ताय । गदिने । चक्रिणे । विष्वक्सेनाय । वैकुण्ठाय । जनार्दनाय । मुकुन्दाय ।
अधोक्षजाय स्वाहा । इति होमः ॥
यजमानः सपत्नीको ह्यन्ये ये गोत्रबान्धवाः ।
प्रदक्षिणाश्च कर्त्तव्याश्चत्वारो विष्णुना सह ॥
तुलस्याः पाणिग्रहश्च वेदिकायां विभावसौ ।
घृतकुम्भं जपेत् सूक्तं पावमानीं विशेषतः ॥
तथैव शान्तिकाध्यायं नवसूक्तं तथैव च ।
श्रीसूक्तं पुनर्ब्रह्मा तथा वैष्णवसंहिताम् ॥
[illegible]निर्घोषैर्गीतनृत्यैश्च निस्वनैः ।
गायन्ते मङ्गला नार्य्यो माङ्गल्यं विधिमाचरेत् ॥
दद्यात् पूर्णाहुतिं पश्चादभिषेकविधिं ततः ।
[illegible] वृषभं दद्यादाचार्य्यं परिधाप्य च ॥
[illegible] पटञ्च तथा धान्यमाचार्य्याय प्रदापयेत् ।
[illegible] दापयेद्ब्राह्मणेभ्यो दद्याच्च दक्षिणाम् ॥
एवं प्रतिष्ठितां देवीं विष्णुना च समर्च्चयेत् ।
आजन्मोपार्ज्जितं पापं दर्शनेन प्रणश्यति ॥
रोपयेत्तुलसीं यस्तु सेवयेच्च प्रयत्नतः ।
प्रतिष्ठाप्य यथोक्तेन विष्णुना सह मानवः ॥
स मोक्षं लभते जन्तुर्विष्णुलोकं तथाव्ययम् ।
प्राप्नोति विपुलान् भोगान् विष्णुना सह
मोदते ॥
प्रतिष्ठा श्रीतुलस्यास्तु लिखिता विष्णुयामले ॥"
इति श्रीहरिभक्तिविलासे २० विलासः ॥

**तुलसीद्वेषा**, स्त्री, (तुलसीं द्वेष्टि तुलागन्धत्वात् स्पर्द्धते इति । द्विष + अच् । ततष्टाप् ।) बर्ब्बरी । इति रत्नमाला ॥ (बर्ब्बरीशब्देऽस्या गुणादिकं ज्ञेयम् ॥)

**तुला**, स्त्री, (तोल्यतेऽनया । तुल उन्माने भिदादङ् । अतुलोपमाभ्यामिति निर्द्देशात् गुणाभावः ।) सादृश्यम् । (यथा, रघुः । ८।१५ ।
"नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥")
मानम् । (यथा, पञ्चतन्त्रे । २ । ८४ ।
"सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति
सारतां तस्य ।
हस्ततुलयापि निपुणाः पलपरिमाणं
विजानन्ति ॥")
गृहाणां दारुबन्धाय पीठिका । पलशतम् ।
(यथा, अमरकोषे । २ । ९ । ८७ ।
"तुला स्त्रियां पलशतं भारः स्यात् विंशतिस्तुला ॥")
भाण्डम् । इति मेदिनी । ले, २५ ॥ मेषादिद्वादशराश्यन्तर्गतसप्तमराशिः । तत्पर्य्यायः ।
घूकः २ युक् ३ घटः ४ तौली ५ तुलाभृत् ६ ।
इति ज्योतिषम् ॥ सा चित्राशेषपादद्वयस्वातीसमुदाययुक्तविशाखाप्रथमपादत्रयेण भवति ।
तदधिष्ठातृदेवता तुलाधारिपुरुषः । अस्याः शिरस उदयः नानावर्णः उष्णस्वभावः । सा पश्चिमदिक्स्वामिनी वायुराशिः स्निग्धा विरूपा निःशब्दा वनचारिणी अल्पसन्ताना अल्पस्त्रीसङ्गा शूद्रवर्णा समानाङ्गा च । तत्र जातस्य फलम् । वक्ता विद्यावरः स्त्रीदुःखितः ।
इति जातकम् ॥ जन्मकालीनचन्द्राश्रिततद्राशिफलम् ।
"क्रयविक्रयरागविक्रयौ
द्विजदेवार्च्चनदानसना: पुमान् ।
शशिनि तौलिगते बहुदारभा-
गिभवशुचिरचिन्तविक्रमः ॥"
इति कोष्ठीप्रदीपः ॥
तस्या उदये तन्नामकलग्नं भवति । तस्य गणितप्राणपरिमाणं दशघटिकाधिकपञ्चाङ्गुल-प्रमे देशे वर्त्तमानेनर्विंशायनांशे षट्त्रिंशत् पलाधिकपञ्चदण्डाः । इति ज्योतिषम् ॥ तत्र जातफलम् ।
"तुलालग्ने पुमान् जातः सुधीः सत्कर्म्मतत्परः ।
विद्वान् सर्व्वकलाविज्ञो धनाढ्यो जनपूजितः ॥"
इति कोष्ठीप्रदीपः ॥ ● ॥
परीक्षाविशेषः । यथा नारदः ।
"ब्राह्मणस्य घटो देयः क्षत्त्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
साधारणः समस्तानां कोषः प्रोक्तो मनीषिभिः ।
विषवर्ज्जं ब्राह्मणस्य सर्व्वेषान्तु तुला स्मृता ॥" ●
अथ तस्या उत्तमर्णविधिः । यज्ञियं द्रुमं यूपवन्मन्त्रपूर्व्वकं छित्त्वा लोकपालेभ्यः प्रणम्य यन्त्रैः चतुर्हस्ता चतुरस्रा आर्ज्जवी तुला कार्य्या तत्र चित्रु स्थानेषु वलयानि दातव्यानि । तत्र पञ्चहस्तौ स्तम्भौ कृत्वा हस्तद्वयव्यवधानेन दक्षिणोत्तरयोर्दिशोर्हस्तद्वयनिखननं कृत्वा पट्टधारककीलकाग्रस्तम्भयोरुपरि अग्रद्वयच्छिद्र-मध्यनिवेशितलौहाङ्कुशपट्टकं निधाय तत्पट्टकस्य मध्यस्थिताङ्कुशेन तुलामध्यवलयस्थलौहं संयुञ्ज्यात् । एवञ्च सति स्तम्भयोरन्तरतिर्य्यक् तुलादण्डस्तिष्ठति तुलाग्रस्थिताभ्यामायसकीलकाभ्यां शिक्यद्वयरज्जुबन्धनं कुर्य्यात् । तुलायाः पार्श्वयोः प्राक्प्रत्यग्दिशोस्तोरणस्तम्भौ तुलातो दशाङ्गुलोच्छ्रायौ कार्य्यौ तोरणयोरुपरिसूत्रसंबद्धौ लम्बमानावधोमुखौ घटमस्तकस्पर्शिनाववलम्बौ कार्य्यौ । तुलादण्डः पूर्व्वपश्चिमयोर्धार्य्यः । पूर्व्वशिक्ये शिलां तोलयेत् पश्चिमे कर्त्तारं तुलाया उपरि जलं देयं यदि जलं न भ्रवते तदा तुला समा ज्ञेया ॥ ● ॥ अथैतत्प्रयोगः ।
कृतोपवासः कृतस्नानादिः प्राड्विवाको ब्राह्मणः कार्य्यं धर्म्मेतु निवेदितं विवेचयेत् । ततोऽभियुक्तं तोलयित्वावतार्य्य धर्म्मावाहनादिकं कुर्य्यात् । ॐ तत् सदित्युच्चार्य्य ब्राह्मणत्रयं गन्धादिना पूजयित्वा तान् स्वस्तिपुण्याहऋद्धिं प्रत्येकं निर्व्वाचयित्वा दिशाङ्गभूतहोमार्थं ब्रह्मचतुष्टयं ऋत्विक्चतुष्टयञ्च पाद्यादिभिरभ्यर्च्च्य वृणुयात् । अशक्तावेकं ब्राह्मणमेकं ऋत्विजञ्च । ततस्तुलां सपताकां ध्वजालङ्कृतां भूमौ निधाय तस्यां प्राङ्मुखः प्राड्विवाकः पुष्पाक्षतमादाय ॐ भूर्भुवः स्वरित्युच्चार्य्य ।
एह्येहि भगवन् धर्म्म! दिव्ये ह्यस्मिन् समाविश ।

तैलौर्द्धे कारयेन्मुद्रामसङ्कुलितसङ्गताम् ॥
एषु स्वराः स्मृताः सौम्याः स्वर्गाः सौरा शुभोदयाः ।
आग्नेया व्यापकाः सर्वे सोमसूर्य्याग्निदैवताः ॥
स्वराः षोडश विख्याता स्पर्शास्ते पञ्चविंशतिः ।
व्यापका दश ते कामधनधर्म्मप्रदायिनः ॥
साष्ट सहस्र सजप्य स्पृष्ट्वा तां जुहुयात्ततः ।
तस्यां सम्पातयेन्मन्त्री समिधां पूर्व्वसंख्यया ॥
निःक्षिप्य कुम्भे तां मुद्रामभिषेकोक्तवर्त्मना ।
आवाह्य पूजयेद्देवीमुपचारैर्विधानतः ॥
अभिषिच्य विनीताय दद्यात्तां मुद्रिकां गुरुः ।
इयं मुद्रा क्षुद्ररोगविषज्वरविनाशिनी ॥
बालग्रहादिभ्यो रक्षां कुर्य्याद्विशेषतः ।
युद्धे विजयमाप्नोति धारयन् मनुजेश्वरः ॥
मन्त्रसिद्धिकरी पुंसां चतुर्व्वर्गफलप्रदा ।
धारयन्मनुजो नित्यं देवतुल्यो भवेद्भुवि ॥"

इति तन्त्रसारः ॥

त्रिवर्गः, पुं, (त्रयाणां वर्गः समूहः ।) धर्म्मकामार्थाः । इत्यमरः । २ । ७ । ५८ ॥ (यथा, महाभारते । १ । १८१ । ३ ।
'यो हि कारणतः क्रोधं सञ्जातं क्षन्तुमर्हति ।
नालं स मनुजः सम्यक् त्रिवर्गं परिरक्षितुम् ॥')
त्रिफला । त्रिकटु । (यथा, सुश्रुते उत्तरतन्त्रे ४१ अध्याये ।
"भागान् दशैतान् विपचेद्विधिज्ञो
दद्यात्त्रिवर्गं मधुरञ्च तत्सम ॥")
वृद्धिस्थानक्षयाः । (यथा महाभारते । १२ । ६८ । ६८ ।
"त्रिवर्गश्चापि च प्रोक्तस्त्रिभिरैकमनाः शृणु ।
क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गं परमस्तथा ॥')
सत्त्वरजस्तमांसि । इति मेदिनी । गे, ३७ ॥ सुनीतिः । इति शब्दरत्नावली ॥

त्रिवर्णक, क्ली, (त्रयो वर्णाः सत्त्वरजस्तमांसि यस्य । कप् ।) गोक्षुरकः । त्रिफला । (यथा, सुश्रुते । १ । ४४ ।
'त्रिवर्णकत्र्यूषणयुक्तमेतद्
गुडेन लिह्यादनवेन चूर्णम् ॥")
त्रिकटु । इति मेदिनी । के, १६२ ॥ (ब्राह्मणादिवर्णत्रये श्यामरक्तपीतात्मके वर्णत्रये च ॥)

त्रिवर्णिका, स्त्री, (त्रीणि वर्णानि वर्णा यस्याः सा त्रिवर्णा । ततः स्वार्थे कन् । टापि अत इत्वं ।) त्रिहायणी । त्रिवर्णा गौः । इति हेमचन्द्रः । ४ । ३३८ ॥

त्रिवलि स्त्री (त्रिगुणिता वलिस्तरङ्ग ।) जठरावयवविशेषः । (यथा दशकुमारचरिते । ५।८।७१ ।
ऐन्द्रेणास्याधश्च मध्यं जातं त्रिवलिसंयुतम् ॥'
कृदिकारादक्तिन इति पक्षे ङीपि त्रिवलीत्यपि ।) यथा
'त्रिवलीवलयोपेताम् ॥"

इति जगद्धात्रीध्यानम् ।

त्रिविक्रमः पुं (त्रीन् लोकान् विशेषेण क्रामति व्याप्नोतीति । वि+क्रम+अच् । यद्वा त्रिषु लोकेषु बलिवञ्चनाय भूयोमस्तर्गेषु क्रमः पादन्यासो यस्य ।) विष्णुः । इत्यमरः । १ । १ । २० ॥ (यथा महाभारते । १३ । १४९ । ६९ ।
"अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।"
'त्रयो विक्रमास्त्रिषु लोकेषु यस्य स त्रिविक्रमः ।
त्रीणि पदानि विचक्रमे इति श्रुतेः ।
'त्रिरित्येव त्रयो लोकाः कीर्त्तिता मुनिसत्तमैः ।
विक्रामस्तु ततः सर्व्वांस्त्रिविक्रमोऽपि जनार्द्दनः ॥
इति हरिवंशे ।" इति शाङ्करभाष्यम् ॥)

त्रिविष्टप, क्ली, (तृतीयं विष्टपं भुवनम् ।) त्रिपिष्टपम् । स्वर्गः । इत्यमरटीकायां स्वामी ॥ (यथा, रामायणे । २ । १०८ । ६ ।
'विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ॥")
त्रिभुवनञ्च ॥

त्रिविष्टपसत्, [द्] पुं, (त्रिविष्टपे स्वर्गे सीदति सीदति । सद्+क्विप् ।) त्रिपिष्टपसत् । (देवः ।) इति हलायुधः ॥

त्रिवीजः, पुं, (त्रीणि त्रीणि बीजानि यस्य ।) श्यामाकः । इति राजनिर्घण्टः ॥

त्रिवृत्, स्त्री, (त्रीनवयवान् वृणोतीति । वृ+क्विप् तुक् च ।) लताविशेषः । तेउड़ी इति भाषा । तत्पर्य्यायः । सर्व्वानुभूतिः २ सुवहा ३ त्रिपुटा ४ त्रिवृता ५ त्रिभण्डी ६ रेचनी ७ । इत्यमरः । २ । ४ । १०८ ॥ सवहा ८ सरला ९ सरसा १० त्रिपुटी ११ रोचनी १२ । एते त्रिवृता सामान्ये शुक्लत्रिवृतायामिति केचित् । इति भरतः ॥ मालविका १३ मसूरी १४ श्यामा १५ अर्द्धचन्द्रा १६ विदला १७ सुषेणी १८ कालिन्द्रिकम् १९ कालमेषी २० काली २१ त्रिवेला २२ त्रिभण्डिका २३ । इति राजनिर्घण्टः ॥ श्वेता २४ सारा २५ । इति शब्दरत्नावली ॥
कृष्णायाः पर्य्यायः । श्यामा १ पालिन्दी २ सुषेणिका ३ काला ४ मसूरविदला ५ अर्द्धचन्द्रा ६ कालमेषिका ७ । इत्यमरः । २ । ४ । १०८ ॥ पालिन्धी ८ कालमेषिका ९ । इति भरतः ॥ श्वेतायाः पर्य्यायः । त्रिवृत् १ रुकाथी २ सुवहा ३ त्रिभण्डी ४ त्रिपुटा ५ ॥ अरुणायाः पर्य्यायः । व्याघ्रादनी १ कुटरणा २ निःसरणा ३ त्रिवृता ४ अरुणा ५ । इति रत्नमाला ॥ सामान्यत्रिवृतागुणाः । कटुत्वम् । उष्णत्वम् । क्रमिश्लेष्मोदरार्त्तिकुष्ठकण्डुव्रणनाशित्वम् । विरेचने प्रशस्तत्वञ्च । इति राजनिर्घण्टः ॥ अरुणवर्णत्रिवृद्गुणाः । स्वादुत्वम् । कषायत्वम् । मृदुत्वम् । रेचनत्वम् । रूक्षत्वम् । कटुत्वम् । दोषपाके पित्तकफापहत्वञ्च ॥ अस्याश्चान्यविधगुणाः विज्ञेया त्रिवृता सिता । इति राजवल्लभः ॥
श्वेतत्रिवृद्गुणाः । विरेचनत्वम् । स्वादुत्वम् । उष्णत्वम् । वायुकारित्वम् । रूक्षत्वम् । पित्तज्वरश्लेष्मपित्तशोफोदरापहत्वञ्च ॥ कृष्णत्रिवृता गुणाः । श्वेताहीनगुणत्वम् । तीव्रत्वम् । विरेचनत्वम् । मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारित्वञ्च । इति भावप्रकाशः ॥ (त्रिभिर्युक्ते, त्रि । यथा, ऋग्वेदे । १ । ३४ । ८ ।
"आ नो यज्ञा त्रिवृतो दयस्व ।'
यथा च मनुः । २ । ४२ ।
"मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ॥")

त्रिवृत्करण, क्ली, (त्रिवृतस्त्र्यवयवस्य करणं मिश्रीकरणम् ।) त्रियमूतेजसां मिश्रीकरणम् । यथा, 'तेजोजलक्षितय प्रत्येकं द्वेधा विभज्य एकमर्द्धं स्वेतरयोरर्द्धे प्रक्षिपेत् ।" इति मोक्षधर्म्मटीकायां नीलकण्ठः ॥

त्रिवृतपर्णी, स्त्री, (त्रीन् दोषान् नाशकत्वेन वृणोति प्राप्नोतीति त्रिवृत् त्रिदोषघ्नम् । त्रिवृत् पर्णं यस्याः । ङीष् ।) हिलमोचिका । इति शब्दचन्द्रिका ॥ (हिलमोचिकाशब्दे विवृतिरस्या ज्ञेया ॥)

त्रिवृता स्त्री, (त्रिभिरवयवैर्वृता ।) त्रिवृत् । इत्यमरः । २ । ४ । १०८ ॥ (अस्याः पर्य्यायो यथा,—
"त्रिभण्डी त्रिवृता श्यामा कुटरणा कोटरा तथा ।
सर्व्वानुभूतिः सुवहा शब्दे पर्य्यायवाचके ॥"
'कषायं त्रिफला हिङ्गु कार्षिकं त्रिवृतामलम् ।
सौवर्च्चलार्द्धकर्षञ्च फलार्द्धं चाम्लवेतसात् ॥
तच्चूर्णं शर्करायुक्तं मद्येनाम्लेन वा पिबेत् ।
गुल्मपार्श्वार्त्तिहृत् सिद्धं जीर्णे चाद्यादशीतकम् ॥'
"तुल्याञ्च त्रिवृताकल्कं सिद्धं गुल्महरं घृतम् ।
मूलं श्यामात्रिवृतयोः पचेदामलकैः सह ।
जले तेन कषायेण पक्त्वा सर्पिः पिबेन्नरः ॥'
इति चरके कल्पस्थाने सप्तमेऽध्याये ॥)

त्रिवेणी, स्त्री, (तिस्रो वेण्यः वारिप्रवाहा वियुक्ता संयुक्ता वा यत्र ।) स्थानविशेषः । यत्र गङ्गया यमुनासरस्वत्योर्वियोगः । सा दक्षिणप्रयाग । तस्य सीमनिर्णयः । यथा —
'प्रद्युम्नस्य ह्रदात् याम्ये सरस्वत्यास्तथोत्तरे ।
तद्दक्षिणप्रयागस्तु समुद्रो यमुना मता ॥'
इति प्रायश्चित्ततत्त्वम् ॥
इयं मुक्तवेणीति कथ्यते । प्रयागे युक्तवेणी । (अत्र गङ्गया यमुनासरस्वत्योः सङ्गमात् ॥) हठयोगोक्तेडापिङ्गलासुषुम्नाख्यपारिभाषिक नदीत्रयसङ्गमस्थानम् । यथा, हठयोगप्रदीपिकायाम् । ३ । २४ ।
'कालपाशमहाबन्धविमोचनविचक्षणः ।
त्रिवेणीसङ्गमं धत्ते केदारं प्रापयेन्मनः ॥"
इदमनावृत्वा वेणीति त्रिवेणीरपि पाठः ॥)

त्रिवेला, स्त्री, (तिस्रो वेला अवयवसीमानो यस्याः ।) त्रिवृत् । इति राजनिर्घण्टः ॥

त्रिशङ्कुः, पुं (त्रीणि शङ्कूनि पातकानि यस्य ।) सूर्य्यवंशीयराजविशेषः । स तु इक्ष्वाकुवंशोद्भव पृथुराजपुत्रः । (अस्य नामनिरुक्तिर्यथा, हरिवंशे । १३ । १६ ।
"एव त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महायशाः ।
त्रिशङ्कुरिति होवाच त्रिशङ्कुरिति स स्मृतः ॥")

एष वशिष्ठमाह अहं सशरीरेण स्वर्गं गन्तुं यज्ञेयं वशिष्ठ एतदशक्यमित्याह ततो राजा तस्य पुत्त्रानुवाच सशरीरो यज्ञेन स्वर्गं यथा-प्नुयां तथा कुरुत यदि भवद्भिः परित्यक्तास्तदान्यं गुरुमुपासिष्ये वशिष्ठपुत्त्रास्तच्छ्रुत्वा राजानमब्रुवंशिष्ठो भगवान् अशक्यमिति यत् प्राह तदस्माभिः कथं शक्यम् । राजोवाच यद्गुरुमन्यां गतिं गमिष्यामि तच्छ्रुत्वा ऋषिपुत्त्रा राजानं शेपुः श्वचाण्डालो भविष्यसि । ततस्तस्यां रात्त्रामतीतायां स चाण्डालदर्शनो भूत्वा विश्वामित्रं शरणमाययौ विश्वामित्रस्तं स्वीयदक्षेण याजयामास तस्मिन् यज्ञे देवा भागार्थं नागच्छन् ततो विश्वामित्रः क्रोधात् राजानमब्रवीत् मया बाल्यात् प्रभृति यत्तपः कृतं तेन त्वं दिवं व्रज तदा राजा सशरीरो दिवं ययौ । तदा शक्रस्तमुवाच त्रिशङ्को ! त्वं भूमौ पत ततोऽवाक्शिराः पतन् राजा पाहीति विश्वामित्रमुवाच विश्वामित्रस्तिष्ठेति तमुक्त्वा स्वर्गदक्षिणमार्गेऽपरान् सप्तर्षीन् सृष्ट्वापरं नक्षत्रचक्रं स्रष्टुमुपचक्रमे देवाः सम्भ्रान्ता ऋषिमब्रुवन् अयं सशरीरः स्वर्गं गन्तुं नार्हतीति विश्वामित्रस्तानुवाच अहमस्य स्वर्गारोहणं प्रतिज्ञाय कथमनृतं करिष्यामि अतो यावल्लोकाः स्थास्यन्ति तावदमूनि नक्षत्राण्यत्रैव तिष्ठन्तु त्रिशङ्कुरप्यवाक्शिरास्तिष्ठतु । इति रामायणम् ॥ * ॥ बिडालः । शलभः । इति मेदिनी । के, १०१ ॥ चातकपक्षी । इति शब्दरत्नावली ॥ खद्योतः । इति शब्दमाला ॥ (महादेवः । यथा, महाभारते । १३ । १७ । १०२ ।

"अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः ॥")

त्रिशङ्कुजः, पुं, (त्रिशङ्कोर्जायते इति । जन+डः ।) हरिश्चन्द्रराजः । इति हेमचन्द्रः । ३ । ३६५ ॥

त्रिशङ्कुयाजी, [न्] पुं, (त्रिशङ्कुं सूर्य्यवंशीयराजविशेषं याजयतीति । यज+णिच्+णिनिः ।) विश्वामित्रः । इति हेमचन्द्रः । ३ । ५१४ ॥

त्रिशरणः, पुं, ( त्रीणि शरणान्यस्येति । ) जिनः । इति त्रिकाण्डशेषः ॥

त्रिशर्करा, स्त्री, ( त्रिभिर्गुणिता शर्करा । शाकपार्थिवादित्वात् समासः । ) मिलितगुडोत्पन्नाहिमोत्था मधुरा । इति राजनिर्घण्टः ॥

त्रिशला, स्त्री, ( तिस्रः शाला यस्याः । पृषोदरादित्वात् साधुः । ) इतार्हन्मातृविशेषः । सा वर्द्धमानमाता । इति हेमचन्द्रः । १ । ४१ ॥

त्रिशाखपत्रः पुं, ( त्रिशाखं त्रिदलं पत्रमस्य । ) बिल्वः । इति राजनिर्घण्टः ॥

त्रिशिखं, क्ली, ( तिस्रः शिखा यस्य । ) त्रिशूलम् । किरीटम् । इति हेमचन्द्रः ॥

त्रिशिखः, पुं, ( तिस्रः शिखा अस्य । ) राक्षसविशेषः । स रावणपुत्त्रः । इति हेमचन्द्रः ॥ बिल्वः । इति राजनिर्घण्टः ॥ ( तामसमन्वन्तरस्य इन्द्रः । यथा, भागवते । ८ । १ । २८ ।

"सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः । ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे ॥"

शिखात्रययुक्ते, त्रि, । यथा, महाभारते । ५ । ४२ । ११ ।

"त्रिशिखां भ्रुकुटीञ्चास्य ददृशुः सर्व्वपार्थिवाः । ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ॥" )

त्रिशिखिदला, स्त्री, ( तिस्रः शिखाः सन्त्यस्येति इनिः । त्रिशिखि दलं यस्याः । ) मालाकन्दः । इति राजनिर्घण्टः ॥

त्रिशिराः, [स्] पुं, ( त्रीणि शिरांसि मस्तकानि यस्येति । ) कुवेरः । इति हेमचन्द्रः ।२।१०३॥ ज्वरः । यथा,—

"त्रिशिरास्ते प्रसन्नोऽहं व्येतु ते मज्ज्वराद्भयम् ।" इति श्रीभागवतम् ॥

रावणपुत्त्रविशेषः । ( यथा, रामायणे । ६ । १२५ । ८ ।

"अकम्पनश्च निहतो बलिनोऽन्ये च राक्षसाः । त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥")

खरसेनापतिः । इति रामायणम् ॥ ( यथा, रघुवंशे । १२ । ४७ ।

"तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः ॥"

स्वनामख्यातत्वष्टुः प्रजापतेः पुत्त्रः । यथा, महाभारते । ५ । ९ । २ ।

"त्वष्टा प्रजापतिर्ह्यासीद्देवश्रेष्ठो महातपाः । स पुत्त्रं वै त्रिशिरसमिन्द्रद्रोहात् किलासृजत् ॥"

असुरविशेषः । यथा, तत्रैव । ९ । ३१ । १२ ।

"वातापिरिल्वलश्चैव त्रिशिराश्च तथा विभो ॥"

शिखात्रयविशिष्टे, त्रि । यथा, तत्रैव । २३ । १४७ । ५४ ।

"त्रिशिराजस्य देवस्य शातकुम्भमयो द्रुमः । ध्वजस्तूर्ण्येन्द्रो देवस्य भविष्यति रथाश्रितः ॥")

त्रिशीर्षकं, क्ली, ( त्रीणि शीर्षाणि यस्य । कप् । ) त्रिशूलम् । इति हेमचन्द्रः । ३ । ४५१ ॥

त्रिशूलं, क्ली, (त्रीणि शूलानि इव अग्राणि यस्य ।) अस्त्रविशेषः । तत्पर्य्यायः । त्रिशिखम् २ । इति मेदिनी । खे, ६ ॥ शूलम् ३ त्रिशीर्षकम् ४ । इति हेमचन्द्रः ॥ (यथा, महाभारते ।२।३०।४६।

"चक्राणि परिघाश्चैव त्रिशूलानि परश्वधान् ॥")

त्रिशूली, [न्] पुं, ( त्रिशूलमस्त्रमस्त्यस्येति । त्रिशूल+इनिः । ) शिवः । यथा,—

"आद्योऽभेद्यस्त्रिशूली च द्वयकेतुर्महाबलः ॥" इति स्कन्दपुराणे नीलकण्ठस्तवः ॥

( त्रिशूलधारिणि, त्रि । स्त्रियां ङीप् । यथा, हरिवंशे । १६४ । ११ ।

"त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम् ॥")

त्रिशृङ्गः, पुं, ( त्रीणि शृङ्गाणि यस्य । ) त्रिकूटपर्व्वतः । इति शब्दरत्नावली ॥ (यथा, मत्स्ये । ३९ । १२ ।

"त्रिशृङ्गो नरपिश्चैव पर्व्वतावुत्तरौ वरौ ॥")

त्रिकोणः । यथा, कुरङ्गेण हीनस्त्रिशृङ्गासदन्तरिति वारबसुधायः ॥

त्रिशृङ्गी, [न्] पुं, (त्रीणि शृङ्गानीव सन्त्यस्येति । त्रिशृङ्ग+इनिः । ) रोहितमत्स्यः । इति शब्दार्थकल्पतरुः ॥

त्रिष्टुप्, [भ्] स्त्री, ( त्रिषु स्थानेषु स्तुभ्यते जड़ीक्रियते इति । स्तुभ जड़ीकरणे+क्विप् । षत्वम् । ) छन्दोविशेषः । इति छन्दोमञ्जरी ॥ ( यथा, वाजसनेयसंहितायाम् । ९ । ३३ ।

"इन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जेषम् ॥") अस्य विवरणं छन्दःशब्दे द्रष्टव्यम् । अस्योत्पत्तिविवरणं यथा, श्रीभागवते । ३ । १२ । ४६ ।

"तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः । त्रिष्टुम्मांसात् स्नुतोऽनुष्टुप् जगत्यस्थ्नः प्रजापतेः ॥ मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत् ॥"

त्रिसन्धिः, स्त्री, (त्रयः सन्धयो विकाशकाला यस्य ।) पुष्पविशेषः । तत्पर्य्यायः । सान्ध्यकुसुमा २ सन्धिवल्ली ३ सदाफला ४ त्रिसन्ध्यकुसुमा ५ कान्ता ६ सुकुमारा ७ सन्धिजा ८ । सा त्रिविधा । रक्ता १ सिता २ असिता च ३ । अस्या गुणाः । कफकासहरत्वम् । रुच्यत्वम् । त्रिदोषशमनत्वञ्च । इति राजनिर्घण्टः ॥

त्रिसन्ध्यं, क्ली, ( तिसृणां सन्ध्यानां समाहारः । आवन्तोवेति पाक्षिकी क्लीवता । ) पूर्व्वाह्णमध्याह्नापराह्णकालः । इत्यमरः । १ । ४ । ३ ॥ अस्य रूपान्तरम् । त्रिसन्ध्यी । इत्यमरटीकायां भरतः ॥ ( यथा, महाभारते । ३ । ८२ । २१ ।

"सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन ! । आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः । गन्धर्व्वाप्सरसश्चैव नित्यं सन्निहिता विभो ! ॥")

त्रिसन्ध्यव्यापिनी, स्त्री, ( त्रिसन्ध्यं व्याप्नोतीति । वि+आप्+णिनि+ङीप् । ) त्रिसन्ध्यघटकीभूतयावत्कालव्यापिनी तिथिः । यथा,—

"त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः । न तत्र युग्मादरणमन्यत्र हरिवासरात् ॥" इति पराशरीयेण त्रिसन्ध्यव्यापित्वेन नियमाभिधानं तदपवादकम् । इति तिथ्यादितत्त्वम् ॥ सयोर्युग्मवाक्ययोरपवादकं तदपवादकम् । इति तट्टीका ॥

त्रिसमं, क्ली, ( त्रीणि हरीतकीनागरगुड़ानि समानि यत्र ।) समत्रयम् । समहरीतकीनागरगुड़रूपम् । इति राजनिर्घण्टः ॥

त्रिसरः, पुं, ( त्रिभिः स्रीयते इति । सृ+अप् । ) कृशरः । इति हेमचन्द्रः । ३ । ६२ ॥

त्रिसवनं, क्ली, ( त्रयाणां सवनानां कालानां समाहारः । ) त्रिकालम् । इति प्रायश्चित्ततत्त्वम् ॥

त्रिसवनस्नायी, [न्] पुं, ( त्रिसवने त्रिकाले स्नातीति । स्ना+णिनिः । ) त्रिकालस्नायी । इति स्मृतिः ॥

त्रिसिता, स्त्री, ( त्रिगुणिता सिता शर्करा । ) त्रिशर्करा । इति राजनिर्घण्टः ॥

त्रिसीत्यं, क्ली, ( त्रिवारं सीतया सम्मितम् । "सीतयोसम्मिते ।" ४ । ४ । ९१ । इति यत् । ) वारत्रयकृष्टक्षेत्रम् । इत्यमरः । २ । ९ । ९ ॥

त्वरि, स्त्री, ( त्वरणमिति । त्वर+भावे इन् । ) त्वरा । इति हेमचन्द्रः । २ । २३६ ॥

त्वरितं, क्ली, ( त्वर+क्तः । ) शीघ्रम् । ( त्वरते स्मेति । त्वर+गत्यर्थाकर्म्मकेति कर्त्तरि क्तः । यद्वा, त्वरा सञ्जातास्य । त्वरा+तारकादित्वात् इतच । ) तद्विशिष्टे, त्रि । इत्यमरः ।१।१।६८॥ ( यथा, पञ्चतन्त्रे । ३ । १०२ ।
"बक्रस्तरायशुक्तस्य धर्म्मस्य त्वरिता गतिः ॥")

त्वरितोदितं, त्रि ( त्वरितं शीघ्रं यथा तथा उदितं कथितम् । ) शीघ्रोच्चारितवचः । तत्पर्य्यायः । निरस्तम् २ । इत्यमरः । १ । ६ । २० ॥

त्वष्ट, त्रि, (त्वक्ष्यते तनूक्रियते स्मेति । त्वक्ष तनूकरणे+क्तः ।) तनूकृतः । चाँचा छोला इत्यादि भाषा । तत्पर्य्यायः । तष्टः २ । इत्यमरः । ३ । ११ । ६६ ॥

त्वष्टा [ ऋ ] पुं, ( त्वेषति दीप्यतीति । त्विष दीप्तौ+"नप्तृनेष्टृत्वष्ट्टहोत्रिति ।" उणां ।२।९६। इति तृच इतोऽत्वञ्च । ) आदित्यविशेषः । ( यथा, महाभारते । १ । ६५ । १४-१५ ।
'अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वराः ।
ये राजन्नामतस्तांस्ते कीर्त्तयिष्यामि भारत ॥
धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव च ।
भगो विवस्वान् पूषा च सविता दशमस्तथा ।
एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ॥"
एते तु चाक्षुषस्य मनोरन्तरे तुषिता नाम देवा आसन् वैवस्वतेऽन्तरे तु द्वादश आदित्याः । इति विष्णुपुराणे । १ । १५ । १३१—१३३ ॥ तथा मात्स्ये च । ६ । ३—५ ॥ त्वक्षति तनूकरोति काष्ठादिकं शिल्पकार्य्यत्वात् । त्वक्ष+तृच । ) विश्वकर्म्मा । इति हेमचन्द्रः ।२।९८१। ( यथा, माघे । ३ । ३५ ।
"त्वष्टुः सदाभ्यासगृहीतशिल्प-
विज्ञानसम्पत्प्रसरस्य सीमा ॥"
ज्यैष्ठमासे सूर्य्यरथपरिभ्रमणाधिकारिणां अन्यतमः । यथा विष्णुपुराणे । २ । १० । १५ ।
"त्वष्टाथ जमदग्निश्च कम्बलोऽथ तिलोत्तमा ।
ब्रह्मापेतोऽथ ऋतजित् धृतराष्ट्रोऽथ सप्तमः ।
माघमासे वसन्त्येते सप्त मैत्रेय । भास्करे ॥"
विश्वकर्म्मणः पुत्त्रविशेषः । यथा, विष्णुपुराणे । १ । १५ । १२२ ।
'तस्य पुत्त्रास्तु चत्वारस्तेषां नामानि मे शृणु ।
अजैकपादहिर्ब्रध्नस्त्वष्टा रुद्रश्च बुद्धिमान् ॥"
प्रजापतिविशेषः । यथा, महाभारते ।५।९।३।
"त्वष्टा प्रजापतिर्ह्यासीत् देवश्रेष्ठो महातपाः ।
स पुत्त्रं वै त्रिशिरसमिन्द्रद्रोहात् किलासृजत ॥"
महादेवः । यथा महाभारते । १३।१७।१०२ ।
"धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥")
वर्णसङ्करजातिविशेषः । इत्यमरः । २ ।१०।९ ॥ अस्य पर्य्यायः । काष्ठतष्टशब्दे उत्तपत्तिश्च तत्र द्रष्टव्या ॥ ( इन्द्रः । इति ऋग्वेद भाष्ये सायणः । १ । ११७ । २२ ॥ असुरभेदः । इति तत्रैव सायणः । ३ । ४८ । ४ ॥ )

त्वाचप्रत्यक्षं, क्ली, ( त्वाचं त्वच्-सम्बन्धि प्रत्यक्षम् ।) स्पर्शज्ञानम् । त्वचादेः स्पर्शद्वारा बोधः । यथा, "अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिकाले त्वाचप्रत्यक्षं स्यात् ।" इति सिद्धान्तमुक्तावली ।

त्वाष्टी, स्त्री, दुर्गा । यथा,—
"तुष तुष्टौ स्मृतो धातुस्तस्य तुष्टी निपातने ।
सृजत्येषा प्रजासृष्टी त्वाष्टी तेन प्रकीर्त्तिता ॥"
इति देवीपुराणे ४५ अध्यायः ॥

त्वाष्ट्रः, पुं, ( त्वष्टुरपत्यं पुमान् । अण् । ) वृत्रासुरः । इति त्रिकाण्डशेषः ॥ ( यथा, देवीभागवते । ५ । ५ । ४ ।
"उद्यमेन हतस्त्वाष्ट्रो महाविर्म्मल एव च ॥"
विश्वरूपः । यथा, भागवते । ६ । ८ । ३ ।
"वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ॥"
त्वष्टृसम्बन्धिनि, त्रि । यथा, मार्कण्डेये ।२१।८५।
"ततोऽस्त्रं त्वाष्ट्रमादाय चिक्षेप प्रति दानवान् ॥"
तथा, भागवते । ६ । १४ । ९७ ।
"अपयित्वा चरुं त्वाष्ट्रं त्वष्टारमयजद्विभुः ॥"
त्वष्टा अधिष्ठात्री देवतास्येति अण् । चित्रानक्षत्रम् । यथा, बृहत्संहितायाम् । ७ । ११ ।
"घोरा श्रवणस्त्वाष्ट्रं वसुदेवं वारुणञ्चैव ॥")

त्वाष्ट्री, स्त्री, ( त्वष्टा अधिष्ठात्री देवतास्याः । त्वष्टृ+अण्+ङीप । ) चित्रानक्षत्रम् । इति हेमचन्द्रः ॥ ( त्वष्टुर्विश्वकर्म्मणोऽपत्यं स्त्री । ) संज्ञानाम्नी सूर्य्यपत्नी । इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । ६६ । ३५ ।
"त्वाष्ट्री तु सवितुर्भार्य्या वडवा रूपधारिणी ।
असूयत महाभागा सान्तरीक्षेऽश्विनावुभौ ॥")
रथिका । क्षुद्ररथः । इति त्रिकाण्डशेषः ॥

त्विट्, [ ष ] स्त्री, ( त्विष दीप्तौ+सम्पदादित्वात् क्विप । ) शोभा । ( यथा, महाभारते । ३ । ९० । २ ।
"अपश्यं द्वारकाश्चार्थं महाराज । हृतत्विषम् ॥")
प्रभा । ( यथा, माघे । १ । ३ ।
"चयस्त्विषामित्यवधारितं पुरः
स तत् शरीरीति विभाविताकृतिम् ॥")
वाक् । इति मेदिनी । षे, १३ ॥ व्यवसायः । जिगीषा । इति विश्वः ॥ ( दीप्यमाने, त्रि । यथा, ऋग्वेदे । ४ । १७ । २ ।
"तव त्विषो जनिमन् रेजत द्यौरेजद्भूमिर्भियसा स्वस्य मन्योः ॥"
"हे इन्द्र त्विषो दीप्यमानस्य तव त्वदीये जनिमन् जन्मनि सति ।" इति तद्भाष्ये सायणः ॥)

त्विष ऋौ ञ भासि । इति कविकल्पद्रुमः ॥ (भ्वां-उभ-दाने-सकं-अन्यत्र अकं अनिट । ) ऋौ, अत्विषत् । ञ, त्विषति त्विषते । भासो दीप्तिः । अप्रकाशितार्थे दाने च त्विषौ ञ अनुवर्त्तते । ऋौ, अत्वात्विषत । ञ, अवत्वेषति अवत्वेषते । वर्णो निवसति ददाति दीप्यते वा इत्यर्थः । इति दुर्गादासः ॥

त्विषा, स्त्री, ( त्विष्+हलन्तात् वा टाप् । ) दीप्तिः । इति शब्दरत्नावली ॥

त्विषाम्पतिः, पुं, ( त्विषां प्रभाणां पतिः । षष्ठ्या अलुक् । ) सूर्य्यः । इत्यमरः । १ । ३ । ३० ॥

त्विषिः, स्त्री, ( त्विष दीप्तौ+"इगुपधात् कित ।" उणां ४ । ११९ । इति इन् स च कित । ) किरणम् । इति हेमचन्द्रः । २ । १४ ॥ (यथा, ऋग्वेदे । ९ । ७१ । ९ ।
"उक्षेव यूथा परियन्नरावीदधि
त्विषीरधित सूर्य्यस्य ॥")

त्सर, छद्मगतौ । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-अकं-सकं च-सेट । ) दन्त्यवर्गाद्यस्थाने दन्त्यसकारः । त्सरति धूर्त्तः छद्मेन गच्छतीत्यर्थः । इति दुर्गादासः ॥ ( यथा, अथर्व्ववेदे । ८ । ६ । ८ ।
"यस्त्वा स्वपन्तीं त्सरति यस्त्वा दिप्सति जाग्रतीम् ॥")

त्सरुः, पुं, ( त्सरति कौटिल्यं गच्छतीति । त्सर + "शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ।" उणां १ । ७ । इति उः । ) खड्गमुष्टिः । इत्यमरः । २ । ८ । ९० ॥ तत्पर्य्यायः । मुष्टिः २ तालकम् ३ । इति शब्दरत्नावली ॥ ( यथा, आर्य्यासप्तशत्याम् । २४३ ।
"ध्येतुस्तवाभिसारसमुचितवेशे । यातोऽस्मि मुकुलितसे ॥
विशति मनो निशितेव त्सरस्य कुसुमत्सरच्छुरिका ॥"
सर्पः । यथा, ऋग्वेदे । ५ । ५० । १ ।
"मा मां पद्येन रपसा विदत्त्सरुः ।"
"त्सरुः कुत्सितगामी जिह्मगः सर्प इत्यर्थः मां पद्येन पादभवेन रपसा । रप इति शब्दकर्म्मा । शब्देन मा विदत् मा जानातु ।" इति तद्भाष्ये सायणः ॥ )

---

## थ

थ, थकारः । स व्यञ्जनसप्तदशवर्णः । तवर्गद्वितीयवर्णश्च । अस्योच्चारणस्थानं दन्ता । इति व्याकरणम् ॥ ( यथा, शिक्षायाम् । १७ ।
"स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥")
अस्य स्वरूपं यथा,—
"थकारं चञ्चलापाङ्गि । कुण्डली मोक्षरूपिणी ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ।
अष्टवर्गादिसम्प्राप्तं थकारं प्रणमाम्यहम् ॥"
इति कामधेनुतन्त्रम् ॥
( वर्णाभिधानमालायाम् ) अस्य लेखनप्रकारो यथा,—
"कुञ्चिता कुण्डली भूत्वा वामाद्दक्षिणतस्तत ।
वामतः कुञ्चिता भूत्वा दक्षाधोदक्षगा गता ॥
ऊर्द्धे कर्ण्यायता रेखा सुरा गङ्गादयः क्रमात् ।
वाणी भवानी लक्ष्मीश्च ध्यानमस्य प्रचक्षते ॥"

अस्य ध्यानादि यथा,—
"नीलवर्णां त्रिनयनां षड्भुजां वरदां पराम्।
पीतवस्त्रपरीधानां सदा सिद्धिप्रदायिनीम् ॥
एवं ध्यात्वा थकारन्तु तन्मन्त्रं दशधा जपेत्।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥
तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम् ॥"
इति वर्णोद्धारतन्त्रम् ॥ ॥

अस्य नामानि यथा,—
"थः स्थिरामी महाग्रन्थिर्ग्रन्थिग्राही भयानकः।
झिण्टी झिरविण्टी दण्डी भद्रकाली शिलोच्चयः ॥
कृष्णो बुद्धिर्विकर्मा च दक्षनासाधिपोऽमरः।
वरदा भोगदा केशो वामजानुरसोऽनलः ॥
लोलोजप्यिनी गुह्यः शरचन्द्रविदारकः ॥"
इति नानातन्त्रशास्त्रम् ॥

थं, क्ली, रक्षणम्। मङ्गलम्। साध्वसम्। इति मेदिनी। थे, १ ॥

थः, पुं, (थुड संवृतौ+डः।) पर्व्वतः। भयरक्षकः। इति मेदिनी। थे, १ ॥ व्याधिभेदः। भयचिह्नम्। भक्षणम्। इति शब्दरत्नावली ॥

थुड, शि संवृतौ। इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट्।) शि, थुडति। अथुडीत् तुथोड। इति दुर्गादासः ॥

थुत्कारः, पुं, (कृ+भावे घञ्। थुदित्यव्यक्तशब्दस्य कारः करणं यत्र।) निष्ठीवनत्यागानुकरणशब्दः ॥

थुर्व्व, ई वधे। इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट्।) पञ्चमस्वरी। थूः थुरौ थुरः। ई, थूर्णः। इति दुर्गादासः ॥

थुर्व्वणं, क्ली, हननम्। थुर्व्वधातोर्भावे अनटि (ल्युटि) निष्पन्नम् ॥

थूथू, अ, निष्ठीवनत्यागानुकरणशब्दः। यथा,— थूथूकृत्य वमद्भिरध्वगजनैरिति सूक्तिकर्णामृतम् ॥

थैथै, अ, वाद्यानुकरणशब्दविशेषः। इति सङ्गीतदामोदरः ॥

थोडनं, क्ली, संवरणम्। इति थुडधातोर्भावेऽनट् प्रत्ययः (ल्युट्) ॥

---

## द

द, दकारः। स व्यञ्जनाष्टादशवर्णः तवर्गतृतीयवर्णश्च। अस्योच्चारणस्थानं दन्तः। इति व्याकरणम् ॥ (यथा, शिक्षायाम्। १७।
"स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥")

अस्य स्वरूपं यथा,—
"दकारं शृणु चार्व्वङ्गि! चतुर्व्वर्गप्रदायकम्।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥
त्रिशक्तिसहितं देवि! त्रिबिन्दुसहितं सदा।
आत्मादितत्त्वसंयुक्तं स्वयं परमकुण्डली ॥
रक्तविद्युल्लताकारं दकारं हृदि भावय ॥"
इति कामधेनुतन्त्रम् ॥

अस्य ध्यानादि यथा,—
"ध्यानमस्य दकारस्य वक्ष्यते शृणु पार्व्वति!।
चतुर्भुजां पीतवस्त्रां नवयौवनसंस्थिताम् ॥
अनेकरत्नघटितहारनूपुरशोभिताम्।
एवं ध्यात्वा दकारन्तु तन्मन्त्रं दशधा जपेत् ॥"

अस्य नामानि यथा, नानातन्त्रशास्त्रे।
"दोऽत्रीशो धातकिर्धाता दाता दत्तं कलत्रकम्।
दीनं ध्यानञ्च दानञ्च भक्तिराद्यवनी धरा ॥
सुषुम्ना योगिनी सद्यः कुण्डली वामगुल्फकः।
कात्यायनी शिवा दुर्गा लज्जा ना त्रिकण्टकी ॥
स्वस्तिकः कुटिलास्यश्च कृष्णशोभा जितेन्द्रियः।
धर्म्मज्ञः कामदेवश्च क्षमा बहुसुखप्रदा ॥
हरिद्रापुरमन्त्री च दक्षपार्ष्णिश्चरेखकः ॥"

दं, क्ली, (ददाति आनन्दमिति। दा+बाहुलकात् कः।) भार्य्या। इत्येकाक्षरकोषः ॥

दः, पुं, (दैप शुद्धौ वा दा दाने+बाहुलकात् कः।) अचलः। दत्तः। दाता। इति मेदिनी। दे, १ ॥ (दो छेदे+डः।) खण्डनम्। इति शब्दरत्नावली ॥ (यथा, माघे। १९। ११४।
"दाददोदुद्दद्दादी दाददोदूददीददोः।
दुद्दादं दददे दुद्दे ददाददददोऽददः ॥"
"दद्यते इति दादो दानम्। दददाने कर्म्मणि घञ्। दादं ददातीति दाददो दानप्रदः।" इत्यादौ मल्लिनाथकृतटीकायामर्थविशेषा बोद्धव्याः ॥)

दंशः, पुं, (दशतीति। दंश दंशने+पचाद्यच्।) कीटविशेषः। डाँश इति भाषा। तत्पर्य्यायः। वनमक्षिका २। इत्यमरः। २। ५। २७ ॥ गोमक्षिका ३ अरण्यमक्षिका ४ भम्भरालिका ५। इति शब्दरत्नावली ॥ पांशुरः ६ दंशकः ७। इति हारावली ॥ दुष्टमुखः ८ क्रूरः ९ क्षुद्रिका १०। इति राजनिर्घण्टः ॥ (यथा, मनुः। १। ४५।
"स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम्।
ऊष्मणश्चोपजायन्ते यच्चान्यत् किञ्चिदीदृशम् ॥"
दशतीव शरीरमिति।) वर्म्म। (यथा, भागवते। ३। १८। ६।
"परानुषक्तं तपनीयोपकल्पं
महागदं काञ्चनचित्रदंशम् ॥"
दंश+भावे घञ्।) दंशनम्। इति मेदिनी। शे, ७ ॥
("सुप्तता जायते दंशे कृष्णञ्चातिस्रवत्यसृक् ॥"
इति सुश्रुते कल्पस्थाने षष्ठेऽध्याये ॥)
दन्तः। इति हेमचन्द्रः। ३। २४८ ॥ खण्डनम्। (दन्तक्षतम्। यथा, आर्य्यासप्तशत्याम्। ५११।
"वर्णच्छविर्न ललाटे न मुखितमङ्गं न चाधरे दंशः।
उत्पलमहारि वारि च न स्पृष्टमपायचतुरेण ॥")
दोषः। मर्म्म। सर्पक्षतम्। इति विश्वः ॥ (यथा,
"सर्व्वैरेवार्दितः सर्पैः शाखादष्टस्य देहिनः।
दंशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले ॥
प्लोतचर्म्मान्तवल्कानां मृदुनान्यतमेन च।
न गच्छति विषं देहमरिष्टाभिर्निवारितम् ॥"
इति सुश्रुते कल्पस्थाने पञ्चमेऽध्याये ॥
असुरविशेषः। यथा, महाभारते। १२। ३। १९।
"सोऽब्रवीदहमासं प्राक् दंशो नाम
महासुरः ॥"
अयन्तु भृगुभार्य्यामपहरन् तच्छापात् मांसशोणिताशी कीटो जातः। ततः कदाचित् गुरोः परशुरामस्य निद्रां प्रतिपालयितुः कर्णस्य ऊरुदेशं निर्भिद्य शोणितं पीतवान्। ततः परशुरामेणायं शापात् निर्म्मोचितः ॥ एतद्विवरणन्तु तत्रैवाध्याये द्रष्टव्यम् ॥)

दंशकः, पुं, (दशतीति। दन्श+ण्वुल्।) दंशः। इति हारावली। १२३ ॥ (नृपविशेषः। स तु कम्पनादेशाधिपतिः। यथा, राजतरङ्गिण्याम्। १०८।
"दंशकः कम्पनाधीशः प्रष्ठे तत्र सङ्क्रुधि।
विद्रुतो विषघाटायां निपत्य निहतः खशैः ॥")
दंशनकर्त्तरि, त्रि ॥

दंशनं, क्ली, (दशतीव शरीरमिति। दंश+ल्युः।) वर्म्म। (यथा, महाभारते। ३। २६८। १८।
"संनद्धं सर्व्वं रथेन्द्रकल्पा
महान्ति चारूणि च दंशनानि ॥"
दन्श+भावे ल्युट्।) दन्तादिना खण्डनम्। इति हेमचन्द्रः ॥ कामडान छलकुटान इति भाषा। (यथा, महाभारते। ८। ८३। ३४।
"दंशनचाहिभिः कृष्णैर्दीप्तैश्च चतुर्वेक्षणि ॥")

दंशभीरुः, पुं स्त्री, (दंशात् वनमक्षिकातः भीरुः भयशीलः।) महिषः। इति त्रिकाण्डशेषः ॥

दंशमूलः, पुं, (दंशवद्दुष्टं मूलमस्य।) शिग्रुः। इति राजनिर्घण्टः ॥ (गुणादयोऽस्य शिग्रुशब्दे ज्ञातव्याः ॥)

दंशितः, त्रि, (दंशो वर्म्म सञ्जातोऽस्य परिहितत्वादिति। दंश+तारकादित्वात् इतच्।) वर्म्मितः। (यथा, महाभारते। २। २९। २।
"महता बलचक्रेण परराष्ट्रावमर्द्दिना।
हस्त्यश्वरथपूर्णेन दंशितेन प्रतापवान् ॥"
दंश्यते इति। दन्श+णिच्+भावे क्तः।) दष्टः। इति हेमचन्द्रः ॥ (भाषमाणः। यथा, महाभारते। ४। ४०। २।
"वारणा यत्र सौवर्णाः पृष्ठे भासन्ति दंशिताः।
सुपार्श्वं सुग्रहञ्चैव कस्यैतद्धनुरुत्तमम् ॥"
"दंशिता भासमानाः।" इति नीलकण्ठः ॥)

दंशी, स्त्री, (क्षुद्रो दंशः। स्वल्पार्थे ङीष्। यद्वा, दशतीति। दंश+अच्। गौरादित्वात् ङीष्।) क्षुद्रदंशः। इत्यमरः। २। ५। २७। छोटडाँश इति भाषा ॥

दंष्ट्रा, स्त्री, (दश्यतेऽनयेति। दन्श+"दाम्नीशसेति।" ३। २। १८२। इति करणे ष्ट्रन्। यद्वा, "सर्व्वधातुभ्यष्ट्रन्।" उणां ४। १५८। इति ष्ट्रन्। गौरादिपाठे पितामहीशब्दस्य पाठात् [illegible]

त्वक्पत्रं, क्ली, (त्वगिव पत्राण्यस्य ।) गुड़त्वक् । इत्यमरः ।२।४।१३४॥ तेजपत्रम् । इति केचित् । इति भरतः ॥ तत्पर्य्यायः । उत्कटम् २ भृङ्गम् ३ त्वचम् ४ चोचम् ५ वराङ्गकम् ६ । इत्यमरः ।२। ४ । १३४ ॥ (यथा, महाभारते ।१२।१७०।१८।
"चन्दनागुरुमुख्यानि त्वक्पत्राणां वनानि च ॥"
यथा, सुश्रुते । १ । ४४ ।
"रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥")

त्वक्पत्री, स्त्री, (त्वक्पत्र+गौरादित्वात् ङीष् ।) हिङ्गुपत्री । तत्पर्य्यायः । कारवी २ पृथ्वी ३ वाष्पीका ४ कवरी ५ पृथुः ६ । इत्यमरः । २ । ९ । ४० ॥ तनुपत्री ७ । इति भरतः ॥

त्वक्पुष्पं, क्ली, (त्वचश्चर्म्मणः पुष्पमिव ।) रोमाञ्चः । इति त्रिकाण्डशेषः । किलासम् । इति हेमचन्द्रः । ३ । १३१ ॥

त्वक्पुष्पिका, स्त्री, (त्वक्पुष्पी+स्वार्थे कन् पूर्व्वह्रस्वः ।) किलासम् । इति त्रिकाण्डशेषः ॥ छुली इति भाषा ॥

त्वक्पुष्पी, स्त्री, (त्वक्पुष्प+गौरादित्वात् ङीष् ।) किलासम् । इति जटाधरः ॥

त्वक्ष, त्वचोग्रहे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) त्वचो ग्राहश्चर्म्मणो ग्रहणम् । त्वक्ष त्वचने इति प्राञ्चः । त्वचनं संवरणमिति रमानाथः । त्वक्षति कायं वर्म्मणा भटः । इति दुर्गादासः ॥

त्वक्ष, ऊ कार्श्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-वेट् ।) ऊ, त्वक्षिष्यति त्वक्ष्यति । कार्श्यं तनूकरणम् । त्वक्षति काष्ठं तक्षा । इति दुर्गादासः ॥

त्वक्सारः, पुं, (त्वचि सारो यस्य ।) वंशः । इत्यमरः । २ । ४ । १६० ॥ (यथा, मनुः ।१०।३७ ।
"पञ्चालात् पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ॥"
वंशस्य त्वगपि । बेँचाड़ि इति भाषा ॥ यथा, सुश्रुते । १ । ८ ।
"अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय इति ॥") गुड़त्वक् । इति शब्दचन्द्रिका ॥ शोणरुचः । रन्ध्रवंशः । इति राजनिर्घण्टः ॥ (तजसारँश इति भाषा ॥ यथा, माघः । ४ । ६१ ।
"त्वक्साररन्ध्रपरिपूरणलब्धगीतिरस्मिन्नसौ मृदितपक्ष्मलरल्लकाङ्गः ॥")

त्वक्सारभेदिनी, स्त्री, (त्वचः सारं भिनत्तीति । भिद्+णिनिः+ङीप् ।) क्षुद्रचञ्चुवृक्षः । इति राजनिर्घण्टः ॥

त्वक्सारा, स्त्री, (त्वक्सारो वंश उत्पत्तिकारणत्वेनास्त्यस्याः अच् ततष्टाप् ।) वंशरोचना । इति राजनिर्घण्टः ॥ (वंशरोचनाशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

त्वक्सुगन्धः, पुं, (त्वचि सुगन्धः सद्गन्धो यस्य ।) नारङ्गः । इति भावप्रकाशः ॥

त्वक्सुगन्धा, स्त्री, (त्वचि सुगन्धो यस्याः ।) एलवालुकनामगन्धद्रव्यम् । इति जटाधरः ॥

त्वग, इ कम्पे । गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-गतौ सकं-सेट् ॥)

त्वगङ्कुरः, पुं, (त्वचश्चर्म्मणः अङ्कुर इव ।) रोमाञ्चः । इति त्रिकाण्डशेषः ॥

त्वगाक्षीरी, स्त्री, (त्वक्क्षीरी । पृषोदरादित्वात् साधुः ।) तुगाक्षीरी । वंशलोचना । इति जटाधरः ॥

त्वग्गन्धः, पुं, (त्वचि गन्धो यस्य ।) नागरङ्गः । इति राजनिर्घण्टः ॥

त्वग्जं, क्ली, (त्वचः जायते इति । जन+डः ।) रोम । रुधिरम् । इति राजनिर्घण्टः ॥

त्वग्दोषः, पुं, (त्वचो दोषो दूषणं यस्मात् ।) कोठरोगः । इति राजनिर्घण्टः ॥ त्वग्जातरोगः । तस्यौषधं यथा,—
"मन्दोष्णलोध्रगौराम्रपूर्वस्तु कनकस्य च ।
तैलोद्वर्त्तितदेहस्य हरेद्गौरप्रसारिकाम् ॥
त्वग्दोषश्चैव संकाश्च चर्म्मदोषश्च नश्यति ॥"
इति गारुडे १८४ अध्यायः ॥
स तु महारोगः । यथा, "महारोगिणः पापरोगाक्रान्ततमरोगवतः । ते च उन्मादत्वग्दोषौ राजयक्ष्मा श्वासो मधुमेहो भगन्दरः उदरोऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः ।"
इति शुद्धितत्त्वम् ॥

त्वग्दोषापहा, स्त्री, (त्वग्दोषं रोगविशेषं अपहन्तीति । हन+डः ।) वाकुची । इति राजनिर्घण्टः ॥

त्वग्दोषारिः, पुं, (त्वग्दोषस्य रोगविशेषस्य अरिः शत्रुः । तन्नाशकत्वात् तथात्वम् ।) हस्तिकन्दः । इति राजनिर्घण्टः ॥

त्वच, श वृत्याम् । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) चकारयुक्तः । दन्त्यवर्गाद्यादिः । श, त्वचती त्वचन्ती । वृतिः संवरणम् । त्वचति कवचेन देहं वीरः । इति दुर्गादासः ॥

त्वचं, क्ली, (प्रशस्ता त्वगस्त्यस्येति । अर्श आदित्वात् अच् ।) वृक्षविशेषः । दारचिनी इति भाषा ॥ (यथा, सुश्रुते कल्पस्थाने १ अध्याये ।
"सोमवल्कोऽम्लता श्वेता पद्मं कालीयकं त्वचम् ॥")
तत्पर्य्यायः । त्वक् २ वल्कलम् ३ भृङ्गम् ४ वराङ्गम् ५ मुखशोधनम् ६ शकलम् ७ सिंहलम् ८ वन्यम् ९ सुरसम् १० कामवल्लभम् ११ उत्कटम् १२ बहुगन्धम् १३ विष्णुलम् १४ वनप्रियम् १५ नटपर्णम् १६ गन्धवल्कम् १७ वरम् १८ शीतम् १९ । अस्य गुणाः । कटुत्वम् । शीतलत्वम् । कफकासविनाशित्वम् । शुक्रामशमनत्वम् । कण्ठशुद्धिकारत्वम् । लघुत्वम् । इति राजनिर्घण्टः ॥ वल्कलम् । चर्म्म । (यथा, हरिवंशे । १७७ । १२६ ।
"श्रीवत्साङ्कोऽरविन्दाक्ष ऊर्द्धरोमा मृदुत्वचः ॥"
कञ्चुकः । खोलस् इति भाषा ॥ यथा, महाभारते । १२ । २४९ । ११ ।
"विमुक्तः सर्व्वपापेभ्यो मुक्तत्वच इवोरगः ॥")
गुड़त्वक् । इति धरणिः ॥

त्वचा, स्त्री, (त्वच्+भावे टाप् । यद्वा, त्वचति संवृणोति सर्व्वशरीरमिति अच् ततष्टाप् ।) त्वक् । इति शब्दरत्नावली ॥

त्वचेपत्रं, क्ली, (त्वचा त्वक् पत्रमिव यस्य ।) त्वक्पत्रम् । इति शब्दरत्नावली ॥

त्वचिष्ठः, त्रि, (अतिशयेन त्वग्वान् । त्वग्वत्+इष्ठन् । "विन्मतोर्लुक् ।" ५ । ३ । ६४ । इति मतुपो लुक् ।) त्वचीयान् । अतिशयत्वग्विशिष्टः । इति व्याकरणम् ॥

त्वचिसारः, पुं, (त्वचि सारो यस्य । "हलदन्तात् सप्तम्याः संज्ञायाम् ।" ६ । ३ । ९ । इति सप्तम्या अलुक् ।) वंशः । इत्यमरः । २ । ४ । १६० ॥

त्वचिसुगन्धा, स्त्री, (त्वचि सुगन्धो यस्याः । सप्तम्या अलुक् ।) चुक्रिका । इति हारावली ।९७॥

त्वत्, त्रि, (तनोतीति । तन+"तनोतेरनश्च वः ।" उणां २ । ६३ । इति चकारात् क्विप् तुक् अनश्च वः ।) भिन्नः । इति जटाधरः ॥ (युष्मद्शब्दस्य पञ्चम्येकवचनस्य रूपम् ।) भवतः । इति व्याकरणम् ॥ तोमा हइते इति भाषा ॥

त्वञ्च, उ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । क्त्वावेट् ।) चकारयुक्तादिः । उ, त्वञ्चित्वा त्वक्त्वा । इतिर्गतिः । इति दुर्गादासः ॥

त्वञ्च, उ ध सङ्कोचे । इति कविकल्पद्रुमः ॥ (रुधां-परं-सकं-सेट् । क्त्वावेट् ॥)

त्वदीयं, त्रि, (तव इदम् । युष्मद्+छः । "प्रत्ययोत्तरपदयोश्च ।" ७ । २ । ९८ । इति मपर्य्यन्तस्य त्वादेशः ।) भवदीयम् । इति व्याकरणम् ॥ (यथा, रघुः । ३ । ५० ।
"अतोऽयमश्वः कपिलानुकारिणा
पितुस्त्वदीयस्य मयापहारितः ॥")

त्वर, ञि ष म ङ त्वरे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) ञि, त्वरितः तूर्णोऽस्ति । वा रुषामत्वरसंघुषास्वनिभ्यो निष्ठायां वेमत्वेऽपि वेदेवृषारणभेदार्थमेतद्ग्रहणमन्यमन्यन्ते । ष, त्वरा । म, त्वरयति । ङ, त्वरते । त्वर इव शीघ्रमश्वागमन् । नाधुनेतुमयशाः स त्वरे । इति दुर्गादासः ॥

त्वरणं, क्ली, (त्वर+भावे ल्युट् ।) त्वरा । इति व्याकरणम् ॥ (त्वरते शीघ्रं गच्छतीति । त्वर+ल्युः । द्रुतगामिनि, त्रि । यथा, अथर्व्ववेदे ।११। ८ । २८ ।
"आरोपीश्च वाक्योपीश्च त्वरणाः क्षपणाश्च याः ॥")

त्वरा, स्त्री, (त्वरणमिति । त्वर+"घटादयः षितः ।" इति अङ् । ततः स्त्रीलिङ्गत्वात् टाप् ।) वेगः । तत्पर्य्यायः । सम्भ्रमः २ । इत्यमरः ।३। २ । २६ ॥ आवेगः ३ रभसः ४ तूर्णिः ५ संवेगः ६ । इति हेमचन्द्रः ।२।२३६॥ (यथा, महाभारते । ३ । २९९ । २७ ।
"असत्यत्वं मया पूर्व्वं निर्जितो जीवितप्रियः ।
सत्तोऽन्यातिरिति ज्ञात्वा मा त्वरा मरणे पुनः ॥")

त्रैपुरः, पुं, ( त्रिपुर एव । स्वार्थे अण् । ) त्रिपुरदेशः । तत्पर्य्यायः । डाहलः २ चैद्यः ३ चेदिः ४ । इति हेमचन्द्रः । ४ । २२ ॥ ( देशोऽयं कामरूपस्य सीमाप्रदेशः । यथा, कामाख्यातन्त्रे ।
"कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतम् ।
कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि ॥"
कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतं यावत् ॥
त्रिपुरस्य राजा । यथा, महाभारते ।२।३१।५८।
"माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ।
त्रैपुरं स्ववशे कृत्वा राजानममितौजसम् ।
निजग्राह महाबाहुस्तरसा पौरवेश्वरम् ॥"
तद्देशवासिनि, पुंभूम्नि । यथा, मात्स्ये । ११३ । ५३ ।
"सोशला: कोसलाश्चैव त्रैपुरा वैदिशास्तथा ॥"
त्रिपुराधिष्ठितासुरभेदे । यथा, हरिवंशे । १२६ । ५४ ।
"येनोद्धृतास्त्रैपुरा मायिनो वं
दग्धा घोरेण वितथान्ताः शरेण ॥")
त्रैलोक्यं, क्ली, ( त्रिलोकी एव । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् । ) त्रिलोकी । यथा, मार्कण्डेये ।
"त्रैलोक्यमेतदखिलं रिपुनाशनेन
त्रातं त्वया समरमूर्द्धनि तेऽपि हत्वा ॥"
त्रैलोक्यविजया, स्त्री, (त्रैलोक्यस्य विजयो यस्याः । एतस्याः सेवनेन हि त्रैलोक्यमधीनमिव प्रतिभातीति ज्ञानात् तथात्वम् । ) भङ्गा । इति शब्दचन्द्रिका ॥ भाङ् इति ख्याता ॥
त्रैविद्यः, पुं, ( ऋग्वेदयजुर्व्वेदसामवेदरूपास्तिस्रो विद्या यस्येति त्रिविद्यस्ततः स्वार्थे अण् । यद्वा, तिस्रो विद्या अधीते वेद वा ।"तदधीते तद्वेद ।" ४।२।५९ । इति अण् । ) त्रिवेदज्ञः । त्रिविद्यावेत्ता । यथा । मनुः । १२ । १११ ।
"त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्व्वे परिषत् स्याद्दशावरा ॥"
(व्रतविशेषे, क्ली । यथा, मनुः । २ । २८ ।
"स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥"
"त्रैविद्याख्येन च व्रतेन ।" इति तट्टीकायां कुल्लूकभट्टः ॥ वेदत्रयप्रतिपाद्ये, त्रि । यथा, भागवते । ६ । २ । २४ ।
"धर्म्मं भागवतं शुद्धं त्रैवेद्यञ्च गुणाश्रयम् ॥"
"त्रैवेद्यं वेदत्रयप्रतिपाद्यं गुणाश्रयं यमदूतानां धर्म्मम् ।" इति तट्टीकायां स्वामी ॥ )
त्रोटकी, स्त्री, रागिणीविशेषः । इति हलायुधः ॥
त्रोटिः, स्त्री, ( त्रोट्यते भिद्यतेऽनयेति । त्रोटि+ "अच इः ।" उणां । ४ । १३८ । इति इः । ) चञ्चुः । कट्फलम् । पक्षी । मीनभेदः । इति मेदिनी । टे, १८ ॥
त्रोटिहस्तः, पुं, ( त्रोटिश्चञ्चुर्हस्त इव ग्रहणसाधनं यस्य । ) पक्षी । इति शब्दचन्द्रिका ॥
त्रोटी, स्त्री, (त्रोटि+कृदिकारादिति वा ङीष् ।) त्रोटिः । इति शब्दरत्नावली ॥

त्रोत्रं, क्ली, ( त्रायते शिक्ष्यते नियन्त्यतेऽनेनेति । त्रै पालने+"अशित्रादिभ्य इत्रोत्रौ ।" उणां । ४ । १७२ । इति उत्रः । ) गवादिताड़नदण्डः । पाँचनी इति ख्यातः । तत्पर्य्यायः । प्राजनम् २ तोदनम् ३ प्रवयणम् ४ । गजस्य तोदनदण्डः । तत्पर्य्यायः । वैणुकम् २ वेणुकम् ३ इत्यमरभरतौ ॥ अस्त्रम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ आरूपक्रिया । व्याधिभेदः । इति संक्षिप्तसारे उणादिवृत्तिः ॥
त्रौक, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् । ) चतुर्द्दशस्वरी । रेफमध्यः । ऋ, अतुत्रौकत् । ङ, त्रौकते । इति दुर्गादासः ॥
त्र्यक्षः, पुं, ( त्रीणि अक्षीणि नेत्राणि यस्य । ततः समासान्तषप्रत्ययः । ) शिवः । इति त्रिकाण्डशेषः ॥ ( यथा, महाभारते । ३ । १०६ । ११ ।
"आससाद महात्मानं त्र्यक्षं त्रिपुरमर्द्दनम् ॥"
दैत्यविशेषः । यथा, भागवते । ७ । २ । ४ ।
"भो भो दानवदैतेया द्विमूर्द्धंस्त्र्यक्ष ! शम्बर ! ।
शतबाहो ! हयग्रीव ! नमुचे ! पाक ! इल्वल ! ॥"
नेत्रत्रयविशिष्टे, त्रि । यथा, महाभारते । २ । ४३ । १ ।
"चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः ॥")
त्र्यक्षरः, पुं, ( त्रीणि अक्षराणि यत्र । ) घटकः । इति त्रिकाण्डशेषः ॥ ( त्रीणि अकारोकारमकारात्मकानि अक्षराणि यत्र । प्रणवादौ, त्रि । यथा, मनुः । ११ । २६६ ।
"आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥"
छन्दोभेदे, स्त्री । यथा, वाजसनेयसंहितायाम् । ९ । ३१ ।
"विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जेषम् ॥"
"विष्णुस्त्र्यक्षरेणाक्षरत्रयात्मकेन छन्दसा तान् तादृशान् मनुष्यानुज्जेषमधिकं जयेयम् ।" इति वेददीपे महीधरः ॥ )
त्र्यङ्गटं, क्ली, ( त्रिभिरङ्गैरट्यते गम्यते इति । त्र्यङ्ग+अट्+अप् । शकन्ध्वादित्वादलोपः । ) शिक्यभेदः । धौताञ्जनी । इति मेदिनी । टे,४४॥
त्र्यङ्गटः, पुं, (त्रिभिरङ्गैरटतीति । अट्+अच् ।) धौताञ्जनी । शिक्यभेदः । ईश्वरः । इति हेमचन्द्रः ॥
त्र्यञ्जनं, क्ली, ( त्रयाणां अञ्जनानां समाहारः । ) अञ्जनत्रयम् । यथा, कालाञ्जनं पुष्पाञ्जनं रसाञ्जनम् । इति राजनिर्घण्टः ॥
त्र्यध्वगा, स्त्री, ( त्रिषु अध्वसु मार्गेषु गच्छतीति । गम+डः । ) गङ्गा । इति त्रिकाण्डशेषः ॥
त्र्यम्बकः, पुं, ( त्रीणि चन्द्रसूर्य्याग्निरूपाणि अम्बकानि नेत्राणि यस्य । शिवः । इत्यमरः । १ । १ । ३५ ॥ ( यथा, ऋग्वेदे । ७ । ५९ । १२ ।
"त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ॥"
"त्रयाणां ब्रह्मविष्णुरुद्राणामम्बकः पिता ।"इति ऋग्वेदभाष्ये सायनः । ) एकादशरुद्राणामन्यतमः । यथा, मात्स्ये । ५ । २९—३० ।
"अजैकपादहिर्ब्रध्नो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादशगणेश्वराः ॥")
शिवांशचन्द्रशेखरनामकपौष्यराजपुत्रः । यथा,
"एवं तिसृणामम्बानां गर्भे जातो यतो हरः ।
अतस्त्र्यम्बकनामाभूत् प्रथितो लोकदेवयोः ॥
स राजपुत्रः कौमारावस्थां प्राप यदा तदा ।
सर्व्वशास्त्रार्थतत्त्वज्ञो जिष्णोस्तुल्यो बभूव ह ॥
बले वीर्य्ये प्रहरणे शास्त्रे शीले च तत्समः ।
नान्योऽभून्नृपशार्दूल ! नो वा भूमौ भविष्यति ॥
अभिषिच्याथ तं राजा कुमारं बलवत्तरम् ।
दशपञ्चैकवर्षीयं सर्व्वराजगुणैर्युतम् ॥
तिसृभिः सह भार्य्याभिर्व्वनं पौष्यो विवेश ह ।
वृद्धोचितक्रियां कर्त्तुं राजा परमधार्म्मिकः ॥
गते पितरि राजा स वनवासं महाबलः ।
सर्व्वां क्षितिं वशे चक्रेऽमात्यैः स चन्द्रशेखरः ॥
सार्व्वभौमो नृपो भूत्वा राजभिः परिषेवितः ।
अमरैरिव देवेन्द्रो विजहार श्रिया युतः ॥
एवं पौष्यसुतो भूत्वा त्र्यम्बकः प्राप्य निर्वृतिम् ।
ब्रह्मावर्त्ताह्वये रम्ये करवीराह्वये पुरे ॥
दृषद्वतीनदीतीरे राजा भूत्वा मुमोद ह ॥"
इति कालिकापुराणे ४६ अध्यायः ॥*॥
अन्यत् चन्द्रशेखरशब्दे द्रष्टव्यम् ॥
त्र्यम्बकसखः, पुं, ( त्र्यम्बकस्य महादेवस्य सखा बन्धुः । "राजाहःसखिभ्यष्टच् ।" ५ । ४ । ९१ । इति टच् । ) कुबेरः । इत्यमरः । १ । १ । ७१ ॥
त्र्यम्बका, स्त्री, ( त्रीणि चन्द्रसूर्य्याग्निरूपाणि अम्बकानि नेत्राणि यस्याः । ) दुर्गा । यथा,—
"सोमसूर्य्यानलास्त्रीणि यस्या नेत्राणि अम्बिका ।
तेन सा त्र्यम्बका देवी मुनिभिः परिकीर्त्तिता ॥")
इति देवीपुराणे ४५ अध्यायः ॥
त्र्यहस्पर्शः, पुं, ( त्र्यहं चान्द्रदिनत्रयं स्पृशतीति । स्पृश+पचाद्यच् । ) त्रिदिनस्पृक् । तिथित्रयस्पर्शयुक्तमहः । इति ज्योतिषम् ॥
त्र्यहस्पृशं, क्ली, ( त्र्यहं स्पृशतीति । स्पृश+ "इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः । ) त्र्यहस्पर्शः । तथा च वशिष्ठः ।
"एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥
फलमिति वैदिककर्म्मपरम् ॥
अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते
मासि ।
चक्रिणि सुप्ते कुर्य्यान्नो माङ्गल्यं विवाहञ्च ॥
इति भीमपराक्रमः ॥
दिनपाते दिनक्षये ।
त्र्यहस्पृशं नाम यदेतदुक्तं
तत्र प्रयत्नः कृतिभिर्व्विधेयः ॥
विवाहयात्राशुभपुष्टिकर्म्म
सर्व्वं न कार्य्यं त्रिदिनस्पृशे तु ॥"
इति ज्योतिस्तत्त्वम् ॥

"द्रव्यत्वं तमसोऽपि शोभनधियां मीमांसकानां
मतम् ।"
छायायास्तमसश्चापि सम्बन्धातगुणकर्म्मणोः ।
द्रव्यत्वं केचिदिच्छन्ति मीमांसकमताश्रयाः ॥"
इति वैयाकरणवल्लभनुतवादार्थदर्पणे प्रथम-
श्लोके ॥ )

पूर्व्वमीमांसासूत्रकर्त्ता जैमिनिः । वृत्तिकर्त्ता कुमारिलभट्टः । भाष्यकर्त्ता शवरस्वामी । प्रभाकरः कुमारिलभट्टस्य छात्रः । स एव गुरुत्वेन भण्यते । तन्मतं गुरुमतम् तच्छिष्याः प्राभाकराः । अतएव सार्त्तभट्टाचार्य्येण प्राभाकरैरभिहितमित्युक्तम् । उत्तरमीमांसासूत्रकर्त्ता वेदव्यासः । तस्य भाष्यकर्त्ता शङ्कराचार्य्यः । स च अद्वैतवादी । रामानुजः विशिष्टाद्वैतवादी । माध्वः द्वैतवादी च ॥ ( यथा, भक्तिरसामृतसिन्धौ । १ । १ । ३ ।

"मीमांसको वड़वाग्नेः कठिनामपि
कुण्ठयन्नसौ जिह्वाम् ।")

मीमांसा, स्त्री, ( मानविचारे + "मान् वधदान् शान्भ्यो दीर्घश्चाभ्यासस्य ।"३।१।६। इति सन् । अः टाप् । अभ्यासस्येकारस्य दीर्घश्च । ) षड्दर्शनान्तर्गतदर्शनशास्त्रविशेषः । तत्पर्य्यायः । विचारणा २ । इति हेमचन्द्रः ।२।१६५॥ अस्या अध्याया विंशतिः । तत्र पूर्व्वमीमांसा द्वादशाध्यायात्मिका जैमिनिप्रणीता यज्ञादिकर्म्मकाण्डनिरूपिका । अस्या अन्तर्गतानि लोकव्यवहारनियमार्थं मनुयाज्ञवल्क्यादिभिः बहूनि धर्म्मशास्त्राणि कृतानि । तत्रोत्तरमीमांसा चतुरध्यायात्मिका वेदव्यासप्रणीता ब्रह्मनिरूपिका । अस्या नाम वेदान्तः । अपराध्यायचतुष्टयं सङ्कर्षणप्रणीतं उपासनाकाण्डं षड्दर्शनवहिर्भूतम् ॥ * ॥ प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमात् द्वादशानामध्यायानां विषयाः । प्रथमेऽध्याये विध्यर्थवादादिरूपं धर्म्मे प्रमाणं निरूपितम् । १ । द्वितीये यागदानादिकर्म्मभेदः । २ । तृतीये प्रयाजादीनां दर्शपूर्णमासार्थकत्वेन तच्छेषत्वम् । ३ । चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्ता अनुष्ठानं न तु क्रत्वर्थत्वप्रयुक्तेत्येवमादयः । ४ । पञ्चमे क्रमनियतिविधेयत्वादयः । ५ । षष्ठे कर्त्तुरधिकारो नान्धादेरित्यादयः । ६ । सप्तमे समानमितरच्छ्येनेन इत्यादि प्रत्यक्षवचनेनाग्निहोत्रादिनाम्नानुमितवचनेन च सामान्यतोऽतिदेशः । ७ । अष्टमे सौर्य्यं चरुं निर्व्वपेदित्यत्र निर्व्वापस्तहितेन देवतानिर्द्देशः एकदेवतत्त्वमौषधद्रव्यकत्वमित्यादिना लिङ्गेनाग्नेयपुरोडाशेतिकर्त्तव्यतानान्यस्येत्येवमादिविशेषातिदेशः । ८ । नवमे प्रकृतावग्नये जुष्टं निर्व्वपामीति पठिते मन्त्रे विकृतौ सौर्य्यचरावग्निपदपरित्यागेन सूर्य्यपदप्रक्षेपेण सूर्य्याय जुष्टं निर्व्वपामीत्येवमादिरूहः । ९ । दशमे कृष्णलेषु चोदकप्राप्तस्यावघातस्य वितुषीकरणासम्भवेन लोप इत्येवमादिर्व्बाधः । १० । एकादशे बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इत्यादि तन्त्रम् । ११ । द्वादशे प्रधानस्य पशोरुपकाराय अनुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽप्युपकार इत्यादिप्रसङ्गः । १२ ॥ ( एतदध्यायप्रतिपाद्यार्थानां विवरणं यथा,—

'प्रथमाध्यायस्य प्रथमे पादे विधिरूपं मानमीरितम् । द्वितीयेऽर्थवादरूपम् अर्थवादो मन्त्रस्याप्युपलक्षकः । तृतीये स्मृतिरूपम् । स्मृतिराचारमप्युपलक्षयति । चतुर्थे उद्भिच्चित्रादिनामरूपम् । द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेवापूर्व्वबोधकम् । अपूर्व्वसद्भाव इत्यादिकः कर्म्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः । द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्म्मभेदः । तृतीये रथन्तरादीनां कर्म्मभेदप्रामाण्यापवादः । चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः ।

तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता । द्वितीये लिङ्गम् । तृतीये वाक्यप्रकरणादि । चतुर्थे निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसद्भावः । पञ्चमे प्रतिपत्तिकर्म्माणि । षष्ठेऽनारभ्याधीतानि । सप्तमे बहुप्रधानोपकारकप्रयाजादीनि । अष्टमे याजमानानि ।

चतुर्थाध्यायस्य प्रथमे पादे प्रधानभूतामिक्षादध्यानयनस्य प्रयोजिकेत्यादि प्रधानप्रयोक्तृत्वं विचारितम् । द्वितीये त्वप्रधानं वत्सापकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम् । तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता । चतुर्थे राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता ।

पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः क्रमो निरूपितः । द्वितीये वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्म्मसमापनमित्यादिक्रमविशेषः । तृतीये पञ्चप्रयाजादीनामावर्त्तनेनैकादशत्वमित्यादिर्वृद्धिः । अदाभ्यग्रहचित्रिण्योरनावृत्तिरित्यादि वृद्ध्यभावः । चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्व्वलभावः ।

षष्ठाध्यायस्य प्रथमे पादे कर्म्माधिकारः । कर्त्तुरस्त्यन्धादेर्नास्ति स्त्रिया अस्ति । योऽस्ति स च पत्या सहेत्येवमादिनाधिकारी निरूपितः । द्वितीये सत्राधिकारिणां प्रत्येकं कृतस्नं फलम् । दर्शपौर्णमासयोः कर्त्तव्यनियमः काम्यकर्म्मसमापनीयमित्येवमाद्योऽधिकारिधर्म्मा उक्ताः । तृतीये द्रव्यस्य प्रतिनिधिरुक्तः । शूद्रादीनामग्न्यादीनामधिकारिणाञ्च स नास्तीत्यादिनिरूपणम् । चतुर्थे पदार्थलोपनं विचारितम् । अवत्तनाशे सत्याज्येन यजेत् । इड़ाद्यर्धनाशे सति शेषान्नग्राह्यमित्यादिकम् । पञ्चमे कालापराधेन चन्द्रोदये सत्यभ्युदयेष्टिः प्रायश्चित्तम् । ज्योतिष्टोमस्यैकादयो दीक्षाः । द्वादशाहस्य द्वादशदीक्षा इत्यादि निरूपितम् । षष्ठे सत्राधिकारिणस्तुल्यकल्पा एव सत्रं विप्रस्यैवेत्येवमादिकं चिन्तितम् । सप्तमे पित्रादिकं न देयम् । महाभूमिर्न देयेत्येवमादिर्देयविचारः । अष्टमे लौकिकाग्नावुपनयनहोमः । स्थपतीष्टिस्तथैवेत्येवमाद्यग्निविचारः कृतः ।

सप्तमाध्यायस्य प्रथमे पादे समानमितरच्छ्येनेनेत्यादिप्रत्यक्षवचनातिदेशः । द्वितीये पूर्व्वोक्तातिदेशस्य शेषो विचारितः । तृतीयेऽग्निहोत्रनाम्नातिदेशः । चतुर्थे निर्व्वापौषधद्रव्यादिलिङ्गातिदेशः ।

अष्टमाध्यायस्य प्रथमे पादे स्पष्टेन लिङ्गेनातिदेशविशेषः । तद्यथा सौर्य्यचरावतिदेशकानि निर्व्वापस्तहितेन देवतानिर्द्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादीनि स्पष्टान्याग्नेयलिङ्गानि । द्वितीये त्वस्पष्टैर्लिङ्गैरतिदेशः । तद्यथा वाजिने हविःसामान्येन लिङ्गेन पयोविध्यन्तोऽतिदिश्यते तत्र लिङ्गमस्पष्टम् । शीघ्रं तद्बुद्ध्यनुत्पादनात् । तृतीये प्रबलेन लिङ्गेनातिदेशः । तद्यथा । आभिचारिकेष्टावाग्नावैष्णवसारस्वतवार्हस्पत्येषु हविःषु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदेवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः । प्रबलञ्च द्विदेवत्यत्वम् । शब्दोच्चारणमात्रेण सहसा प्रतिभासात् । क्रमस्तु विलम्बितप्रतीत्या दुर्व्वलः । चतुर्थे दर्व्विहोमेष्वतिदेशोऽपोद्यते ।

नवमाध्यायस्य प्रथमे पादे उपोद्घातपूर्व्वकमूहविचारप्रारम्भः । तत्र प्रयाजादयो धर्म्मा अपूर्व्वप्रयुक्ताः । अवघातमन्त्रादिष्वविवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरूपोपोद्घातः । सवितृश्विपूषशब्दानां विकृतिषु नास्त्यूहः । अग्निशब्दस्यास्त्यूह इत्यादि रूहविचारारम्भः । द्वितीये सपरिकरः सामोहः । तृतीये मन्त्रोहः । चतुर्थे मन्त्रोहप्रसङ्गापतितो विचारः ।

दशमाध्यायस्य प्रथमे पादे बाधहेतुर्द्वारलोपो निरूपितः । तद्यथा स्वयं कृता वेदिर्भवतीत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः । कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः । द्वितीये संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः । तृतीये बाधकारणं कार्य्यैकत्वम् । तद्यथा प्रकृतौ गवाश्वादिदक्षिणायाः ऋत्विक्परिक्रयः कार्य्यम् । तथा विकृतिरूपे भूताग्निकाण्डे धेनुरूपाया दक्षिणायास्तदेव कार्य्यम् । ततो धेन्वा गवाश्वादिदक्षिणाविकृतौ चोदकप्राप्ता बाध्यते । चतुर्थे नक्षत्रेष्टिविहिता उपहोमाश्चोदकप्राप्तैर्नारिष्टहोमैः सह समुच्चीयन्ते इत्यादिः समुच्चयः । पञ्चमे षोड़शिग्रहः प्रकृतिगामी । स चाग्रयण-

पात्रादेव गृहीतव्य इत्यादिबाधप्रसङ्गागतो ग्रहादिविचारः । षष्ठे सामत्वे गेयमित्यादि बाधप्रसङ्गागतः सामविचारः । सप्तमे पञ्च हिंसु चर्विभेदः । गृहमेधीयमपूर्व्वकर्म्मेत्यादि बाधप्रसङ्गागतः प्रकीर्णविचारः । अष्टमेनानु याजैर्व्विनिपद्युदासो न सोम इत्यर्थवादो नाति रात्र इति प्रतिषेध इत्यादिबाधोपयुक्तो नञर्थ विचारः ।

एकादशाध्यायस्य प्रथमे पादे तन्त्रस्योपोद्घातो वर्णितः । द्वितीये तन्त्रावापौ सङ्क्षेपेणोक्तौ । तृतीये तन्त्रमुदाहरणबाहुल्येन प्रपञ्चितम् । चतुर्थे तथैवावापः प्रपञ्चितः ।

द्वादशाध्यायस्य प्रथमे पादे पशुधर्म्माणां पशु पुरोडाशे प्रसङ्गः । सौमिकवेदरूत्तरकालीन कर्म्मसु प्रसङ्ग इत्यादि विचारः । द्वितीय सवनीयपशोस्तन्त्रित्वम् । न तु सवनीयपुरोडाशानाम् । विकृतिस्तन्त्रिणी न प्रकृतिः । अन्वारम्भणीया विकृतिष्वपि स्यात् । न तु प्रकृतावित्यादिविचारः । तृतीये तन्त्रासम्भवे समुच्चयः । आधारगतानामृजुत्वसन्ततत्वादीनां समुच्चय इत्यादिकं प्राधान्येन । यवव्रीह्योर्व्विकल्प इत्यादिकं समुच्चयापवादत्वेनेत्युभयं चिन्तितम् । चतुर्थे चैन्द्राबार्हस्पत्य याज्यानुवाक्ययुगलयोर्व्विकल्प इत्यादिकं प्राधान्येन । याज्यानुवाक्ययोः समुच्चय इत्यादिकं विकल्पापवादत्वेनेत्युभयं चिन्तितम् । तदेवं द्वादशाध्यायगतेषु षष्टिसंख्यकेषु पादेषु प्रतिपाद्या अर्थाः सङ्गृहीताः । इत्यधिकरणमाला । उत्तरमीमांसाध्यायपादप्रतिपाद्यास्तु यथा,—

"शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्व्विधाः ।
समन्वयाविरोधौ द्वौ साधनञ्च फलन्तथा ॥
समन्वये स्पष्टलिङ्गमस्पष्टत्वेऽप्युपास्यगम् ।
ज्ञेयगं पञ्चमाच्चैव चिन्त्यं पादेष्वनुक्रमात् ॥
द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता ।
भूतभोक्तृश्रुते लिङ्गश्रुतेरप्यविरुद्धता ॥
तृतीये विरतिस्तत्त्वम्पदार्थपरिशोधनम् ।
गुणोपसंहृतिर्ज्ञानेबहिरङ्गादि साधनम् ॥
चतुर्थे जीवतो मुक्तिरुत्क्रान्तेर्गतिरुत्तरा ।
ब्रह्मप्राप्तिर्ब्रह्मलोकाविति पादार्थसङ्ग्रहः ॥'

इति व्यासाधिकरणमाला । मीमांसाद्वयमतसङ्ग्रहो यथा,—

अथ मीमांसकम् ।

'मीमांसको द्विधा कर्म्मब्रह्ममीमांसकः स्मृतः ।
वेदान्ती मनुते ब्रह्म कर्म्म भट्टप्रभाकरौ ॥
प्रत्यक्षमनुमानञ्च शब्दञ्चोपमया सह ।
अर्थापत्तिरभावश्च भट्टानां षट्प्रमाणकाः ॥
प्रभाकरमते पञ्चैतान्यभावस्य वर्ज्जनात् ।
अद्वैतवादिनो वेदान्ते प्रमाणन्तु यथातथा ॥
सर्व्वमेतदिदं ब्रह्म वेदान्तेऽद्वैतवादिनाम् ।
आत्मन्येव लयो मुक्तिर्वेदान्तिकमते मता ॥
[illegible] ।
[illegible] द्विजो भट्टा [illegible] ॥

भगवन्नामधेयास्तु द्विधा वेदान्तदर्शने ।
विप्रगेहभुजस्त्यक्तोपवीता ब्रह्मवादिनः ॥
चत्वारो भगवद्भेदाः कुटीचरबहूदकौ ।
हंसः परमहंसश्चाधिको मीषु परः परः ॥"

इति जिनदत्तकृतविवेकविलासः । सर्व्वदर्शनसङ्ग्रहधृतजैमिनिमतसङ्ग्रहो यथा । अथातो धर्म्मजिज्ञासा इति प्रथमाधिकरणसूत्रम् । तत्राधिकरणं पञ्चावयवमाचक्षते परीक्षकाः । अस्मिन् सूत्रे स्वाध्यायोऽध्येतव्य इतिश्रुतिवाक्यमाश्रित्य विषयसंशयपूर्व्वपक्षसिद्धान्तनिर्णयरूपपञ्चाङ्गात्मकाधिकरणेन मीमांसाशास्त्रारम्भस्यावश्यकता प्रदर्शिता । मीमांसा हि वेदविचारशास्त्रं तदारम्भो निष्प्रयोजनः स्वाध्यायोऽध्येतव्य इतिश्रुत्या वेदाध्ययनं विहितं तत्र विश्वजिन्न्यायात् स्वर्गरूपफलमन्तरेणाध्ययनमात्रेणापि सम्भवति न तत्रार्थबोधापेक्षाप्यस्ति असत्याञ्च वेदार्थबोधापेक्षायां तदधीनाया विचारणाया अपि अनावश्यकत्वात् अथवा यागादिकर्म्मावबोधाय स्वाध्यायोऽध्येतव्य तस्य चार्थबोधरूपं दृष्टमेव फलं ततश्च दृष्टार्थत्वेन तस्य वैधत्वाभावात् वेदार्थविचारस्यापि तदेकप्रयोजनस्य वैधत्वं नास्तीति तद्विचारशास्त्रमनारम्भणीयम् । स्वाध्यायाध्ययनानन्तरं विचारशास्त्रेऽध्येतव्यतया स्वीक्रियते वेदमधीत्य स्नायादितिविधिबोधितवेदाध्ययनसमावर्त्तनयोरानन्तर्य्यं बाधितं तस्माद्विचारशास्त्रमारम्भणीयमितिपूर्व्वपक्षसङ्क्षेपः अध्ययनस्य दृष्टफलकत्वेपि अध्येतव्य इत्यत्र तव्यप्रत्ययेन भावनाप्रतिपादनात् अर्थबोधस्य तत्र भाव्यत्वेनान्वयादध्ययनविधेरवघातादिविधिवन्नियमापूर्व्वार्थत्वं । तथाच यथा दर्शपौर्णमासजन्यं परमापूर्व्वमवघातादिजन्यमवान्तरापूर्व्वं कल्पयति तथा समस्तक्रतुजन्यमपूर्व्वमपि क्रतुज्ञानसाधनाध्ययननियमजन्यमपूर्व्वं कल्पयिष्यति । अन्यथा अध्ययनविधेर्वैफल्यं स्यात् । अर्थबोधरूपदृष्टफलस्य सम्भवे विश्वजिन्न्यायात् स्वर्गफलकल्पना इति सिद्धान्तितम् । यथा यागे यवादनंखादिनापि वितुषीकरणसम्भवे अवघातविधिना अवघातो नियम्यते तथा अध्ययनविधिना अध्ययनं नियम्यते । तथाच अध्ययनेन च वेदार्थे परिज्ञाते तत्र संशये तन्निर्णयार्थं विचारशास्त्रमवश्यमपेक्षितमिति विचारशास्त्रमारम्भणीयमेवेति प्रथमाधिकरणनिष्कर्षः एवंरीत्या अधिकरणसहस्रात्मकं कर्म्ममीमांसाशास्त्रं जैमिनिना प्रणीतम् । अस्मिन् शास्त्रे वेदस्यापौरुषेयत्वम् । वर्णानां ककारादीनां नित्यत्वं तत्र सोऽयं क इत्यादिप्रत्यभिज्ञैव प्रमाणं कत्वसामान्याभिधानं एव तदभिव्यञ्जकः । ततश्च वेदस्यापौरुषेयतया निरस्तसमस्तशङ्काकलङ्काङ्कुरत्वेन स्वतः सिद्धं धर्म्मे प्रामाण्यमिति सुस्थितम् ।

प्रमाज्ञानस्य स्वतः प्रामाण्यम् । विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वमिति ॥

**मीर**, पुं, (मिन्वन्ति प्रक्षिपन्ति नद्यो जलान्यत्रेति । मिञ् + "शुसिचिमिञां दीर्घश्च ।" उणा० २ । २५ । इति क्रन् दीर्घत्वञ्च ।) समुद्रः । इत्युणादिकोषः ॥ पर्व्वतैकदेशः । सीमा । पानीयम् । इति सङ्क्षिप्तसारोणादिवृत्तिः ॥

**मील**, ऋ निमेषे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर० अक० सेट् ।) ऋ अमिमीलत् अमीमिलत् । मीलति चक्षुः पक्ष्मभिराच्छादितं स्यादित्यर्थः । इति दुर्गादासः ॥

**मील**, क्ली (मीलतीति । मील + क ।) वस्त्रम् । इति कश्चित् ॥

**मीलन**, क्ली, पक्ष्मभिरावरणम् । मीलधातोर्भावे ऽनट् (ल्युट्) प्रत्ययेन निष्पन्नम् ॥

**मीलित**, त्रि (मील + क्त ।) अप्रफुल्लम् । तत्पर्य्यायः । सङ्कुचितम् २ निद्राणम् ३ मुद्रितम् ४ । इति हेमचन्द्रः ॥ (अलङ्कारविशेषः । यथा साहित्यदर्पणे । १० । ११५ ।
("मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा ।")

**मीव**, पीवे । इति कविकल्पद्रुमः ॥ (भ्वा० पर० अक० सेट् ।) मीवति । पीवः स्थूलीभावः । इति दुर्गादासः ॥

**मीवर**, त्रि (मीनाति हिनस्तीति । मीञ् + "छित्वरछत्वरधीवरपीवरमीवरेति ।" उणा० ३ । १ । इति ष्वरच् निपातितश्च । अथोज्ज्वलेन तु माधातोः ष्वरच् निपातितश्चेत्युक्तम् ।) हिंस्रः । इत्युणादिकोषः ॥ (मीयते इति, मा + ष्वरच् । निपातितः ।) सेनानीः । पूज्यः । इति सङ्क्षिप्तसारोणादिवृत्तिः ॥

**मीवा**, स्त्री (मीनाति हिनस्तीति । मी + 'शेवायह्वजिह्वाग्रीवाप्वामीवाः ।' उणा० १ । १५४ । इति वन् निपात्यते च ।) उदरकृमिः । इत्युणादिकोषः ॥ वायुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ शीकरः । सारः । इति सङ्क्षिप्तसारोणादिवृत्तिः ॥

**मु**, पुं, (मव + बाहुलकात् डुन् । टिलोपश्च ।) बन्धनम् । इत्येकाक्षरकोषः ॥ महेशः । इति चटुचन्द्रः ॥

**मुकुन्दक**, पुं, पलाण्डुः । केचित्तु मुकन्दकस्थाने सुकन्दक इति पठित्वा अवनामो सुष्ठु सर्व्वं प्रायेण कन्दति आक्रन्दति कदि आह्वाने रोदने च अक पृषोदरादित्वात् इत्युक सुकन्दक इति व्याचक्षते । इत्यमरटीकायां भरतः ॥

**मुक्**, पुं (मुच + बाहुलकात् कु । पृषोदरादित्वात् साधुः ।) मुक्तिः । यथा —
"मुकुर्मुक्तौ महेशे स कुः पृथिव्यामथाभवे ।'
इति दुर्गादासधृतचटुचन्द्रः ॥

**मुकुट**, क्ली, (मङ्कते मण्डयति । मकि + उटन् नलोपश्चेति न्यासः ।) स्वनामख्यातशिरोभूषणम् । तत्पर्य्यायः । किरीटम् २ । इत्यमरः,

२।६।१०२॥ मौलि: ३ कोटीरम् ४ उष्णीषम् ५। इति हेमचन्द्र:। ३।३१४॥ मकुटम् ६ मौलीक: ७ शेखरम् ८ अवतंस: ९ वतंस: १० उत्तंस: ११ उष्णीषकम् १२ कोटीरकम् १३। इति शब्दरत्नावली॥ (यथा, हरिवंशे। ८६। ७१।
"मुकुटश्चापतत्तस्य काञ्चनो वज्रभूषित:।"
तथा च महाभारते। १। ३०। ३८।
"रत्नानि मुकुटान्येषां मुथितानि अधर्षयन्।"
टाप्। स्त्री, मातृगणविशेष:। यथात्रैव। ९। ४६। २३।
"कालेहिका वामनिका मुकुटा चैव भारत॥")

मुकुटी, स्त्री, अङ्गुलिमोटनम्। इति शब्दरत्नावली॥

मुकुन्द:, पुं, विष्णु:। तस्य व्युत्पत्तिर्यथा,—
"मुकुमव्ययमान्तञ्च निर्व्वाणमोक्षवाचकम्।
तद्ददाति च यो देवो मुकुन्दस्तेन कीर्त्तित:॥
मुकुं भक्तिरसप्रेमवचनं वेदसम्मतम्।
यस्तद्ददाति विप्रेभ्यो मुकुन्दस्तेन कीर्त्तित:॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११०अध्याय:॥
निधिविशेष:। ( यथा, मार्कण्डेये। ६८। ५।
"यत्र पद्ममहापद्मौ तथा मकरकच्छपौ।
मुकुन्दो नन्दकश्चैव नील: शङ्खोऽष्टमो निधि:॥"
अस्य गुणादिकं निधिशब्दे उक्तम्।) रत्नभेद:। कुन्दुरु:। इति मेदिनी। दे, ३८॥ ( यथा च पर्य्याय:।
"कुन्दुरुस्तु मुकुन्द: स्यात् सुगन्ध: कुन्द इत्यपि।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)
पारद:। इति हेमचन्द्र:। २। १२६॥

मुकुन्दक:, पुं, पलाण्डु:। केचित्तु मुकन्दकस्थाने मुकुन्दक इति पठित्वा नवनानां मुदं कन्दतीति पृषोदरादित्वात् इदुक् कन्देरत उत्वेति व्याचष्टे। इत्यमरटीकायां भरत:॥ (यथा, सुश्रुते। १। ४६।
"विशेषो तत्र भूयिष्ठं वरुक: समुकुन्दक:।")
षष्टिकव्रीहि:। यथा, भावप्रकाशे।
"षष्टिक: शतपुष्पश्च प्रमोदकमुकुन्दकौ।
महाषष्टिक इत्याद्या: षष्टिका: समुदाहृता:॥"

मुकुन्दु:, पुं, (मोचयति विषयान्तरात् रोगमिति। अन्तर्भूतणर्थे मुच्+क:। वत्सादित्वात् कुत्वम्। तं उन्दत्यार्द्रीकरोतीति। उन्द+उण्। पृषोदरादित्वात् साधु:।) कुन्दुरु:। इत्यमरटीकायां मथुरानाथ:॥

मुकुम्, व, निर्व्वाणम्। भक्तिरस:। प्रेम। यथा,
"मुकुमव्ययमान्तञ्च निर्व्वाणमोक्षवाचकम्।
तद्ददाति च यो देवो मुकुन्दस्तेन कीर्त्तित:॥
मुकुं भक्तिरसप्रेमवचनं वेदसम्मतम्।
यस्तद्ददाति विप्रेभ्यो मुकुन्दस्तेन कीर्त्तित:॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११० अ:॥

मुकुर:, पुं, (मक+"मकुरदर्दुरौ।"उणा० १।४१। इत्यत्र। बाहुलकादकारस्थाने उकार: इत्युज्ज्वलदत्तोक्ते: उरच्।) दर्पण:। (यथा नैषधे।४।५६।
"कुरु करे गुरुमेकमयोघन
बहिरितो मुकुरञ्च कुरुष्व मे॥")
वकुलद्रुम:। कुलालदण्ड:। इति मेदिनी। रे, २०३॥ मल्लिकापुष्पदन्त:। इति विश्व:॥ (यथा,
मुकुरकुसुमभृङ्गज्ञानातपत्रं ध्वजं वा
दधिफलमथ नौकामन्नताम्बुलवक्त्रम्
कमलकलसशङ्खं भूषणं काञ्चनं वा
भवति सकलसिद्ध्यै श्रेयसे रोगिणाञ्च॥"
इति हारीते द्वितीयस्थाने द्वितीयेऽध्याये॥)
कुलदत्त:। इति शब्दरत्नावली॥ कोरक:। इति हेमचन्द्र:॥

मुकुल:, पुं, क्ली, ( मुञ्चति कलिकात्वम्। मुच्+ घुनक्। इति भरत:॥ मुचेरुल:। कलत्वमुल्वणेति कत्वे अकारस्योत्वे मुकुल इति राय:।) ईषद्विकसितकलिका। तत्पर्य्याय:। कुड्मल: २। इत्यमर:। २। ४। १६॥ ( यथा, रघौ।९।३१।
उपहितं शिशिरापगमश्रिया
मुकुलजालमशोभत किंशुके।")
मकुल:३ पौटकोरक: ४। इति शब्दरत्नावली॥ शरीरम्। आत्मा। इति धरणि:॥ ( राजपुरुषविशेष:। यथा, राजतरङ्गिण्याम्।६।२५३।
"इत्थं लब्धजया राज्ञी तत्पक्षाग्र्यग्रहोद्दृषा।
यशोधरं शुभधरं मुकुलञ्च सबान्धवम्॥")

मुकुष्ठ:, पुं, वनमुद्ग:। तत्पर्य्याय:। मपष्ठ: २। इति रत्नमाला॥ अस्य गुणा:। शीतलत्वम्। ग्राहित्वम्। कफपित्तज्वरनाशित्वञ्च। इति राजवल्लभ:॥

मुकुष्टक:, पुं, (मुकुं स्तकति प्रतिहन्ति। स्तक+ अच् पृषोदरादित्वात् साधु:।) वनमुद्ग:। मुगानी इति भाषा। तत्पर्य्याय:। मयष्टक: २। इत्यमर:।२।९।१७॥ मुकुष्ठ: ३ मयष्ठ: ४। इति श्रीधर:॥ मपष्टक: ५। इत्यन्ये। इति भरत:॥ मुद्गष्टक: ६ मकुष्टक: ७ मयुष्टक: ८। इति टीकान्तरम्॥ ( तथास्य विषय:॥
"विदलान्नानि वक्ष्यामि शृणु पुत्त्र! यथाक्रमम्।
यवगोधूमचणका माषामुद्गाढ़कौ तथा॥
मुकुष्टका: कुलत्थाश्च मसूरास्त्रिपुटास्तथा।
निष्पावका: कलायाद्या विदलान्नानि कीर्त्तयेत्॥
इति हारीते प्रथमे स्थाने दशमेऽध्याये॥
मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान्।
आहारकाले यूषार्थे ज्वरिताय प्रदापयेत्॥"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे॥)

मुकूलक:, पुं, ( मुच्+बाहुलकादूलच् पृषोदरादित्वात् कुत्वम्। तत: संज्ञायां कन्।) दन्तिवृक्ष:। इत्यमरटीकायां रामाश्रम:॥ (तथास्य पर्य्याय:॥
"चित्रा दन्ती निकुम्भ: स्यादुपचित्रा मुकूलक:।
दाक्षायणी विशल्या च तथोदुम्बरपर्ण्यपि॥"
इति वैद्यकरत्नमालायाम्॥
"दन्त्युदुम्बरपर्णी स्यान्निकुम्भोऽथ मुकूलक:।
द्रवन्ती नामतश्चित्रान्यग्रोधा मूषिकाह्वया॥"
इति चरके कल्पस्थाने द्वादशेऽध्याये॥)

मुक्त:, त्रि, (मुच्+क्त:।) प्राप्तमोक्ष:। मोचित:। इति मेदिनी। ते, ४४॥ नन्दित:। इति शब्दरत्नावली॥ ( नृपविशेष:। यथा, राजतरङ्गिण्याम्। ७। १६३५।
"सुदर्शनकभृत्यस्य चेलकाख्यस्य तत्पदम्।
मुक्तो नामान्तिकं प्राप्तो नृपतेराप्ततामगात्॥"
ऋषिविशेष:। यथा, मार्कण्डेये। १००। ३१।
"अग्नीध्रश्चाग्निबाहुश्च शुचिर्मुक्तोऽथ माधव:।
शुक्रोऽजितश्च सप्तैते तदा सप्तर्षय: स्मृता:॥")

मुक्तकं, क्ली, (मुच्यते स्मेति। मुच्+क्त:। संज्ञायां कन्।) क्षेपणीयास्त्रम्। इति केचित्॥ (काव्यविशेष:। यथा, साहित्यदर्पणे। ६। २९५।
"वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च॥")

मुक्तकञ्चुक:, पुं, ( कञ्चुक इव कञ्चुक: मुक्त: कञ्चुको येन।) अचिरत्यक्तत्वक्सर्प:। तत्पर्य्याय:। निर्म्मुक्त: २। इत्यमर:। १। ८। ६। उज्झितकञ्चुके, त्रि॥

मुक्तचक्षु:, [स्] पुं, ( मुक्तं सर्व्वत: क्षिप्तं चक्षुर्येन।) सिंह:। इति शब्दमाला॥ मुक्तनेत्रे, त्रि॥

मुक्तरसा, स्त्री, ( मुक्त: रसो यस्या:।) रास्ना। इति रत्नमाला॥ ( विवरणमस्या रास्नाशब्दे ज्ञातव्यम्।) त्यक्तरसे, त्रि॥

मुक्ता, स्त्री,( मुच्यते स्म। मोच्यते नि:सार्य्यते इति वा। मुच्+क्त:। टाप्।) रास्ना। इति रत्नमाला॥ रत्नविशेष:। मोती इति हिन्दीभाषा। अस्या अधिष्ठात्री देवता चन्द्र:। इति ज्योतिषम्॥ तत्पर्य्याय:। मौक्तिकम् २। इत्यमर:। २। ९। ९३॥ सौम्या ३ शौक्तिकेयम् ४ तारम् ५ तारा ६ भौतिकम् ७ तौलिकम् ८ अम्भ:सारम् ९ शीतलम् १० नीरजम् ११ नक्षत्रम् १२ इन्दुरत्नम् १३ लक्ष्मी: १४ मुक्ताफलम् १५ बिन्दुफलम् १६ मुक्तिका १७ शौक्तिकेयकम् १८ शुक्तिमणि: १९ शशिप्रभम् २० स्वच्छम् २१ हिमम् २२ हिमवलम् २३ सुधांशुभम् २४ शुधांशुरत्नम् २५। लक्ष्मीस्थाने लक्ष्यं शशिप्रभस्थाने शशिप्रियं हिमवलस्थाने हैमवतं सुधांशुभस्थाने भूरुहं इति च पाठ:। इति राजनिर्घण्ट:॥ शौक्तिकम् २६। इति भावप्रकाश:॥ शुक्तिबीजम् २७ हारी २८। इति शब्दरत्नावली॥ कुवलम् २९। इति जटाधर:॥ अस्या गुणा:। सारकत्वम्। शीतलत्वम्। कषायत्वम्। स्वादुत्वम्। लेखनत्वम्। चक्षुष्यत्वञ्च। तद्धारणगुण:। पापालक्ष्मीविनाशित्वम्। इति राजवल्लभ:॥ पथ्यत्वम्। बलपुष्टिदत्वञ्च। इति भावप्रकाश:॥ * ॥ अपि च।
"मौक्तिकञ्च मधुरं सुशीतलं
दृष्टिरोगशमनं विषापहम्।
राजयक्ष्मपरिकोपनाशनं
क्षीणवीर्य्यबलपुष्टिवर्द्धनम्॥"
अस्या लक्षणं यथा,—
"नक्षत्राभं सुवृत्तमत्यन्तमुक्तं
स्निग्धं स्थूलं निर्म्मलं निर्व्रणञ्च।

न्यस्तं धत्ते गौरवं यत्तुलायां
तन्निर्मौल्यं मौक्तिकं दोषदायि ॥"

अस्य दोषलक्षणं यथा,—

'यद्विच्छायं मौक्तिकं व्यङ्गकायं
शुक्तिस्पर्शं रक्ततामाविधत्ते।
मत्स्याक्ष्यङ्कं व्यक्तमुत्तानवत्त्वं
नैतद्धार्य्यं धीमता दोषदायि ॥'

अष्टधा मौक्तिकं यथा —

"मातङ्गोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृ-
च्छुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्यष्टधा ॥'

मौक्तिकविशेषो यथा,—

'छायापाटलनीलपीतधवलास्तच्चापि सामान्यतः
सप्तानां बहुशो न लब्धिरिति चेच्छौक्तेयकं तूल्यम् ॥'* ॥

मौक्तिकपरीक्षा यथा,—

'लवणक्षारक्षोदिते पात्रेऽम्लगोमूत्रपूरिते स्विन्नम्।
मर्द्दितमपि शालीतुषैर्यदविकृतं तन्मौक्तिकं जात्यम् ॥'

इति राजनिर्घण्टः ॥ * ॥

तदुत्पत्तिस्थानानि यथा,—

'शुक्तिः शङ्खो गजः क्रोडः फणी मत्स्यश्च दर्दुरः।
वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः ॥'

इति भावप्रकाशः ॥ * ॥

अथ प्रकारान्तरमुक्तापरीक्षा।

"द्विपेन्द्रजीमूतवराहशङ्ख-
मत्स्याहिशुक्त्युद्भववेणुजानि।
मुक्ताफलानि प्रथितानि लोके
तेषान्तु शुक्त्युद्भवमेव भूरि।
वेध्यन्तु शुक्त्युद्भवमेव तेषां
शेषाण्यवेध्यानि वदन्ति तज्ज्ञाः।
मतङ्गजा ये तु विशुद्धवंशा-
स्ते मौक्तिकानां प्रभवाः प्रदिष्टाः ॥
उत्पद्यते मौक्तिकमेषु वृत्त-
मापीतवर्णं प्रभया विहीनम् ॥

अन्ये गजपरीक्षायां गजजातिश्चतुर्व्विधा।
मौक्तिकं तेषु जातं हि चतुर्व्विधमुदीर्य्यते ॥
ब्राह्मणं पीतशुभ्रन्तु क्षत्त्रियं पीतरक्तकम्।
पीतश्यामन्तु वैश्यं स्यात् शूद्रं स्यात् पीतनीलकम् ॥
कम्बोजकुम्भसम्भूतं धात्रीफलनिभं गुरु।
अतिपक्वरसच्छायं मौक्तिकं मन्ददीधिति ॥
धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः।
दुर्लभं तन्मनुष्याणां दैवैस्तत् ह्रियतेऽम्बरात् ॥
कुक्कुटाण्डसमं वृत्तं मौक्तिकं स्निग्धं गुरु।
धवलं भानुसङ्काशं दैवयोग्यममानुषम् ॥'* ॥

तथाहि नाटके।

"नाप्नोति मेघप्रभवं धरित्री
वियद्गतं तद्विबुधा हरन्ति।
आर्कि प्रभाभासितदिग्विभाग-
मादित्यवद् दुर्व्विभाव्यबिम्बम् ॥
तेजस्तिरस्कृत्य हुताशनेन्दु-
नक्षत्रताराग्रहसम्भवञ्च।
दिवा यथा दीप्तिकरस्तथैव
तमोऽवगाढास्वपि तद्विभासु ॥
विचित्ररत्नद्युतिचारुतोया
चतुःसमुद्रा भवनाभिरामा।
भव्या न वा स्यादिति निश्चयो मे
कृत्स्ना मही तस्य सुवर्णपूर्णा ॥
हीनोऽपि यस्तल्लभते कथञ्चित्
विपाकयोगान्महतः शुभस्य।
सपत्नहीनः पृथिवीं समग्रां
भुनक्ति तत्तिष्ठति यावदेव ॥
न केवलं तच्छुभकृन्नृपस्य
भाग्यैः प्रजानामपि जन्म तस्य।
तद्योजनानां परितः शतस्य
सर्व्वाननर्थान् विमुखीकरोति ॥

जलज्योतिर्म्मरुज्जानां मेघानां त्रिविधं भवेत्।
जलाधिकेऽधिकं स्वच्छं कोमलं गुरु कान्तिमत् ॥
ज्योतिषः कान्तिमद्वृत्तं दुर्न्निरीक्ष्यं रविप्रभम्।
कान्तिमत् कोमलं वृत्तं मारुतं विमलं लघु ॥

वराहदंष्ट्राप्रभवं वरिष्ठं
तस्यैव दंष्ट्राङ्कुरतुल्यवर्णम्।
क्वचित् कथञ्चित् स भुवः प्रदेशे
प्रजायते शूकरवद्वरिष्ठः ॥

ब्रह्मादिजातिभेदेन वराहोऽपि चतुर्व्विधः।
तेषु जाता भवेन्मुक्ता समासेन चतुर्व्विधा ॥
ब्राह्मणं शुक्लवर्णन्तु शूद्रमर्म्मोऽस्य लभ्यते।
क्षत्त्रियं शुक्लरक्तन्तु स्पर्शे कर्कशमेव च ॥
वैश्यं स्यात् शुक्लपीतन्तु कोमलं कोलसन्निभम्।
शूद्रं स्याच्छुक्लनीलन्तु कर्कशं श्याममेव च ॥'

तथा च।

"कोलजं कोलसदृशं सदृशासदृशच्छवि।
अलभ्यं मनुजे रम्यं मौक्तिकं पुण्यवर्ज्जिते ॥*॥

ये कम्बवः शार्ङ्गसुतावमर्षे
पीतस्य शङ्खप्रवरस्य गोत्रे।
स्यान्मौक्तिकानामिह तेषु जन्म
तल्लभ्यं सम्प्रति कौर्मयाम ॥
स्वयोनिमध्यच्छवितुल्यवर्णं
प्रह्लादहृत्कोलफलप्रमाणम् ॥

तथा च।

वर्षोपलसमं दीप्तं माधवाख्यकुलोद्भवम्।
कपोताण्डप्रमाणं तदतिकान्तिमनोहरम् ॥*॥

विशेषो यथा,—

'अब्ध्यादिकनवस्थे ये जाताः कम्बवः शुभाः।
मौक्तिकं तेषु जातं हि सप्तविंशतिभेदभाक् ॥
शुक्लाशुक्ला पीतरक्ता नीला लोहितपिञ्जराः।
श्यामार्बुदा पाटलाश्च नववर्णाः प्रकीर्त्तिताः ॥
महन्मध्यमसूक्ष्माणि सप्तविंशतिधा भवेत्।
क्रमशस्तेषु विज्ञेयं गच्छेषु मनीषिभिः ॥*॥

पाठीनपृष्ठस्य समानवर्णं
मीनात् सुवृत्तं लघु नातिसूक्ष्मम्।
उत्पद्यते वारिचराननेषु
मीनाश्च ते मध्यचरा पयोधेः ॥'

तथा च।

"गुञ्जाफलकायस्थौल्यं मौक्तिकं तिमिजं लघु।
पाटलापुष्पसङ्काशमल्पकान्ति सुवर्त्तुलम् ॥
वातपित्तकफद्वन्द्वसन्निपातप्रभेदतः।
सप्त प्रकृतयो मीने सप्तधा तेन मौक्तिकम् ॥
लघिष्ठमरुणं वातात् आपीतं मृदु पित्ततः।
शुक्लं गुरु कफोद्रेकात् वातपित्तान्मृदुर्लघु ॥
वातश्लेष्मभवं स्थूलं पित्तश्लेष्मजमच्छकम्।
सर्व्वलिङ्गप्रयोगेण सान्निपातिकमुच्यते ॥
एकजा शुभदाः प्रोक्तास्तथा वै सान्निपातिकाः ॥*॥

भौजङ्गमं नीलविशुद्धवर्णं
सर्व्वं भवेत् प्रज्वलवर्णशोभम्।
नितान्तधौतप्रतिकल्प्यमान-
निस्त्रिंशधारासमवर्णशोभम् ॥
भुजङ्गमास्ते विषवेगदृप्ता
श्रीवासुकेर्व्वंशभवाः पृथिव्याम्।
क्वचित् कदाचित् खलु पुण्यदेशे
तिष्ठन्ति ते पश्यति तान्मनुष्यः ॥

फणिजं वर्त्तुलं रम्यं नीलच्छायं महाद्युति।
पुण्यहीना न पश्यन्ति वासुकेः कुलसम्भवम् ॥

शृगालकोलामलकोलगुञ्जा-
फलप्रमाणास्तु चतुर्व्विधास्ते।
स्युर्व्विप्रबाहूद्भववैश्यशूद्र-
सर्पेषु जाताः प्रवरास्तु सर्व्वे ॥
प्राप्यापि रत्नानि धनं श्रियं वा
राजश्रियं वा महतीं दुरापाम्।
तेजोऽन्विताः पुण्यकृतो भवन्ति
मुक्ताफलस्यास्य विधारणेन ॥
जिज्ञासया रत्नविनिश्चयज्ञैः
शुभे मुहूर्त्ते प्रयतैः प्रयत्नात्।
रक्षाविधानं सुमहद्विधाय
हर्म्योपविष्टं क्रियते यदा तत् ॥
तदा महद्दुन्दुभितूर्य्यघोषै-
र्घनैर्घनैराप्रियतेऽन्तरीक्षम् ॥
न तं भुजङ्गा न तु यातुधाना
न राक्षसा नापि च दुष्टलोकाः
हिंसन्ति यस्याहिशिरःप्रसूतं
मुक्ताफलं तिष्ठति कोषमध्ये ॥

भेकादिष्वपि जायन्ते मणयो ये क्वचित् क्वचित्।
भौजङ्गमसमास्तुल्यास्ते विज्ञेया बुधोत्तमैः ॥

गगनमात्रेव दिवो विशीर्णा
रत्नावली तस्य महासुरस्य।
विचित्रदेशेषु विचित्रवर्णा
पयःसु पश्चात् पयसां पपात ॥
सम्पूर्णचन्द्रांशुकलापकान्ते-
र्म्मणिप्रदेशस्य महागुणस्य।
तच्छुक्तिमत्सुस्थितिमाप बीज-
मासन् पुरा पुण्यभवानि यानि ॥

यस्मिन् प्रदेशेऽम्बुनिधौ पपात
सुचारुमुक्तामणिरत्नबीजम् ।
तस्मिन् पयस्तोयधरावकीर्णं
शुक्तौ स्थितं मौक्तिकनाममवाप ॥ * ॥
सैंहलिकपारलौकिक-सौराष्ट्रिकताम्रपर्णपार-
सवाः ।
कौवेरपाण्ड्यविराटमुक्ता इत्याकरास्त्वष्टौ ॥
"स्वात्यां स्थिते रवौ मेघैर्ये मुक्ता जलबिन्दवः ।
शीर्णाः शुक्तिषु जायन्ते तेर्मुक्ता निर्म्मलत्विषः॥
न्यूना मध्यास्तथा सूक्ष्मा बिन्दुमानानुसारतः ।
सुस्निग्धमधुरच्छायं मौक्तिकं सिंहलोद्भवम् ॥
पारलौकिकसम्भूतं मौक्तिकं निविडं गुरु ।
सौराष्ट्रिकभवं स्थूलं वृत्तं स्वच्छं सितं घनम् ॥
ताम्रपर्णभवं ताम्रं पीतं पारसवोद्भवम् ।
ईषत् श्यामञ्च रूक्षञ्च कौवेरोद्भवमौक्तिकम् ॥
पाण्ड्यदेशोद्भवं पाण्डु सितं रूक्षं विराटजम् ।
रुक्मिण्याख्या तु या शुक्तिस्तत्प्रसूतिः सुदुर्लभा ॥
तत्र जातं सितं स्वच्छं जातीफलसमं वरम् ।
छायावद्बहुलं रम्यं निर्दोषं यदि लभ्यते ॥
अमूल्यं तद्विनिर्दिष्टं रत्नलक्षणकोविदैः ।
दुर्लभं नृपयोग्यं स्यादल्पभाग्यैर्न लभ्यते ॥"
अन्यत्राह ।

"सर्व्वस्य तस्याकरजा विशेषात्
रूपप्रमाणे च यथैव विद्वान् ।
नहि व्यवस्थास्ति गुणागुणेषु
सर्व्वत्र सर्व्वाकृतयो भवन्ति ॥

ब्रह्मादिजातिभेदेन मुक्तयोऽपि चतुर्व्विधाः ।
तासु सर्व्वासु जातं हि मौक्तिकं स्याच्चतुर्व्विधम्॥
ब्राह्मणस्तु सितः स्वच्छो गुरुः शुक्लः प्रभान्वितः।
आरक्तः क्षत्रियः स्थूलस्तथारुणविभान्वितः ॥
वैश्यस्त्वापीतवर्णोऽपि स्निग्धः श्वेतः प्रभान्वितः ।
शूद्रः शुक्लवपुः रूक्षस्तथा स्थूलोऽसितद्युतिः ॥

वर्णोपलानां समवर्णशोभं
त्वक्सारमध्यप्रभवं प्रदिष्टम् ।
ते वेणवो दिव्यजनोपभोग्ये
स्थाने प्ररोहन्ति न सार्व्वजन्ये ॥

वंशजं शशिसङ्काशं कक्कोलीफलमार्द्दकम् ।
प्राप्यते बहुभिः पुण्यैस्तन्मूल्यं वेदमन्त्रतः ॥
पञ्चभूतसमुद्रेकादंशे पञ्चविधे भवेत् ।
मुक्ता पञ्चविधा तासां यथालक्षणमुच्यते ॥
पार्थिवी गुरुवत्तुसा च तैजसी तेजसा लघुः ।
वायवी च मृदुः स्थूला गागनी कोमला लघुः ।
आप्याः स्निग्धा भृशं शुक्लाः पञ्चैताः प्रवरा
मताः ।
तासां धारणमात्रेण व्याधिः कोऽपि न
जायते ॥"* ॥
एवमन्यत्रापि ।
"गजाहिकोलमत्स्यानां शीर्षे मुक्ताफलोद्भवः ।
त्वक्सारशुक्तिशङ्खानां गर्भे मुक्ताफलोद्भवः ॥
धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः ।
कोमलं शुचिरूपञ्च गजे पाटलभास्वरम् ॥
मत्स्ये श्वेतञ्च निस्तेजः फणीन्द्रे नीलभास्वरम् ।
हरिच्छुरितं तथा वंशे पीतश्वेतञ्च शूकरे ।
शङ्खशुक्त्युद्भवं श्वेतं मुक्तारत्नमनुत्तमम् ॥
चतुर्धा मौक्तिके च्छाया पीता च मधुरा सिता ।
नीला चैव समाख्याता रत्नतत्त्वपरीक्षकैः ॥
पीता लक्ष्मीप्रदा छाया मधुरा बुद्धिवर्द्धिनी ।
शुक्ला यशस्करी छाया नीला सौभाग्यदायिनी ॥
सिता छाया भवेद्विप्रः क्षत्रियश्चार्करश्मिवान् ।
पीतच्छाया भवेद्वैश्यः शूद्रः कृष्णरुचिर्म्मतः ॥*
अथ गुणाः ।
सुतारञ्च सुवृत्तञ्च स्वच्छञ्च निर्म्मलं तथा ।
घनं स्निग्धञ्च सच्छायं तथा स्फुटितमेव च ।
अष्टौ गुणाः समाख्याता मौक्तिकानामशेषतः ॥
तद्यथा,—
तारकाद्युतिसङ्काशं सुतारमिति गद्यते ।
सर्व्वतो वर्त्तुलं यच्च सुवृत्तं तन्निगद्यते ॥
स्वच्छं दोषविनिर्म्मुक्तं निर्म्मलं मलवर्जितम् ।
गुरुत्वं तुलने यस्य तद्घनं मौक्तिकं वरम् ॥
स्नेहेनेव विलिप्तं यत्तत् स्निग्धमिति गद्यते ।
छायासमन्वितं यच्च सच्छायं तन्निगद्यते ॥
व्रणरेखाविहीनं यत्तत् स्यादस्फुटितं शुभम् ॥
भ्राजिष्णु कोमलं कान्तं मनोज्ञं स्फुरतीव च ।
स्रवतीव च सत्त्वानि तनुमहारत्नसंज्ञितम् ॥
श्वेतकाचसमाकारं शुभ्रांशुशतयोजितम् ।
शशिराजप्रतिच्छायं मौक्तिकं देवभूषणम् ॥"* ॥
गारुड़े ।

त्वक्सारनागेन्द्रतिमिप्रभूतं
यच्छङ्खजं यच्च वराहजातम् ।
प्रायो विमुक्तानि भवन्ति भासा
शस्तानि माङ्गल्यतया तथापि ॥
प्रमाणवर्णौरवरश्मियुक्तं
सितं सुवृत्तं समसूक्ष्मरन्ध्रम् ।
अकर्तुरप्यावहति प्रमोदं
यन्मौक्तिकं तद्गुणवत् प्रदिष्टम् ॥
एवं समस्तेन गुणोदयेन
यन्मौक्तिकं योगमुपागतं स्यात् ।
न तस्य भर्त्तारमनर्थजात
एकोऽपि दोषः समुपैति सद्यः ॥

एवं सर्व्वगुणोपेतं मौक्तिकं येन धार्य्यते ।
तस्यायुर्व्वर्द्धते लक्ष्मीः सर्व्वपापं प्रणश्यति ॥
गुणवद्गुरु यद्देहे मौक्तिकैकं हि तिष्ठति ।
चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति ॥"
दोषो यथा,—
"चत्वारः सुमहादोषाः षण्मध्याश्च प्रकीर्त्तिताः ।
एवं दश समाख्यातास्तेषां वक्ष्यामि लक्षणम् ॥
यत्रैकदेशे संलग्नः शुक्तिखण्डो विभाव्यते ।
शुक्तिलग्नः समाख्यातः स दोषः कुष्ठकारकः ॥
मीनलोचनसङ्काशो दृश्यते मौक्तिके तु यः ।
मत्स्याक्षः स तु दोषः स्यात् पुत्त्रनाशकरो ध्रुवम् ॥
दीप्तिहीनं गतच्छायं जठरं तद्विदुर्बुधाः ।
तस्मिन् संधारिते मृत्युर्जायते नात्र संशयः ॥
मौक्तिकं विद्रुमच्छायमतिरक्तं विदुर्बुधाः ।
दारिद्र्यजनकं यत्नात् तस्मात्तत् परिवर्जयेत् ॥
उपर्य्युपरि तिष्ठन्ति वलयो यत्र मौक्तिके ।
त्रिवृत्तं नाम तस्योक्तं सौभाग्यक्षयकारकम् ।
अवृत्तं मौक्तिकं यच्च चिपिटं यन्निगद्यते ।
मौक्तिकं ध्रियते येन तस्याकीर्त्तिर्भवेत् सदा ॥
त्रिकोणं त्र्यस्रमाख्यातं सौभाग्यक्षयकारकम् ।
दीर्घं यत्तत् कृशं प्रोक्तं प्रज्ञाविध्वंसकारकम् ॥
निर्भग्नमेकतो यच्च कृशपार्श्वं तदुच्यते ।
सदोषं मौक्तिकं निन्द्यं निरुद्योगकरं हि
तत् ।
अवृत्तं पिड़कोपेतं सर्व्वसम्पत्तिहारकम् ॥*॥
यत्र कृत्रिमसन्देहः क्वचिद्भवति मौक्तिके ।
उष्णे सलवणे स्नेहे निशान्तद्वासयेज्जले ॥
व्रीहिभिर्मर्द्दनीयं वा शुष्कवस्त्रोपवेष्टितम् ।
यत्तु नायाति वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥*॥
तथा हि ।
क्षिपेद्गोमूत्रभाण्डे तु लवणक्षारसंयुते ।
स्वेदयेद्वह्निना वापि शुष्कवस्त्रेण वेष्टयेत् ॥
हस्ते मौक्तिकमादाय व्रीहिभिस्तोपघर्षयेत् ।
कृत्रिमं भङ्गमाप्नोति सहजञ्चाति दीप्यते ॥

कृत्वा पचेत् सुपिहिते शुभदारभाण्डे
मुक्ताफलं निहितनूतनशुक्तिकाण्डम् ।
स्फोटन्तथा प्रविदधीत ततश्च भाण्डात् ।
संस्थाप्य धान्यनिचये च तमेकमासम् ॥
आदाय तत् सकलमेव ततोऽन्नभाण्डं
जम्बीरजातरसयोजनया विपक्वम् ।
घृष्टं ततो मृदुतनूकृतपिष्टमूलैः
कुर्य्याद्यथेच्छमिह मौक्तिकमाशु विद्धम् ॥
मृत्तिप्रमत्स्यपुटमध्यगतन्तु कृत्वा
पश्चात् पचेत्तनु ततश्च वितानपत्या ।
दुग्धे ततः पयसि तद्विपचेत् सुरायां
पक्वन्ततोऽपि पयसा शुचि चिक्कणेन ।
शुद्धं ततो विमलवस्त्रनिघर्षणेन
स्यात् मौक्तिकं विमलसद्गुणकान्तिजालम्॥"
अथ मूल्यम् ।
"पञ्चभिर्माषको ज्ञेयो गुञ्जाभिर्माषकैस्तथा ।
चतुर्भिः शाणमाख्यातं माषकैर्मणिवेदिभिः ॥

एकस्य शुक्तिप्रभवस्य शुद्ध-
मुक्तामणेः शाणकसम्मितस्य ।
मूल्यं सहस्राणि कपर्द्दकानि
त्रिभिः शतैरभ्यधिकानि पञ्च ॥
यन्माषकार्द्धेन ततो विहीनं
चतुःसहस्रं लभतेऽस्य मूल्यम् ।
यन्माषकांस्त्रीन् बिभृयाद्गुरुत्वे
द्वे तस्य मूल्यं परमं प्रदिष्टम् ॥
अर्द्धाधिकद्वौ वहतोऽस्य मूल्यं
त्रिभिः शतैरभ्यधिकं सहस्रम् ।
द्विमाषकोन्मापितगौरवस्य
शतानि चाष्टौ कथितानि मूल्यम् ॥
अर्द्धाधिकमाषकसम्मितस्य
सपञ्चविंशं त्रितयं शतानाम् ।
यन्माषकोन्मापितमानमेकं
तस्याधिकं विंशतिभिः शतं स्यात् ॥

पात्रं हि नापुण्यकृतो भवन्ति
मुक्ताफलस्याहिशिरोभवस्य ॥
जिज्ञासया रत्नधनं विधिज्ञैः
शुभे मुहूर्त्ते प्रयतैः प्रयत्नात् ।
रक्षाविधानं सुमहद्विधाय
हर्म्योपरिस्थं क्रियते यदा तत् ॥
तदा महादुन्दुभिमन्द्रघोषै-
र्विद्युल्लताविस्फुरितान्तरालैः ।
पयोधराक्रान्तिविलम्बलम्बै-
र्घनैर्घनैर्वा व्रियतेऽन्तरीक्षम् ॥
न तं भुजङ्गा न च यातुधाना
न व्याधयो नाप्युपसर्गदोषाः ।
हिंसन्ति यस्याहिशिरःप्रसूतं
मुक्ताफलं तिष्ठति पूज्यमानम् ॥
नाभ्येति मेघप्रभवं धरित्रीं
वियद्गतं तद्विबुधा हरन्ति ।
अर्चिःप्रभानात्ततदिग्विभाग-
मादित्यवद्दुःखविभाव्यबिम्बम् ॥
तेजस्तिरस्कृत्य हुताशनेन्दु-
नक्षत्रताराप्रभवं समग्रम् ।
दिवा यथा दीप्तिकरं तथैव
तमोऽवगाढास्वपि तन्निशासु ॥
विचित्ररत्नद्युतिवारतोय-
चतुःसमुद्राभरणोपपन्ना ।
कृत्स्ना न वा स्यादिति निश्चयो मे
मूल्यं मही तस्य सुवर्णपूर्णा ॥
हीनोऽपि यत्तल्लभते कदाचित्-
विपाकयोगात्सुकृतस्य शुभस्य ।
सपत्नहीनां स महीं समग्रां
भुनक्ति तत्तिष्ठति यावदेव ॥
न केवलं तच्छुभकृन्नृपस्य
भाग्यैः प्रजानामपि तस्य जन्म ।
यद्योजनानां परितः सहस्रं
सर्व्वाननर्थान् विमुखीकरोति ॥
नक्षत्रमालेव दिवो विशीर्णा
दन्तावली तस्य महासुरस्य ।
विचित्रवर्णेषु विशुद्धवर्णा
पयःसु पत्युः पयसां पपात ॥
सम्पूर्णचन्द्रांशुकलापकान्ते-
र्मैत्रिप्रवेकस्य महागुणस्य ।
तच्छुक्तिमप्सु स्थितमापवीच-
मासन् पुराण्यन्यभवानि यानि ॥
यस्मिन् प्रदेशेऽम्बुनिधौ पपात
सुचारु मुक्तामणिरत्नबीजम् ।
तस्मिन् पयस्तोयधरावकीर्णे
शुक्तौ स्थितं मौक्तिकतामवाप ॥
सैंहलिकपारलौकिकसौरा-
ष्ट्रिकताम्रपर्णपारसवाः ।
कौवेरपाण्ड्यहाटक-
हैमका इत्याकराख्यष्टौ ॥
बह्वष्टं नातिनिकृष्टवर्णं
प्रमाणसंस्थानगुणप्रभाभिः ।

उत्पद्यते वर्द्धनपारसीक-
पातालकान्तरसिंहलेषु ॥
चिन्त्या न तस्याकरजा विशेषा
रूपे प्रमाणे च यतेत विद्वान् ।
न च व्यवस्थास्ति गुणागुणेषु
सर्व्वत्र सर्व्वाकृतयो वसन्ति ॥
एकस्य शुक्तिप्रभवस्य मुक्ता-
फलस्य शाणेन समुन्मितस्य ।
मूल्यं सहस्राणि तु रूपकाणां
त्रिभिः शतैरभ्यधिकानि पञ्च ॥
यन्माषकार्द्धेन ततो विहीनं
ततुपञ्चभागद्वयहीनमूल्यम् ।
यन्माषकांस्त्रीन् बिभृयात् सहस्रे
द्वे तस्य मूल्यं परमं प्रदिष्टम् ॥
यद्वाधिकौ द्वौ वहतोऽस्य मूल्यं
त्रिभिः शतैरभ्यधिकं सहस्रम् ।
द्विमाषकोन्मापिनगौरवस्य
शतानि चाष्टौ कथितानि मूल्यम् ॥
अर्द्धाधिकं माषकमुन्मितस्य
सपञ्चविंशत्रितयं शतानाम् ।
गुञ्जाश्च षड्धारयतः शते द्वे
मूल्यं परं तस्य वदन्ति तज्ज्ञाः ॥
अध्यर्द्धमुन्मापकतं शतं स्यात्
मूल्यं गुणैस्तस्य समन्वितस्य ।
यदि षोडशभिर्भवेद्धरणं
धरणं तत्प्रवदन्ति दाक्षिकाख्यम् ॥
अधिकं दशभिः शतञ्च मूल्यं
समवाप्नोत्यपि वालिशस्य हस्तात् ।
द्विगुणैर्दशभिर्भवेद्धरणं
धरणं तद्धवकं वदन्ति तज्ज्ञाः ॥
नवसप्ततिमाप्नुयात् स्वमूल्यं
यदि न स्याद्गुणसम्पदा विहीनम् ॥
त्रिंशता धरणं पूर्णं शिक्यं तस्येति कीर्त्त्यते ॥
चत्वारिंशद्भवेत्तस्याः परं मूल्यं विनिश्चयः ।
चत्वारिंशद्भवेच्छिक्यो विंशं मूल्यं लभेत सा ॥
षष्टिर्निकरशीर्षे स्यात्तस्य मूल्यं चतुर्दश ।
अशीतिर्नवतिश्चैव कूप्येति परिकीर्त्तिता ।
एकादश स्यान्नव च तयोर्मूल्यमनुक्रमात् ॥
आदाय तत् सकलमेव ततोऽम्लभाण्डे
जम्बीरजातरसयोजनया विपक्वम् ।
घृष्टं ततो मृदुतनूकृतपिण्डमूले:
कुर्य्याद्यथेष्टमनु मौक्तिकमाशु विद्धम् ॥
मत्स्योदरस्थपुटमध्यगतञ्च कृत्वा
पश्चात् पचेत्तदनु तच्च वितानपत्रा ।
दुग्धे ततः पयसि तं विपचेत् सुधायां
पक्वं ततोऽपि पयसा शुचि चिक्कणेन ॥
शुद्धं ततो विमलवस्त्रनिवर्षणेन
स्यान्मौक्तिकं विपुलसद्गुणकान्तियुक्तम् ।
व्याडिर्जगाद जगतां हि महाप्रभाव-
सिद्धो विदग्धहिततत्परया दयालुः ॥
श्वेतकाचमयं तारं हैमांशमतयोजितम् ।
रसमध्ये प्रधार्य्येत मौक्तिकं देहभूषणम् ॥

एवं हि सिंहले देशे कुर्वन्ति कुशला जनाः
यस्मिन् कृत्रिमसन्देहः क्वचिद्भवति मौक्तिके
उष्णे सलवणे स्नेहे निशां तद्वासयेज्जले ।
व्रीहिभिर्मर्द्दनीयं वा शुष्कवस्त्रोपवेष्टितम्
यत्तु नायाति वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥
सितं प्रमाणवत् स्निग्धं गुरु स्वच्छं सुनिर्म्मलं
तेजोऽधिकं सुवृत्तञ्च मौक्तिकं गुणवत् स्मृतं
प्रमाणवद्गौरवरश्मियुक्तं
सितं सुवृत्तं समसूक्ष्मवेधम् ।
अक्रेतुरप्यावहति प्रमोदं
यन्मौक्तिकं तद्गुणवत् प्रदिष्टम् ॥
एवं समस्तेन गुणोदयेन
यन्मौक्तिकं योगमुपागतं स्यात् ।
न तस्य भर्त्तारमनर्थजात
एकोऽपि कश्चित् समुपैति दोषः ॥"
इति गारुडे ६८ अध्यायः ॥

मुक्तामुक्तः, त्रि, (मुक्तश्च अमुक्तश्चेति विशेषण द्वन्द्वम् ।) क्षिप्ताक्षिप्तः । अस्य प्रयोगो शस्त्रे च प्रायो वर्त्तते । इति हलायुधः ॥

मुक्तालता, स्त्री, (मुक्ताभिर्लतेव ।) मुक्ताहा इति हेमचन्द्रः । ३ । ३२२ ॥

मुक्तावली, स्त्री, (मुक्तानां आवली च) हारः । इत्यमरः । २।६।१०५ ॥ (मुक्तावली ।) मौक्तिकश्रेणी च ॥ (तालविशेषः । सङ्गीतदामोदरे ।
"खत्रयं सविरामान्तं नौ पुनः खत्रयं तथा
द्रुतौ गः खयुगं गश्च यत्र मुक्तावली तु सा

मुक्तास्फोटः, पुं, (मुक्तानां स्फोटः विकाशो शुक्तिः । इत्यमरः । १ । १० । २३ ॥

मुक्तास्फोटा, स्त्री, (मुक्तास्फोट+टाप् ।) शु इति राजनिर्घण्टः ॥

मुक्तिः, स्त्री, (मुच्+भावे क्तिन् ।) आत्यन्तिकदुःखनिवृत्तिः । इति नैयायिकाः ॥ नित्यसुखावाप्तिः । इति वेदान्तिकाः । शरीरेन्द्रियात्मनो मुक्तत्वं मुक्तिः । इति भरतः ॥ मो तत्पर्य्यायः । कैवल्यम् २ निर्व्वाणम् ३ श्रेयः नि:श्रेयसम् ५ अमृतम् ६ मोक्षः ७ अपवर्गः इत्यमरः । १।५।६ ॥ अपुनर्भवः ९ स्थिरः अक्षरम् ११ । इति जटाधरः ॥ सा पञ्चविधा सार्ष्टिः१ सालोक्यम् २ सारूप्यम् ३ सायुज्यम् निर्व्वाणम् ५ । यथा,—
सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः
इति श्रीभागवतम्
"मुक्तिस्तु द्विविधा साध्वि! श्रुत्युक्ता सर्व्वसम्म
निर्व्वाणपददात्री च हरिभक्तिप्रदा नृणाम्
हरिभक्तिस्वरूपाञ्च मुक्तिं वाञ्छन्ति वैष्णव
अन्ये निर्व्वाणरूपाञ्च मुक्तिमिच्छन्ति साधव
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २२ अध्यायः ॥
मुक्तिकरयोगो यथा,—
"... साङ्गमहायोगं मुक्तिमुक्तिकरं परम्
सर्व्वपापप्रशमनं मत्स्यासुघटितं ...

निदानमिक्ष्वाकुकुलस्य सन्ततेः
सुदक्षिणा दौर्हृदलक्षणं दधौ ॥"
"कौमुद्याः मुखं प्रारम्भम् ।" इति तट्टीकायां मल्लिनाथः ।) उपायः ॥ सन्धिविशेषः ॥ (यथा, दशरूपके । १ । २३ ।
"मुखं बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥")
नाटकादेः शब्दः । इति मेदिनी । खे, ४ ॥ आद्यम् ॥ ( यथा, रामायणे । २ । ५० । ७ ।
"त्वचक्षुर्विषयं प्रायाद् यथार्कः क्षणदामुखे ॥")
प्रधानम् ॥ ( यथा, महाभारते । २ । ३८ । २७—२६ ।
"राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ।
नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखम् ॥
पर्व्वतानां मुखं मेरुर्गरुड़ः पततां मुखम् ।
सदेवकेषु लोकेषु भगवान् केशवो मुखम् ॥")
शब्दः । नाटकः । वेदः । इति शब्दरत्नावली ॥ (द्वारम् । यथा, रघुवंशे । ३ । २८ ।
"लिपेर्यथावद्ग्रहणेन वाङ्मयं
नदीमुखेनेव समुद्रमाविशत् ॥"
"नद्या मुखं द्वारम् । मुखन्तु वदने मुख्यारम्भे द्वाराभ्युपाययोरिति यादवः ।" इति तट्टीकायां मल्लिनाथः ॥ अग्रभागः । यथा, हठयोगप्रदीपिकायाम् । ३ । ५ ।
"तस्मात् सर्व्वप्रयत्नेन प्रबोधयितुमीश्वराम् ।
ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासं समाचरेत् ॥")
मुखः, पुं, वृत्तुः । यथा,—
'लकुचो लिकुचो गुप्तः खगवक्त्रो मुखो वृत्तुः ।'
इति शब्दचन्द्रिका ॥
मुखगन्धकः, पुं, ( मुखे गन्धः अस्मात् । कप् । ) पलाण्डुः । इति राजनिर्घण्टः ॥
मुखघण्टा, स्त्री, (मुखे घण्टेव शब्दसादृश्यात् ।) हुलहुलीध्वनिः । इति त्रिकाण्डशेषः ॥
मुखचीरी, स्त्री, (मुखस्य चीरं वस्त्रविशेष इव । मुखचीर+स्वार्थे ङीष् । ) जिह्वा । इति शब्दमाला ॥
मुखजः, पुं, (मुखात् जायते इति । जन्+डः । ) ब्राह्मणः । इति पुराणम् ॥ वक्त्रजाते त्रि ॥
मुखतीयं, त्रि, ( मुखस्य इति । मुख+तसिल् । मुखतः । ततः "मुखपार्श्वशब्दाभ्यां तसन्ताभ्यामीयप्रत्ययो वक्तव्यः ।" ४।३।६०। इत्यस्य वार्त्तिकोक्त्या ईयः । "मुखपार्श्वतसोर्लोपश्च ।" ३।२।१३८। इत्यत्र काशिकोक्तेश्च टिलोपः ।) मुखसम्बन्धि । इति सिद्धान्तकौमुदी ॥
मुखदूषणः, पुं, ( मुखं दूष्यते अनेनेति । दुष्+णिच्+करणे ल्युट् । ) पलाण्डुः । इति राजनिर्घण्टः ॥
मुखदूषिका, स्त्री, ( मुखं दूषयति विवर्णं करोतीति । दुष+णिच+ण्वुल् टाप् अत इत्वञ्च।) मुखजातक्षुद्ररोगविशेषः । वयस्फोड़ा इति भाषा । तल्लक्षणमाह ।
"शाल्मलीकण्टकप्रख्याः कफमारुतपित्तजाः ।
जायन्ते पिड़का यूनां ज्ञेयास्ता मुखदूषिकाः ॥"
प्रख्याः सदृश्यः । एता यूनामेव मुखे भवन्ति स्वभावात् ॥ * ॥ अथ तच्चिकित्सा ।
"अङ्गुलस्य चतुर्थांशो मुखे लेपः कनिष्ठकः ।
मध्यमस्तु त्रिभागः स्यादुत्तमोर्द्धाङ्गुलो भवेत् ॥
स्थितिकालोऽपि तस्योक्तो यावत् कल्को न शुष्यति ।
शुष्कस्तु गुणहीनः स्यात्तथा दूषयति त्वचम् ॥"
मुखलेपमाह ।
"लोध्रधान्यवचालेपस्तारुण्यपिड़कापहः ।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनम् ॥
सिद्धार्थकवचालोध्रैः सैन्धवैश्च प्रलेपनम् ।
वमनञ्च निहन्त्याशु पिड़कां यौवनोद्भवाम् ॥
केवलाः पयसा पिष्टास्तीक्ष्णाः शाल्मलिकण्टकाः ।
आलिप्तं त्र्यहमेतेन भवेत् पद्मोपमं मुखम् ॥"
इति भावप्रकाशः ॥
मुखधावनं, क्ली, ( मुखस्य धावनं । धावु गतौ शुद्धौ च+ल्युट् ।) आस्यप्रक्षालनम् । मुखधोया इति भाषा । यथा, भावप्रकाशे ।
"पटोलनिम्बजम्बाम्रमालतीनवपल्लवैः ।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥"
मुखधौता, स्त्री, ( मुखं धौतं मार्ज्जितमनेनेति । धाव्+कर्म्मणि+क्तः स्त्रियां टाप् । ) ब्राह्मणयष्टिका । इति शब्दचन्द्रिका ॥
मुखनिवासिनी, स्त्री, ( मुखे निवसति या सा । नि+वस्+णिनिः स्त्रियां ङीप् । वाणीरूपत्वादस्यास्तथात्वम् । ) सरस्वती । इति केचित् ॥
मुखनिरीक्षकः, पुं, (मुखं निरीक्षते इति । निर्+ईक्ष्+ण्वुल् । उद्योगं विहायान्यमुखापेक्षितेनावस्थानादस्य तथात्वम् । ) अलसः । इति शब्दरत्नावली ॥
मुखपूरणं, क्ली, ( मुखं पूर्य्यते अनेनेति । पूर्+करणे ल्युट् । ) गण्डूषः । इति वैद्यकम् ॥
मुखप्रियः, पुं, ( मुखस्य प्रियः । ) नारङ्गः । इति भावप्रकाशः ॥ वक्त्ररोचके, त्रि ॥ ( यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये ।
"मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशकः ।")
मुखभूषणं, क्ली, ( मुखं भूषयति रक्तिम्नालङ्करोतीति । भूष्+णिच्+ल्युः । ) ताम्बूलम् । इति वैद्यकम् ॥
मुखमण्डनकः, पुं, (मुखं मण्डयति भूषयतीति । मड़ि+ल्युः स्वार्थे कन् ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥ आस्यभूषके, त्रि । ( मुखमण्डनमप्यत्र ॥ )
मुखमोदः, पुं, ( मुखस्य मोदः हर्षः अस्मात् । ) शोभाञ्जनः । इति राजनिर्घण्टः ॥
मुखयन्त्रणं, क्ली, ( मुखं अश्वादीनां यन्त्र्यते सङ्कोच्यते येनेति यन्त्रि सङ्कोचने+करणे ल्युट् । ) कविका । यथा,
"कवी खलीनं ...वका कवियं मुखयन्त्रणम् ।"
इति हेमचन्द्रः । ४ । ३१६ ॥
मुखरः, त्रि, ( मुखं अस्यास्तीति । मुख+"ऊषसुषिमुष्कमधो रः ।" ५ । २ । १०७ । इत्यत्र "रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ।" इति काशिकोक्त्या सर्व्वस्मिन् वक्तव्ये रः । "निन्दितं मुखमस्यास्तीति रः ।" इत्यमरटीका ।) अप्रियवादी । तत्पर्य्यायः । दुर्मुखः २ अबद्धमुखः ३ । इत्यमरः । ३ । १ । ३६ ॥ ( यथा,—
"एका भार्य्या प्रकृतिमुखरा चञ्चला च द्वितीया ।"
इत्युद्भटः ॥
शब्दायमानः । यथा, मृच्छकटिकनाटके १ अङ्के ।
"त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं
गन्धश्च भीरु ! मुखराणि च नूपुराणि ॥"
अग्रयायी । यथा, हितोपदेशे ।
"यदि कार्य्ये विपत्तिः स्यान् मुखरस्तत्र हन्यते ॥")
मुखरः, पुं, (मुख+रः ।) काकः । शङ्खः । इति राजनिर्घण्टः ॥
मुखरोगः, पुं, (मुखस्य रोगः ।) वक्त्रामयः । (यथा, मार्कण्डेये । १५ । ३५ ।
"पङ्गुर्वो वधिरः कुष्ठी यक्ष्मणा च प्रपीड़ितः ।
मुखरोगाक्षिरोगैश्च गुदरोगैश्च बाध्यते ॥")
तत्र मुखस्य स्वरूपमाह ।
"ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च ।
गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते ॥"
अथ मुखरोगाणां संख्यामाह ।
'स्युरष्टावोष्ठयोर्दन्तमूले तु दश षट् तथा ।
दन्तेष्वष्टौ रसनायां पञ्च स्युर्नव तालुनि ॥
कण्ठे त्वष्टादश प्रोक्तास्त्रयः सर्व्वसराः स्मृताः ।
एवं मुखामयाः सर्व्वे सप्तषष्टिर्मता बुधैः ॥'
मुखरोगाणां निदानान्याह ।
'अनूपपिशितक्षीरदधिमाषादिसेवनात् ।
मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषाः कफोत्तराः ।
तत्रौष्ठरोगाः ।
तेषां निदानपूर्व्विकां संख्याञ्चाह ।
'पृथग्दोषैः समस्तैश्च रक्तजो मांसजस्तथा ।
मेदोजश्चाभिघातोत्थ एवमष्टौष्ठजा गदाः ॥'
तत्र वातिकस्य लक्षणमाह ।
'कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ ।
दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः ॥'
परुषौ रूक्षौ । दाल्येते विदार्य्येते । परिपाट्येते किञ्चिद्विदीर्णत्वचौ क्रियेते ॥ पैत्तिकमाह ।
'चीयेते पिड़काभिस्तु सरुजाभिः समन्ततः ।
सदाहपाकपिड़कौ पीताभासौ च पित्ततः ॥'
श्लैष्मिकमाह ।
'सवर्णाभिस्तु चीयेते पिड़काभिरवेदनौ ।
कण्डूमन्तौ कफादोष्ठौ पिच्छिलौ शीतलौ गुरू ॥'
सान्निपातिकमाह ।
'सकृत् कृष्णौ सकृत् पीतौ सकृत् श्वे...
सन्निपातेन वि... व...

मुग्धः, त्रि, (मुह् + कर्त्तरि क्तः ।) मूढ़ः । ( यथा, ऋग्वेदे । ५ । ४० । ५ ।
"अक्षेत्रविद् यथा मुग्धो भुवनान्यदीधयुः ॥")
सुन्दरः । इति विश्वः ॥ ( यथा, मेघदूते । १४ ।
"दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ॥")

मुग्धबोधं, क्ली, ( मुग्धः सुन्दरः बोधः ज्ञानं पदपदार्थानां भवत्यस्मात् । यद्वा, मुग्धान् मूढ़ान् अल्पबुद्धीन् जनान् बोधयतीति । मुग्धबोधम् । इति दुर्गादासः । मुग्ध + बुध + "कर्म्मण्यण् । ३ । २ । १ । इति अण् ।) वोपदेवकृतव्याकरणविशेषः । यथास्याद्यश्लोकः ।
"मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥"

मुग्धा, स्त्री, (मुग्ध + टाप् ।) नायिकाविशेषः । ( सा च नायिका स्वीयापरकीयाभेदेन द्विविधा ।) तत्र स्वीयापि त्रिविधा । मुग्धा मध्या प्रगल्भा च । तत्राङ्कुरितयौवना मुग्धा । सा च ज्ञातयौवना अज्ञातयौवना च । सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढ़ा । सैव जातप्रश्रया विश्रब्धनवोढ़ा । अस्याश्चेष्टा क्रिया मनोहरा । कोपे मार्द्दवं नवविभूषणे समीहा च ॥ मुग्धा यथा ।
"आयातं किल कामदेवधरणीपालेन काले शुभे वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः ।
दृष्या खञ्जनचातुरी मुखरुचा बौधाकरी माधुरी
वाचा किञ्च सुधासमुद्रलहरी लावण्यमामन्त्रते ॥"*॥
अज्ञातयौवना यथा,—
"नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्ताश्रान्ति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥"
ज्ञातयौवना यथा,—
"स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः ।
नखेन कस्य धन्यस्य चन्द्रचूड़ो भविष्यति ॥"
नवोढ़ा यथा,—
"हस्ते धृतापि शयने विनिवेशितापि
क्रोड़े कृतापि यतते बहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥"
द्वितीया यथा,—
"बलान्नीता पार्श्वं मुखमगुमुखं नैव कुरुते
धुनाना मूर्द्धानं क्षिपति वदनं चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्ताप्यति च ॥"
विश्रब्धनवोढ़ा यथा,—
"दरमुकुलितनेत्रपालिनीवी-
नियमितबाहुकृतोरुयुग्मबन्धम् ।
करकलितकुचस्थलं नवोढ़ा
स्वपिति समीपमुपेत्य कस्य यूनः ॥"
इति रसमञ्जरी ॥

मुच इ ङ } कल्कने । दम्भे । शाठ्ये । इति कवि-
मुच ङ } कल्पद्रुमः ॥ ( भ्वा०-आत्म०-अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ मुञ्चते । ङ मुचते ङ मोचते । इति दुर्गादासः ॥

मुच ऌ श प ञ औ मोचे । इति कविकल्पद्रुमः ॥ ( तुदा०-उभ०-सक०-बन्धनरहितीभावे अक०-अनिट् ।) मोचस्त्यागः । ऌ अमुचत् । श प ञ मुञ्चति मुञ्चते धनं दाता । बन्धनरहितीभावे अकर्म्मकोऽयम् । आलानान्मुक्तो गजः कर्त्तरि क्तः । एवं पापान्मुक्त इत्यादौ पापबन्धनान्मुक्त इत्यर्थः । इति दुर्गादासः ॥

मुच क मोचे । इति कविकल्पद्रुमः ॥ ( चुरा०-पर० सक०-सेट् ।) क मोचयति । मोचस्त्यागः । इति दुर्गादासः ॥

मुचिरः, त्रि, ( मुञ्चति धनादिकं ददातीति । मुच् + "इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचीति ।" उणा० १ । ५२ । इति किरच् । ) दाता । इति त्रिकाण्डशेषः ॥

मुचिरः, पुं, ( मुच् + किरच् । ) धर्म्मः । वायुः । देवता । इति संक्षिप्तसारोणादिवृत्तिः ॥

मुचुकुन्दः, पुं, ( मुच् + बाहुलकात् कुः । मुचुः कुन्द इवेति । राजदन्तादित्वात् पूर्व्वनिपातः ।) पुष्पवृक्षविशेषः । मेकचन्द इति हिन्दी भाषा । ( यथा, राजेन्द्रकर्णपूरे । १० ।
"आनन्दं मुचुकुन्दकन्दलि ! भज स्वस्यासि वासन्तिके ! ।")
तत्पर्य्यायः । छत्रवृक्षः २ चित्रकः ३ प्रतिविष्णुकः ४ । इति भावप्रकाशः ॥ बहुपुत्त्रः ५ सुदलः ६ हरिवल्लभः ७ सुपुष्पः ८ अर्घार्हः ९ लघयकः १० रक्तप्रसवः ११ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । कफवातनाशित्वम् । कण्ठकरत्वम् । त्वग्दोषशोफशमनत्वम् । जीर्णज्वरविनाशनत्वञ्च । इति राजनिर्घण्टः ॥ शिरःपीड़ापित्तास्रविषनाशित्वम् । इति भावप्रकाशः ॥ * ॥ मान्धातृराजपुत्त्रः । इति श्रीभागवतम् । ९ । ७ । ३८ । (यथा च देवीभागवते । ७ । १० । ४ ।
"तस्यासुतमादयामास मान्धाता द्वौ सुतौ नृप ! । पुरुकुत्सं सुविख्यातं मुचुकुन्दं तथापरम् ॥")

मुचुटी, स्त्री, अङ्गुलिमोटनम् । आङ्गुलमट्कान इति भाषा । यथा,—
"मुचुटी चुकुटी चैव भवेदङ्गुलिमोटने ।"
इति शब्दरत्नावली ॥
मुष्टिः । मुठा इति भाषा । यथा,—
"सम्पिण्डिताङ्गुलिःपाणिर्मुष्टिर्मुस्तु मुचुट्यपि ।"
इति हेमचन्द्रः । [illegible] ॥

मुज इ क } मार्ज्जनध्वन्योः । इति कविकल्पद्रुमः ॥
मुज क } ( चुरा०-पर०-मार्ज्जने सक०-ध्वनौ अक०-सेट् । ) द्वौ पञ्चमस्वरिणौ । इ क मुञ्जयति । क मोजयति । इति दुर्गादासः ॥

मुञ्चकः, पुं, ( मुचिङ + ण्वुल् । ) मुष्ककवृक्षः । इति राजनिर्घण्टः ॥

मुञ्जः, पुं, (मुञ्ज्यते ध्वन्यते अनेन । मुञ्ज + करणे अच् ।) तृणविशेषः । मूँज इति भाषा ॥ ( यथा, पञ्चदश्याम् । १ । ४२ ।
"यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥")
तत्पर्य्यायः । मौञ्जीतृणाख्यः २ ब्राह्मण्यः ३ तेजनाह्वयः ४ बाणीरकः ५ मुञ्जनकः ६ शरी ७ दर्भाह्वयः ८ दूरमूलः ९ दृढ़तृणः १० दृढ़मूलः ११ बहुप्रजः १२ रञ्जनः १३ शत्रुभङ्गः १४ । अस्य गुणाः । मधुरत्वम् । शीतत्वम् । कफपित्तजदोषनाशित्वम् । ग्रहरक्षासु दीक्षासु च पावनत्वम् । भूतनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"मुञ्जो मुञ्जातको बाणः स्थूलदर्भः सुमेधसः ।
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ॥
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् ।
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥"
इति भावप्रकाशः ॥
शरः । इति रत्नमाला । उपनयनकाले मुञ्जमेखलाधारणविधिर्यथा । अथैनं माणवकमाचार्य्यस्त्रिःप्रदक्षिणं त्रिवृतं मुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति । इति भवदेवभट्टः ॥

मुञ्जकेशी, [ न् ] पुं, ( मुञ्जा इव केशाः सन्त्यस्य । इनिः ।) विष्णुः । इति हेमचन्द्रः । २ । १३१ ॥

मुञ्जरं, क्ली, ( मुञ्ज्यते प्रक्षाल्यते इति । मुञ्ज + बाहुलकात् अरन् ।) शालूकम् । इति शब्दमाला ॥

मुञ्जातकः, पुं, ( मुञ्जं अतति तत्सादृश्यं प्राप्नोतीति । अत + अच् । ततः स्वार्थे कन् ।) पुष्पशाकभेदः । अस्य गुणाः । परं स्वादुत्वम् । वृष्यत्वम् । पित्तानिलापहत्वञ्च । इति राजवल्लभः ॥ (यथा, सुश्रुते सूत्रस्थाने ३९ अध्याये ।
"हस्तिकर्णमुञ्जातकलामज्जकप्रभृतीनि ।")

मुट इ मर्द्दे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) पञ्चमस्वरी । इ मुण्ट्यते । मर्द्दो मर्द्दनम् । इति दुर्गादासः ॥

मुट कि चुर्दि । इति कविकल्पद्रुमः ॥ ( चुरा० पक्षे भ्वा०-सक०-सेट् । ) चुर्दि चूर्णीकरणे । कि मोटयति तण्डुलं शिला । यस्तु दुर्गञ्च मोटतीति हलायुधः ॥

मुट शि आक्षेपे च । इति कविकल्पद्रुमः ॥ ( तुदा०-पर०-सक०-सेट् । ) पवर्गशेषादिः । शि मुटति अमुटीत् मुमोट । चकारात् चुर्दि च । मुटति द्विषां दर्पं य इति हलायुधः । इति दुर्गादासः ॥

लावणा मधुरा स्निग्धा शीताश्चैव रसा हिताः ।
मुखपाक शिराकर्म शिर कायविरेचनम् ।
मूत्रतैलघृतक्षीरैश्च कवलग्रह ॥
सपीलुश्चित्रफलापाठा स्वदोकाजातिपल्लवा ।
कषायतिक्तका शीता काथाश्च मुखधावना ।
तुलां खदिरसारस्य द्विगुणामरिमेदस ॥
प्रक्षाल्य जर्जरीकृत्य चतुर्द्रोणेऽम्भस पचेत् ।
द्रोणशेष कषायन्तु पूत्वा भूय पचेच्छनै ॥
तास्मिन् घनीभूते चूर्णीकृत्यार्द्धभागिकम् ।
चन्दन पद्मकोशीर मञ्जिष्ठा धातकी घनम् ॥
प्रपुण्डरीक यष्ट्याह्वत्वगेलापत्रकेशरम् ।
लाक्षा रसाञ्जन मांसी त्रिफला लोध्रवालकम् ॥
रजन्यौ फलिनीमेला समङ्गा कट्फल वचाम् ।
यवासमगुरुपत्तङ्गौ रेकाञ्जनमात्रया
लवङ्गनखकक्कोलजातिकोशान् पलोन्मितान् ।
कर्पूरकुडवञ्चापि पुन शीतेऽवतारिते ॥
ततस्तु गुलिका कार्या शुष्काश्चास्येन धार

येत ।

तैलपाने कल्केन कषायेण च साधयेत ॥
दन्तनाशचलनभग्नशोषिविध्रमिरोगनुत् ।
मुखपाकास्यशोथाश्च यारोचकनाशनम् ॥
शालोपालपलिच्छिल्यवैस्वर्य्यगलरोगनुत् ।
दन्तास्यगलरोगेषु सर्व्वेषा तत्परायणम् ॥'
इति खदिरादिगुटिकातैलञ्च । इति मुख
रोगचिकित्सा । इति चरक चिकित्सास्थान
२६ अध्याय ।)

मुखलाङ्गल पु (मुख लाङ्गलमिव भूविदारक
मस्य ।) सूकर । इति जटाधर ॥

मुखबन्धन क्ली (मुख प्रारम्भविषय तस्य बन्धन
मग्रथनमिव ।) ग्रन्थारम्भे तत्र वक्तव्यकथनम् ।
तस्य नामान्तरम् । अनुक्रमणिका । भूमिका ।
इति छन्दोमञ्जर्य्या मुखबन्धनाख्यप्रथमस्तवक ।
इति तद्ग्रन्थकभुगङ्गाशामवेदेन लिखितम् ॥

मुखवल्लभ पु (मुखस्य वल्लभ प्रीतिकर ।)
दाडिमवृक्ष । इति शब्दमाला । मुखप्रिये त्रि ।

मुखवाचिका स्त्री (मुख वाचयति शोधयतीति ।
वच + णिच + ण्वुल + स्त्रियां टाप् । अत
इत्व च ।) अम्लिका । इति राजनिर्घण्ट ॥

मुखवाद्य, क्ली (मुखेन वाद्यम् ।) वक्त्रनालवाद्यम् ।
वाक इति भाषा । इति त्रिकाण्डशेष ।
मुखस्य मुखेन च वाद्यञ्च । शिवपूजान्ते यम्
इति प्रसिद्धेन गालवाद्यम् । यथा —
"लिङ्ग निर्म्माय विधिवत् विधिवत पूजयेच्च तम् ।
वषट्कार जपित्वा वै मुखवाद्य शुचिस्मिते ॥
इति लिङ्गार्च्चनतन्त्रे १५ पटल ॥
अपि च ।
"मुखवाद्य मनुष्य हि कृत्वा तु परमेश्वरि ।
मातृकामन्त्रसहित मुखवाद्य सुदुर्ल्लभम् ॥
अकारादिक्षकारान्तमनुलोमविलोमत ।
पठित्वा परमेशानि । मुखवाद्य शुचिस्मिते ॥
ओंबिन्दु समनुच्चार्य्य पश्चाद्वक्ष्याम्यहं प्रिये ।
अनुलोमविलोमेन सर्व्वञ्च वरानने ॥
अनेनैव विधानेन मुखवाद्य करोति य ।
स सिद्ध सगण सोऽपि स शिवो नात्र सशय ।
मृत्युञ्जयोऽह देवेशि मुखवाद्यप्रभावत ॥
यस्मिन् काले महेशानि असुरो बलवान् भवेत् ।
तस्मिन् काले महेशानि । मुखवाद्य करोम्यहम् ॥
तत श्रुत्वा परमेशानि । असुरा राक्षसाश्च ये
पलायन्ते महेशानि । ततश्श्रुत्वा परमेश्वर ॥
ये नरा भुवि तिष्ठन्ति मुखवाद्य विना प्रिये ।
स सर्व्वयातनाभोगी अन्ते कुम्भीरतां व्रजेत् ॥
इति च लिङ्गार्च्चनतन्त्रे ८ पटल ॥

मुखवास पु (मुखस्य वास सौरभ्यमस्मात् ।)
गन्धतृणम् । इति राजनिर्घण्ट ॥

मुखवासन पु (मुख वासयतीति । वस +
णिच + ल्यु ।) मुखसद्गन्धकारकद्रव्यम् । तत
पर्य्याय । आमोद २ । इत्यमर ।१।५।१२। टी
मुखवासनवटिकादौ आमोदयुक्त कर्पूरादि
रामोदी इत्। मुख वासयति मुखवासन
तन्त्यादित्वात् । नानाद्रव्यरचित एकैकश
एव वा कर्पूरादिभिर्मुख पर्य्योग्यमुखवासनवटि
रामोदीति सर्व्वस्वम् । शुभवासन इति पाठे
शुभ मनोहर वासन वासो यस्य कर्प्पूरादे स
आमोदीत्याहुरिति सुभूति । क्षीरस्वामिना तु
समाकर्षादि चतुष्टयेन इष्टगन्धादिचतुष्टयेन च
पर्य्यायद्वयमाख्यातम् । शब्दार्णव तु ।
'कस्तूरिकायामामोद कर्पूरे मुखवासन ।
बकुल स्यात परिमलश्चम्पक सुरभिस्तथा ।
गन्धा द्विषष्टिरप्येते गुणितस्ते त्रिलिङ्गका ॥'
इति भरत ॥

मुखविलुण्ठिका, स्त्री (मुखेन विलुण्ठयतीति ।
लुण्ठ + णिच ण्वुल । स्त्रियां टाप् । अत इत्व
च ।) छागी । इति शब्दरत्नावली ॥

मुखविष्ठा स्त्री, (मुखे विष्ठा मलमस्या ।)
तैलपायिका । यथा —
'वल्गुलिका मुखविष्ठा परोष्णी तैलपायिका ।"
इति हेमचन्द्र ॥

मुखशफ पुं (मुख शफ क्षुर इव तीक्ष्णमस्य ।)
दुर्म्मुख । इति शब्दमाला ॥

मुखशुद्धि स्त्री (मुखस्य शुद्धि ।) वक्त्रशोधनम् ।
यथा, आह्निकतत्त्वे ।
'अभावे दन्तकाष्ठानां प्रतिषिद्धदिने तथा ।
अपां द्वादशगण्डूषैर्मुखशुद्धि विधीयते ॥"

मुखशोधन क्ली (मुखस्य शोधनम् ।) त्वचम् ।
इति राजनिर्घण्ट ॥

मुखशोधन पुं (मुख शोधयत्यनेनेति । शुध + णिच
+ करणे ल्युट ।) कटुरस । इति हेमचन्द्र ॥

मुखशोधी, [न्] पु, (मुख शोधयतीति । शुध +
णिच + णिनि ।) जम्बीर । इति राजनिर्घण्ट ॥
(गुणादयोऽस्य जम्बीरशब्दे ज्ञातव्या ॥)

मुखषील, त्रि (मुख षीवति निरस्यति विकृतं
करोतीति भाव । षीव + इगुपधत्वात् क
पृषोदरादित्वात् वस्य लत्वम् ।) दुर्मुख । इति
शब्दमाला ॥

मुखसम्भव पु (मुखात् सम्भव उत्पत्तिरस्य ।)
ब्राह्मण । इति हेमचन्द्र ।३।४७६॥

मुखसुर, क्ली, (मुखस्य सुरा इति विभाषा
सेनासुराच्छायाशालानिशानाम् ।२।४।२५।
इति षष्ठीसमास सुराशब्दस्य क्लीबत्वम् ।)
तालसुरा । इति त्रिकाण्डशेष । ताडी इति
भाषा ॥

मुखस्राव पु, (स्रु भावे + घञ । मुखात् स्राव
पतनमस्य ।) लाला । इति राजनिर्घण्ट ॥

मुखाग्नि, पु (मुख मुख्योऽग्नि ।) दावाग्नि ।
यथा —
'हेमकलिर्दंष्ट्रीचाथ स्तम्भ स्याद्दावानल ।
मुखोल्का भूतमध्यारी मुखाग्निर्दवसर ॥"
इति शब्दमाला ॥
शवमुखे दत्तवह्नि । इति लोके । शास्त्रे तु
शिर स्थाने । यथा,—
'दक्षाशाभिमुखा सर्व्वे गृहीत्वा तु हुत
शनम् ।
गृहीत्वा पाणिना चैव मन्त्रमेतदुदीरयेत् ॥
कृत्वा तु दुष्कृत कर्म्म जानता वाप्यजानता ।
मृत्युकालवश प्राप्य नर पञ्चत्वमागतम् ॥
धर्म्माधर्म्मसमायुक्त लोभमोहसमावृतम् ।
दहेय सर्व्वगात्राणि दिव्यान् लोकान् स
गच्छतु ॥
एवमुक्त्वा तत शीघ्र कृत्वा चैव प्रदक्षिणम् ।
ज्वलमान तथा वह्नि शिर स्थाने प्रदापयेत् ॥
चातुर्व्वर्ण्येषु संस्थानमेव भवति पुत्रिके ॥'
इति शुद्धितत्त्वम् ॥

मुखामय, पु (मुखस्यामय ।) मुखरोग । इति
राजनिर्घण्ट ॥

मुखार्जक, पु, व्यर्जक । इति राजनिर्घण्ट ॥

मुखाश्व पु, (मुख अश्वमिवास्य ।) कर्कट ।
इति त्रिकाण्डशेष ॥

मुखोल्का, स्त्री (मुखे उल्केव यस्या ।) दावा
नल । इति शब्दमाला ॥

मुख्य पुं प्रथम कल्प । इत्यमर ।२।७।३०।
यागादिषु शास्त्रोक्त प्रथम कल्पो मुख्य
स्यात् । यथा, व्रीहिभिर्यजेतेत्यादिना उत्सर्ग
स्यात् मुखमिव मुख्य विकारश्चेत्यादिना
इवार्थे य । इति तट्टीकायां भरत ॥

मुख्य त्रि, श्रेष्ठ । इत्यमर ।३।१।५७।
(तथास्य पर्य्याय ।
"प्रधानमुत्तम रम्य श्रेष्ठ मुख्यमनुत्तमम् ।
वर वरेण्य प्रमुख पराद्ध्य प्रवरन्तथा ॥"
इति वैद्यकरत्नमालायाम् ॥
यथा, भागवते । ७।२५।३६।
"मुख्यानामपुरस्ताद्वाक्यतयाधमचूडूदवो ॥")

मुख्यसर्ग, पुं (मुख्यानां सर्ग इति ।) स्थावर
सृष्टि । यथा —
"मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावरा स्मृता ॥"
इति वराहपुराणम् ॥

मुगूह, पुं, लावकपक्षी । इति भूरिप्रयोग ॥

मुग्धः, त्रि, (मुह् + कर्त्तरि क्तः ।) मूढः । (यथा, ऋग्वेदे । ५ । ४० । ५ ।
"अक्षेत्रविद् यथा मुग्धो भुवनान्यदीधयुः ॥")
सुन्दरः । इति विश्वः ॥ (यथा, मेघदूते । १४ ।
"दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ॥")

मुग्धबोधं, क्ली, (मुग्धः सुन्दरः बोधः ज्ञानं पदपदार्थानां भवत्यस्मात् । यद्वा, मुग्धान् मूढान् अल्पबुद्धीन् जनान् बोधयतीति । मुग्धबोधम् । इति दुर्गादासः । मुग्ध + बुध् + "कर्म्मण्यण् । ३ । २ । १ । इति अण् ।) बोपदेवकृतव्याकरणविशेषः । यथास्यान्त्यश्लोकः ।
"मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥"

मुग्धा, स्त्री, (मुग्ध + टाप् ।) नायिकाविशेषः । (सा च नायिका स्वीयापरकीयाभेदेन द्विविधा ।) तत्र स्वीयापि त्रिविधा । मुग्धा मध्या प्रगल्भा च । तत्राङ्कुरितयौवना मुग्धा । सा च ज्ञातयौवना अज्ञातयौवना च । सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढ़ा । सैव जातप्रश्रया विस्रब्धनवोढ़ा । अस्याश्चेष्टा क्रिया मनोहरा । कोपे मार्द्दवं नवविभूषणे समीहा च ॥ मुग्धा यथा ।
"आत्मनं किल कामदेवधरणीपालेन काले शुभे वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः ।
दृष्टा खञ्जनचातुरी मुखरुचा सौधाकरी माधुरी
वाचा किञ्च सुधासमुद्रलहरी लावण्यमामन्त्र्यते ॥"*॥
अज्ञातयौवना यथा,—
"नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
आश्रमाज्जाति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥"
ज्ञातयौवना यथा,—
"स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः ।
नखेन कस्य धन्यस्य चन्द्रचूड़ो भविष्यति ॥"
नवोढ़ा यथा,—
"हस्ते धृतापि शयने विनिवेशितापि
क्रोड़े कृतापि यतते बहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥"
द्वितीया यथा,—
"बलान्नीता पार्श्वं मुखमनुमुखं नैव कुरुते
धुनाना मूर्द्धानं क्षिपति वदनं चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्तापयति च ॥"
विस्रब्धनवोढ़ा यथा,—

"दृशनुकुलितनेत्रपालिनीवीनियमितबाहुकृतोरुयुगबन्धम् ।
करकलितकुचाम्बरं नवोढ़ा
स्वपिति समीपमुपेत्य कस्य यूनः ॥"
इति रसमञ्जरी ॥

मुच इ ड } कल्कने । दम्भे । शाठ्ये । इति कवि-
मुच ङ } कल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ मुञ्चते । ड मुचते ङ मोचते । इति दुर्गादासः ॥

मुच ऌ श प ञ औ मोक्षे । इति कविकल्पद्रुमः ॥ (तुदा०-उभ०-सक०-बन्धनरहितीभावे अक०-अनिट् ।) मोक्षस्त्यागः । ऌ अमुचत् । श प ञ मुञ्चति मुञ्चते धनं दाता । बन्धनरहितीभावे अकर्म्मकोऽयम् । आलानान्मुक्तो गजः कर्त्तरि क्तः । एवं पापान्मुक्त इत्यादौ पापबन्धनान्मुक्त इत्यर्थः । इति दुर्गादासः ॥

मुच क मोक्षे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क मोचयति । मोक्षस्त्यागः । इति दुर्गादासः ॥

मुचिरः, त्रि, (मुञ्चति धनादिकं ददातीति । मुच् + "इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचीति ।" उणा० १ । ५२ । इति किरच् ।) दाता । इति त्रिकाण्डशेषः ॥

मुचिरः, पुं, (मुच् + किरच् ।) धर्म्मः । वायुः । देवता । इति संक्षिप्तसारोणादिवृत्तिः ॥

मुचुकुन्दः, पुं, (मुच् + बाहुलकात् कुः । मुचुः कुन्द इवेति । राजदन्तादित्वात् पूर्व्वनिपातः ।) पुष्पवृक्षविशेषः । मेकचन्द इति हिन्दी भाषा । (यथा, राजेन्द्रकर्णपूरे । १० ।
"आनन्दं मुचुकुन्दकन्दलि ! भज स्वस्यासि वासन्तिके ! ।")
तत्पर्य्यायः । छत्रवृक्षः २ चित्रकः ३ प्रतिविष्णुकः ४ । इति भावप्रकाशः ॥ बहुपुष्पः ५ सुदलः ६ हरिवल्लभः ७ सुपुष्पः ८ अर्घ्यार्हः ९ लक्ष्मणकः १० रक्तप्रसवः ११ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । कफवातनाशित्वम् । कण्ठकरत्वम् । त्वग्दोषशोफशमनत्वम् । जीर्णज्वरविनाशनत्वञ्च । इति राजनिर्घण्टः ॥ शिरःपीड़ापित्तास्रविषनाशित्वम् । इति भावप्रकाशः ॥ * ॥ मान्धातृराजपुत्त्रः । इति श्रीभागवतम् । ९ । ७ । ३८ ।
(यथा च देवीभागवते । ७ । १० । ४ ।
"तस्यामुत्पादयामास मान्धाता द्वौ सुतौ नृप ! ।
पुरुकुत्सं सुविख्यातं मुचुकुन्दं तथापरम् ॥")

मुचुटी, स्त्री, अङ्गुलिमोटनम् । आङ्गुलमट्‌कान इति भाषा । यथा,—
"मुचुटी सङ्कुटी चैव भवेदङ्गुलिमोटने ।"
इति शब्दरत्नावली ॥
मुष्टिः । मुठा इति भाषा । यथा,—
"सम्पिण्डिताङ्गुलिःपाणिर्मुष्टिर्मुस्तु मुचुट्यपि ।"
इति हेमचन्द्रः । ३ । २६१ ॥

मुज इ क } ध्वनौ । इति कविकल्पद्रुमः ॥
मुज क } (चुरा०-पर०-मार्ज्जने सक०-ध्वनौ अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ क मुञ्जयति । क मोजयति । इति दुर्गादासः ॥

मुञ्चकः, पुं, (मुञ्चिति + ण्वुल् ।) मुष्ककवृक्षः । इति राजनिर्घण्टः ॥

मुञ्जः, पुं, (मुञ्जते मृज्यते अनेन । मुञ्ज + करणे अच् ।) तृणविशेषः । मुँज इति भाषा ॥ (यथा, पञ्चदश्याम् । १ । ४२ ।
"यथा मुञ्जादीषिकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥")
तत्पर्य्यायः । मौञ्जीपत्रतृणाख्यः २ ब्राह्मण्यः ३ तेजनाह्वयः ४ वाणीरकः ५ मुञ्जनकः ६ शौरी ७ दर्भाह्वयः ८ दूरमूलः ९ दृढ़तृणः १० दृढ़मूलः ११ बहुप्रजः १२ रञ्जनः १३ शत्रुभङ्गः १४ । अस्य गुणाः । मधुरत्वम् । शीतलत्वम् । कफपित्तजदोषनाशित्वम् । अस्रदाहदीक्षासु च पावनत्वम् । भूतनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"मुञ्जो मुञ्जातको वाणः स्थूलदर्भः सुमेखलः ।
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ॥
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् ।
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥"
इति भावप्रकाशः ॥
शरः । इति रत्नमाला । उपनयनकाले मुञ्जमेखलाधारणविधिर्यथा । अथैनं माणवकमाचार्य्यस्त्रिःप्रदक्षिणं त्रिवृतं मुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति । इति भवदेवभट्टः ॥

मुञ्जकेशी, [न्] पुं, (मुञ्जा इव केशाः सन्त्यस्य । इनिः ।) विष्णुः । इति हेमचन्द्रः । २ । १३१ ॥

मुञ्जरं, क्ली, (मुञ्जते प्रक्षाल्यते इति । मुञ्ज + बाहुलकात् अरन् ।) शालूकम् । इति शब्दमाला ॥

मुञ्जातकः, पुं, (मुञ्जं अतति तत्सादृश्यं प्राप्नोतीति । अत + अच् । ततः स्वार्थे कन् ।) पुष्पशाकभेदः । अस्य गुणाः । परं स्वादुत्वम् । वृष्यत्वम् । पित्तानिलापहत्वञ्च । इति राजवल्लभः ॥ (यथा, सुश्रुते सूत्रस्थाने ३९ अध्याये ।
"हस्तिकर्णमुञ्जातकलाम्पाकप्रभृतीनि ।")

मुट इ मर्द्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) पञ्चमस्वरी । इ मुण्टति । मर्द्दो मर्द्दनम् । इति दुर्गादासः ॥

मुट कि चूर्दि । इति कविकल्पद्रुमः ॥ (चुरा० पक्षे भ्वा०-सक०-सेट् ।) चूर्दि चूर्णीकरणे । कि मोटयति तण्डुलं शिला । यस्तु इर्गेव मोटतीति हलायुधः ॥

मुट शि व्याक्षेपे च । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-सेट् ।) पवर्गशेषादिः । शि मुटति अमुटीत् मुमोट । चकारात् चूर्दि च । मुटति द्विषां दर्पं य इति हलायुधः । इति दुर्गादासः ॥

यो वैपरीत्येन श्रवणेन शब्दं
गृह्णाति वा नो शृणुते स शीघ्रं ।
स वै मृतिं पश्यति यो न पश्येत्
छायां स्वकीयां धरणीप्रपन्नाम् ॥”
इति हारीते द्वितीयस्थाने तृतीयेऽध्याये ॥)

मृत्करः, पुं, (करोतीति कृ+अच्। मृदां करः। घटादिनिर्म्माणत्वादस्य तथात्वम्।) कुम्भकारः। इति त्रिकाण्डशेषः ॥

मृत्कांस्यं, क्ली, शरावः। इति त्रिकाण्डशेषः ॥

मृत्किरा, स्त्री, (मृदं किरतीति। कॄ+“इगुपधज्ञाप्रीकिरः कः।” ३।१।१३५। इति कः। “ऋत इद्धातोः।” ७।१।१०० ॥ इति इत्।) घुर्घुरी। इति त्रिकाण्डशेषः। ढुघुंरिया इति भाषा ॥

मृत्खनिनी, स्त्री, चर्म्मकपादुका। इति शब्दचन्द्रिका ॥

मृत्तालं, क्ली, (मृदं तालयति प्रतिष्ठापयतीति। तल्+णिच्+“कर्म्मण्यण्।” ३।२।१। इति अण्।) आढ़की। इति शब्दरत्नावली ॥

मृत्तालकं, क्ली, (मृत्ताल+संज्ञायां कन्।) तुवरिका। तुवरिकलाय इति अड़र इति च ख्यातम्। इत्यमरटीकायां भरतः। सौराष्ट्रमृत्तिका। इति राजनिर्घण्टः ॥

मृत्तिका, स्त्री, (मृदेव इति। मृद्+“मृदस्तिकन्।” ५।४।३६। इति स्वार्थे तिकन्। स्त्रियां टाप्।) तुवरी। इति राजनिर्घण्टः ॥ मृत्। इत्यमरः। २।१।४ ॥ माटी। इति भाषा। तत्पर्य्यायः। मृदा २ मृत्तिः ३। इति भरतः ॥ (अस्या भक्षणात् पाण्डुरोगोत्पत्तिः। तद्यथा,
“मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ॥
कषाया मारुतं पित्तं ऊषरा मधुरा कफम् ॥”
इति माधवकरसंगृहीतरुग्विनिश्चये पाण्डुरोगाधिकारे। अन्यत् मृत्शब्दे द्रष्टव्यम्।)
स्नानकाले मृत्तिकालेपनविधिर्यथा,—
“मृदा प्रक्षाल्य लिङ्गन्तु द्वाभ्यां नाभेस्तथोपरि।
अधश्च तिसृभिः कार्यं षड्भिः पादौ तथैव च ॥
कटिश्च तिसृभिश्चापि हस्तयोर्दश मृत्तिकाः।
प्रक्षाल्य कार्यं हस्तौ च द्विराचम्य यथाविधि।
ततः संमार्जनं कृत्वा मृदमेवाभिमन्त्रयेत् ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे!।
उद्धृतासि वराहेण कृष्णेनामितबाहुना ॥
मृत्तिके हर मे पापं यन्मया पूर्व्वसञ्चितम्।
मृत्तिके ब्रह्मदत्तासि प्रजया च धनेन च ॥
मृत्तिके त्वाञ्च गृह्णामि काश्यपेनाभिमन्त्रिताम्।
मृत्तिके जहि मे पापं यन्मया दुष्कृतं कृतम्।
त्वया हतेन पापेन ब्रह्मलोकं व्रजाम्यहम् ॥”
इति वह्निपुराणम् ॥*॥
शौचार्थमृत्तिकाग्रहणविधिर्यथा,—
“आहृत्य मृत्तिकां कूलाल्लेपगन्धापकर्षणम्।
कुर्य्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥
नाहरेत् मृत्तिकां विप्रः पांशुलान्न च कर्द्दमात्।
न मार्गान्नोषराद्देशाच्छौचशिष्टां परस्य च ॥
न देवायतनात् कूपात् गेहान्न च जलात्तथा।
उपस्पृशेत्ततो नित्यं पूर्व्वोक्तेन विधानतः ॥”
इति कौर्म्मे उपविभागे १२ अध्यायः ॥
तस्याः परीक्षा मन्दिरशब्दे द्रष्टव्याः ॥

मृत्फली, स्त्री, (मृदि फलमस्याः। ङीष्।) कुष्ठौषधम्। इति हारावली ॥

मृत्युः, पुं, (म्रियते यस्मादिति मृ+“भुजिमृङ्भ्यां युक् त्युकौ।” उणा०।३।२१। इति त्युक्।) यमः। इति हेमचन्द्रः ॥ कंसः। यथा,—
“प्रत्यर्प्य मृत्यवे पुत्त्रान् मोचये कृपणामिमाम्।
सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत
चेत् ॥”
इति श्रीभागवते १० स्कन्धे १।३८ ॥

मृत्युः, पुं, स्त्री, प्राणवियोगः। तत्पर्य्यायः। पञ्चता २ कालधर्म्मः ३ दिष्टान्तः ४ प्रलयः ५ अत्ययः ६ अन्तः ७ नाशः ८ मरणम् ९ निधनः १०। इत्यमरः ॥ पञ्चत्वम् ११ मृतम् १२ मृतिः १३। इति तट्टीकायां रमानाथः ॥ नैधनम् १४। इति तट्टीकासारसुन्दरी ॥ संस्था १५ कालः १६ परलोकगमः १७ दीर्घनिद्रा १८ निमीलनम् १९ अस्तम् २० अवसानम् २१। इति हेमचन्द्रः ॥ भूमिलाभः २२ निपातः २३ विलयः २४ आत्ययिकम् २५। इति शब्दरत्नावली ॥ अप्ययः २६। (मरणार्थे यथा,—
“क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा।
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥
प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम्।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥”
इति सुश्रुते सूत्रस्थाने ३१ अः ॥
“एकोत्तरं मृत्युशतमथर्व्वाणः प्रचक्षते।
तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥
दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ।
रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ ॥”
इति च तत्र तत्स्थाने। ३४ अः ॥)
तत्प्रमाणं यथा,—
“अहमात्मोद्भवामीषां भूतानां सुहृदीश्वरः।
अहं सर्व्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥”
इति श्रीमद्भागवते ११ स्कन्धे। १६। १० ॥
स तु ब्रह्मणो गुदतो जातः। यथा,—
“पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद!।
हिंसाया निर्ऋते मृत्योर्निरयस्य गुदं स्मृतम् ॥”
इति श्रीभागवते २ स्कन्धे ५ अध्यायः ॥
कल्पान्तरे भयात् मायायां जातः। यथा,—
“हिंसा भार्य्या त्वधर्म्मस्य तयोर्जज्ञे तथानृतम्।
कन्या च निकृतिस्ताभ्यां भयं नरकमेव च ॥
माया च वेदना चैव मिथुनं त्विदमेतयोः।
भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम्।
वेदना च सुतञ्चापि दुःखं जज्ञेऽथ रौरवात् ॥*॥
अस्यापत्यादि यथा,—
“मृत्योर्व्याधिर्जराशोकतृष्णाक्रोधाश्च जज्ञिरे।
दुःखोत्तराः स्मृता ह्येते सर्व्वे चाधर्म्मलक्षणाः।
नैषां भार्य्यास्ति पुत्त्रो वा सर्व्वे ते ह्यूर्द्ध्वरेतसः ॥
निर्ऋतिश्च तथा चान्या मृत्योर्भार्य्याभवन्मुने!।
अलक्ष्मीर्नाम तस्याश्च मृत्योः पुत्त्राश्चतुर्द्दश ॥
अलक्ष्मीपुत्त्रका ह्येते मृत्योरादेशकारिणः।
विनाशकाले च नरान् भजन्त्येते शृणुष्व तान् ॥
इन्द्रियेषु दशस्वेते तथा मनसि च स्थिताः।
स्वे स्वे नरं स्त्रियं वापि विषये योजयन्ति च ॥
तथेन्द्रियाणि चाक्रम्य रागलोभादिभिर्नरान्।
योजयन्ति तथा हानिं यान्ति धर्म्मादिभिर्द्विज! ॥
अहङ्कारगतास्त्वन्ये तथान्ये बुद्धिसंस्थिताः।
विनाशाय नरस्त्रीणां यतन्ते मोहसंश्रयाः।
एवं त्वधर्म्मगोत्पन्नाः सर्व्वे चापि भयङ्कराः ॥”
इति मार्कण्डेयपुराणे दुःसहानुशासनं नामाध्यायः ॥ विष्णुपुराणे प्रथमेऽंशे सप्तमोऽध्यायश्च ॥
मृत्युज्ञापकारिष्टानि यथा,—
दत्तात्रेय उवाच।
“अरिष्टानि महाराज! शृणु वक्ष्यामि तानि ते।
येषामालोकनान्मृत्युं निजं जानाति योगवित् ॥
देवमार्गं ध्रुवं शुक्रं सोमच्छायामरुन्धतीम्।
यो न पश्येन्न जीवेत् स नरः संवत्सरात् परम् ॥
अरश्मि बिम्बं सूर्य्यस्य वह्निञ्चैवांशुमालिनम्।
दृष्ट्वैकादशमासेभ्यो नरो नोर्द्ध्वं स जीवति ॥
वान्तं मूत्रे पुरीषे वा सुवर्णं रजतं यथा।
प्रत्यक्षमथवा स्वप्ने जीवितं दशमासिकम् ॥
दृष्ट्वा प्रेतपिशाचादीन् गन्धर्व्वनगराणि च।
सुवर्णवर्णान् वृक्षांश्च नव मासान् स जीवति ॥
स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते।
प्रकृतेश्च निवर्त्तेत तस्यायुश्चाष्टमासिकम् ॥
खण्डं यस्य पदं पार्ष्ण्योः पादस्याग्रेऽथवा भवेत्।
पांशुकर्द्दमयोर्मध्ये सप्त मासान् स जीवति ॥
कपोतगृध्रकाकोला वायसो वापि मूर्द्धनि।
क्रव्यादो वा खगो नीलः षण्मासायुःप्रदर्शकः ॥
हन्यते काकपङ्क्तीभिः पांशुवर्षेण वा पुनः।
स्वच्छायाञ्चान्यथा दृष्ट्वा पञ्च मासान् स जीवति ॥
अनभ्रे विद्युतं दृष्ट्वा दक्षिणां दिशमाश्रिताम्।
पयसीन्द्रधनुर्व्वापि जीवितं द्वित्रिमासिकम् ॥
घृते तैले तथादर्शे तोये वा चात्मनस्तनुम्।
यः पश्येदशिरस्कां वा मासादूर्द्ध्वं न जीवति ॥
यस्य वस्तसमो गन्धो गात्रे शवसमोऽपि वा।
तस्यार्द्धमासिकं ज्ञेयं योगिनो नृप! जीवितम् ॥
यस्य वै स्नातमात्रस्य हृत्पादमवशुष्यति।
पिबतश्च जलं शोषो दशाहं सोऽपि जीवति ॥
सम्भिन्नो मारुतो यस्य मर्म्मस्थानानि कृन्तति।
न हृष्यत्यम्बुसंस्पर्शात्तस्य मृत्युरुपस्थितः ॥
ऋक्षवानरयुग्मस्थो गायन् यो दक्षिणां दिशम्।
स्वप्ने प्रयाति तस्यापि न मृत्युः कालमिच्छति ॥
रक्तकृष्णाम्बरधरा गायन्ती हसती च यम्।
दक्षिणाशां नयेन्नारी स्वप्ने सोऽपि न जीवति ॥
नग्नं क्षपणकं स्वप्ने हसमानं महाबलम्।
एवं वा वीक्ष्य वल्गन्तं विद्यान्मृत्युमुपस्थितम् ॥
आमस्तकतलाद्यस्तु निमग्नं पङ्कसागरे।
स्वप्ने [illegible]शालानं नरः सद्यो म्रियेत सः ॥

र्दिष्टाघलात् सम्मर्शनं प्रणिधानञ्च अस्यार्थः । सम्मर्शने । यथा, रघौ । ३ । ६८ ।

"परामृशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम् ।"

प्रणिधाने ।

"रामप्रवासे व्यमृशन्न दोषं
जनापवादं सनरेन्द्रमृत्युम् ।"

कैकेयीति भट्टिः ।३।७॥

विमर्षं परामर्शः । मृषि इति मूर्द्धन्यान्तपाठो ऽयं । तर्हि क्षमेवार्थः स्यात् । इति दुर्गादासः ॥

मृष, तु क } क्षान्तौ । इति कविकल्पद्रुमः ।
मृष, तु ष } (अदन्त चुरा०-पर०-सक०-सेट् । अन्यत्र, अदन्त भ्वा०-उभ०-सक०-सेट् ।) मूर्द्धन्योपधो । क, मृषयति । ष, मृषति मृषते । इति दुर्गादासः ॥

मृष, उ सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । क्त्वावेट् ।) उ, मर्षित्वा मृष्ट्वा । इति दुर्गादासः ॥

मृष, क क्षान्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क, मर्षयति । अयमात्मनेपदीत्येके । इति दुर्गादासः ॥

मृष, ष ङ उ क्षान्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-आत्म०-च-सक०-सेट् । क्त्वावेट् ।) ष, मर्षति मर्षते । ङ, मर्षते । उ, मर्षित्वा मृष्ट्वा । अपि गुरुमपराधं मर्षति ब्राह्मणाना मिति हलायुधः । इति दुर्गादासः ॥

मृष, य ष क्षान्तौ । इति कविकल्पद्रुमः ॥ (दिवा०-उभ०-सक०-सेट् ।) य ष, मृष्यति मृष्यते ममर्ष । इति दुर्गादासः ॥

मृषा, व्य, (मृष्यत इति । मृष् + का ।) मिथ्या । इत्यमरः ।३।४।१५॥ (यथा, नैषधचरिते ।१।६८ ।

"मृषाम्बुधं सादिवधे कुतूहला-
न्नलस्य नासीरगते वितेनतुः ॥")

वृथा । इति तट्टीकासारसुन्दरी ॥

मृषार्थकं, क्ली, (मृषा अर्थोऽस्य । बहुव्रीहौ कम् ।) अत्यन्तासम्भवार्थवाक्यम् । तत्पर्य्यायः । आहतम् २ । इत्यमरः । १ । ६ । २१ । अत्यन्तासम्भवार्थे वचसि । आहन्यते स्म आहतं क्तः । मृषा मिथ्या अर्थोऽस्य मृषार्थकं इह मृषार्थं यत् सर्व्वथा न घटते । यथा,—

"एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
कूर्म्मरोमतनूत्राणः शशशृङ्गधनुर्द्धरः इति ॥
यावज्जीवमहं मौनी ब्रह्मचारी पिता ममेति ।

अस्य चायं भेदः मौनित्वं ब्रह्मचारित्वं अन्यत्र सिद्धमेव वन्ध्यासुतत्वं खपुष्पत्वञ्चात्यन्तासिद्धमिति । इति भरतः ॥

मृषाध्यायी, [न्] पुं, (मृषा ध्यायति चिन्तयतीति । ध्यै + णिनिः ।) वकः । यथा,—

"कङ्को वको वकोटश्च तीर्थसेवी च तापसः ।
मीनघाती मृषाध्यायी निश्चलाङ्गश्च दाम्भिकः ॥"

इति राजनिर्घण्टः ॥

मृषालकः, पुं, (मृषा मिथ्या अचिरस्थायित्वेन सकुलोद्गमकाल इत्यर्थः । अलं अलङ्करणं कायति प्रकाशयतीति । कै + क । ) आम्रवृक्षः । इति शब्दचन्द्रिका ॥

मृषावादः, पुं, (मृषा मिथ्या वादः कथनम् ।) मिथ्यावाक्यम् । तत्पर्य्यायः । चटूरी २ । इति जटाधरः ॥ (यथा, महाभारते ।३।१८८।३३।

"वहवो स्तेच्छराजानः पृथिव्यां मनुजाधिप ! ।
मृषानुशासिनः पापाः मृषावादपरायणाः ॥")

मृषावादी, [न्] त्रि, (मृषा वदतीति । वद् + णिनिः ।) मिथ्यावादकः । तत्पर्य्यायः । मृषोद्यः । इति शब्दमाला ॥ मिथ्याभियोक्ता, च ॥

मृषोद्यं, क्ली, (मृषा + वद् + "राजसूयसूर्य्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।"३ । १ । ११४ । इति कर्म्मणि क्यप् । निपातितश्च ।) मिथ्यावाक्यम् । इति मुग्धबोधव्याकरणम् ॥ (यथा, भट्टिकाव्ये । ५ । ६० ।

"मृषोद्यं प्रवदन्तीं तां सत्यवाग् रघूत्तमः ॥")

मृषोद्यः, त्रि, मिथ्यावादी । इति शब्दमाला ॥

मृष्टं, क्ली, (मृज + क्तः ।) मरिचम् । इति राजनिर्घण्टः ॥

मृष्टः, त्रि, (मृज + क्त ।) शोधितम् । इत्यमरः । ३।४।५६ ॥ (यथा, वृहत्संहितायाम् ।८५।८।

"अशुभकरमतोऽन्यथाप्रदिष्टं
स्थितपतितं च करोति मृष्टमन्नम् ॥")

मृष्टेरुकः, पुं, वदान्यः । मिष्टाशी । अतिथिद्विट् । इति मेदिनी । के, २०६ ॥

मॄ, शि वधे । इति कविकल्पद्रुमः ॥ (क्र्या०-पर०-सक०-सेट् ।) शि, मृणाति । मूर्णः । मर्त्तिः । इति दुर्गादासः ॥

मे, ङ प्रतीदाने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-अनिट् ।) प्रतीदानं परिवर्त्तः । ङ, मयते धान्येन सार्द्धं लोकः । इति दुर्गादासः ॥

मे, त्रि, मह्यम् । आमाके इति भाषा । मम आमार इतिभाषा । एते अस्मच्छब्दस्य चतुर्थीषष्ठ्येकवचनाभ्यां निष्पन्नौ । इति व्याकरणम् ॥

मेकः, पुं, (मे इति कायति शब्दं करोतीति । कै शब्दे + कः ।) छागः । इति राजनिर्घण्टः ॥

मेक(ख)लकन्यका, स्त्री, (मेक(ख)लः मेखलायुक्तः विन्ध्यपर्व्वतः तस्य कन्यका । तस्य नितम्बदेशात् निःसृतेत्यर्थः ।) नर्म्मदानदी । इत्यमरः । १ । १० । ३२ ॥

मेक(ख)लाद्रिजा, स्त्री, (मेक(ख)लात् नितम्बदेशोपलक्षितात् अद्रेर्जाता । जन + डः + स्त्रियां टाप् ।) नर्म्मदानदी । यथा,—

"रेवेन्दुजा पूर्व्वगङ्गा नर्म्मदा मेकलाद्रिजा ।"

इति हेमचन्द्रः ॥

मेक्षणं, क्ली, यज्ञीयपात्रविशेषः । (यथा, आश्वलायनश्रौतसूत्रे । २ । ६ । १२ ।

"मेक्षणेनादायावदानसम्पदा जुहुयात् ॥")

यथा, मेक्षणादीनाञ्च छन्दोगपरिशिष्टम् ।

"इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम् ॥"

इध्मार्द्धप्रमाणम् ।

प्रादेशद्वयमिध्मस्य प्रमाणं परिकल्पितमिति । तदर्द्धम् । एषैव दर्व्वी । विशेषस्तु महासुवे

"दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयेण तु मेक्षणम् ।
मुषलोदूखले वार्क्षे स्वायते सुदृढ़े तथा ॥"

इति संस्कारतत्त्वम् ॥

मेखला, स्त्री, (मीयते प्रक्षिप्यते कायमध्यभागे इति । मि + संज्ञायां खलः गुणश्च स्त्रियां टाप् । इत्यमरटीकायां भरतमतम् ।) स्त्रीकट्याभरणम् । चन्द्रहार गोट् इत्यादि भाषा ॥ (यथा, रघुवंशे । ८ । ६४ ।

"असमाप्य विलासमेखलां
किमिदं किन्नरकण्ठि ! सुप्यते ॥")

तत्पर्य्यायः । काञ्ची २ सप्तकी ३ रसना ४ सारसनम् ५ । इत्यमरः ।२।६।१०८॥ काञ्चिः ६ रशना ७ कक्षा ८ रसनम् ९ रशनम् १० कक्ष्या ११ सप्तका १२ सारशनम् १३ । इति शब्दरत्नावली ॥ कलापः १४ । इति जटाधरः ॥ सारसनं स्त्रीकट्यां वस्त्रग्रन्थनम् । इति स्वामी ॥ केचित्तु ।

"एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ।
रसना षोड़श ज्ञेया कलापः पञ्चविंशकः ॥"

इति पठन्ति । इह त्वभेदात् पर्य्यायता । इति भरतः ॥ खड्गादिनिबन्धनम् । इत्यमरः । २ । ८ । ९० ॥ शिञ्जिनिका । चर्म्मरज्ज्वादि । सुधिदाढ्यार्थं उपर्य्यधो लौहबन्धः । इत्येके । इत्यपि भरतः ॥ * ॥ शैलनितम्बः । इति मेदिनी । ले, १२५ ॥ नर्म्मदानदी । इति शब्दरत्नावली ॥ पृश्निपर्णी । इति राजनिर्घण्टः ॥ * ॥ उपनयनकाले धार्य्यमौञ्जनिर्म्मितसूत्रत्रयम् । यथा । अथैनं माणवकमाचार्य्यस्त्रिः प्रदक्षिणं त्रिवृत्तमुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति । इति भवदेवभट्टः ॥ अपि च । गोभिलः । मुञ्जकाशतास्त्रन्यो रसनाः । मुञ्जः शरः । ताम्रनः शणसूत्रवा तास्त्रनी । रसना मेखला । तथा च मनुः ।

"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्त्रियस्य च मौर्व्वीज्या वैश्यस्य शणतान्तवी ॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥"

इति संस्कारतत्त्वम् ॥

अन्यच्च ।

"गर्भादष्टमेऽष्टमे वाब्दे स्वसूत्रोक्तविधानतः ।
दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः ॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
मौञ्ज्यभावे कुशेनाहुर्ग्रन्थिनैकेन च त्रिभिः ॥"

इति कौर्म्मे उपविभागे ११ अध्यायः ॥

होमकुण्डोपरिस्थहटितवेष्टनविशेषः । यथा, वशिष्ठपञ्चरात्रे ।

কেশাঙ্গারাস্তথা ভস্ম ভুজগা নির্জলা মহীম্।
দৃষ্ট্বা স্বপ্নে দশাহন্তু মৃত্যুরেকাদশেঽহনি॥
করালৈর্বিকটৈঃ কৃষ্ণৈঃ পুরুষৈরুদ্যতায়ুধৈঃ।
পাষাণৈস্তাড়িতঃ স্বপ্নে সদ্যো মৃত্যুং সমাপ্নুয়াৎ॥
সূর্য্যোদয়ে যস্য শিবা ক্রোশন্তী যাতি সম্মুখম্।
বিপরীতং পরীতং বা স সদ্যো মৃত্যুমৃচ্ছতি॥
যস্য বৈ ভুক্তমাত্রেঽপি হৃদয়ং পীড্যতে ক্ষুধা।
জায়তে দন্তঘর্ষশ্চ স গতায়ুরসংশয়ম্॥
দীপাদিগন্ধং নো বেত্তি ত্রসত্যহ্নি তথা নিশি।
নাত্মানং পরনেত্রস্থং বীক্ষতে ন স জীবতি॥
শক্রায়ুধঞ্চার্দ্ধরাত্রে দিবা গ্রহগণং তথা।
দৃষ্ট্বা মন্যেত সংক্ষীণমাত্মজীবিতমাত্মবান্॥
নাসিকা বক্রতামেতি কর্ণয়োর্নমনোন্নতী।
নেত্রঞ্চ বামং স্রবতি যস্য তস্যায়ুরুদ্গতম্॥
আরক্ততামেতি মুখং জিহ্বা বাপি সিতা তথা।
তদা প্রাজ্ঞো বিজানীয়ান্মৃত্যুমাসন্নমাত্মনঃ॥
উষ্ট্ররাসভযানেন যঃ স্বপ্নে দক্ষিণাং দিশম্।
প্রয়াতি তং বিজানীয়াৎ সদ্যো মৃত্যুং নরেশ্বর!॥
পিধায় কর্ণৌ নির্ঘোষং ন শৃণোত্যাত্মসম্ভবম্।
নশ্যতে চক্ষুষোর্জ্যোতির্যস্য সোঽপি ন জীবতি॥
পততো যস্য বৈ গর্ত্তে স্বপ্নে দ্বারং পিধীয়তে।
ন চোত্তিষ্ঠতি যঃ শ্বভ্রাত্তদন্তং তস্য জীবিতম্॥
ঊর্দ্ধা চ দৃষ্টির্ন চ সংপ্রতিষ্ঠা
রক্তা পুনঃ সম্পরিবর্ত্তমানা।
মুখস্য চোষ্মা শুষিরা চ নাভিঃ
শংসন্তি পুংসামপরং শরীরম্॥
স্বপ্নেঽগ্নিং প্রবিশেদ্যস্তু ন চ নিষ্ক্রমতে নরঃ।
জলপ্রবেশাদপি বা তদন্তং তস্য জীবিতম্॥
যশ্চাভিহন্যতে দুষ্টৈর্ভূতৈ রাত্রাবথো দিবা।
স মৃত্যুং সপ্তরাত্রান্তাৎ পুমানাপ্নোত্যসংশয়ম্॥
স্ববস্ত্রমমলং শুক্লং রক্তং পশ্যত্যথোঽসিতম্।
যঃ পুমান্ মৃত্যুমাপন্নং তস্যাপি হি বিনির্দ্দিশেৎ॥
স্বভাববৈপরীত্যন্তু প্রকৃতেশ্চ বিপর্য্যয়ঃ।
কথয়ন্তি মনুষ্যাণাং সমাসন্নৌ যমান্তকৌ॥
যেষাং বিনীতঃ সততং যস্য পূজ্যতমা মতাঃ।
তানেব যোঽবজানাতি তানেব চ বিনিন্দতি॥
দেবান্নার্চ্চয়েদ্বৃদ্ধান্ গুরূন্ বিপ্রাংশ্চ নিন্দতি।
মাতাপিত্রোরসৎকারং জামাতৄণাং করোতি যঃ॥
যোগিনাং জ্ঞানবিদুষামন্যেষাঞ্চ মহাত্মনাম্।
প্রাপ্তে কালে পুরুষস্তদ্বিজ্ঞেয়ং বিচক্ষণৈঃ॥
যোগিনা সততং যত্নাদরিষ্টান্যবনীপতে॥
সম্বৎসরান্তে তান্যেব ফলদানি দিবানিশম্।
বিলোক্যানি তথা চৈব ফলপংক্তিশ্চ ভীষণা॥
ইতি মার্কণ্ডেয়পুরাণে অলর্কোপাখ্যানে ৪৩ অঃ॥
কর্ম্মবিপাকান্মৃত্যুবিশেষো যথা —
"দেবাদ্যন্নানি ভোজ্যানি প্রীতিমিষ্টং হরেত্তু যঃ।
আলিকং মদ্যাদ্য স সুরং মৃত্যুমৃচ্ছতি॥
আগারদাহিনো দাহং ক্ষুধং চান্নদায়িনঃ।
ত্বং শৃণ্বন্তি নরা কাশ্চি ন কশ্চিৎ মৃত্যুরুপদ্যতে॥
দত্তাভয়প্রদাতা যে রক্ষাচারপরায়ণঃ।
তস্মাৎ বন্ধ্যা হোমকর্ম্ম নরা ত্রাহঃ স্বয়ম্॥
যে ন বামাত্তরন্ত্যান্তে দেবাদ্ধর্ম্মসমুদ্দশেৎ।

যথোক্তকারী সৌম্যশ্চ স সুখং মৃত্যুমৃচ্ছতি॥
শীতং জয়ন্তীস্বসরাস্তাপং চোষ্ণদায়িনঃ।
প্রাণঘ্নীং বেদনাং কষ্টাং যে চান্যে দ্বেষকারিণঃ॥
মোহাজ্ঞানপ্রদাতারঃ প্রাপ্নুবন্তি মহদ্ভয়ম্।
কূটসাক্ষী মৃষাবাদী যশ্চাসন্নুশাস্তি বৈ।
তে মোহমৃত্যবঃ সর্ব্বে তথান্যে বেদনিন্দকাঃ॥"
ইতি মার্কণ্ডেয়পুরাণে পিতাপুত্রসম্বাদে ১০ অধ্যায়ঃ॥ *॥
মৃত্যুকালকর্ত্তব্যক্ষুদ্রজন্তুবধপ্রায়শ্চিত্তং যথা —
"যোঽপি ক্ষুদ্রজন্তূনাং হিংসকানাঞ্চ পণ্ডিত।
কাষাপণং সমুৎসৃজ্য মৃত্যুকালে প্রমুচ্যতে॥
অহিংসকানাং ক্ষুদ্রাণাং বধে প্রসগুণং ধ্রুবম্।
প্রায়শ্চিত্তং মৃত্যুকালে কথিতং পদ্মযোনিনা॥'
ইতি ব্রহ্মবৈবর্ত্তে শ্রীকৃষ্ণজন্মখণ্ডে ৭ অধ্যায়ঃ॥
মৃত্যুসময়ে গঙ্গাগমনমাবশ্যকং যথা —
"অহো সগরবংশেভ্যো নির্ব্বাণমুক্তিদায়িনী।
বৈকুণ্ঠগামিনাং মার্গসোপানরূপিণী বরা॥
অতোঽপি মৃত্যুসময়ে সতাং পুণ্যস্বরূপিণাম্।
আদৌ পাদৌ চ বিন্যস্য মুখে তোয়ং প্রদীয়তে॥
গঙ্গাসোপানমারুহ্য সন্তো যান্তি মমালয়ম্॥'
ইতি তত্রৈব ৩৪ অধ্যায়ঃ॥ *॥
জন্মবতাং মৃত্যোরপরিহার্য্যত্বং যথা,—
"মৃত্যুর্জন্মবতাং বীর! দেহেন সহ জায়তে।
অদ্য বাব্দশতান্তে বা মৃত্যুর্বৈ প্রাণিনাং ধ্রুবঃ॥"
ইতি শ্রীভাগবতে ১০ স্কন্ধে ১ অধ্যায়ঃ॥
অপি চ।
"জাতস্য হি ধ্রুবো মৃত্যুর্ধ্রুবং জন্ম মৃতস্য চ।
তস্মাদপরিহার্য্যেঽর্থে ন ত্বং শোচিতুমর্হসি॥
ইতি শ্রীভগবদ্গীতা॥ *॥
অকালমৃত্যুপ্রশমনস্তোত্রং যথা,—
সূত উবাচ।
"স্তোত্রং তত্ত্ব প্রবক্ষ্যামি মার্কণ্ডেয়েন ভাষিতম্।
নারায়ণং সহস্রাক্ষং পদ্মনাভং পুরাতনম্।
প্রণতোঽস্মি হৃষীকেশং কিং মে মৃত্যুঃ করিষ্যতি॥১॥
গোবিন্দং পুণ্ডরীকাক্ষমনন্তমজমব্যয়ম্।
কেশবঞ্চ প্রপন্নোঽস্মি কিং মে মৃত্যুঃ করিষ্যতি॥২॥
বাসুদেবং জগদ্যোনিং ভানুমন্তমতীন্দ্রিয়ম্।
দামোদরং প্রপন্নোঽস্মি কিং মে মৃত্যুঃ করিষ্যতি॥৩॥
শঙ্খচক্রধরং দেবং ছন্নরূপিণমব্যয়ম্।
অধোক্ষজং প্রপন্নোঽস্মি কিং মে মৃত্যুঃ করিষ্যতি॥৪॥
বারাহং বামনং বিষ্ণুং নারসিংহং জনার্দ্দনম্।
মাধবঞ্চ প্রপন্নোঽস্মি কিং মে মৃত্যুঃ করিষ্যতি॥৫॥
পুরুষং পুষ্করং পুণ্যং ক্ষেমবীজং জগৎপতিম্।
লোকনাথং প্রপন্নোঽস্মি কিং মে মৃত্যুঃ করিষ্যতি॥৬॥
সহস্রশীর্ষং দেবেশং ব্যক্তাব্যক্তং সনাতনম্।
মহাযোগং প্রপন্নোঽস্মি কিং মে মৃত্যুঃ করিষ্যতি॥৭॥
ভূতাত্মানং মহাত্মানং যজ্ঞযোনিময়োনিজম্।
বিশ্বরূপং প্রপন্নোঽস্মি কিং মে মৃত্যুঃ করিষ্যতি॥৮॥
ইত্যুদীরিতমাকর্ণ্য স্তোত্রং তস্য মহাত্মনঃ।
অপযাতস্ততো মৃত্যুর্বিষ্ণুদূতৈঃ প্রপীড়িতঃ॥
ইতি তেন জিতো মৃত্যুর্মার্কণ্ডেয়েন ধীমতা।
প্রসন্নে পুণ্ডরীকাক্ষে নৃসিংহে নাস্তি দুর্লভম্॥

মৃত্যুষ্টকমিদং পুণ্যং মৃত্যুপ্রশমনং শুভম্।
মার্কণ্ডেয়হিতার্থায় স্বয়ং বিষ্ণুরুবাচ হ॥
য ইদং পঠতি স্তোত্রং ত্রিকালং নিয়তঃ শুচিঃ।
নাকালে তস্য মৃত্যুঃ স্যান্নরস্যাচ্যুতচেতসঃ॥
হৃৎপদ্মমধ্যে পুরুষং পুরাণং
নারায়ণং শাশ্বতমাদিদেবম্।
বিচিন্ত্য সূর্য্যাদতিরাজমানং
মৃত্যুং স যোগী জিতবাংস্তদৈব॥
ইতি গারুড়ে ২২৮ অধ্যায়ঃ॥ *॥
শুভকর্ম্মপ্রতিবন্ধকমৃত্যুদা যোগা যথা,—
'আদিত্যভৌময়োর্নন্দা ভদ্রা শুক্রশশাঙ্কয়োঃ।
বুধে জয়া গুরৌ রিক্তা শনৌ পূর্ণা চ মৃত্যুদা॥"
অপি চ।
"রব্যাদিভিঃ সৈর্যুক্তা বিশাখাদিচতুষ্টয়ম্।
উৎপাতা মৃত্যবঃ কালা অন্তানি যথাক্রমম্॥"
ইতি জ্যোতিস্তত্ত্বম্॥

মৃত্যুঞ্জয়ঃ, পুং, (মৃত্যুং জিতবান্। জি + খচ্ + মুম্ চ।) শিবঃ। ইত্যমরঃ॥ তন্নামকারণং যথা —
সুযজ্ঞ উবাচ।
'শিবো লীনো নির্গুণে যেন শ্রীকৃষ্ণে প্রাকৃতে লয়ে।
কথং তব গুরোর্নাম মৃত্যুঞ্জয় ইতি শ্রুতৌ॥'
সুতপা উবাচ।
"ব্রহ্মণোঽন্তে মৃত্যুকন্যা প্রনষ্টা জলবিম্ববৎ।
সহস্রং সর্ব্বলোকানাং ব্রহ্মাদীনাং নরাধিপ!॥
কতিধা মৃত্যুকন্যানাং ব্রহ্মণাং কোটিশো লয়ে।
কালেন লীনঃ শম্ভুশ্চ সত্ত্বরূপী চ নির্গুণঃ॥
মৃত্যুকন্যা জিতা শশ্বৎ শিবেন গুরুণা মম।
ন মৃত্যুনা জিতঃ শম্ভুঃ কল্পে কল্পে শ্রুতৌ
শ্রুতম্॥"
ইতি ব্রহ্মবৈবর্ত্তে প্রকৃতিখণ্ডে ৫১ অধ্যায়ঃ।
রোগশান্ত্যর্থং তস্য পূজাবিধির্যথা —
"মৃত্যুঞ্জয়ং সমাপূজ্য লিঙ্গং ত্রিভুবনেশ্বরম্।
রোগার্ত্তো মুচ্যতে রোগাদ্বদ্ধো মুচ্যেত বন্ধনাৎ॥
যস্তু সম্পূজয়েদ্ভক্ত্যা লিঙ্গং মৃত্যুঞ্জয়াভিধম্।
যমোঽপি প্রণমেদ্ভক্ত্যা কিং করিষ্যতি চাময়ঃ॥
তস্য পূজাবিধিং বক্ষ্যে শৃণু মৎপ্রাণবল্লভে।
জাতিভদ্রং মৃত্তিকান্তু গৃহীত্বা শীতলোদকম্॥
নির্ম্মায় পার্থিবং লিঙ্গং কাংস্যাধারে নিবেশয়েৎ।
পৌরাণিকেন মন্ত্রেণ কুর্য্যাচ্চ গঠনং বুধঃ॥
স্নাপয়েৎ পঞ্চগব্যেন শতাকস্যাদলোককম্।
স্বস্বমন্ত্রেণ শতাকর্ণেন স্নাপয়েৎ সুধীঃ॥
রোগঘ্নকামনয়া নামগোত্রাদিপূর্ব্বকম্।
উপবিশ্যাসনে বিপ্রো ধৃত্বা ধৌতে চ বাসসী॥
রুদ্রাক্ষমালাং কণ্ঠে বৈ ধৃত্বা ভস্মত্রিপুণ্ড্রকম্।
উপচারং ষোড়শকং দদ্যাদ্ভক্ত্যা প্রযত্নতঃ॥
সুবর্ণস্থাপনং দদ্যাত্তথৈবাভরণানি চ।
বস্ত্রযুগ্মং প্রদদ্যাত্তু পরিধেয়ং যথা ভবেৎ॥
মধুপর্কং কাংস্যপাত্রে দদ্যাদ্ভোজনমোদকম্।
বিশ্বরূপসহস্রঞ্চ অভয়ং বিনিবেদয়েৎ॥
এবং সম্পূজ্য লিঙ্গঞ্চ জপেন্মন্ত্রং সহস্রকম্।
ততো হোমং প্রকুর্ব্বীত দশধা মন্ত্রং দদেৎ॥

सुवर्णं वा तदर्द्धं वा देवि ! विभवमानतः ।
अङ्गहीना न कर्त्तव्या पूजा चाफलदा यतः ॥
एकलिङ्गं समाराध्य फलं स्यादन्यके युगे ।
तत् फलं लभते देवि ! कलौ संख्या चतुर्गुणा ॥
ताम्रपात्रे तु संस्थाप्य अशीतितोलकं जलम् ।
तज्जलेनैव देवेशि ! कुर्य्यात् समार्ज्ज्य रोगिणम् ॥
त्रिपट्टीपशिखायाञ्च मन्त्रमुच्चार्य्य मामकम् ।
एवंविधविधानेन पूजयेन्मम लिङ्गकम् ॥
यादृग्यादृग्भवेद्रोगो नाशमेति मयोदितः ।
साङ्गेन पूजयित्वा च लभते वाञ्छितं फलम् ॥
चन्द्रव्यतिक्रमेणैव तथा भवति वासना ।
रोगी प्रमुच्यते सद्यो भोगीव कञ्चुकोन्झितः ।
यदि मद्वचने भक्तिस्तदा मुक्तो भवेन्नरः ॥”
इति मृत्युञ्जयतन्त्रम् ॥
(ज्वरनाशकौषधविशेषः । तद्यथा,—
“अयस्कः पिहितः शुद्धो रोगघ्नः कीर्त्तिवर्द्धनः ।
यशःप्रदः शिवः साक्षात् मृत्युञ्जयरसः स्मृतः ॥
विषस्यैकस्तथा भागो मरीचं पिप्पली कणा ।
गन्धकस्य तथा भागो भागः स्यात्टङ्गणस्य वै ॥
सर्व्वत्र समभागः स्याद्धिङ्गुलन्तु द्विभागकम् ।
चूर्णयेत् खल्लमध्ये तु सुक्ष्मानां वटीञ्चरेत् ॥
रसश्चेत् समभागः स्याद्धिङ्गुलं नेष्यते तदा ।
मृत्युरूपं ज्वरं हन्ति मृत्युञ्जयरसः स्मृतः ॥
मृत्युर्विनिर्जितो यस्मात्तस्मान्मृत्युञ्जयः स्मृतः ।
मधुना लेहनं प्रोक्तं सर्व्वज्वरनिवृत्तये ॥
दध्योदकानुपानेन वातज्वरनिवर्त्तकः ।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके ॥
जम्बीररसयोगेन सर्व्वज्वरविनाशनः ।
अजाजीगुडसंयुक्तो विषमज्वरनाशनः ॥
तीव्रज्वरे महाघोरे पुरुषे यौवनान्विते ।
पूर्णमात्रा प्रदातव्या पूर्णा वटीचतुष्टयम् ॥
क्षीबालवृद्धचीणे च अर्द्धमात्राः प्रकीर्त्तिताः ।
नवज्वरे महाघोरे यामैकान्नाशयेद्ध्रुवम् ॥
मध्यज्वरे तथाजीर्णे त्रिरात्रान्नाशयेद्ध्रुवम् ।
सप्ताहात् सन्निपातोत्थं ज्वराजीर्णकसंज्ञ-
कम् ॥”
इति मृत्युञ्जयो रसः ॥ इति वैद्यकरसेन्द्रसार-
संग्रहे ज्वराधिकारे ॥ स्त्री, ज्ञानविशेषः । यथा,
ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डे । ४६ । ६५ ।
“शम्भुश्च चतुरो वेदान् वेदाङ्गानितरांस्तथा ।
बालकं पाठयामास ज्ञानं मृत्युञ्जयं परम् ॥”)

मृत्युनाशकः, पुं, ( नाशयतीति । नश् + णिच् +
ण्वुल् । मृत्योर्नाशकः ।) पारदः । इति राज-
निर्घण्टः ॥ मरणहारके, त्रि ॥

मृत्युपुष्पः, पुं, (मृत्यवे निजनाशाय पुष्पमस्य । सति
पुष्पोद्गमे अस्य नाशात्तथात्वम् ।) इक्षुः । इति
रत्नमाला ॥

मृत्युफलः, पुं, (मृत्यवे स्वनाशाय फलमस्य ।) महा-
कालफलम् । इति मेदिनी । ले, १६२ ॥

मृत्युफला, स्त्री, ( मृत्यवे फलमस्याः । ) कदली ।
इति मेदिनी । ले, १६२ ॥ ( कदलीशब्देऽस्या
विवरणं ज्ञातव्यम् ॥ )

मृत्युबीजः, पुं, ( मृत्यवे स्वनाशाय बीजमस्य । )
वंशः । इति त्रिकाण्डशेषः ॥

मृत्युभङ्गुरकः, पुं, मरणकालवादनीयपटहः । यथा,
“भवरुत् प्रेतपटहो मृत्युभङ्गुरकश्च सः ।”
इति त्रिकाण्डशेषः ॥

मृत्युभृत्यः, पुं, ( मृत्योर्भृत्यः किङ्कर इव । मरण-
हेतुत्वात् ।) रोगः । इति राजनिर्घण्टः ॥

मृत्युवञ्चनः, पुं, ( मृत्युं वञ्चयतीति । वञ्चि + ल्युः ।)
शिवः । बिल्ववृक्षः । द्रोणकाकः । इति मेदिनी ।
ने, २४५ ॥

मृत्युसूतिः, स्त्री, मृत्यवे सूतिः प्रसवो यस्याः सा ।
कर्कटी । यथा,—
“यथा कर्कटकी गर्भमाधत्ते मृत्युमात्मनः ।”
इति महाभारते विराटपर्व्व ॥

मृत्स्ना, स्त्री, ( प्रशस्ता मृत् इति । मृत् + “सस्नौ
प्रशंसायाम् ।” ५ । ४ । ४० । इति सः । टाप् ।)
प्रशस्तमृत्तिका । इत्यमरः । २ । १ । ४ ॥

मृत्स्ना, स्त्री, ( प्रशस्ता मृत् इति । मृत् + स्नः ।
टाप् ।) प्रशस्तमृत्तिका । (यथा, श्रीमद्भागवते ।
८ । ६ । १० ।
“त्वमादिरन्तो जगतोऽस्य मध्यम्
घटस्य मृत्स्नेव परः परस्मात् ॥”)
काक्षी । इत्यमरः । २।६।४॥ ( अस्याः पर्य्यायो
यथा,—
“सौराष्ट्री पार्व्वती मृत्स्ना काक्षी च पङ्क-
पर्पटी ।”
इति वैद्यकरत्नमालायाम् ॥)

मृत्स्नाभाण्डकः, पुं, ( मृत्स्नानिर्म्मितं भाण्डम् ।
ततः कन् । अभिधानात् पुंस्त्वम् ।) भाण्डविशेषः ।
तत्पर्य्यायः । सृष्टिका २ । इति त्रिकाण्डशेषः ॥

मृद, श चुदि । इति कविकल्पद्रुमः ॥ ( क्र्या०-
पर०-सक०-सेट् ।) श, मृद्नाति ममर्द । चुदि
चूर्णीकरणे । इति दुर्गादासः ॥

मृद्, [ त् ] स्त्री, (मृद्यते चूर्णीक्रियते इति । मृद् +
कर्म्मणि क्विप् ।) मृत् । मृत्तिका । इत्यमरः ।
२ । १ । ४ ॥ (यथा, मनौ । ४ । ३६ ।
“मृदं गां दैवतं विप्रं घृतं मधुचतुष्पथम् ॥”)

मृदङ्कुरः, पुं, हारीतपक्षी । इति हेमचन्द्रः ।
४ । ४०७ ॥

मृदङ्गः, पुं, (मृद्यते आहन्यते असौ इति । मृद् +
“विडादिभ्यः कित् ।” उणा० १ । १२० । इति
अङ्गच् । स च कित् । यद्वा, मृत् अङ्गमस्येत्यमर-
टीकायां रघुनाथः ।) स्वनामख्यातवाद्यम् ।
तत्पर्य्यायः । मुरजः २ । इत्यमरः । १ । ७ ।५॥
( यथा, शिशुपालवधे । ११ । २ ।
“रजनिविरतिशंसी कामिनीनां भविष्यद्-
विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥”)
पटहः । घोषः । इति मेदिनी । गे, ४७ ॥
वंशः । इति शब्दमाला ॥ ( मृदङ्गादेर्मङ्गल-
जनकत्वमाह स्मृतिः ।
“रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् ।
गुरुमग्निं तथा सूर्य्यं प्रातः पश्येत् सदा बुधः ॥”)

अथ मृदङ्गादिविवरणम् ।
“मर्द्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुणः ।
रक्तचन्दनजो वाद्यो गभीरध्वनिरञ्चकैः ॥
सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते ।
त्रयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम् ॥
दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा ।
करयानद्धवदनो मध्ये चैव पृथुर्भवेत् ॥
यस्तस्यैवो भवेदस्तस्तच्चर्म्मकरणं मतम् ।
मृत्तिकानिर्म्मितस्त्वेव मृदङ्गः परिकीर्त्तितः ॥
पातयेत् खरलिं वाद्यवादनार्थश्च मर्द्दले ।
विभूतिर्गैरिकं भक्तं केन्दुकेन च संयुतम् ॥
यद्वा चिपीटकं देयं जीवनीसत्त्वमिश्रितम् ।
सर्व्वमेकत्र पिष्टन्तन्नेयः खरलिरुच्यते ॥
वामास्ये पूरिकां कृत्वा लेपं दद्याच्च दक्षिणे ।
एवं मर्द्दलकः प्रोक्तः सर्व्ववाद्योत्तमो मतः ॥
अस्य संयोगमासाद्य सर्व्वं वाद्यञ्च शोभते ।
एतदङ्गे वीणकाष्ठे दशमर्द्धाङ्गुलं विदुः ॥ * ॥
तथि धोतेमिति क्रिया: पाठवर्णा मृदङ्गजाः ।
थों दं टिं धिक्कटस्तद्वौ ताकं दं दं थोगं धिधि ॥
खर्म्मभिं नं गटं दं या क्रुटपाटा मता अमी ।
तथिं थोंटिं तकधी दों दं दं धिगण्णां ततं तधि ॥
तक्र तं घं धि दों ताधि पाठखण्डे लयं क्रमः ।”
तथा च यतिमाने पाठखण्डः । द्रगतथेनां
द्रगतथेनां धो धो धिकता धिका थोनां थोनां
तक तता धिका थोता द्रग तता धि छि धिधि
कड़ ताकड़ नाथोधिक थोनां धोताद्रगत
ताद्रगत ताद्रगत ताधि । इति यतिमाने पाठ-
खण्डः ॥ * ॥
“यतिरोढ़ोऽप्यवच्छेदो गजरो रूपकं ध्रुवम् ।
गलपः सारिगोणी च नादश्च कथितं तथा ।
प्रहरणं छन्दनश्च प्रबन्धा द्वादश स्मृताः ॥”
यथा । दं घात इत्येकताल्यां यतिः ॥ * ॥
ओढ़वाद्यं यथा । दां तथो तधिक तधिक दं
घात् था थोधि थोधि तत्त तत्तथ धिघ धिद्रिशां
दिद्रिशां टटु नं कि टटु नकि तद टङ्ग तद टङ्ग
खवटङ्ग खवटङ्ग तगि नगि तगि नगि दां दां
दं दं दीं दीं दं ता तथा । इत्योढ़वाद्यम् ॥ * ॥
अवच्छेदवाद्यं यथा । दं यातः दं यातः धिक्कि
धिक्कि दिगणं दं यातः । इत्यवच्छेदवाद्यम् ॥*॥
गजरवाद्यं यथा । थोक टेम नेक्ट टिं हें गथो
गथोङ्ग टेङ्ग थोगतकि धिक तकि धिक टेङ्गन
धि धि कट तक थोक तधिकट तक्कक तथोग
तद्दीम् । इत्येकताल्यां गजरः ॥ * ॥ रूपक-
वाद्यं यथा । तकधिक् तकधिक्क थवितकि थवि-
तकि धिक्क दं यातः । इति रूपकवाद्यम् ॥*॥
ध्रुवकवाद्यं यथा । तक्क तक्कट घिक्क धिक्कट ।
इति निसारताले ध्रुवकः ॥ * ॥ गलपो यथा ।
तधिद्धि धिक तक तधि मलगं घा घा दें तथा
ढण्न । इत्येकताल्यां गलपः ॥ * ॥ सारिगोणी
यथा । थोङ्टेष तक्क घिक्क तकधिक् तकथो
घटङ्गन घटङ्गन थोगक्क थोः । इति प्रथम-
खण्डः ॥ * ॥ टेष थोः धि खोद्दः टेष टेष

द्क तगद्क धिक नदिक द्रं गद्रं गखो गखोक् तक तक धिक तधिक तधो टेण घोटेण घटे गल खोगगल खोग खोद्दट गें टगें खोद्द टण। इत्यस्य छन्दनम्। इति धारिगोखौ। नादो यथा,—

"दांकारत्रितय पूर्व्वं दा धिगिति ततस्त्रयम्।
दां दां धिकत्रय यत्र इति नाद प्रकीर्त्तित ॥"
इति नाद ॥

"द्रुतं मानमारभ्य शुद्ध कूटविनिर्म्मितम्।
सप्तपक्षमय वाद्य कथित तदिहोच्यते ॥" * ॥

द्रुतमानत्वात प्रतिताले यथा। ततत ततत तकि तकि ट्ट्ट धिगनधो धिगनधो धिक्क धिक धिक्क धिक्क धिक नगि नगगि थो थो धि धि धि दां दा धिक्क थो थो थो इथो इनन्नि थो नन्निथो थोद्द थोद्द डे ढ डेढि थोद्द थोद्द तटि तटि तटुक गों गों धगि धगि तत तधे तत तधे ततत गिडो जडो थोग थोग थों थोगग थोगथो ततनो।

"इति सम्प्रदायाद्धु कथित वाद्यमद्भुता।
प्रतितालेन तालेन पादवर्ण्णसमाश्रत ॥
गन्धर्व्वपतिना पूर्व्वमुत्क्षशीलास्यनर्त्तने।
सुधर्म्मारञ्जनार्थञ्च कथित प्रकटीकृतम् ॥"

प्रहरण यथा। थोगक्का नद्दिका थाग कट गगों द थोग दिद्धिक धिक्क धिकटेण। इत्येक ताल्या प्रहरणम् ॥ * ॥

"वाद्य विशुध्यते येन छन्दन तन्निगद्यते।"

यथा तद्धिथो दिम टेण नन्न। इति छन्दनम्॥*॥

मर्द्दलस्यचयोरष्टाङ्गुलवामसुखो द्वादशाङ्गुल दक्षिणसुख। मुरजस्य द्वादशाङ्गुलवामसुख सप्तदशाङ्गुलदक्षिणसुख मर्द्दलमुरजयोरय भेद। इति सङ्गीतदामोदर ॥

मृदङ्गफल, पु (मृदङ्गस्तदाकृति फलमस्य।) पनसवृक्ष। इति शब्दरत्नावली।

मृदङ्गफलिनी स्त्री,(मृदङ्गवत फलमस्त्यस्या। इनि ङीप च।) कोषातकी। इति राजनिर्घण्ट ॥ (विषयोऽस्या कोषातकीशब्दे ज्ञेय ॥)

मृदङ्गी, स्त्री, (मृदङ्ग तदाकारफलमस्त्यस्या इति। मृदङ्ग+अर्श आद्यच ङीष च।) घोषातकी। इति रत्नमाला। श्वेतघोषा इति भाषा ॥

मृदा, स्त्री, (मृद्+टाप।) मृत्तिका। इति द्विरूपकोष ॥

मृदाकर, पुं वज्रम्। इति शब्दमाला।

मृदित, त्रि मृदधातो. कर्म्मणि क्त। चूर्णी-कृत। (यथा,—

"त्रिगुणोष्णतोये मृदित' फाण्ट इत्यभिधीयते।"
इति वैद्यकपरिभाषायाम्।)

मृदिनी स्त्री, (मृद्+भावे क। मृद चूर्णी करणमस्त्यस्या। मृद+इनि। स्त्रियां ङीप।) प्रशस्तमृत्तिका। इति शब्दचन्द्रिका।

मृदु, त्रि (म्रदते मर्द्दितु शक्यते इति। म्रद्+"प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च।" उणा० १। २८। इति कु।) अतीक्ष्ण। कोमल। इत्यमर। ३। १। ७८। (यथा,—

'मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च।"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे।)

मृदुकन्यायां स्त्री। इति राजनिघण्ट। (पु वृषञ्जयराजपुत्र। इति विष्णुपुराणे। ४। २१। ३॥)

मृदुकृष्णायस, क्ली (मृदु च तत् कृष्णायसं चेति।) सीसकम्। इति राजनिघण्ट।

मृदुगण, पुं (मृदूनां गण।) चित्रानुराधा मृगशिरोरेवतीनक्षत्राणि। यथा। चित्रामित्र ^न्त्यभ मृदुगण। इति ज्योतिस्तत्त्वम्।

मृदुगमना स्त्री (मृदु गमनमस्या।) हसी। इति राजनिर्घण्ट। मन्दगमना स्त्री च।

मृदुचर्म्मी, [न्] पु, (मृदु कोमल चर्म्म त्वक। तदस्त्यस्य। चर्म्म+'व्रीह्यादिभ्यश्च।' ५।२।१२। इति इनि।) भूर्ज्जवृक्ष। इति राजनिघण्ट। कोमलत्वविशिष्टे त्रि।

मृदुच्छद, पु,(मृदु छद पत्रमस्य।) भूर्जवृक्ष। इति हेमचन्द्र। ४।२१०। गिरिजपीलुवृक्ष। इति जटाधर। कुकुन्दर। श्रीताल। इति राजनिर्घण्ट।

मृदुता, स्त्री (मृदु+तल+टाप।) मृदुत्वम्। मृदोर्भाव। इति व्याकरणम्। (यथा रघौ। ५। ५४।

'स चानुनीत प्रणतेन पश्चात्
मया महर्षिर्मृदुतामगच्छत्।')

मृदुताल पु (मृदूनि तालफलान्यस्य।) श्रीताल वृक्ष। इति राजनिर्घण्ट। कोमलतालश्च।

मृदुत्वक, [च] पुं, भूर्ज्जवृक्ष। इत्यमर। २।४।४६।
मृदुत्वच, मृदवस्त्वचोऽस्य मृदुत्वक चान्त। "भूर्ज्जोऽथ भूर्जपत्र' स्यात मृदुत्वक चर्म्मपुष्पक।" इति कोषान्तरमिति मधु। अदन्तनपुंसकत्वच शब्देन चायन्तत्वचाशब्देन वा विग्रहे मृदु त्वचोऽदन्तोऽपि भूर्जो भुजो बहुपटो बहुत्वको मृदुत्वच। इति स्वामी। इत्यमरटीकायां भरत।

मृदुन्नक, क्ली, (मृदा मृत्परिणामेन उत ऊर्द्ध्वं नीयते यत् इति। उत्+नी+कर्म्मकारके "अन्येष्वपि दृश्यते।" ३।२।४८। इत्यत्र चकारकोक्त्या ड। तत स्वार्थे कन्।) सुवर्णम्। इति शब्दचन्द्रिका।

मृदुपत्र पुं, (मृदूनि पत्राण्यस्य।) नल। इति राजनिर्घण्ट। कोमलपर्णे क्ली। तद्वति, त्रि।

मृदुपत्री, स्त्री (मृदूनि पत्राणि यस्या।) पिल्लो-शाकम्। इति राजनिर्घण्ट।

मृदुपर्व्वक, पुं, (मृदूनि पर्व्वाण्यस्य कप।) वेत्र। इति राजनिर्घण्ट। कोमलपर्व्वविशिष्टे त्रि।

मृदुपुष्प, पुं, (मृदूनि कोमलानि पुष्पाण्यस्य।) शिरीषवृक्ष। इति रत्नमाला। कोमलकुसुम-युक्ते, त्रि।

मृदुफल, पुं (मृदूनि फलान्यस्य।) विकङ्कत। मधुनालिकेरिक। विकण्टकवृक्ष। इति राज निर्घण्ट। कोमलफलवति, त्रि।

मृदुल, क्ली, (मृदु मृदुत्वमस्त्यस्य। मृदु+"सिध्मा दिभ्यश्च।" ५।२।९७। इति लच।) जलम्। इति शब्दचन्द्रिका। कोमले, त्रि। इत्यमर। ३।१।७८। (यथा शिशुपालवधे। ६।२।

"मृदुलतान्तलतान्तमलोकयत
स सुरभि सुरभि सुमनोभरै।")

मृदुलोमक, पु, (मृदूनि स्पर्शसुखानि लोमानि यस्य स। स्वार्थे कन्।) शशक। इति हेमचन्द्र। ४।३६१। कोमलरोमविशिष्टे, त्रि।

मृदूत्पल, क्ली, (मृदु कोमल उत्पलम्।) नील-पद्मम्। इति शब्दचन्द्रिका।

मृद्गु, पु, (मृद पङ्क गच्छति कारणत्वेन प्राप्नोतीति। गम्+डु।) मत्स्यभेद। इति सचिप्र सारोणादिवृत्ति।

मृद्वङ्ग, क्ली, (मृदु कोमल अङ्ग यस्य।) वङ्गम्। इति हेमचन्द्र। (मृदु च तदङ्गञ्चेति।) कोमलावयवश्च।

मृद्वी, स्त्री (मृदु+'वोतोगुणवचनात।" ४।१।४४। इति ङीष।) कोमलाङ्गी। इति मुग्ध-बोधव्याकरणम्। अपि च।

'सद्य पुरीपरिसरेषु शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा।
गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुण कृतवती प्रथमावतारम्।'
इति महानाटकम्।

कपिलद्राक्षा। इति राजनिर्घण्ट।

मृद्वीका स्त्री, (मृदु+बाहुलकात ईकन् टाप च।) द्राक्षा। इत्यमर'। २।४।१०७। (यथा, वृहत्संहितायाम्। ५५।१०।

"जम्बुवेतसवानीरकदम्बोदुम्बरार्ज्जुना'।
वीजपूरकमृद्वीकालकुचाश्च सदाडिमा।")

कपिलद्राक्षा। इति राजनिर्घण्ट।

मृध उ ञ क्लिदि। इति कविकल्पद्रुम। (भ्वा०-उभ०-अक० सेट। क्त्वावेट।) उ, मर्द्धित्वा मृद्धा। ञ, मर्धति मर्धते। क्लिदि आर्द्रीभावे। इति दुर्गादास।

मृध, क्ली, (मर्धन्ते क्लिद्यन्तीति। मृध+क।) युद्धम्। इत्यमर। २।८।१०४। (यथा हरिवंशे। १८२। १।

"अपयाते ततो देवे लक्ष्मणे चैव महात्मनि।
पुनश्चावर्त्तत मृध घोरं लोमहर्षणम्।")

मृधा च, मृषा। इत्यमरटीकासारसुन्दरी।

मृध्यर, पु, (मृधस्य मद।) पामाय। इति त्रिकाण्डशेष।

मृश, श औ मर्शि। इति कविकल्पद्रुम। (तुदा० पर० सक० अनिट।) श, मृशति। औ, अमार्क्षीत् अम्राक्षीत् अमृक्षत्। मर्शि इति तालव्यान्तस्यैव क्विपि रूपम्। तेन मर्ष

दिष्टाघत्वात् सम्र्षनं प्रणिधानञ्च अस्यार्थः। सम्र्षने। यथा, रवौ। ३। ६८।

"परागतान् धर्षलेन मानिना
तदीयमङ्गं कुलिशव्रणाङ्कितम्।"

प्रणिधाने।

"रामप्रवासे व्यमृशन्न दोषं
जनापवादं सनरेन्द्रमृत्युम्।"

कैकयीति भट्टिः। ३। ७॥

विमर्षः परामर्शः। मृषि इति मूर्द्धन्यान्तपाठो ह्येयः। तर्हि चमैवार्थः स्यात्। इति दुर्गादासः॥

मृष, तु क } चान्तौ। इति कविकल्पद्रुमः॥
मृष, तु ष } (अदन्त चुरा०-पर०-सक०-सेट्। अन्यत्र, अदन्त भ्वा०-उभ०-सक०-सेट्।) मूर्द्धन्योपधो। क, मृषयति। ष, मृषति मृषते। इति दुर्गादासः॥

मृष, उ सेचने। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्। क्त्वावेट्।) उ, मर्षित्वा मृष्ट्वा। इति दुर्गादासः॥

मृष, क चान्तौ। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) क, मर्षयति। अयमात्मनेपदीत्येके। इति दुर्गादासः॥

मृष, ष ऊ उ चान्तौ। इति कविकल्पद्रुमः॥ (भ्वा०-उभ०-आत्म०-च-सक०-सेट्। क्त्वावेट्।) ष, मर्षति मर्षते। ऊ, मर्षते। उ, मर्षित्वा मृष्ट्वा। अपि गुरुमपराधं मर्षति ब्राह्मणानामिति हलायुधः। इति दुर्गादासः॥

मृष, य ष चान्तौ। इति कविकल्पद्रुमः॥ (दिवा०-उभ०-सक०-सेट्।) य ष, मृष्यति मृष्यते समर्थः। इति दुर्गादासः॥

मृषा, व्य, (मृष्यत इति। मृष्+का।) मिथ्या। इत्यमरः। ३।४।१५॥ (यथा, नैषधचरिते। ६।६८।

"मृषान्यथं सादितये कुतूहला-
प्रलक्ष्य नासीरगते वितेनतुः॥")

वृथा। इति तट्टीकायां सारसुन्दरी॥

मृषार्थकं, क्ली, (मृषा अर्थोऽस्य। बहुव्रीहौ कप्।) अत्यन्तासम्भवार्थवाक्यम्। तत्पर्य्यायः। आश्चर्य्यम् २। इत्यमरः। १।६।२१। अत्यन्तासम्भवार्थे वचसि। आङ्पूर्वकः चर्य्य् आश्चर्यं क्तः। मृषा मिथ्या अर्थोऽस्य मृषार्थकं इह मृषार्थं यत् सर्व्वथा न घटते। यथा,—

"एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
कूर्म्मलोमतनुत्राणः शशशृङ्गधनुर्द्धरः इति॥
यावज्जीवमहं मौनी ब्रह्मचारी पिता ममेति।

अस्य चायं भेदः मौनित्वं ब्रह्मचारित्वं अन्यत्र सिद्धमेव वन्ध्यासुतत्वं खपुष्पत्वादयन्त्वसिद्धमिति। इति भरतः॥

मृषाध्यायी, [न्] पुं, (मृषा ध्यायति चिन्तयतीति। ध्यै+णिनिः।) वकः। यथा,—

"कङ्को वको वकोटश्च तीर्थसेवी च तापसः।
मीनघाती मृषाध्यायी निश्चलाङ्गश्च दाम्भिकः॥"

इति राजनिर्घण्टः॥

मृषालकः, पुं, (मृषा मिथ्या अचिरस्थायित्वेन सकुलीत्मकाह इत्यर्थः। अलं अलङ्करणं कायति प्रकाशयतीति। कै+कः।) आम्रवृक्षः। इति शब्दचन्द्रिका॥

मृषावादः, पुं, (मृषा मिथ्या वादः कथनम्।) मिथ्यावाक्यम्। तत्पर्य्यायः। चटूरी २। इति जटाधरः॥ (यथा, महाभारते। ३। १८८। ३३।

"वहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप!।
मृषानुशासिनः पापाः मृषावादपरायणाः॥")

मृषावादी, [न्] त्रि, (मृषा वदतीति। वद्+णिनिः।) मिथ्यावादकः। तत्पर्य्यायः। मृषोद्यः। इति शब्दमाला॥ मिथ्याभियोक्ता, च॥

मृषोद्यं, क्ली, (मृषा+वद्+"राजसूयसूर्य्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः।" ३।१।११४। इति कर्म्मणि क्यप्। निपातितश्च।) मिथ्यावाक्यम्। इति मुग्धबोधव्याकरणम्॥ (यथा, भट्टिकाव्ये। ५। ६०।

"मृषोद्यं प्रवदन्तीं त्वां सत्यवादी रघूत्तमः॥")

मृषोद्यः, त्रि, मिथ्यावादी। इति शब्दमाला॥

मृष्टं, क्ली, (मृष+क्तः।) मरिचम्। इति राजनिर्घण्टः॥

मृष्टः, त्रि, (मृज+क्त।) शोधितम्। इत्यमरः। ३।१।५६॥ (यथा, वृहत्संहितायाम्। ८५।८।

"अशुभकरमतोऽन्यथाप्रदिष्टं
स्थितमतितं च करोति मृष्टमन्नम्॥")

मृष्टेरुकः, पुं, वदान्यः। मिष्टाशी। अतिथिद्विट्। इति मेदिनी। के, २०६॥

मॄ, शि वधे। इति कविकल्पद्रुमः॥ (क्र्या०-पर०-सक०-सेट्।) शि, मृणाति। मूर्णः। मूर्त्तिः। इति दुर्गादासः॥

मे, ङ प्रतीदाने। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-अनिट्।) प्रतीदानं परिवर्त्तः। ङ, मयते धान्येन सार्पं लोकः। इति दुर्गादासः॥

मे, त्रि, मह्यम्। आमाके इति भाषा। मम आमार इतिभाषा। एते अस्मच्छब्दस्य चतुर्थीषष्ठीकवचनाभ्यां निष्पन्ने। इति व्याकरणम्॥

मेकः, पुं, (मे इति कायति शब्दं करोतीति। कै शब्दे+कः।) छागः। इति राजनिर्घण्टः॥

मेक(ख)लकन्यका, स्त्री, (मेक(ख)लः मेखलायुक्तः विन्ध्यपर्व्वतः तस्य कन्यका। तस्य नितम्बदेशात् निःसृतेत्यर्थः।) नर्म्मदानदी। इत्यमरः। १। १०। ३२॥

मेक(ख)लादिजा, स्त्री, (मेक(ख)लात् नितम्बदेशोपलक्षितात् अद्रेर्ज्जाता। जन+डः+स्त्रियां टाप्।) नर्म्मदानदी। यथा,—

"रेवेन्दुजा पूर्व्वगङ्गा नर्म्मदा मेकलादिजा।"

इति हेमचन्द्रः॥

मेचकं, क्ली, यज्ञीयपात्रविशेषः। (यथा, आश्वलायनश्रौतसूत्रे। २। ६। १२।

"मेचकेनादायावदानसम्पदा जुहुयात्॥")

यथा, मेचकादीनाञ्च छन्दोगपरिशिष्टम्।

"इक्षणातीयमिथार्द्धप्रमाणं मेचकं भवेत्।

वृत्तं चार्द्धञ्च पृथग्ग्रामवदानक्रियाक्षमम्॥"

इक्षार्द्धप्रमाणम्।

प्रादेशद्वयमित्यस्य प्रमाणं परिकल्पितमिति।

तदर्द्धम्। एवैव दर्व्वी। विशेषस्तु महासुवे

"दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयेण तु मेचकम्।

मुसलोदूखले वार्क्षे स्वायते सुदृढे तथा॥"

इति संस्कारतत्त्वम्॥

मेखला, स्त्री, (मीयते प्रक्षिप्यते कायमध्यभागे इति। मि+संज्ञायां खलः गुणश्च स्त्रियां टाप् इत्यमरटीकायां भरतमतम्।) स्त्रीकट्याभरणम्। चन्द्रहार गोट् इत्यादि भाषा (यथा, रघुवंशे। ८। ६४।

"असमाप्य विलासमेखलां
किमिदं किन्नरकण्ठि! सुप्यते॥")

तत्पर्य्यायः। काञ्ची २ सप्तकी ३ रसना सारसनम् ५। इत्यमरः। २।६।१०८॥ काञ्चिः रशना ७ कक्षा ८ रसनम् ९ रशनम् १० कक्ष्या ११ सप्तका १२ सारशनम् १३। इति शब्दरत्नावली॥ कलापः १४। इति जटाधरः। सारसनं स्त्रीकट्यां वध्यमानं यन्त्रम्। इति स्वामी केचित्।

"एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका।
रसना षोडश ज्ञेया कलापः पञ्चविंशकः॥"

इति पठन्ति। इह लभेदात् पर्य्यायता। इति भरतः॥ खड्गादिनियन्त्रणम्। इत्यमरः। २। ८। ९०॥ शिञ्जिनिका। चर्म्मरज्वादि। सुचिदार्थ्यार्थं उपर्य्यधो लौहवन्धः। इत्येके। इति भरतः॥ ॥ शैलनितम्बः। इति मेदिनी। ले १२५॥ नर्म्मदानदी। इति शब्दरत्नावली पृश्निपर्णी। इति राजनिर्घण्टः॥ ॥ उपनयन काले धारणीयमुञ्जनिर्म्मितसूत्रत्रयम्। यथा अथैनं माणवकमाचार्य्यस्त्रिः प्रदक्षिणं त्रिवृत्त मुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति इति भवदेवभट्टः॥ अपि च। गोभिलः। मुञ्जकाशतासन्यो रसनाः। मुञ्जः शरः। ताम्रन शणसङ्गवा तासनी। रसना मेखला। तथा च मनुः।

"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य
मेखला।
क्षत्त्रियस्य च मौर्व्वी ज्या वैश्यस्य शणतान्तवी॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकवल्वजैः।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा॥"

इति संस्कारतत्त्वम्॥

अन्यच्च।

"गर्भाष्टमेऽष्टमे वाब्दे स्वसूत्रोक्तविधानतः।
दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य
मेखला।
मौञ्ज्यभावे कुशेनाहुर्ग्रन्थिनैकेन च त्रिभिः॥"

इति कौर्म्मे उपविभागे ११ अध्यायः॥

होमकुण्डोपरिस्थितवेष्टनविशेषः। यथा, वह्निश्रमपञ्चरात्रे।

"यावान् कुण्डस्य विस्तारः खननं तावदिष्यते ।
एकैके मेखलास्तिस्रो वेदाग्निनयनाङ्गुलाः ॥
कुण्डे द्विहस्ते ता ज्ञेया रसपक्षगुणाङ्गुलाः ।
चतुर्हस्ते तु कुण्डे ता वसुतर्कगुणाङ्गुलाः ॥"
मेखला ब्रह्मचारिमेखलावत् कुण्डवेष्टिता इष्टक-घटिता ताश्च खातदक्षाद्धौ एकाङ्गुलिरूप कण्ठं परित्यज्य उच्छ्रायेण विस्तारेण चेत्यादि क्रमेण वेदाद्यङ्गुला एतद्विपरीतास्त्वशास्त्रीया व्यवहारविरुद्धा । वेदाश्चत्वारः अग्नयस्त्रय नयने द्वे रसाः षट् गुणास्त्रय । वसुतर्कगुणानि अष्टषट्चत्वारि । पिङ्गलामतेऽपि । खातादेकाङ्गुलं त्यक्त्वा मेखलानां विधिर्भवेत् । इति तिथ्यादितत्त्वे दुर्गोत्सवतत्त्वम् ॥ ( यज्ञवेष्टनसूत्रम् । यथा, श्रीमद्भागवते । ४ । ५ । १५ ।
"रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् ।
कुण्डेष्वमूत्रयन् केचिद्बिभिदुर्वेदिमेखलाः ॥"
'मेखला सीमासूत्राणि ।' इति तट्टीकायां श्रीधरस्वामी ॥ )

मेखलकन्यका, स्त्री, (मेखलस्य मेखलोपलक्षितस्य विन्ध्यगिरेः कन्येव प्रसूता ।) नर्म्मदानदी । इत्यमरटीकायां भरतः ॥

मेघ, पुं, (मेहतीति । मिह + अच् । "न्यङ्क्वादीनाञ्च ।" ७ । ३ । ५३ । इति कुत्वम् ।) मुस्तक । राक्षस । इति शब्दरत्नावली ॥ स्वनामख्यातद्रव्यपदार्थः । मेहति सिञ्चति यः । तत्पर्य्यायः । अभ्रम् २ वारिवाहः ३ स्तनयित्नुः ४ बलाहकः ५ धाराधरः ६ जलधरः ७ तडित्वान् ८ वारिदः ९ अम्बुभृत् १० घनः ११ जीमूतः १२ मुदिरः १३ जलमुक् १४ धूमयोनिः १५ । इत्यमरः । १ । ३ । ७ ॥ अभ्रम् १६ पयोधरः १७ अम्भोधरः १८ व्योमधूमः १९ घनाघनः २० वायुदारः २१ नभश्चरः २२ कम्बरः २३ कन्धः २४ नीरदः २५ गगनध्वजः २६ वारिमुक् २७ वार्म्मुक् २८ वनमुक् २९ अब्दः ३० पर्ज्जन्यः ३१ नभोगजः ३२ मदयित्नुः ३३ कम्... ३४ कन्दः ३५ गवेडुः ३६ गदामरः ३७ खतमालः ३८ वातरथः ३९ श्वेतनीलः ४० नागः ४१ जलकरङ्कः ४२ पेचकः ४३ भेकः ४४ दर्दुरः ४५ । इति शब्दरत्नावली ॥ अम्बुदः ४६ तोयदः ४७ अम्बुवाहः ४८ । इति रत्नमाला ॥ पाथोदः ४९ गदाम्बरः ५० गाडवः ५१ वारिमसिः ५२ । इति त्रिकाण्डशेषः ॥ सदैकपर्य्यायाः । अद्रिः १ ग्रावा २ गोत्रः ३ बलः ४ अश्नः ५ पुरुभोजाः ६ वलिशानः ७ अश्मा ८ पर्व्वतः ९ गिरिः १० व्रजः ११ चरुः १२ वराहः १३ शम्बरः १४ रौहिणः १५ रैवतः १६ फलिगः १७ उपरः १८ उपलः १९ चमसः २० अहिः २१ अभ्रम् २२ बलाहकः २३ मेघः २४ दृतिः २५ ओदनः २६ वृषन्धिः २७ वृत्रः २८ असुरः २९ कोशः ३० । इति त्रिंशन्मेघनामानि । इति वेदनिघण्टौ । १ । १० ॥ ( यथा उत्तररामचरिते । २ ।
'मेघमालेव यश्चायमारादपि विभाव्यते ॥")

मेघनायका यथा —
"त्रियुते शाकवर्षे तु चतुर्भिः शोधिते क्रमात् ।
आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम् ॥"
एषां फलानि ।
"आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः ।
पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः ॥"
इति ज्योतिस्तत्त्वम् ॥ ० ॥

त्रेतायुगे तस्योत्पत्तिर्यथा,—
"अपां सिद्धे प्रतिगते तदा मेघात्मना तु वै ।
मेघैश्च स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्ज्जनम् ॥
सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले ।
प्रादुरासंस्तदा तासां वृक्षा वै गृहसंज्ञिताः ॥
सर्व्वप्रत्युपभोगस्तु तासां तेभ्यः प्रजायते ।
वर्त्तयिष्यन्ति ते तस्मात्त्रेतायुगमुखे प्रजाः ॥"
इति कौर्म्मे २९ अध्यायः ॥ ० ॥

प्रलयकालीनमेघा यथा —
"ततो गजकुलोन्नादास्तडिद्भिः समलङ्कृताः ।
उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्त्तका घनाः ॥
केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः ।
धूम्रवर्णास्तथा केचित् केचित् पीताः पयोधराः ॥
केचिद्रासभवर्णाश्च स्थूलाः पारनिभास्तथा ।
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभाः परे ॥
मनःशिलानिभास्त्वन्ये कपोतसदृशाः परे ।
केचिद्वदान्यवर्णाभास्त्वन्ये चौरसन्निभाः ॥
तथा कर्व्वुरवर्णाभा भिन्नाञ्जननिभास्तथा ।
इन्द्रगोपनिभाः केचित् हरितालनिभास्तथा ॥
काकाण्डकनिभाः केचिदुत्तिष्ठन्ति घना दिवि ।
केचित् पर्व्वतसङ्काशाः केचिद्गजकुलोपमाः ॥
कूटागारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः ।
बहुरूपा घोररूपा घोरस्वरनिनादिनः ।
तदा जलधराः सर्व्वे पूरयन्ति नभस्तलम् ॥
ततस्ते जलदा घोरा राविणो भास्करात्मजाः ।
सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ॥
ततस्ते जलदा वर्षं वमन्तीह महौघवत् ।
सुघोरमशिवं सर्व्वं नाशयन्ति च पावकम् ॥
प्रवृत्तेन तदात्यर्थमम्भसा पूर्य्यते किल ।
अद्भिस्तेजोऽभिभूतत्वात्तदाग्निः प्रविशत्यपि ॥
नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसम्भवाः ।
प्लावयन्तोऽथ भुवनं महाजलपरिस्रवैः ॥
धाराभिः पूरयन्तीदं चोद्यमानाः स्वयम्भुवा ।
अत्यर्थं सलिलौघैश्च वेला इव महोदधेः ॥
साद्रिद्वीपा तथा पृथ्वी जलैः संछाद्यते शनैः ।
आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति ।
पुनः पतति तद्भूमौ पूर्य्यन्ते तेन चार्णवाः ॥"
इति कौर्म्मे उपविभागे ४२ अध्यायः ॥ ० ॥

मेघस्य उत्पत्तिर्यथा —
"तेजो हि सर्व्वभूतस्य आदत्ते रश्मिभिर्जलम्
समुद्रात्तन्मया योगात्पवनस्य प्रवहन्त्यथ ॥
ततोऽयनवशात् काले परिवृत्तो दिवाकरः ।
नियच्छति पयो मेघे शुक्लांशुकैर्गभस्तिभिः ॥
अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः ।
सर्व्वभूतहितार्थाय वायुभिः समन्ततः ॥
ततो वर्षति षण्मासान् सर्व्वभूतविवृद्धये ।
वायव्यं स्तनितञ्चैव विद्युदग्निसमप्रभम् ॥
मेहनाच्च मिहेर्धातोर्मेघत्वं व्यञ्जयन्ति च ।
न भ्रश्यन्ति यतश्चापस्तदभ्रं कवयो विदुः ॥"
अपि च ।
"मेघानां पुनरुत्पत्तौ त्रिविधा योनिरुच्यते ।
आग्नेया ब्रह्मजाश्चैव पक्षजाश्च पृथग्विधाः ॥
त्रिधा विधायनात्तेषां वक्ष्यामि तत्सम्भवम् ।
आग्नेयाः खल्वजाः प्रोक्तास्तेषां धूमप्रवर्त्तनम् ॥
शीतदुर्दिनवाताद्ये गुणास्ते व्यवस्थिताः ।
महिषाश्च वराहाश्च मत्तमातङ्गरूपिणः ॥
भूत्वा धरणिमभ्येत्य रमन्ते विचरन्ति च ।
जीमूता नाम ते मेघा ये तेभ्यो जीवसम्भवाः ॥
विद्युद्गुणविहीनाश्च जलधारावलम्बिनः ।
मृदुसका महाकाया आवहस्य च सानुगाः ॥
क्रोशमात्राच्च वर्षन्ति क्रोशार्द्धादपि वा पुनः ।
पर्व्वताग्रनितम्बेषु वर्षन्ति विपिनेषु च ॥
बलाका गर्भधाश्चैव बलाकागर्भधारिणः ।
ब्रह्मजा नाम ते मेघा ब्रह्मनिश्वाससम्भवाः ॥
द्वितीयं प्रवहं वायुं मेघास्ते तु समाश्रिताः ।
इतो योजनमात्राच्च सार्द्धाद्वात विततादपि ॥
वृष्टिसर्गाद्विवर्त्तेषां धारासारा प्रकीर्त्तिता ।
पक्षेण पक्षा यच्छिन्ना पर्व्वतानां महौजसाम् ॥
कामगानां प्रवृत्तानां प्रजानां शिवमिच्छता ।
पुष्करावर्त्तकास्तेन कारणेनेह विश्रुताः ॥
नानारूपधराश्चैव महाघोरस्वनाश्च ते ।
कल्पान्तवृष्टेः स्रष्टारः संवर्त्ताग्नेर्नियामकाः ॥
वर्षन्ति ते युगान्तेषु तृतीयास्ते प्रकीर्त्तिताः ।
अनेकरूपसंस्थाना पूरयन्तो महीं जलैः ॥
वायुं परिवहन्ते तु आश्रिताः कल्पसाधकाः ।
योऽन्यस्याण्डस्य भिन्नस्य प्राकृतप्रभवस्तदा ॥
यस्माद्ब्रह्मा समुत्पन्नश्चतुर्व्वक्त्रः स्वयम्भुवः ।
तस्यैवाण्डस्य पाला हि सर्व्वे मेघाः प्रकीर्त्तिताः ॥
तेषामथाप्यायनं धूमः सर्व्वेषामविशेषतः ।
तेषां श्रेष्ठस्तु पर्ज्जन्यश्चत्वारश्चैव दिग्गजाः ॥
गजानां पर्व्वतानाञ्च मेघानां भोगिभिः सह ।
कुलमेकं पृथग्भूतं योनिरेका जलं स्मृतम् ॥
पर्ज्जन्यो दिग्गजाश्चैव हेमन्ते शीतसम्भवाम् ।
तुषारवृष्टिं वर्षन्ति हिमशस्यविवृद्धये ॥"
इति ब्रह्माण्डे ५८ अध्यायः ॥ ० ॥

षड्रागान्तर्गतरागविशेषः । यथा —
"भैरवोऽथ वसन्तश्च नटो नारायणस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥"
तस्य रागिण्यो यथा —
"ललिता मालसी गौडी नाटी देवकिरी तथा ।
मेघरागस्य रागिण्यो भवन्तीमाः सुमध्यमाः ॥"
अथ हनूमन्मते षड्रागो ब्रह्मणो मस्तकात् निर्गतः । आकाशाज्जात इति च वदन्ति । अस्य जातिरौडवः । अथात् ध नि स रि ग इति पञ्चस्वरमिलितः । अस्य ग्रहः धैवतस्वरः ।

वर्षर्त्तौ रात्रिशेषे गानसमयः। अस्याकारः। सुन्दरपुरुषः। श्यामवर्णः। उष्णीषवद्दकेशः। शाणितखड्गहस्तः। हनूमन्मते अस्य पञ्च-रागिण्यो यथा। टङ्का १ मल्लारी २ गुर्ज्जरी ३ भूपाली ४ देशकारी च ५। अस्याष्टपुत्त्रा यथा। जालन्धरः १ सारः २ नटनारायणः ३ शङ्कराभरणः ४ कल्याणः ५ गजधरः ६ गान्धारः ७ सहाना ८॥ कल्लानाथमते। अस्य रागिण्यः षट् यथा। वङ्गाली १ मधुरा २ कामोदा ३ धनाश्रीः ४ तीर्थकी ५ देवाली ६। एतन्मतेऽपि अष्टौ पुत्त्राः किन्तु नटनारायण-शङ्कराभरणकल्याणस्थाने केदारामारुजलभरता ज्ञेयाः॥ सोमेश्वरमते अस्य षड्रागिण्यो यथा। मल्लारी १ सौरटी २ सावेरी ३ कौशिकी ४ गान्धारी ५ हरशृङ्गारी ६। एतन्मतेऽपि पुत्त्राः पूर्व्ववत्। रागिणीसहितस्यैतद्रागस्य वर्षर्त्तौ गानसमयः॥ भरतमते तस्य पञ्च रागिण्यो यथा। मल्लारः १ मूलतानी २ देशी ३ रतिवल्लभा ४ कावेरी ५। तन्मते अष्टौ पुत्त्रा यथा। कलायरः १ वागेश्वरी २ सहाना ३ पुरीया ४ कानरा ५ तिलकः ६ स्तम्भः ७ शङ्कराभरणः ८। तन्मते अष्टपुत्त्राणां भार्य्या यथा। करणाटी १ कादवी २ कदमनाटः ३ पाहारी ४ झाँझः ५ परजः ६ नटमञ्जरी ७ शुद्धनटः ८। इति सङ्गीतशास्त्रम्॥

मेघकफः, पुं, (मेघानां कफ इव।) करका। इति हारावली। ५८॥

मेघकालः, पुं, (मेघानां कालः समयः।) वर्षर्त्तुः। इति जटाधरः॥ (यथा, बृहत्संहितायाम्। ६५। ५८।
“स्थलसलिलचराणां व्यत्ययो मेघकाले। प्रचुरसलिलवृष्ट्यै शोषकाले भयाय॥”)

मेघचिन्तकः, पुं, (चिन्तयतीति। चिन्ति+ण्वुल्। मेघानां चिन्तकः तस्यैव जलपायित्वात्।) चातकपक्षी। इति शब्दचन्द्रिका॥ (मेघ-चिन्तनविशिष्टे, त्रि॥)

मेघजं, त्रि, मेघभववस्तु। मेघाज्जायते इति व्युत्-पत्त्या जनधातोः डप्रत्ययेन निष्पन्नम्॥

मेघजालं, क्ली, (मेघानां जालम्।) अभ्रियम्। इति शब्दचन्द्रिका॥

मेघजीवनः, पुं, (मेघो जीवनं जीवनोपायो यस्य।) चातकपक्षी। इति राजनिर्घण्टः॥

मेघज्योतिः, [स्] पुं, (मेघस्य ज्योतिरग्निर्मेघा-द्वृत्पन्नो ज्योतिर्वा।) वज्राग्निः। तत्पर्य्यायः। इरम्मदः २। इत्यमरः।१।३।१०॥ मेघस्य ज्योति-रग्निर्मेघज्योतिः। ज्योतिरग्नौ समाख्यातं ज्योतिश्चन्द्रो निगद्यते। इति रन्तिः॥ इरया जलेन माद्यति दीप्यते इति इरम्मदः। मेघाग्निर्हि जलेनैव दीप्यते। मदीभिर्येभ्नि हर्षे हृ भृ ट्ट दृ जीति खः खिल्व्याजिति मनुखौ। अन्योन्य-संघट्टेन मेघाग्निरत्र यज्ज्योतिर्वृष्ट्यादौ पतति स इरम्मदः। मेघ इवाग्निप्रभत्वं तेन वातजो-ऽपीरम्मदः सोऽपि हि इरया जलेन माद्यतीति कौमुदी। मेघाग्न्यादिरिरम्मद इति शब्दार्णवः। इति तट्टीकायां भरतः॥

मेघडम्बरः, पुं, मेघस्याड्म्बरः। मेघगर्जनम्। यथा,—
“अजायुद्धे ऋषिश्राद्धे प्रभाते मेघडम्बरे। दम्पत्योः कलहे चैव बह्वारम्भे लघुक्रिया॥”
इत्युद्भटः॥

मेघतिमिरं, क्ली, (मेघेन तिमिरं अन्धकारो यत्र।) मेघाच्छन्नदिनम्। इति हलायुधः॥

मेघदीपः, पुं, (मेघजनितो दीप इव।) विद्युत्। इति शब्दमाला॥

मेघनादः, पुं, (मेघं नादयतीति। नद्+णिच्+अण्।) वरुणः। (मेघस्य नाद इव नादो यस्य।) रावणपुत्त्रः। इति मेदिनी। दे, ५२॥ (यथा, रघौ। १२। ७६।
“शरड़ापातविश्लिष्टमेघनादास्त्रबन्धनः॥”
मेघस्य नादः।) मेघशब्दः। इति हेमचन्द्रः॥ (यथा, महाभारते। ३। ७३। ७।
“ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा। प्रणेदुरुन्मुखा राजन्! मेघनाद इवोत्-सुकाः॥”)
पलाशवृक्षः। इति शब्दचन्द्रिका॥ तण्डुलीय-शाकः। इति राजनिर्घण्टः॥ (यथा, भाव-प्रकाशे।
“तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः॥”
अस्य गुणादिकं तण्डुलीयशब्दे द्रष्टव्यम्॥ दानवभेदः। यथा, हरिवंशे। ३३२। ३०।
“सुबाहुर्मेघनादश्च भीमगर्भश्च वीर्य्यवान्॥”
मेघसदृशशब्दविशिष्टे, त्रि। यथा, रामायणे। २। १६। २८।
“मेघनादमसम्बाधं मणिहेमविभूषितम्॥”)

मेघनादजित्, पुं, (मेघनादं जितवानिति। जि+क्विप्।) लक्ष्मणः। इति त्रिकाण्डशेषः॥

मेघनादानुलासकः, पुं, (मेघनादं अनु लक्षीकृत्य लसति क्रीड़तीति। लस+ण्वुल्।) मयूरः। इति राजनिर्घण्टः॥

मेघनादानुलासी, [न्] पुं, (मेघनादमनुलसतीति। लस+णिनिः।) मयूरः। इत्यमरः।२।५।३०॥

मेघनामा, [न्] पुं, (मेघस्य नाम नाम यस्य।) मुस्तकः। इत्यमरः। २। ४। १५८॥ (पर्य्यायो-ऽस्य यथा,—
“मुस्तको मेघनामा स्यात्।”
इति गारुड़े २०८ अध्यायः॥)

मेघनिर्घोषः, पुं, (मेघस्य निर्घोषः।) मेघशब्दः। तत्पर्य्यायः। स्तनितम् २ गर्जितम् ३ रसितम् ४। इत्यमरः। १।३।८॥ ध्वनितम् ५ ह्रादितम् ६। इति भरतः॥ (मेघस्य निर्घोष इव निर्घोषो यस्य। मेघतुल्यशब्दविशिष्टे, त्रि। यथा, महा-भारते। ३। ७३। ११।
“यदि मां मेघनिर्घोषो नोपगच्छति नैषधः। अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम्॥”)

मेघपुष्पं, क्ली, (मेघस्य पुष्पमिव।) जलम्। इत्य-मरः। १। १०। ५॥ पिण्डाभ्रम्। नदीजलम्। इति मेदिनी। पे, २८॥

मेघपुष्पः, पुं, (मेघ इव पुष्यति प्रकाशते इति। पुष्प विकाशने+अच्।) शक्रहयः। इति शब्द-रत्नावली॥ श्रीकृष्णाश्वश्च॥ (यथा, महाभारते। ४। ४३। २१।
“तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम्॥”)

मेघप्रभवः, पुं, (मेघः प्रभवः उत्पत्तिस्थानमस्य इति।) जलम्। इति राजनिर्घण्टः॥ मेघ-जाते, त्रि॥

मेघभूतिः, पुं, (मेघात् भूतिर्जन्मास्य।) वज्रम्। इति शब्दरत्नावली॥

मेघमालः, पुं, (मेघमाला वर्णसादृश्येन अस्त्यस्य। अर्श आद्यच्।) रमागर्भजातकल्किदेवपुत्त्रः। यथा। “तथा रमा सिते पक्षे।” इत्युपक्रम्य।
“सा पुत्त्रं सुषुवे साध्वी मेघमालबलाहकौ। महोत्साहौ महावीर्य्यौ सुभगौ कल्किसम्मतौ॥”
इति कल्किपुराणे ३१ अध्यायः॥
(प्लक्षद्वीपस्थपर्व्वतविशेषः। यथा, भागवते।५। २०।४। “सुवर्णो हिरण्यष्ठीवो मेघमाल इति सेतु-शैलाः॥” वानरविशेषः। इति रामायणे। ३। २८। ३१॥)

मेघमाला, स्त्री, (मेघानां माला।) मेघश्रेणी। तत्पर्य्यायः। कादम्बिनी २। इत्यमरः।१।२।८॥ (यथा, उत्तररामचरिते। ३।
“मेघमालेव यश्चायमारादपि विभाव्यते।”
स्कन्दमातृगणान्यतमा। यथा, महाभारते। ९। ४६। २८।
“एकवक्त्रा मेघरवा मेघमाला विरोचना॥”)

मेघयोनिः, पुं, (मेघस्य योनिः उत्पत्तिकारणम्।) धूमः। इति शब्दरत्नावली॥

मेघरागः, पुं, (मेघनामको रागः।) षड्रागान्त-र्गतरागविशेषः। इति हलायुधः॥ (यथा, संगीतदर्पणे रागाध्याये। ३१।
“भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा। श्रीरागो मेघरागश्च षड़ेते पुरुषाह्वयाः॥”)
अस्य विवरणं मेघशब्दे द्रष्टव्यम्॥

मेघवर्णा, स्त्री, (मेघस्येव वर्णोऽस्याः। स्त्रियां टाप्।) नीलीवृक्षः। इति शब्दचन्द्रिका॥ (मेघतुल्यवर्णे, त्रि। यथा, महाभारते। ३। ४६। २५।
“सूक्ष्मक्षौमोत्तरीयेण मेघवर्णेन राजता॥”)

मेघवर्त्म, [न्] क्ली, (मेघानां वर्त्म पन्थाः।) आका-शम्। इति त्रिकाण्डशेषः॥

मेघवह्निः, पुं, (मेघस्य मेघजन्यो वा वह्निः।) वज्राग्निः। तत्पर्य्यायः। इरम्मदः २। इति हेमचन्द्रः। ४। १६७॥

मेघवाहनः, पुं, (मेघो वाहनमस्य।) इन्द्रः। इत्य-मरः।१।१।४७॥ (यथा, शिशुपालवधे।१३।१८।
“अविलम्बितैलविलपाशिपल्लवः मार्द्दत स मेघमिव मेघवाहनः॥”)

५ वाह्निभवम् ६ द्रोणी ७ त्रिकूटलवणम् ८। अस्य गुणाः। पाकेनाल्पत्वम्। अविदाहित्वम्। भेदनत्वम्। स्निग्धत्वम्। शूलनाशित्वम्। अल्पपित्तत्वञ्च। इति राजनिर्घण्टः॥

द्रोहः, पुं, (द्रुह्+भावे घञ्।) जिघांसा। अनिष्टचिन्तनम्। तत्पर्य्यायः। अपक्रिया २। इति हेमचन्द्रः।६।१५१॥ यथा, कूर्म्मपुराणे।
"देवद्रोहाद्‌गुरोर्द्रोहः कोटिकोटिगुणाधिकः॥"
(छद्मवधः। यथा, मनौ।७।४८।
"पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम्।
वाग्दण्डजञ्चापि पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥"
"द्रोहश्छद्मवधः।" इति तट्टीकायां कुल्लूकभट्टः॥)

द्रोहचिन्तनं, क्ली, (द्रोहस्य चिन्तनम्।) परानिष्टचिन्ता। तत्पर्य्यायः। व्यापादः २। इत्यमरः।१।५।४॥

द्रोहाटः, पुं, (द्रोहाय अटतीति। अट्+अच्।) गाथाप्रभेदः। मृगलुब्धकः। बैडालव्रतिकः। इति मेदिनी। टे, ४६॥

द्रोही, [न्] पुं, (द्रोहोऽस्यस्येति इनिः। यद्वा, द्रुह्यतीति णिनिः।) द्रोहकः। परानिष्टचिन्तकः। यथा,—
"मित्रद्रोही कृतघ्नश्च ये च विश्वासघातकाः।
ते नरा नरके यान्ति यावच्चन्द्रदिवाकरौ॥"
इति ससेमिरोपाख्यानम्॥
(यथा च, कथासरित्सागरे।५।६३॥
"तत्कुलाचिन्त्यदाशा नूनं द्रोही स एव मे॥")

द्रौणायनः, पुं, (द्रोणस्यापत्यम्। द्रोण+फक्।) अश्वत्थामा। इति त्रिकाण्डशेषः॥

द्रौणिः, पुं, (द्रोणस्यापत्यम्। द्रोण+इञ्।) अश्वत्थामा। इति शब्दरत्नावली॥ (यथा, महाभारते।४।५६।७४।
"आद्रुत्य तु महाबाहुर्यतो द्रौणिस्ततो ह्ययात्॥"
अयं हि एकोनत्रिंशद्द्वापरयुगस्य व्यासः। यथा, देवीभागवते।१।३।२३।
"एकोनत्रिंशत् संप्राप्ते द्रौणिर्व्यासो भविष्यति॥")

द्रौणिकः, त्रि, (द्रोणस्य द्रोणपरिमितबीजस्य वापः इति। द्रोण+"तस्य वापः।" ५।१।४५। इति ठञ्।) द्रोणपरिमितबीजवपनयोग्यक्षेत्रम्। इत्यमरः।२।९।१०॥ (द्रोणेन क्रीतः। निष्कादित्वात् ठक्। द्रोणक्रीतः॥ द्रोणं द्रोणपरिमितद्रव्यं पचतीति। द्रोण+"संभवत्यवहरति पचति।" ५।१।५२। इति ठञ्। द्रोणपाचकः। इति सिद्धान्तकौमुदी॥)

द्रौपदी, स्त्री, (द्रुपदस्यापत्यं स्त्री। द्रुपद+अण्। ङीप्।) द्रुपदराजकन्या। तत्पर्य्यायः। पाञ्चाली २ कृष्णा ३ सैरिन्ध्री ४ नित्ययौवना ५ वेदिजा ६ याज्ञसेनी ७। इति हेमचन्द्रः।३।३७४॥ अस्याः पञ्चस्वामिकारणं यथा,—

वह्निरुवाच।
"शृणु राम! महाभाग! सीतासंगोपनं कुरु।
समागाम्यन्तरं चैव रावणो दुष्टराक्षसः।
दुर्निवार्य्यः प्राक्तनेन जानकीञ्च हरिष्यति॥

राम उवाच।
सीतां गृहीत्वा त्वं गच्छ छायाचैव तु तिष्ठतु।
कलत्रवर्ज्जनं कर्म्म सर्व्वेषाञ्च जुगुप्सितम्॥
सीतां गृहीत्वा प्रययौ वह्निस्तेषु हुताशनः।
सीतायाः सदृशी छाया तस्थौ श्रीरामसन्निधौ॥
सा च छाया हृता पूर्व्वं रावणेन बलीयसा।
समुद्धार तां रामो निहत्य तं सबान्धवम्॥
वह्नौ परीक्षाकाले च छाया वह्निं विवेश ह।
अग्निश्छायाञ्च संरक्ष्य ददौ रामाय जानकीम्॥
सा च छाया तपश्चक्रे नारायणसरोवरे।
तपश्चकार दिव्यञ्च शतवर्षञ्च शूलिनः॥
वरं वृणुष्व भद्रे! तामुवाच शङ्करश्च ताम्।
उवाच सा शिवं श्रुत्वा भर्त्तुर्दुःखेन दुःखिता॥
पतिन्देहि पञ्चधा सा वरं वव्रे त्रिलोचनम्।
सर्व्वसम्पत्प्रदस्तुष्टस्तस्यै शर्व्वो वरं ददौ॥

महादेव उवाच।
साध्वि! त्वं पञ्चधा ब्रूहि पतिन्देहीति व्याकुला।
पञ्चेन्द्राश्च हरेरंशा भविष्यन्ति प्रियास्तव॥
ते च सर्व्वे च पञ्चेन्द्रास्त्वधुना पञ्च पाण्डवाः।
सा च छाया द्रौपदी च यज्ञकुण्डसमुद्भवा॥
कृते युगे वेदवती त्रेतायां जनकात्मजा।
द्वापरे द्रौपदी छाया तेन कृष्णा निगद्यते॥
वैष्णवी कृष्णभक्ता च तेन कृष्णा प्रकीर्त्तिता।
स्वर्गलक्ष्मीर्महेन्द्राणां सा च पश्चाद्भविष्यति॥
राजा ददौ फाल्गुनाय कन्यावाञ्च स्वयंवरे।
पप्रच्छ मातरं वीरो वस्तु प्राप्तं मयाधुना॥
तमुवाच स्वयं माता गृहाण भ्रातृभिः सह।
शम्भोर्व्वरेण पूर्व्वञ्च परञ्च मातुराज्ञया॥
द्रौपद्याः स्वामिनस्तेन हेतुना पञ्चपाण्डवाः।
चतुर्द्दशानामिन्द्राणां पञ्चेन्द्राः पञ्चपाण्डवाः॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११५ अध्यायः॥

द्वन्दं क्ली, (द्वन्द्वं पृषोदरादित्वात् वस्य लोपः।) मिथुनम्। इति शब्दरत्नावली॥

द्वन्द्वं, क्ली, (द्वौ द्वौ सहाभिव्यक्तौ। "द्वन्द्वं रहस्यमर्य्यादावचन-व्युत्क्रमण-यज्ञपात्रप्रयोगाभिव्यक्तिषु।" ८।१।१५। इति द्विशब्दस्य द्विर्वचनं पूर्व्वपदस्याम्भावोऽत्वञ्चोत्तरपदस्य नपुंसकत्वञ्च निपात्यते।) रहस्यम्। कलहः। (यथा, हितोपदेशे।३।३२।
"शतं दद्यान्न विवदेदिति प्राज्ञस्य लक्षणम्।
विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम्॥")
मिथुनम्। (यथा, रघुः।१।४०।
"परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु॥")
युग्मम्। इति मेदिनी। वे, १०॥ (यथा, महाभारते।१।१३७।१५।
"द्वन्द्वयुद्धञ्च पार्थेन कर्त्तुमिच्छाम्यहं प्रभो!॥"
शीतोष्णादि। यथा, माघे।४।६४।
"सर्व्वर्त्तुनिर्वृतिकरे निवसन्नुपैति
न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि॥")
दुर्गम्। (अत्र पुंस्त्वमपि।) अथ द्वन्द्वयुक्तिः।
"राज्ञो बलं न हि बलं द्वन्द्वमेव बलं बलम्।
अप्यल्पबलवान् राजा स्थिरो द्वन्द्वबलाद्भवेत्॥"
तथा च।
"एकः शतं योधयति प्राकारस्थो धनुर्द्धरः।
शतं दशसहस्राणि तस्माद्दुर्गं विशिष्यते॥
अकृत्रिमं कृत्रिमञ्च तत् पुनर्द्विविधं भवेत्।
यद्दैवरचितं द्वन्द्वं गिरिनद्यादिसंश्रितम्।
अकृत्रिममिदं ज्ञेयं दुर्लङ्घ्यमरिभूभुजाम्॥
प्राकारपरिखारम्यसंश्रयं यच्च वेदिह।
कृत्रिमं नाम विज्ञेयं लङ्घ्यालङ्घ्यन्तु वैरिणाम्॥"
तत्राकृत्रिमद्वन्द्वयुक्तिर्यथा,—
"अत्युच्चविस्तीर्णगिरिर्दुरारोहः सकाननः।
सजलाशयसम्भारभोज्यद्रव्यसमाश्रयः॥
सुखनिःसरणो द्वन्द्वः पर्व्वताख्यो महीभुजाम्।
नद्यो गभीरविस्तीर्णाश्चतुर्दिक्षु व्यवस्थिताः॥
तन्मध्ये भूप्रदेशो यो नदीद्वन्द्वः स उच्यते।
यदत्यचिरकालीनं दुर्लङ्घ्यविपिनादिकम्॥
तन्मध्यरचिता भूमिर्द्वन्द्वत्वेनोपतिष्ठते।
वनद्वन्द्वमिति ख्यातं यथापूर्व्वं महत्तरम्॥"*॥
कृत्रिमद्वन्द्वयुक्तिर्यथा,—
"यस्मिन् राज्ये गिरिर्नास्ति नद्यो वा गहनोदकाः।
तस्य मध्ये महीपालः कृत्रिमं द्वन्द्वमारभेत्॥
गर्त्तैरलङ्घ्या विस्तीर्णा गम्भीराः पूर्णवारयः।
द्वन्द्वत्वेन समादिष्टाः परिखा बहुयादसः॥
विशालशालं सुघनं बहुकण्टकिसङ्कटम्।
द्वन्द्वत्वेन समादिष्टं विस्तीर्णं विषमं वलम्॥
अधोऽधोबध्यमानोऽपि कन्दरोऽल्पजलं स्रवन्।
द्वन्द्वत्वेन समुद्दिष्टः स दुर्लङ्घ्यो हि भूभुजाम्॥
सर्व्वतः परिखां कृत्वा निबध्योपरि कन्दरम्।
तज्जलप्लुतदेशत्वात् जलद्वन्द्वं तदुच्यते॥
एषामभावे निम्नस्य भूप्रदेशस्य बन्धनात्।
वर्षासु स्रवते वारि जलद्वन्द्वं ततो भवेत्॥
एतयोरपि संमिश्रात् संमिश्रं द्वन्द्वमाचरेत्।
आश्रित्य कृत्रिमं द्वन्द्वं बलवद्वैरिणो दिशि॥
अन्यत्र कृत्रिमं द्वन्द्वं कृत्वा नरपतिर्वसेत्।
रथपतिर्यदा वैरी स्थलद्वन्द्वं तदाचरेत्॥
गजाश्वगाधचरो वैरी जलद्वन्द्वं तदाचरेत्।
गिरिद्वन्द्वं नृपः सेवेत् यस्य स्यात्त्रिविधो रिपुः॥
सर्व्वो हि त्रिविधो युद्धः समासादुपदिश्यते।
प्रतिराजस्य राज्यान्ते प्रकटे गुप्त एव च॥
राज्यान्ते सैनिकान् रचेत् प्रकटे निवसेत् स्वयम्।
गुप्ते स्त्रीकोषसम्भारं संरक्षेदिति निश्चयः॥"
अथ सामान्यतो गुणाः।
तथा हि। नीतिशास्त्रम्।
"सप्रवेशापसरणं द्वन्द्वमुत्तममुच्यते।
अन्यत्र वन्दिशालेव न तादृग्बहुमान्यते॥
धनुर्द्वन्द्वं महीद्वन्द्वं गिरिद्वन्द्वं तथैव च।
मनुष्यद्वन्द्वसंसर्गं वरद्वन्द्वञ्च तानि षट्॥"
अन्ये तु।
"न द्वन्द्वं द्वन्द्वमित्याहुर्योधद्वन्द्वं प्रकीर्त्तितम्।
योधशून्यं हि यत् द्वन्द्वं मृतकायसमं हि तत्॥"

अथान्यत्रापि ।

"यावत् प्रमाणं नगरं हि राज्ञां
ततो भवेदुत्तममध्यमान्यम् ।
त्रिधाधनहानमसुखोत्तरञ्च
त्रिदेशजानां धरणीपतीनाम् ॥"

मत्स्ये ।

'यद्यहिविधं द्वन्द्वं प्रोच्यते धरणीभृताम् ।
ताभ्यामेवातिरिच्येत मत्स्यद्वन्द्वं विशेषतः ॥
अन्यत्र न्वाद् भिन्नेषु मत्स्यद्वन्द्वात् जयेन्नृपः ।
मत्स्यद्वन्द्वे हि भिन्ने हि न चाप्यते कार्यकारकम् ॥'

भोजस्तु ।

'यन्त्रैर्वैरिदुर्लङ्घ्यं विलीय विषमस्थ सत् ।
सप्रवेशापसरणं तद्द्वन्द्वसुत्तमं विदुः ॥'

इति भोजराजकृतयुक्तिकल्पतरुः ॥

द्वन्द्व, पुं (द्वौ द्वौ सहाभिव्यक्तौ इति । निपातनात् साधुः । चार्थे द्वन्द्व इति निर्देशात् पुंस्त्वम् ।) रोगविशेषः । समासभेदः । इति शब्दरत्नावली ॥ स तु भिन्नार्थानां पदानां समासः । बोपदेवमते चसंज्ञा कृता । स इतरेतरयोगसमाहारभेदेन द्विधा भवति । इतरेतरद्वन्द्वो यथा । हरिश्च हरश्च हरिहरौ । अत्र प्रत्येकपदप्राधान्यात् द्वित्वं बहुत्वं चैव शब्दलिङ्गभाक्त्वञ्च भवति । समाहारद्वन्द्वो यथा । वाक् च त्वक् च द्वयोः समाहारः वाक्त्वचम् । अत्र सहतरैकत्वादेकवचनं नित्यक्लीवलिङ्गत्वञ्च भवति । इति मुग्धबोधम् ॥ (यदुक्तं — [भाव ॥])

'द्वन्द्वो द्विगुरपि चाहं मद्गृहे नित्यमव्ययी

द्वन्द्वचर, पुं (द्वन्द्वेन चरतीति । चर+अच् ।) चक्रवाकः । इति हेमचन्द्रः । ४ । ३६६ ॥ (यथा रघुः । १६ । ६३ ।

आवर्त्तशोभा नतनाभिकान्ते
भङ्गौ भ्रुवां द्वन्द्वचराः स्तनानाम् ।
जातानि रूपावयवोपमाना-
न्यदूरवर्त्तीनि विलासिनीनाम् ॥')

द्वन्द्वचारी, [न्] पुं (द्वन्द्वेन चरतीति । चर+णिनि ।) चक्रवाकः । इति त्रिकाण्डशेषः ॥

द्वन्द्वज, पुं (द्वन्द्वात् जायते इति । जन+ड ।) द्विदोषजरोगः । इति निदानम् ॥ कलहजातं त्रि ॥

द्वय, क्ली (द्वौ अवयवौ यस्य । द्वि + संख्याया अवयवे तयप् । ५ । २ । ४२ । इति तयप् । द्वित्रिभ्यां तयस्यायज्वा । ' ५ । २ । ४३ । इति तयपस्यायच् ।) युग्मकम् । दुइ इति भाषा । तत्पर्य्यायः । उभौ २ द्वौ ३ युगलम् ४ द्वितयम् ५ युगम् ६ द्वैतम् ७ यमम् ८ द्वन्द्वम् ९ युग्मम् १० यमलम् ११ यामलम् १२ । इति हेमचन्द्रः । ६ । ५८ ॥

द्वयाग्नि, पुं (द्वयाः द्विस्वार्थायिद्व ।) इत्यमरः । गाचिता इति भाषा । तत्पर्य्यायः । माटी २ शुखाग्नि ३ । इति शब्दचन्द्रिका ॥

द्वयातिग, त्रि, (द्वयं अतिगच्छति अतिक्रामतीति । अति+गम+ड ।) रजस्तमोगुणशून्यः । सत्त्वगुणयुक्तः । इत्यमरः । २ । ७ । ४५ ॥

द्वा, [र्] स्त्री (द्वारयतीति । द्वृ वरणे+णिच्+बाहुलकात् क्विप् ।) द्वारम् । इत्यमरः । २ । २ । १३ ॥ (यथा, भागवते । ३ । ५ । १ ।

"द्वारि द्युनद्या ऋषभः कुरूणां
मैत्रेयमासीनमगाधबोधम् ॥")

उपायः । यथा, ज्ञानद्वारा भवेन्मुक्तिरिति ज्ञानप्रयत्नम् ॥

द्वाःस्थ, पुं (द्वारि तिष्ठतीति । स्था+क ।) द्वारपालः । इति शब्दरत्नावली ॥ (यथा, भागवते । १ । १८ । ३४ ।

"ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो निरूपितः ।
स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति ॥")

नन्दिकेश्वरः । इति भूरिप्रयोगः ॥

द्वाःस्थित, त्रि (द्वारि स्थितः ।) द्वारपालः । इत्यमरकोषशब्दरत्नावल्यौ ॥

द्वाःस्थितदर्शक, त्रि, (द्वाःस्थितः सन् पश्यतीति । दृश+ण्वुल् ।) द्वारपालः । इत्यमरटीकायां भरतः ॥

द्वाःस्थितदर्शी, [न्] त्रि, (द्वारि स्थितः सन् पश्यतीति । दृश+णिनि ।) द्वारपालः । इति भरतधृतरभसः रमानाथश्च ॥

द्वाचत्वारिंशत्, स्त्री, (द्व्यधिका चत्वारिंशत् । द्विचत्वारिंशत् वा त्वात्वम् ।) द्विचत्वारिंशत् । इति व्याकरणम् ॥ ४२ बेयालिश इति भाषा ॥

द्वात्रिंशत्, स्त्री, (द्व्यधिका त्रिंशत् । "द्व्यष्टनः संख्यायामिति ।' ६ । ३ । ४७ । इति आत्वम् ।) द्व्यधिकत्रिंशत् संख्या । तत्पर्य्यायः ३२ बत्रिश इति भाषा । यथा, द्वात्रिंशत्प्रथमे मार्गा चतुस्त्रिंशद्दमे नृणामित्यर्धं ज्योतिस्तत्त्वम् ॥

द्वात्रिंशद्दशनी, [न्] पुं, (द्वात्रिंशद्दशनाः सन्ति अस्य । बाहुलकात् इनि ।) मनुष्यः । इति त्रिकाण्डशेषः ॥

द्वात्रिंशल्लक्षणोपेत, पुं (द्वात्रिंशल्लक्षणैरुपेतः ।) महापुरुषः । इति शब्दार्थकल्पतरुः ॥ तल्लक्षणानि यथा,—

"राग सप्तसु हन्त षट्स्वपि शिशोरङ्गेष्वलं तुङ्गता
विस्तारस्त्रिषु खर्व्वता त्रिषु तथा गम्भीरता च त्रिषु ।
दैर्घ्यं पञ्चसु किञ्च पञ्चसु सखे । सम्प्रेक्ष्यते सूक्ष्मता
द्वात्रिंशद्वरलक्षणः कथमसौ गोपेषु सम्भाव्यते ॥"

इति श्रीहरिभक्तिरसामृतसिन्धुः ॥

'राग इति । श्रीमद्व्रजेश्वरं प्रति कस्यचित् सवयसो गोपस्य वाक्यमिदम् । सप्तसु नेत्रान्तपादकरतलताल्वधरोष्ठजिह्वानखेषु षट्सु वक्षःस्कन्धनखनासिकाकटिमुखेषु । त्रिषु कटिललाटवक्षःसु । केचित् कटिस्थाने शिरः पठन्ति ।

पुनस्त्रिषु ग्रीवाजङ्घामेहनेषु । पुनः ... स्वरसत्त्वेषु । पञ्चसु ... त्वककेशाङ्गुलीदन्ताङ्गुलिपर्व्वसु । तथैव महापुरुषलक्षणं सामुद्रकप्रसिद्धं द्वात्रिंशद्वराणि ... लक्षणानि यस्य स गोपेषु भगवद्गुणमारादिषु ... भावः ।' इति श्रीजीवगोस्वामिविरचिता दुर्गमसङ्गमनीनाम्नी टीका ॥

द्वादशन्, [न्] त्रि, (द्व्यधिका दश । "द्व्यष्टनः इति । ६ । ३ । ४७ । इति आत्वम् ।) द्व्यधिका दश । बार इति भाषा । द्वादशसंख्या अस्य नित्यबहुवचनान्तः । त्रिलिङ्गे समानरूपः इति व्याकरणम् ॥ द्वादशवाचकानि यथा सूर्य्यः १ मासः २ राशिः ३ सङ्क्रान्तिः ४ बाहु ५ नारिकेलः ६ गुहनेत्रम् ७ मण्डलम् ८ । इति कविकल्पलता ॥

द्वादश, त्रि, (द्वादशानां पूरणः । ' ... डट् ।' ५ । २ । ४८ । इति डट् ।) द्वादशानां पूरणः इति व्याकरणम् ॥ बारइ इति भाषा ॥ (मनुः ।

"गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥"

महादेवः । यथा महाभारते । १३ । १७ । ६३ ।

"द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ॥"

द्वादशकर, पुं (द्वादश कराः भुजाः यस्य ।) स्कन्दः । इति त्रिकाण्डशेषः ॥ कार्त्तिकेयश्च ॥

द्वादशपत्रक, क्ली, (द्वादश अक्षराणि यस्य ।) योगविशेषः । यथा —

"पितामहोऽपि तं पुत्रं साध्यं सहितये रतम् ।
सनत्कुमारं प्रोवाच योगं द्वादशपत्रकम् ॥
शिरासंस्थस्तु ओङ्कारः मेषोऽस्य शिरसि स्थितः ।
मासो वैशाखनामा च प्रथमं पत्रकं स्मृतम् ॥
नकारः शिरसि प्रोक्तो वृषोऽस्य शिरसि स्थितः ।
ज्येष्ठमासश्च तत् पत्रं द्वितीयं परिकीर्त्तितम् ॥
मोकारो भुजयोर्युग्मं मिथुनं तत्र संस्थितम् ।
मासः आषाढनामा च तृतीयं पत्रकं स्मृतम् ॥
भकारो नेत्रयुगलं कर्कटस्तत्र संस्थितः ।
मासः श्रावणः इत्युक्तश्चतुर्थं पत्रकं स्मृतम् ॥
गकारो हृदयं प्रोक्तं सिंहो वसति तत्र च ।
मासो भाद्रस्तथा प्रोक्तः पञ्चमं पत्रकं स्मृतम् ॥
वकारः कवचं विद्यात् कन्या तत्र प्रतिष्ठिता ।
मासश्चाश्वयुजो नाम षष्ठं तत्पत्रकं स्मृतम् ॥
तेकारमस्त्रग्रामश्च तुलाराशिस्तथाश्रयः ।
मासश्च कार्त्तिको नाम सप्तमं पत्रकं स्मृतम् ॥
वाकारो नाभिसंयुक्तः स्थितस्तत्र च वृश्चिकः ।
मासो मार्गशिरो नाम अष्टकं पत्रकं स्मृतम् ॥
सुकारो जघनं प्रोक्तस्तत्रस्थश्च धनुर्द्धरः ।
पुष्यनि गदितो मासो नवमं परिकीर्त्तितम् ॥
देकारश्चोरुयुगलं मकरोऽप्यत्र संस्थितः ।
माघो निगदितो मासः पत्रकं दशमं स्मृतम् ॥
वाकारो जानुयुगलं कुम्भस्तत्राप्यसंस्थितः ।

पत्रकं फाल्गुनः प्रोक्तं तदेकादशमुत्तमम् ॥
पादौ यकारो मीनो हि स चैत्रे वसते मुने ! ।
इदन्तु द्वादशं प्रोक्तं पत्रं वै केशवस्य हि ॥
द्वादशारन्तथा चक्रं यन्नाभिद्विभुजन्तथा ।
त्रिव्यूहन्त्वेकमूर्त्तिश्च तथोक्तः परमेश्वरः ॥
एतत्तवोक्तं देवस्य रूपं द्वादशपत्रकम् ।
यस्मिन् ज्ञाते मुनिश्रेष्ठ ! न भूयो मरणं भवेत् ॥”
इति वामनपुराणेऽष्टपञ्चाशत्तमोऽध्यायः ॥

द्वादशलोचनः, पुं, ( द्वादश लोचनानि नेत्राणि यस्य । षडाननत्वादेवास्य तथात्वम् । ) कार्त्तिकेयः । इति त्रिकाण्डशेषः ॥

द्वादशांशुः, पुं, ( द्वादश अंशवः किरणानि यस्य । ) बृहस्पतिः । इति भूरिप्रयोगः ॥ (यदुक्तं मात्स्ये । १२७ । ५५ ।
“लोहितो नवरश्मिस्तु स्थानमापन्नु तस्य वै ।
बृहत् द्वादशरश्मीकं हरिद्राभन्तु वेधसः ॥”)

द्वादशाक्षः, पुं, ( द्वादश अक्षीणि यस्य । ) कार्त्तिकेयः । (द्वादशविषयेषु अक्षिणी यस्य ।) बुद्धः । इति हेमचन्द्रः । २ । १४८ ॥ (कार्त्तिकेयस्य अनुचरविशेषः । यथा, महाभारते । ९।४५।५६ ।
“एकाक्षो द्वादशाक्षश्च तथैवैकजटः प्रभुः ॥”)

द्वादशाक्षरमन्त्रः, पुं, ( द्वादश अक्षराणि अस्य । तादृशो मन्त्रः । ) द्वादशवर्णात्मकविष्णुविषयकमन्त्रविशेषः । यथा,—
“नमो भगवते वासुदेवायोङ्कारपूर्व्वकम् ।
महामन्त्रमिमं प्राहुस्तत्त्वज्ञा द्वादशाक्षरम् ॥”
इति पाद्मे क्रियायोगसारः ॥

द्वादशाख्यः, पुं, ( द्वादश ज्ञानकर्म्मादिविषयान् आख्यातीति । ख्या कथने + कः ।) बुद्धः । इति त्रिकाण्डशेषः ॥

द्वादशाङ्गुलः, पुं, ( द्वादश अङ्गुलयः परिमाणमस्य । “तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।” ५ । ४ । ८६ । इति अच् । ) वितस्तिः । इत्यमरः । २ । ६ । ८४ ॥

द्वादशात्मा, [ न् ] पुं, ( द्वादश आत्मानो मूर्त्तयो यस्य । ) सूर्य्यः । ( यथा, महाभारते ।३।३।२६।
“द्वादशात्मारविन्दाक्षः पिता माता पितामहः ॥”)
अर्कवृक्षः । इत्यमरः ॥

द्वादशायुः, [ स् ] पुं, ( द्वादशवर्षपर्य्यन्तं आयुर्यस्य । ) कुक्कुरः । इति शब्दमाला ॥

द्वादशार्च्चिः, [ स् ] पुं, ( द्वादश अर्च्चींषि किरणानि यस्य । ) बृहस्पतिः । इति हेमचन्द्रः । २ । ३२ ॥

द्वादशी, स्त्री, ( द्वादश + टित्त्वात् ङीप् । ) तिथिविशेषः । सा चन्द्रस्य द्वादशकलाक्रियारूपा । सा च विष्णुतिथिः । यथा,—
“त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदा प्रिया ।
द्वादशी च तिथिस्तेऽस्तु कामरूपी च जायते ॥
हुताशनो भवेद्यस्तु द्वादश्यां तत्परायणः ।
स्वर्गवासी स भवतु पुमान् स्त्री वा विशेषतः ॥”
मार्गशीर्षीया शुक्लद्वादशी मत्स्यद्वादशी १ पौषी कूर्म्मद्वादशी २ माघी वराहद्वादशी ३ फाल्गुनी नृसिंहद्वादशी ४ चैत्री वामनद्वादशी ५ वैशाखी जामदग्न्यद्वादशी ६ ज्यैष्ठी रामद्वादशी ७ आषाढ़ी कृष्णद्वादशी ८ श्रावणी बुद्धद्वादशी ९ भाद्री कल्किद्वादशी १० आश्विनी पद्मनाभद्वादशी ११ कार्त्तिकी नारायणद्वादशी १२ । एतासां नाम धरणीव्रतम् । एतत्करणे महाफलम् । इति वराहपुराणम् ॥

अथ पिपीतकद्वादशी । नारदीये ।
“वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथिः ।
तस्यां शीतलतोयेन स्नापयेत् केशवं शुचिः ॥”
इयं पिपीतकद्वादशी । अत्र ।
“षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता ।
पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम् ॥
एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः ।
उपासनाय द्वादश्यां विष्णोर्यद्वदियं तथा ॥”
इति भविष्यपुराणेन एकादश्युपवासानन्तरं द्वादश्यां विष्णूपासनाया उक्तत्वात् । अत्रापि तथा व्यवहरन्तीति नात्र युग्मादरः । द्वादशीक्षये तूपवासानन्तर्य्यं विनापि पूजेति । इयं पूर्व्ववचनोक्ता षष्ठीयुता सप्तमी ॥ आषाढ़ादिद्वादशीषु शयनादिकम् ॥ * ॥

अथ श्रवणद्वादशी ।
सा भाद्रशुक्लद्वादश्यामेव सम्भवति । “भविष्योत्तरे ।
‘द्वादशी श्रवणोपेता सर्व्वपापहरा तिथिः ।
बुधवारसमायुक्ता ततः शतगुणा भवेत् ।
तामुपोष्य समाप्नोति द्वादशद्वादशीफलम् ॥’
उभयदिने तल्लाभे तु एकादशीयुतैव ग्राह्या ।
‘द्वादशी च प्रकर्त्तव्या एकादश्यन्विता विभो ।
सदा कार्य्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः ॥’
इति स्कान्दात् ॥
यदा त्वेकादश्यामेव श्रवणा तदा तामुपवसेत् ।
तथा च नारदः ।
‘याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
तास्वेव तद्व्रतं कुर्य्यात् श्रवणद्वादशीं विना ॥’
भविष्योत्तरेऽपि ।
‘एकादशी यदा तु स्यात् श्रवणेन समन्विता ।
विजया सा तदा प्रोक्ता भक्तानां विजयप्रदा ॥
तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।
तावदेव न भोक्तव्यं यावन्नैकस्य संक्षयः ॥
विशेषेण महीपाल ! श्रवणं वर्द्धते यदि ।
तिथिक्षयेण भोक्तव्यं द्वादशीं नैव लङ्घयेत् ॥’
तिथिक्षयेण एकादशीनिमित्तक्षयेण भोक्तव्यं द्वादश्यां पारयेदित्यर्थः । अत्र हेतुर्द्वादशीमित्यादि । यदा त्वेकादश्युपवासदिने श्रवणं नास्ति परदिने द्वादश्यां श्रवणं तदोपवासद्वयमाह ब्रह्मवैवर्त्तः ।
‘एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
न चात्र विधिलोपः स्यादुभयोर्देवता हरिः ॥’
अत्र असमाप्ते व्रते पूर्व्वे नैव कुर्य्याद्व्रतान्तरमिति स्मृतेः ॥ पारणस्याकरणेन पूर्व्वोपवासासमाप्तावुपवासान्तरारम्भे विधिलोपो न भवेदित्यर्थः हेतुमाह उभयोरित्यादि । उभयोरुपवासासामर्थ्ये तु श्रवणद्वादश्येवोपोष्या । तथा च स्मृतिः ।
‘वरमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् ।
पूर्व्वोपवासजं पुण्यं सर्व्वं प्राप्नोत्यसंशयम् ॥
उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम् ।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् ॥’
द्वादश्युपवासः काम्यः । तथा च मार्कण्डेयपुराणम् ।
‘द्वादश्यामुपवासेन शुद्धात्मा नृप ! सर्व्वशः ।
चक्रवर्त्तित्वमतुलं संप्राप्नोत्यतुलां श्रियम् ॥”
कार्त्तिकशुक्लद्वादशी मन्वन्तरा । “तथा च भविष्यमत्स्ययोः ।
‘अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकी तथा ।’
इत्यादिवचनात् ।” इति तिथितत्त्वम् ॥ * ॥
“अग्रहायणशुक्लद्वादशी अखण्डद्वादशी । तत्रोपोष्य विष्णुपदप्राप्तिकामोऽखण्डद्वादश्यां विष्णुं पूजयिष्ये इति संकल्प्य पञ्चगव्येन स्नापयित्वा यथाशक्त्युपचारेण संपूज्य यवव्रीहिपूर्णपात्रं गृहीत्वा ।
‘ॐ सप्तजन्मसु यत्किञ्चिन्मया खण्डव्रतं कृतम् ।
भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे ॥
यथा खण्डं जगत् सर्व्वं त्वमेव पुरुषोत्तम ! ।
ततोऽखिलान्यखण्डानि व्रतानि मम सन्तु वै ॥’
इति प्रार्थ्य दक्षिणां दद्यात् ।” इति कृत्यचन्द्रिका ॥
भैमीपरद्वादश्यां षट्तिलाचरणम् । यथा विष्णुधर्म्मोत्तरे ।
“मृगशीर्षे शशधरे माघे मासि प्रजापते ! ।
एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः ।
द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते ॥
तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी ।
तिलस्य दाता भोक्ता च षट्तिली नावसीदति ॥
सकृत्तु षट्तिली भूत्वा सर्व्वपापैः प्रमुच्यते ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥”

अथ गोविन्दद्वादशी ।
“फाल्गुने शुक्लपक्षस्य पुष्यर्क्षे द्वादशी यदि ।
गोविन्दद्वादशी नाम महापातकनाशिनी ॥”
अत्र गङ्गायां पद्मपुराणीयो मन्त्रः ।
“महापातकसंज्ञानि यानि पापानि सन्ति मे ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ! ॥”
इति तिथ्यादितत्त्वम् ॥

अथ द्वादशीजातफलम् ।
“बहुप्रजः सर्व्वजनानुरागी
भूपालमान्यस्त्वतिथिप्रियः स्यात् ।
चेत् द्वादशी यस्य जनस्य सूतौ
प्रवासहीनो व्यवहारदक्षः ॥”
इति कोष्ठीप्रदीपः ॥

द्वापरः, पुं, ( द्वयोर्विषययोः परस्तत्पर आसक्त इत्यर्थः । पृषोदरादित्वात् साधुः । ) सन्देहः । ( द्वौ सत्यत्रेतायुगौ परौ श्रेष्ठौ यस्मात् । ) युगविशेषः । इत्यमरः । ३ । ३ । १६१ ॥ तद्युगपरिमाणं यथा,—

बहून् धारयसे यस्माद्वसुधानीव निर्म्मला ॥
वसुन्धरा ततो जाता तस्मात् पाहि भवार्णवात् ।
चतुर्मुखोऽपि नागच्छेत्तस्माद्यन्त तवाचले ॥
अनन्तायै नमस्तस्मात् पाहि संसारकर्द्दमात् ।
त्वमेव लक्ष्मीर्गोविन्दे शिवे गौरीति संस्थिता ॥
गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चन्द्रे रवौ प्रभा ।
बुद्धिर्बृहस्पतौ ख्याता मेधा मुनिषु संस्थिता ॥
विश्वं व्याप्य स्थिता यस्मात्ततो विश्वम्भरा स्थिता ।
धृतिः क्षमा स्थिरा चोर्वी पृथ्वी वसुमती रसा ॥
एताभिर्मूर्त्तिभिः पाहि देवि ! संसारकर्द्दमात् ।
एवमुच्चार्य्य तां देवीं ब्राह्मणेभ्यो निवेदयेत् ॥
धरार्द्धं वा चतुर्भागं गुरवे प्रतिपादयेत् ।
शेषश्चैवाथ ऋत्विग्भ्यः प्रणिपत्य विसर्ज्जयेत् ॥
अनेन विधिना यस्तु दद्याद्देवीं धरां बुधः ।
पुण्यकाले तु संप्राप्ते स पदं याति वैष्णवम् ॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
नारायणपुरं गत्वा कल्पत्रयमथो वसेत् ॥
पितृपुत्त्रप्रपौत्त्रांश्च तारयेदेकविंशतिम् ॥
इति पठति य इत्थं यः शृणोतीह नित्यं
गतकलुषविमानैर्मुक्तदेहः समन्तात् ।
दिवममरवधूभिर्याति संप्रार्थ्यमानः
पुरममरसहस्रैः सेवितं चन्द्रमौलेः ॥”
इति मत्स्यपुराणे २५८ अः ॥

धराकदम्बः, पुं, (धरायां वर्षाकाले जातः कदम्बः ।) धाराकदम्बवृक्षः । इति हारावली । १७० ॥

धरात्मजः, पुं, ( धराया आत्मजः । ) मङ्गलग्रहः । इति हेमचन्द्रः ॥ ( नरकासुरः । इति कालिकापुराणे ३७ अध्यायः ॥ स्त्रियां टाप् । सीता ॥ )

धराधरः, पुं, ( धरायाः धरो धारकः । ) विष्णुः । ( यथा, महाभारते । १३ । १४९ । ६३ ।
“सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥”
“अङ्गैरशेषैः शेषाद्यैरशेषां धरां धरतीति धराधरः ।” इति शाङ्करभाष्यम् ॥ ) पर्व्वतः । इति मेदिनी । रे, २६९ ॥ ( यथा, हरिवंशे । २०४ । २१ ।
“चराचराश्च वसुधा धातारश्च धराधराः ॥”
धराया उद्धारकर्त्तरि, त्रि । यथा, भागवते । ४ । १७ । ३५ ।
“स वीरमूर्त्तिः समभूद्धराधरो
यो मां पयस्युग्रशरो जिघांससि ॥” )

धरामरः, पुं, ( धरायाः पृथिव्या अमरो देवः । ) ब्राह्मणः । यथा,—
“येन श्रुतं भागवतं पुराणं
नाराधितो यैः पुरुषः पुराणः ।
मुखे हुतं येन धरामराणां
तेषां वृथा जन्म नराधमानाम् ॥”
इति पौराणिकाः ॥

धरित्री, स्त्री, ( धरति जीवजातमिति ध्रियते शेषेण वा । धृ + “अर्त्तिलूधूसूखनसहचर इत्रः ।” उणां ४।१७२। इति इत्र । गौरादित्वात् ङीष् ।) पृथिवी । इत्यमरः । २ ।१ । २ ॥ ( यथा, रघुः । १४ । ५४ ।
“स्वमूर्त्तिलाभप्रकृतिं धरित्रीं
लतेव सीता सहसा जगाम ॥”)

धरिमा, [ न् ] पुं, (ध्रियते दृश्यतेऽनेनेति । धृ + “हृभृधृसृस्तृशृभ्य इमनिच् ।” उणां ४ ।१४७। इति इमनिच् । ) रूपम् । इत्युणादिकोषः ॥ तुला । यथा, मनुः । ८ । ३२१ ।
“तथा धरिममेयानां शतादभ्यधिके वधः ॥”

धरुणः, पुं, ( धरतीति । धृ + बाहुलकात् उनन् । “धृञ् धारणे । हेतुमति च इति णिच् । धारेर्णिलुक् उनन्प्रत्ययः । धारयति जगत् ।” इति देवराजयज्वा । १ ।१२ । २४।) ब्रह्मा । स्वर्गः । नीरम् । ( निघण्टुमते, क्ली । यथा, ऋग्वेदे । १० । ५ । ६ ।
“पथां विसर्गे धरुणेषु तस्थौ ॥”) सम्मतम् । इति मेदिनी । णे, ५५ ॥ ( अग्निः । यथा, वाजसनेयसंहितायाम् । ८ । ५१ ।
“उपह्वरन्नधरुणं मात्रे धरुणो मातरं धयन् ॥”
धारके, त्रि । यथा, ऋग्वेदे । १० । १११ । ४ ।
“दाधार यो धरुणं सत्यताता ॥”
“सत्ये द्युलोके धरुणं धारकं बलं दाधार अधारयत् ।” इति तद्भाष्ये सायनः ॥ )

धर्त्तव्यं, त्रि, धृधातोःकर्म्मणि तव्यप्रत्ययेन साध्यम् । धारणीयम् । स्थातव्यम् । पतनीयम् । भावे, क्ली ॥

धर्त्रं, क्ली, ( धरति ध्रियते वा । धृ + “गुधृवीपचीति ।”उणां ४ । १६६ । इति त्रः ।) गृहम् । इत्युणादिकोषः ॥ क्रतुः । धर्म्मः । इति संक्षिप्तसारोणादिवृत्तिः ॥ ( धारके, त्रि । यथा, वाजसनेयसंहितायाम् । १ । १८ ।
“धर्त्रमसि दिवं दृंह ब्रह्मवनि वधाय ।”
“हे कपाल ! त्वं धर्त्रं धारकमसि ।” इति वेददीपः ॥ )

धर्म्मः, पुं क्ली, ( धरति लोकान् ध्रियते पुण्यात्मभिरिति वा । धृ + “अर्त्तिस्तुसुहुस्रिति ।” उणां १ । १३९ । इति मन् । ) शुभादृष्टम् । ( यथा, हितोपदेशे । १ । ५९ ।
“एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्व्वमन्यत्तु गच्छति ॥” )
तत्पर्य्यायः । पुण्यम् २ श्रेयः ३ सुकृतम् ४ वृषः ५ । इत्यमरः ।१।४।२४॥ न्यायः । स्वभावः । आचारः । उपमा । क्रतुः ।(यथा, महाभारते ।१४।८८।२१।
“कृत्वा प्रवर्ग्यं धर्म्माख्यं यथावत् द्विजसत्तमाः ।
चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः ॥” )
अहिंसा । उपनिषत् । इति मेदिनी । मे, १६ । दानादिके, क्ली । इति हेमचन्द्रः ॥ ( यथा, योगसारे ।
“प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा ।
स्मरणञ्चैव योगेऽस्मिन् पञ्च धर्म्माः प्रकीर्त्तिताः ॥”)

धर्म्मः, पुं, ( धृ + मन् । ) धनुः । यमः । सोमपः । इति मेदिनी । मे, १६ ॥ सत्सङ्गः । अर्हन् । इति हेमचन्द्रः । ६ । १५ ॥ देवताविशेषः । स ब्रह्मणो दक्षिणस्तनान्जातः । (यथा, मात्स्यपुराणे ।३।१०।
“अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापतिरजायत ।
धर्म्मस्तनान्तादभवत् हृदयात् कुसुमायुधः ॥”
तस्य भार्य्या दक्षस्य त्रयोदशकन्याः । तस्य चतुर्द्दशापत्यानि यथा । पत्न्यां श्रद्धायां ऋतम् १ मैत्र्यां प्रसादः २ दयायां अभयम् ३ शान्त्यां सुखम् ४ तुष्ट्यां मुत् ५ पुष्ट्यां गर्व्वः ६ क्रियायां योगः ७ उन्नतौ दर्पः ८ बुद्ध्यां अर्थः ९ मेधायां स्मृतिः १० मूर्त्त्यां नरनारायणौ ११ । १२ तितिक्षायां क्षेमम् १३ ह्रीसंज्ञायां प्रश्रयः १४ । इति श्रीभागवतम् ॥ * ॥ अपि च ।
“श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा तथा क्रिया ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदशी ।
पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ॥”
विष्णुपुराणमते सिद्धिस्थाने ऋद्धिरन्यत् तुल्यम् ॥ तासामपत्यानि यथा,—
“श्रद्धा कामञ्च श्रीर्दर्पं नियमं धृतिरात्मजम् ।
सन्तोषञ्च तथा तुष्टिर्लोभं पुष्टिरसूयत ॥
मेधा श्रुतं क्रिया दण्डं नयं विनयमेव च ।
बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम् ॥
व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ।
सुखं सिद्धिर्यशः कीर्त्तिरित्येते धर्म्मसूनवः ॥
कामो नन्दी सुतं हर्षं धर्म्मपौत्त्रमसूयत ॥”* ॥
अधर्म्मवंशो यथा, मार्कण्डेयपुराणे ।
“हिंसा भार्य्या त्वधर्म्मस्य तस्यां जज्ञे तथानृतम् ।
कन्या च निकृतिस्ताभ्यां सुतौ द्वौ नरकं भयम् ॥
माया च वेदना चैव मिथुनं त्वयमेतयोः ।
भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् ॥
वेदना स्वसुतञ्चापि दुःखं जज्ञेऽथ रौरवात् ।
मृत्योर्व्याधिजराशोकतृष्णाः क्रोधश्च जज्ञिरे ॥
दुःखोत्तराः स्मृता ह्येते सर्व्वे चाधर्म्मलक्षणाः ।
नैषां भार्य्यास्ति पुत्त्रो वा सर्व्वे ते ह्यूर्द्ध्वरेतसः ॥”
धर्म्मोत्पत्तिर्यथा, वराहपुराणे ।
“अथोत्पत्तिं प्रवक्ष्यामि धर्म्मस्य महतो नृप ! ।
माहात्म्यञ्च तिथिश्चैव तन्निबोध नराधिप ! ।
सर्व्वं ब्रह्माव्ययः शुद्धपरात्परसंज्ञितः ।
स सिसृक्षुः प्रजाःपूर्व्वं पालनञ्च व्यचिन्तयत् ॥
तस्य चिन्तयतस्त्वङ्गाद्दक्षिणाच्छ्वेतकुण्डलः ।
प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः ।
तं दृष्ट्वोवाच भगवांश्चतुष्पात् स्यात् कृते युगे ।
त्रेतायां त्रिपदश्चासौ द्विपदो द्वापरेऽभवत् ॥
कलावेकेन पादेन प्रजाः पालयते प्रभुः ।
षड्गेहो ब्राह्मणानां स त्रिधा क्षत्त्रे व्यवस्थितः ॥
द्विधा विश्येकधा शूद्रे स्थितः सर्व्वगतः प्रभुः ।
गुणद्रव्यक्रियाजातिचतुष्पादः प्रकीर्त्तितः ॥
त्रिशृङ्गोऽसौ स्मृतो वेदे ससंहितपदक्रमः ।
तथा आद्यन्त ओङ्कारद्विशिराः सप्तहस्तवान् ॥
उदात्तादित्रिभिर्बद्ध एवं धर्म्मो व्यवस्थितः ॥
ब्रह्मोवाच ।
अद्यप्रभृति ते धर्म्म ! तिथिरस्तु त्रयोदशी ॥
यस्तामुपोष्य पुरुषो भवन्तं समुपार्च्चयेत् ।
कृत्वा पापसमाचारं तस्मान्मुञ्चति मानवः ॥”
तस्य पुत्त्रा यथा, वामनपुराणे ।

न्वय। "काशस्य काशिराजः तस्य दीर्घतमाः पुत्त्रोऽभूत्। धन्वन्तरिस्तु दीर्घतमसोऽभूत्। न हि संसिद्धकार्य्यकरणः सकलसम्भूतिष्वशेषज्ञानवित्। भगवता नारायणेन चातीतसम्भूतौ तस्मै वरो दत्तः। काशिराजगोत्रेऽवतीर्य्य त्वमष्टधा सम्यगायुर्व्वेदं करिष्यसि। यज्ञभाक् त्वं भविष्यसीति। तस्य च धन्वन्तरेः पुत्त्रः केतुमान् केतुमतो भीमरथः। तस्यापि दिवोदासः।" इति विष्णुपुराणम्।४।८।२-५॥ अस्यार्थः। "संसिद्धकार्य्यकरणः सर्व्वदिरपिहतेन्द्रियः। संयतदेहेन्द्रिय इति वा। सकलसम्भूतिषु सर्व्वेष्वपि जन्मसु। अशेषज्ञानवित् सर्व्वशास्त्रवित्। अतीतसम्भूतौ क्षीराब्धौ जन्मनि। अष्टधा अष्टाङ्गमायुर्व्वेदम् तदुक्तं लघुवाग्भटे।
कायबालग्रहोर्द्ध्वाङ्गशल्यदंष्ट्राजरावृषम्।
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संस्थितेति।"
इति तट्टीकायां स्वामी॥ * ॥ दिवोदासः। इति त्रिकाण्डशेषः॥ (धन्वन्तरिप्रादुर्भावो यथा,
"एकदा देवराजस्य दृष्टिर्निपतिता भुवि।
तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीडिताः॥
तान् दृष्ट्वा हृदयन्तस्य दयया परिपीडितम्।
दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह॥
धन्वन्तरे! सुरश्रेष्ठ! भगवन्! किञ्चिदुच्यते।
योग्यो भवसि भूतानामुपकारपरो भव॥
उपकाराय लोकानां केन किन्न कृतं पुरा।
त्रैलोक्याधिपतिर्विष्णुरभूत्तत्स्यादिरूपवान्॥
तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव।
प्रतीकाराय रोगाणामायुर्व्वेदं प्रकाशय॥
इत्युक्त्वा सुरशार्द्दूलः सर्व्वभूतहितैषया।
समस्तमायुषो वेदं धन्वन्तरिमुपादिशत्॥
अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा।
आगत्य पृथिवीं काश्यांजातो बाहुजवेश्मनि।
नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ।
बाल एव विरक्तोऽभूच्चचार सुमहत्तपः॥
यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम्।
ततो धन्वन्तरिर्लोके काशीराजोऽभिधीयते॥
हिताय देहिनां स्वीया संहिता विहितामुना।
अयं विद्यार्थिनो लोकान् संहितान्ताम-
पाठयत्॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥) विक्रमादित्यराजस्य नवरत्नान्तर्गतरत्नविशेषः।
यथा,—
"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य॥"
इति नवरत्नम्॥
(धनोर्धनुर्व्वेदस्य अन्तमन्तं च्छतीति। महादेवः। यथा, महाभारते। १३। १७। १०३।
"धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा॥")
धन्वन्तरियसा, स्त्री, (धन्वन्तरिणा ग्रस्ता।) कटुकी। इति शब्दचन्द्रिका॥

धन्वयवासः, पुं, (धन्वदेशोद्भवो यवासः।) दुरालभा। इत्यमरटीकायां भरतः॥ (दुरालभाशब्देऽस्य विवरणं ज्ञातव्यम्॥)
धन्वयवासकः, पुं, (धन्वयवास+स्वार्थे कन्।) दुरालभा। इति राजनिर्घण्टः॥
धन्वयासः, पुं, (धन्वदेशोद्भवो यासः यवासः।) दुरालभा। इत्यमरः। २। ४। ९१॥
धन्वा, [न्] पुं, (धन्वति गच्छति जलाभावं गच्छतीति। धन्व+"कनिन् युवृषीति।" उणां १। १५६। इति कनिन्।) मरुदेशः। इत्यमरः। २। १। ५॥ (यथा, ऋग्वेदे। ६। ३४। ४।
"जनं न धन्वन्नभि सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः॥"
"धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन्।"
धन्वन्नभि धन्वानं मरुदेशमभि। यथा, ऋग्वेदे। १। १३८। ५।
"धन्वच्युत इषां न यामनि पुरुप्रैषा अहन्यो नैतशः॥"
"धन्वच्युतो न धन्वन्शब्दोऽन्तरिक्षस्य वचनः तेन तत्रस्थमुदकं लक्ष्यते उदकस्राविणो मेघा इव।" इति तद्भाष्ये सायनः॥)
धन्वी, [न्] त्रि, (धनुरायोऽस्त्यस्येति। व्रीह्यादित्वात् इनिः।) धनुर्धरः। इत्यमरः। २। ८। ६८॥ (यथा, कुमारे। ३। १०।
"कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये॥")
विदग्धः। इति विश्वः॥
धन्वी, [न्] पुं, (धन्वमस्त्यस्येति। धन्व+इनिः।) दुरालभा। अर्ज्जुनवृक्षः। (अस्य पर्य्यायो यथा,—
"धन्वी धनञ्जयः पार्थो नदीजः ककुभोऽर्ज्जुनः।"
इति वैद्यकरत्नमालायाम्॥)
बकुलः। इति राजनिर्घण्टः॥ पार्थः। इति विश्वः॥ (विष्णुः। यथा, महाभारते। १३। १४९। २२।
"ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः॥"
महादेवः। यथा, तत्रैव। १३। १७। ४२।
"कमण्डलुधरो धन्वी बाणहस्तः कपालवान्॥"
तामसमनोः पुत्रविशेषः। यथा, हरिवंशे। ७। २४।
"तपोरतिरकल्माषस्तन्वी धन्वी परन्तपः।
तामसस्य मनोरेते दश पुत्त्रा महाबलाः॥")
धम, ध्माने। ध्माने। इति कविकल्पद्रुमः॥ (भ्वां-परं-अकं-सेट्।) धमति। सौत्रधातुरयम्। इति दुर्गादासः॥
धमः, त्रि, (धमतीति। धम+अच्।) अग्निसंयोगकर्त्ता। शब्दकर्त्ता। इति धमधातोः पचादित्वादच्प्रत्ययेन साध्यः॥
धमकः, पुं, (धमतीति। ध्मा शब्दाग्निसंयोगयोः+"ध्मो धम च।" उणां २। ३५। इति क्वुन् धमादेशश्च।) कर्म्मकारः। इत्युणादिकोषः॥
धमनः, पुं, (धम्यतेऽग्निरनेनेति। धम+करणे ल्युट्।) नलः। इत्यमरः। २। ४। १६२॥

(अस्य पर्य्यायो यथा,—
"नलः पोटगलः शून्यमध्यश्च धमनस्तथा॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥
धमतीति। धम+ल्युः।) भस्त्राध्मापके क्रूरे च त्रि। इति मेदिनी। ने, ७८॥
धमनिः, स्त्री, (धम्यते इति। धम+"अर्त्तिसृधृधम्यश्यवितॄभ्योऽनिः।" उणां २। १०३। इति अनिः।) धमनी। इति शब्दरत्नावली॥ (यथा, अथर्व्ववेदे। ६। ९०। २।
"याश्ते शतं धमनयोऽङ्गान्यनु विष्ठिताः॥"
प्रह्लादभ्रातुर्ह्रादस्य पत्नी। सा तु वातापेरिल्वलस्य च जननी। यथा, भागवते। ६। १८। १५।
"ह्रादस्य धमनिर्भार्य्यासूत वातापिमिल्वलम्॥"
धमतिर्गतिकर्म्मा। गत्यर्था बुद्ध्यर्थाः। गम्यते ज्ञायतेऽर्थोऽनया। ज्ञायते वा विद्वद्भिः साधुमाधुविभागेन। यद्वा, 'धमति इति वधकर्म्मम्नपि पठ्यते धमति हन्त्यनया शापाक्रोशादिरूपयेति। वाक्। शब्दः। इति निघण्टुः। १। ११॥ यथा, ऋग्वेदे। २। ११। ८।
"दूरे पारे वाणीं वर्द्धयन्त
इन्द्रेषितां धमनिं पप्रथन्नि॥")
धमनी, स्त्री, (धमनि+वा ङीप्।) नाडी। (यथा, महाभारते। १२। २१४। १७।
"दश विद्यात् धमन्योऽत्र पञ्चेन्द्रियगुणावहाः।
याभिः सूक्ष्माः प्रतायन्ते धमन्योऽन्याः सहस्रशः॥"
यथा,—
"ओजोवहाः शरीरे या विधम्यन्ते समन्ततः।
येनौजसा वर्त्तयन्ति प्रीणिताः सर्व्वदेहिनः॥
यदृते सर्व्वभूतानां जीवितं नावतिष्ठते।
यत्सारमादौ गर्भस्य यौऽसौ गर्भरसाद्रसः॥
संवर्त्तमानं हृदयं समाविशति यत् पुरा।
यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम्॥
यच्छरीररसं देहः प्राणा यत्र प्रतिष्ठिताः।
तत्फला विविधा भावाः फलन्तीति महाफलाः॥
ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात्
सिराः॥"
इति चरके सूत्रस्थाने त्रिंशेऽध्याये॥
"चतुर्व्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः। तत्र केचिदाहुः सिरा धमनी स्रोतसामविभागः सिराविकारा एव धमन्यः स्रोतांसि चेति। तत्तु न सम्यक्। अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः कस्माद्व्यञ्जनान्यत्वात्मूलसन्नियमात् कर्म्मवैशेष्यादागमाच्च केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्तकर्म्मणामप्यविभाग इव कर्म्मसु भवति॥
तासान्तु नाभिप्रभवाणां धमनीनामूर्द्ध्वगा दश दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः। ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुत्-सितक्षुधितरुदितादीन्विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा

अन्यच्च। "काशस्य काशिराजः तस्य दीर्घतमाः पुत्त्रोऽभूत्। धन्वन्तरिस्तु दीर्घतमसोऽभूत्। न हि संसिद्धकार्य्यकारणः सकलसम्भूतिष्वशेषज्ञानवित्। भगवता नारायणेन चातीतसम्भूतौ तस्मै वरो दत्तः। काशिराजगोत्रेऽवतीर्य्य त्वमष्टधा सम्यगायुर्व्वेदं करिष्यसि। यज्ञभाक् त्वं भविष्यसीति। तस्य च धन्वन्तरेः पुत्त्रः केतुमान् केतुमतो भीमरथः। तस्यापि दिवोदासः।" इति विष्णुपुराणम् ।४।८।२-५॥ *॥ अस्यार्थः। "संसिद्धकार्य्यकारणः जरादिरहितदेहेन्द्रियः। संयतदेहेन्द्रिय इति वा। सकलसम्भूतिषु सर्व्वेष्वपि जन्मसु। अशेषज्ञानवित् सर्व्वशास्त्रवित्। अतीतसम्भूतौ क्षीराब्धौ जन्मनि। अष्टधा अष्टाङ्गमायुर्व्वेदम् तदुक्तं लघुवागभटे।
कायबालग्रहोर्द्ध्वाङ्गशल्यदंष्ट्राजराविषम्।
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संस्थितेति।"
इति तट्टीकायां स्वामी॥ *॥ दिवोदासः। इति त्रिकाण्डशेषः॥ (धन्वन्तरिप्रादुर्भावो यथा,
"एकदा देवराजस्य दृष्टिर्निपतिता भुवि।
तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीड़िताः॥
तान् दृष्ट्वा हृदयन्तस्य दयया परिपीड़ितम्।
दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह॥
धन्वन्तरे! सुरश्रेष्ठ! भगवन्! किञ्चिदुच्यते।
योग्यो भवसि भूतानामुपकारपरो भव॥
उपकाराय लोकानां केन किन्न कृतं पुरा।
त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान्॥
तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव।
प्रतीकाराय रोगाणामायुर्व्वेदं प्रकाशय॥
इत्युक्त्वा सुरशार्दूलः सर्व्वभूतहितेप्सया।
समस्तमायुषो वेदं धन्वन्तरिमुपादिशत्॥
अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा।
आगत्य पृथिवीं काश्यांजातो बाहुजवेश्मनि।
नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ।
बाल एव विरक्तोऽभूच्चचार सुमहत्तपः॥
यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम्।
ततो धन्वन्तरिर्लोके काशीराजोऽभिधीयते॥
हिताय देहिनां स्वीया संहिता विहितामुना।
अयं विद्यार्थिनो लोकान् संहितान्तामपाठयत्॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)
विक्रमादित्यराजस्य नवरत्नान्तर्गतरत्नविशेषः। यथा,—
"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य॥"
इति नवरत्नम्॥
(धनोर्धनुर्वेदस्य अन्तमृच्छतीति। महादेवः। यथा, महाभारते। १३। १७। १०३।
"धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा॥")
धन्वन्तरियस्ता, स्त्री, (धन्वन्तरिणा ग्रस्ता।) कटुकी। इति शब्दचन्द्रिका॥

धन्वयवासः, पुं, (धन्वदेशोद्भवो यवासः।) दुरालभा। इत्यमरटीकायां भरतः॥ (दुरालभाशब्देऽस्य विवरणं ज्ञातव्यम्॥)
धन्वयवासकः, पुं, (धन्वयवास+स्वार्थे कन्।) दुरालभा। इति राजनिर्घण्टः॥
धन्वयासः, पुं, (धन्वदेशोद्भवो यासः यवासः।) दुरालभा। इत्यमरः। २। ४। ९१॥
धन्वा, [न्] पुं, (धन्वति जलाभावं गच्छतीति। धन्व+"कनिन् युवृषीति।" उणां १। १५६। इति कनिन्।) मरुदेशः। इत्यमरः। २। १। ५॥ (यथा, ऋग्वेदे। ६। ३४। ४।
"जनं न धन्वन्नभि सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः॥"
अन्तरिक्षम्। लक्षणात् उदकमपि। यथा, ऋग्वेदे। १। १६८। ५।
"धन्वच्युत इषां न यामनि पुरुप्रैषा अहन्योनैतशः॥"
"धन्वच्युतो न धन्वन्शब्दोऽन्तरिक्षस्य वचनः तेन तत्स्थमुदकं लक्ष्यते उदकस्राविणो मेघा इव।" इति तद्भाष्ये सायनः॥)
धन्वी, [न्] त्रि, (धनुश्चापोऽस्त्यस्येति। व्रीह्यादित्वात् इनिः।) धनुर्द्धरः। इत्यमरः। २। ८। ६६॥ (यथा, कुमारे। ३। १०।
"कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये॥")
विदग्धः। इति विश्वः॥
धन्वी, [न्] पुं, (धन्वमस्त्यस्येति। धन्व+इनिः।) दुरालभा। अर्ज्जुनवृक्षः। (अस्य पर्य्यायो यथा,—
"धन्वी धनञ्जयः पार्थो नदीजः ककुभोऽर्ज्जुनः।"
इति वैद्यकरत्नमालायाम्॥)
वकुलः। इति राजनिर्घण्टः॥ पार्थः। इति विश्वः॥ (विष्णुः। यथा, महाभारते। १३। १४९। २२।
"ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः॥"
महादेवः। यथा, तत्रैव। १३। १७। ४२।
"कमण्डलुधरो धन्वी वाणहस्तः कपालवान्॥"
तामसमनोः पुत्त्रविशेषः। यथा, हरिवंशे। ७। २४।
"तपोरतिरकल्माषस्तन्वी धन्वी परन्तपः।
तामसस्य मनोरेते दश पुत्त्रा महाबलाः॥")
धम, ध्माने। ध्माने। इति कविकल्पद्रुमः॥ (भ्वां-परं-अकं-सेट्।) धमति। सौत्रधातुरयम्। इति दुर्गादासः॥
धमः, त्रि, (धमतीति। धम+अच्।) अग्निसंयोगकर्त्ता। शब्दकर्त्ता। इति धमधातोः पचादित्वादच्प्रत्ययेन साध्यः॥
धमकः, पुं, (धमतीति। ध्मा शब्दाग्निसंयोगयोः+"ध्मो धम च।" उणां २। ३५। इति क्वुन् धमादेशश्च।) कर्म्मकारः। इत्युणादिकोषः॥
धमनः, पुं, (धम्यतेऽग्निरनेनेति। धम+करणे ल्युट्।) नलः। इत्यमरः। २। ४। १६२॥
(अस्य पर्य्यायो यथा,—
"नलः पोटगलः शून्यमध्यश्च धमनस्तथा॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥
धमतीति। धम+ल्युः।) भस्त्राध्मापके क्रूरे च त्रि। इति मेदिनी। ने, ७८॥
धमनिः, स्त्री, (धम्यते इति। धम+"अर्त्तिसृधृधमीति।" उणां २।१०३। इति अनिः।) धमनी। इति शब्दरत्नावली॥ (यथा, अथर्व्ववेदे। ६। ९०। २।
"यास्ते शतं धमनयोऽङ्गान्यनु विष्ठिताः॥"
प्रह्लादभ्रातुर्ह्रादस्य पत्नी। सा तु वातापेरिल्वलस्य च जननी। यथा, भागवते। ६। १८। १५।
"ह्रादस्य धमनिर्भार्य्यासूत वातापिमिल्वलम्॥"
धमतिर्गतिकर्म्मा। गत्यर्था बुद्ध्यर्थाः। गम्यते ज्ञायतेऽर्थोऽनया। ज्ञायते वा विद्वद्भिः साध्वसाधुविभागेन। यद्वा, 'धमति इति वधकर्म्मस्वपि पठ्यते धमति हन्त्यनया शापाक्रोशादिरूपयेति। वाक्। शब्दः। इति निघण्टुः। १। ११॥ यथा, ऋग्वेदे। २। ११। ८।
"दूरे पारे वाणीं वर्धयन्त
इन्द्रेषितां धमनिं पप्रथन्नि॥")
धमनी, स्त्री, (धमनि+वा ङीष्।) नाड़ी। (यथा, महाभारते। १२। २१४। १७।
"दश विद्यात् धमन्योऽत्र पञ्चेन्द्रियगुणावहाः।
याभिः सूक्ष्माः प्रजायन्ते धमन्योऽन्याः सहस्रशः॥"
यथा,—
"ओजोवहाः शरीरे वा विधम्यन्ते समन्ततः।
येनौजसा वर्त्तयन्ति प्रीणिताः सर्व्वदेहिनः॥
यदृते सर्व्वभूतानां जीवितं नावतिष्ठते।
यत्सारमादौ गर्भस्य यौऽसौ गर्भरसाद्रसः॥
संवर्त्तमानं हृदयं समाविशति यत् पुरा।
यस्य नाशान्न नाशोऽस्ति धारि यद्धृदयाश्रितम्॥
यच्छरीरवलं देहः प्राणा यत्र प्रतिष्ठिताः।
तत्फला विविधा वाताः फलन्तीति महाफलाः॥
ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात्
सिराः॥"
इति चरके सूत्रस्थाने त्रिंशेऽध्याये॥
"चतुर्व्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः। तत्र केचिदाहुः सिरा धमनी स्रोतसामविभागः सिराविकारा एव धमन्यः स्रोतांसि चेति। तत्तु न सम्यक्। अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः कस्माद्व्यञ्जनान्यत्वान्मूलसन्नियमात् कर्म्मवैशेष्यादागमाच्च केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्तकर्म्मणामप्यविभाग इव कर्म्मसु भवति॥
तासान्तु नाभिप्रभवानां धमनीनामूर्द्ध्वगा दश दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः। ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा

जायन्ते तास्त्रिंशत। तासान्तु वातपित्तकफ शोणितरसान् द्वे द्वे वहतस्ता दश शब्दरूपरस गन्धानष्टाभिर्गृह्णीते। द्वाभ्यां भाषते च द्वाभ्यां घोषं करोति द्वाभ्यां स्वपिति द्वाभ्यां प्रतिबुध्यते द्वे चाश्रुवाहिन्यौ। द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते। ते एव शुक्रं नरस्य स्तनाभ्यामभि वहतः। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याता एताभिरूर्द्धं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवा बाहवो धार्य्यन्ते याप्यन्ते च॥'

'अधोगमास्तु वातमूत्रपुरीषशुक्रार्त्तवादीन्यधो वहन्ति। तास्तु पित्ताशयमभिप्रतिपन्नास्तत्रस्थ मेवान्नपानरसं विपक्वमौष्ण्याद्विवेचयन्त्योऽभि वहन्त्यः शरीरं तर्पयन्त्यर्पयन्ति चोर्द्ध्वगतानां तिर्य्यग्गतानां रसस्थानञ्चाभिपूरयन्ति मूत्रपुरीष स्वेदांश्च विरेचयन्त्यामपक्वाशयान्तरे च त्रिधा जायन्ते तास्त्रिंशत। तासान्तु वातपित्तकफ शोणितरसान् द्वे द्वे वहतस्ता दश द्वे अन्न वाहिन्यावन्त्राश्रिते तोयवहे द्वे मूत्रवस्तिमभि प्रपन्ने मूत्रवहे द्वे शुक्रवहे द्वे शुक्रप्रादुर्भावाय द्वे विसर्गाय ते एव रक्तमभिवहतो नारीणा मार्त्तवसञ्ज्ञम्। द्वे वर्च्चो निरसन्यौ स्थूलान्त्रप्रति बद्धे। अष्टावन्यास्तिर्य्यग्गाणां धमनीनां स्वेदमर्प यन्ति। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याता एताभिरधोनाभेः पक्वाशयकटीमूत्रपुरीषगुद वस्तिमेढ्रसक्थीनि धार्य्यन्ते याप्यन्ते च॥'

'तिर्य्यग्गानान्तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते तास्त्वसंख्या स्ताभिरिदं शरीरं गवाक्षितं विबद्धमाततञ्च। तासां मुखानि रोमकूपप्रतिबद्धानि यैः स्वेद मभिवहन्ति रसञ्चाभि सन्तर्पयन्त्यन्तर्बहिश्च तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याण्यन्त शरीरमभिप्रतिपद्यन्ते त्वचि विपक्वानि तैरेव स्पर्शं सुखमसुखं वा गृह्णाति। तास्त्वेतास्तस्रो धमन्यः सर्व्वाङ्गगताः सविभागा व्याख्याता॥'

इति सुश्रुते शरीरस्थाने नवमेऽध्याये॥*॥)

चङ्गुविलासिनी। इत्यमरः॥ हरिद्रा। ग्रीवा। इति हेमचन्द्रः।३।२६५॥ पृश्निपर्णी। इति राजनिर्घण्टः॥ नलिका। इति भावप्रकाशः॥

**धम्मिल्लः**, पुं (धमतीति। धम+क्विप्। मिल तीति। मिल+क। पृषोदरादित्वात् साधु। ततः कर्म्मधारयः।) संयता कचाः। इत्य मरः।२।६।९७॥ खोंपा इति भाषा। कुसुम गर्भो मौक्तिकपद्मरागमालिकादिना बद्धः संयतो बहुः कचकलापः। इति भरतः॥ (यथा, गीत गोविन्दे।२।२१।

"चाकूनमिलितमाकुलाकुलगलद्धम्मिल्लमुल्लासित भ्रूवल्लीकमलीकदर्शितभुजामूलार्द्धदृष्टस्तनम्॥")

**धरः**, पुं, (धरति पृथिवीमिति। धृ+अच्।) पर्व्वतः। (यथा, माघे।४।१८।

"उत्कधरं दधुरवेक्ष्य शौरिम्
उत्कन्धरं दारुक इत्युवाच॥")

कार्पासतूलः। कूर्म्मराजः। वसुभेदः। इति मेदिनी। रे, ४८॥ (यथा, हरिवंशे।३।३९।

'आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः॥'

महादेवः। यथा, महाभारते।१३।१७।१०५।

"धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः॥"

विष्णुः। श्रीकृष्णः। यथा, तत्रैव।१३।१४९।३३।

'सर्व्वशोकमयो नित्यं शास्ता धाता धरो ध्रुवः॥'

धारकः, त्रि॥ यथा, काकपक्षधरः॥)

**धरणः**, स्त्री (धरतीति। धृ+ल्युः।) मानभेदः। स तु चतुर्विंशतिरक्तिकारूपः। इति लीलावती॥ पलदशमांशः। इति वैद्यकम्॥ ("अथ मध्यमनिष्पावा वा एकोनविंशतिर्धरणम्॥'

इति सुश्रुते चिकित्सितस्थाने ३१ अः॥)

(धृ+ल्युट्।) धारणम्। इति मेदिनी। णे ५४॥ (यथा कुमारे।१।१७।

'यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च॥')

**धरणः**, पुं (धृ+ल्युः।) अद्रिपतिः। लोकः। स्तनः। धान्यम्। दिवाकरः। इति हेमचन्द्रः॥ सेतुः। इति त्रिकाण्डशेषः॥ (वैद्यकमानविशेषः। यथा पूर्व्वखण्डे प्रथमेऽध्याये शार्ङ्गधरेणोक्तम्। 'माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते॥')

**धरणिः**, स्त्री (धरति जीवादीनिति। धृ+'अर्त्ति सृधृधमीति।' उणां २।१०३। इति अनिः।) पृथिवी। इत्यमरः।२।१।२॥ (यथा, महाभारते।१२।३४२।४।

"ज्योतिर्धरणिवायुरहिते अन्धे जलैकार्णवे लोके॥")

**धरणिधरः**, पुं (धरतीति। धृ+अच्। धरण्या धरः।) विष्णुः। इति हलायुधः॥ (कच्छपः। पर्व्वतः। शेषः। इति व्युत्पत्तिलब्धोऽर्थः॥)

**धरणी**, स्त्री, (धरणि+वा ङीष्।) पृथिवी। इति मेदिनी। णे, ५४॥ (यथा, विष्णुपुराणे। १।९।१३१।

"यदा तु भार्गवो रामस्तदाभूद्धरणीत्वियम्॥")

शाल्मलिवृक्षः। इति शब्दचन्द्रिका॥ नाडी। कन्दविशेषः। तत्पर्य्यायः। धारणीया २ धीर पत्नी ३ सुकन्दकः ४ कन्दाशुः ५ वनकन्दः ६ कन्दाढ्यः ७ रक्तकन्दकः ८। अस्या गुणाः। मधुरत्वम्। कफपित्तामयरक्तदोषकुष्ठकण्डूति नाशित्वञ्च। इति राजनिर्घण्टः॥

**धरणीकन्दः**, पुं, (धरणी एव कन्दः।) धरणी नामकन्दविशेषः। इति राजनिर्घण्टः॥

**धरणीकीलकः**, पुं (धरण्याः पृथिव्याः कीलक इव।) पर्व्वतः। इति शब्दरत्नावली॥

**धरणीधरः**, पुं, (धरण्याः धरः।) विष्णुः। इति हेमचन्द्रः।२।१३१॥ (यथा, महाभारते। १३।१४९।३८।

"अजः सर्व्वेशो वह्निरनिलो धरणीधरः॥")

कच्छपः। इति राजनिर्घण्टः॥ पर्व्वतः। यथा "यो जाता धरणीधरेन्द्रतनयापाणिग्रहायोद्यता सतः।' इत्यादिगोपीनाथचक्रवर्त्ती॥ (पृथिवी धारके, त्रि। यथा, हरिवंशे।५३।१८।

'इत्युक्तोऽचोदयद् ब्रह्मा निग्रहार्थं
नरस्यैव पुराणर्षिं शमञ्च धरणीधरम्॥')

**धरणीपूरः**, पुं (धरणीं पूरयति पूर+अण्।) समुद्रः। इति त्रिकाण्डशेषः॥

**धरणीप्लवः**, पुं (प्लु+भावे अप्। पृथिव्याः प्लव इव प्लावो यस्मात्।) समुद्रः। त्रिकाण्डशेषः॥

**धरणीश्वरः**, पुं, (धरण्या ईश्वरः।) शिवः। शब्दरत्नावली॥

**धरणीसुता**, स्त्री, (धरण्याः सुता।) सीता। इति हेमचन्द्रः।३।३६७॥ (यथा कालिकापुराणे ३७ अध्याये।

'नारदस्योपदेशेन यज्ञभूमिं ततो नृप।
हलेन दारयामास यज्ञवाटावधि स्वयम्॥
तद्भूमिजातसीतायां शुभां कन्यां
लेभे राजा सुदा युक्तः सर्व्वलक्षणसंयुताम्॥
तस्याञ्च जातमात्रायां पृथिव्यन्तर्हिता ९
जगाद वचनञ्चेदं गौतम नारद शृणु॥

पृथिव्युवाच।

एषा सुता मया दत्ता तव राजन्।
एनां गृहाण सुभगां कुलद्वयशुभावहाम्॥')

**धरा**, स्त्री, (धरति जीवसङ्घानिति। धृ+अच्। यद्वा, ध्रियते शृषेण इति। धृ+अप्।) पृथिवी। इत्यमरः।२।१।२॥ (यथा भागवते।३।१३।८।

"धारणाच्च धरा प्रोक्ता पृथ्वी विस्तारयोगतः॥")

गर्भाशयः। मेदः। इति मेदिनी। रे ४९॥ नाडी। इति राजनिर्घण्टः॥ तद्दानं यथा —

'अथातः संप्रवक्ष्यामि धरादानमनुत्तमम्।
पापक्षयकरं नृणाममङ्गल्यविनाशनम्॥
कारयेत् पृथिवीं हैमीं जम्बूद्वीपां
सपर्व्वतवतीं मध्ये मेरुसमन्विताम्॥
लोकपालाष्टकोपेतां नववर्षसमन्विताम्।
नदीनदशतोपेतां सप्तसागरवेष्टिताम्॥
महारत्नसमाकीर्णां वसुरुद्रार्कसंयुताम्।
हेम्नः पलसहस्रेण तदर्द्धेनाथ शक्तितः॥
शतत्रयेण वा कुर्य्यात् द्विशतेन शतेन वा।
कुर्य्यात् पञ्चपलादूर्द्ध्वमशक्तोऽपि विचक्षणः॥
तुलापुरुषवत् कुर्य्याल्लोकेशावाहनं बुधः।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्॥
वेद्यां कृष्णाजिनं कृत्वा तिलानुपरि विन्यसेत्
तथाष्टादशधान्यानि रसांश्च लवणादिकान्॥
तथाष्टौ पूर्णकलशान् समन्तात् परिकल्पयेत्
वितानकञ्च कौशेयं फलानि विविधानि च।
तथांशुकानि रम्याणि श्रीखण्डशकलानि च।
इत्थं रचयित्वा तामधिवासनपूर्व्वकम्॥
शुक्लमाल्याम्बरधरः शुक्लाभरणभूषितः।
प्रदक्षिणं ततः कृत्वा गृहीतकुसुमाञ्जलिः॥
पुण्यं कालमथासाद्य मन्त्रानेतानुदीरयेत्।
नमस्ते सर्व्वदेवानां त्वमेव भवनं यतः।
धात्री च सर्व्वभूतानामतः पाहि वसुन्धरे।

इन्द्र धारयसे यस्मात्तु धात्रीव निर्म्मला ॥
मन्वन्तरे ततो जाता तस्मात् पाहि भवार्णवात् ।
चतुर्युगेऽपि नागकोत्तमात्त्वच तथापवे ॥
अनन्तायै नमस्तस्मात् पाहि संसारकर्द्दमात् ।
तथैव लक्ष्मीर्गोविन्दे शिवे गौरीति संस्थिता ॥
गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चन्द्रे रवौ प्रभा ।
बुद्धिर्बृहस्पतौ ख्याता मेधा मुनिषु संस्थिता ॥
विश्वं व्याप्य स्थिता यस्मात्ततो विश्वम्भरा स्थिता ।
धृतिः क्षमा स्थिरा चोर्वी पृथ्वी वसुमती रमा ॥
एताभिर्मूर्त्तिभिः पाहि देवि ! संसारकर्द्दमात् ।
एवमुच्चार्य्य तां देवीं ब्राह्मणेभ्यो निवेदयेत् ॥
धरार्द्धं वा चतुर्भागं गुरवे प्रतिपादयेत् ।
शेषं चैवाथ ऋत्विग्भ्यः प्रणिपत्य विसर्ज्जयेत् ॥
अनेन विधिना यस्तु दद्याद्देवीं धरां बुधः ।
पुण्यकाले तु सम्प्राप्ते स पदं याति वैष्णवम् ॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
नारायणपुरं गत्वा कल्पत्रयमथो वसेत् ॥
पितृपुत्रप्रपौत्रांश्च तारयेदेकविंशतिम् ॥
इति पठति य इत्थं यः शृणोतीह नित्यं
मनकलुषविमानैर्भूरुदैः समन्तात् ।
दिवममरवधूभिर्याति संप्रार्थ्यमानः
पुरममरसहस्रैः सेवितं चन्द्रमौलेः ॥"

इति मत्स्यपुराणे ५५८ अः ॥

धराकदम्बः, पुं, (धरायां वर्षाकाले जातः कदम्बः ।) धाराकदम्बवृक्षः । इति हारावली । १७० ॥

धरात्मजः, पुं, ( धराया आत्मजः । ) मङ्गलग्रहः । इति हेमचन्द्रः ॥ ( नरकासुरः । इति कालिकापुराणे ३७ अध्यायः ॥ स्त्रियां टाप् । सीता ॥ )

धराधरः, पुं, ( धरायाः धरो धारकः । ) विष्णुः । ( यथा, महाभारते । १३ । १४९ । ६३ ।
"सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥"
"अंशैरशेषैः शेषादिरूपैर्धरां धरतीति धराधरः ।" इति शाङ्करभाष्यम् ॥ ) पर्व्वतः । इति मेदिनी । रे, २६८ ॥ ( यथा, हरिवंशे । २०४ । २१ ।
"सरांसि च तथा वातारश्च धराधराः ॥"
धरायाः उद्धारकर्त्तरि, त्रि । यथा, भागवते । ४ । ६७ । ३५ ।
"स वीरमूर्त्तिः समभूद्धराधरो
यो मां पयस्युग्रशरो जिघांससि ॥" )

धरामरः, पुं, ( धरायाः पृथिव्या अमरो देवः । ) ब्राह्मणः । यथा,—
"येनै श्रुतं भागवतं पुराणं
नाराधितो यैः पुरुषः पुराणः ।
मुखे हुतं यैर्न धरामराणां
तेषां वृथा जन्म नराधमानाम् ॥"

इति पौराणिकाः ॥

धरित्री, स्त्री, ( धरति जीवजातमिति ध्रियते शेषेण वा । धृ+"अर्त्तिलूधूसूखनसहचर इत्रः ।" उणां ४।१७२। इति इत्र । गौरादित्वात् ङीष् ।) पृथिवी । इत्यमरः । २ ।१।२ ॥ ( यथा, रघुः । १६ । ५४ ।
"समुद्गिलाभप्रसृतिं धरित्रीं
लतेव सीता सहसा जगाम ॥" )

धरिमा, [ न् ] पुं, (ध्रियते दृश्यतेऽनेनेति । धृ+ "हृभृधृसृस्तृशृभ्य इमनिच् ।" उणां ४ ।१४७। इति इमनिच् । ) रूपम् । इत्युणादिकोषः ॥ तुला । यथा, मनुः । ८ । ३२१ ।
"तथा धरिममेयानां शतादभ्यधिके वधः ॥"

धरुणः, पुं, ( धरतीति । धृ+बाहुलकात् उनन् ।
"धृञ् धारणे । धेटुमति च इति णिच् । धारेर्णिलुक् क्युन्प्रत्ययः । धारयति जगत् ।" इति देवराजयज्वा । १ । १२ । २४ ।) ब्रह्मा । स्वर्गः । नीरम् । ( निघण्टुमते, स्त्री । यथा, ऋग्वेदे । १० । ५ । ६ ।
"पथां विसर्गे धरुणेषु तस्थौ ॥" )
वन्हितम् । इति मेदिनी । णे, ५५ ॥ ( अग्निः । यथा, वाजसनेयसंहितायाम् । ८ । ५१ ।
"उपस्थानधरुणं मात्रे धरुणो मातरं धयन् ॥"
धारके, त्रि । यथा, ऋग्वेदे । १० । १११ । ४ ।
"दाधार यो धरुणं सत्यताता ॥"
"सत्ये द्युलोके धरुणं धारकं बलं दाधार अधारयत् ।" इति तद्भाष्ये सायनः ॥ )

धर्त्तव्य, त्रि, धृधातोःकर्म्मणि तव्यप्रत्ययेन साध्यम् । धारणीयम् । स्थापनम् । पतनीयम् । भावे,क्ली ॥

धर्त्रं, क्ली, ( धरति ध्रियते वा । धृ+"हुयामाश्रुभसिभ्यस्त्रन् ।"उणां ४ । १६६ । इति त्रः ।) गृहम् । इत्युणादिकोषः ॥ क्रतुः । धर्म्मः । इति संक्षिप्तसारोणादिवृत्तिः ॥ ( धारके, त्रि । यथा, वाजसनेयसंहितायाम् । १ । १८ ।
"धर्त्रमसि दिवं दृंह धर्त्रवनि वधाय ।"
"हे कपाल ! त्वं धर्त्रं धारकमसि ।" इति वेददीपः ॥ )

धर्म्मः, पुं क्ली, ( धरति लोकान् ध्रियते पुण्यात्मभिरिति वा । धृ+"अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।" उणां १ । १३८ । इति मन् । ) पुण्यम् । ( यथा, हितोपदेशे । १ । ५८ ।
"एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्व्वमन्यत्तु गच्छति ॥" )
तत्पर्य्यायः । पुण्यम्२ श्रेयः३ सुकृतम्४ वृषः५ । इत्यमरः ।१।४।२४॥ न्यायः । स्वभावः । आचारः । उपमा । क्रतुः । (यथा,महाभारते ।१४।८८।२१।
"कृत्वा प्रवर्ग्यं धर्म्माख्यं यथावत् द्विजसत्तमाः ।
चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः ॥" )
अहिंसा । उपनिषत् । इति मेदिनी । मे, १६ । दानादिके, क्ली । इति हेमचन्द्रः ॥ ( यथा, योगसारे ।
"प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा ।
स्मरणञ्चैव योगेऽस्मिन् पञ्च धर्म्माः प्रकीर्त्तिताः ॥" )

धर्म्मः, पुं, ( धृ+मन् । ) धनुः । यमः । सोमपः । इति मेदिनी । मे,१६ ॥ सत्सङ्गः । अर्हन् । इति हेमचन्द्रः । ६ । १५ ॥ देवताविशेषः । स ब्रह्मणो दक्षिणस्तनाज्जातः । ( यथा, मत्स्यपुराणे ।३।१०।
"अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापतिरजायत ।
धर्म्मस्तनान्ताद्भवत् हृदयात् कुसुमायुधः ॥"
तस्य भार्य्या दक्षस्य त्रयोदशकन्याः । तस्य चतुर्द्दशापत्यानि यथा । श्रद्धायां श्रद्धायां कृतम् १ मैत्र्यां प्रसादः २ दयायां अभयम् ३ शान्त्यां सुखम् ४ तुष्ट्यां मुत् ५ पुष्ट्यां गर्व्वः ६ क्रियायां योगः ७ उन्नतौ दर्पः ८ बुद्ध्यां अर्थः ९ मेधायां स्मृतिः १० मूर्त्त्यां नरनारायणौ ११ । १२ तितिक्षायां क्षेमम् १३ ह्रीसंज्ञायां प्रश्रयः १४ । इति श्रीभागवतम् ॥ * ॥ अपि च ।
"श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा तथा क्रिया ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदशी ।
पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ॥"
विष्णुपुराणमते सिद्धिस्थाने ऋद्धिरन्यत् तुल्यम् ॥ तासामपत्यानि यथा,—
"श्रद्धा कामञ्च श्रीर्दर्पं नियमं धृतिरात्मजम् ।
सन्तोषञ्च तथा तुष्टिर्लोभं पुष्टिरसूयत ॥
मेधा श्रुतं क्रिया दण्डं नयं विनयमेव च ।
बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम् ॥
व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ।
सुखं सिद्धिर्यशः कीर्त्तिरित्येते धर्म्मसूनवः ॥
कामो नन्दीं सुतं हर्षं धर्म्मपौत्रमसूयत ॥" * ॥
अधर्म्मवंशो यथा, मार्कण्डेयपुराणे ।
"हिंसा भार्य्या त्वधर्म्मस्य तस्यां जज्ञे तथानृतम् ।
कन्या च निकृतिस्ताभ्यां सुतौ द्वौ नरकं भयम् ॥
माया च वेदना चैव मिथुनं त्विदमेतयोः ।
भयाच्च सोऽथ वै माया मृत्युं भूतापहारिणम् ॥
वेदना स्वसुतञ्चापि दुःखं जज्ञेऽथ रौरवात् ।
मृत्योर्व्याधिजराशोकतृष्णाः क्रोधश्च जज्ञिरे ॥
दुःखोत्तराः स्मृता ह्येते सर्व्वे चाधर्म्मलक्षणाः ।
नैषां भार्य्यास्ति पुत्रो वा सर्व्वे ते ह्यूर्द्ध्वरेतसः ॥"
धर्म्मोत्पत्तिर्यथा, वराहपुराणे ।
"अथोत्पत्तिं प्रवक्ष्यामि धर्म्मस्य महतो नृप ! ।
माहात्म्यञ्च तिथिञ्चैव तन्निबोध नराधिप ! ।
सर्व्वे ब्रह्मादयः शुद्धपरात्परसंज्ञितः ।
स सिसृक्षुः प्रजाः पूर्व्वं पालनञ्च व्यचिन्तयत् ॥
तस्य चिन्तयतस्तस्माद्दक्षिणाच्छ्वेतकुण्डलः ।
प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः ।
तं दृष्ट्वोवाच भगवांश्चतुष्पात् त्वात् कृते युगे ।
त्रेतायां त्रिपदश्चासौ द्विपदो द्वापरेऽभवत् ॥
कलावेकेन पादेन प्रजाः पालयते प्रभुः ।
षड्गुणो ब्राह्मणानां स त्रिधा क्षत्रे व्यवस्थितः ॥
द्विधा विट्स्वेकधा शूद्रे स्थितः सर्व्वगतः प्रभुः ।
गुणद्रव्यक्रियाजातिचतुष्पादः प्रकीर्त्तितः ॥
त्रिशृङ्गोऽसौ स्मृतो वेदे सप्तहस्तश्च द्विशीर्षः ।
तथा चाद्यन्त ओङ्कारद्विशिराः सप्तहस्तवान् ॥
उदात्तादित्रिभिर्बद्ध एष धर्म्मो व्यवस्थितः ॥
ब्रह्मोवाच ।
अद्यप्रभृति ते धर्म्म ! तिथिरस्तु त्रयोदशी ॥
यस्तामुपोष्य पुरुषो भवन्तं समुपार्च्चयेत् ।
कृत्वा पापसमाचारं तस्मान्मुच्यति मानवः ॥"
तस्य पूजा यथा, वामनपुराणे ।

दृष्टप्रातेऽथ तौ वीरौ रम्यं तालवनं महत् ॥
तौ तालपर्णप्रकरे रम्ये तालवने रतौ ।
चेरतुः परमप्रीतौ वृषपोताविवोन्नतौ ॥
स तु देशः समः स्निग्धः सुमहान् कृष्णमृत्तिकः ।
दर्भप्रायस्थलीभूतो लोष्टपाषाणवर्जितः ॥
तालैस्तैर्विपुलस्कन्धैरुच्छ्रितैः श्यामपर्व्वभिः ।
फलाग्रशाखिभिर्भाति नागहस्तैरिवोच्छ्रितैः ॥
तत्र दामोदरो वाक्यमुवाच वदतांवरः ।
अहो तालफलैः पक्वैर्वासितेयं वनस्थली ॥
स्वादून्यार्य्य ! सुगन्धीनि श्यामानि रसवन्ति च ।
पक्वतालानि सहितौ पातयावो लघुक्रमौ ॥
यद्येषामीदृशो गन्धो माधुर्य्यघ्राणतर्पणः ।
रसेनामृतकल्पेन भवितव्यञ्च मे मतिः ॥
दामोदरवचः श्रुत्वा रौहिणेयो हसन्निव ।
पातयन् पक्वतालानि चालयामास तांस्तरून् ॥
तत्तु तालवनं नृणामसेव्यं दुरतिक्रमम् ।
निर्म्माणभूतमैरिणं पुरुषादालयोपमम् ॥
दारुणो धेनुको नाम दैत्यो गर्द्दभरूपधृक् ।
खरयूथेन महता वृतः समनुवर्त्तते ॥
स तत्तालवनं घोरं गर्द्दभः परिरक्षति ।
नृपक्षिश्वापदगणांस्त्रासयानः सुदुर्म्मतिः ॥
तालशब्दं स तं श्रुत्वा संघुष्टं फलपातनात् ।
नामर्षयत संक्रुद्धस्तालस्वनमिव द्विपः ॥
शब्दानुसारी संक्रुद्धो दर्पाविद्धसटाननः ।
स्तब्धाक्षो हेषितपटुः खुरैर्निर्द्दारयन्महीम् ॥
आविद्धपुच्छो हृषितो व्यात्ताननइवान्तकः ।
आपतन्नेव ददृशे रौहिणेयमुपस्थितम् ॥
तालानां तमधो दृष्ट्वा सध्वजाकारमव्ययम् ।
रौहिणेयं खरो दुष्टः सोऽदशद्दशनायुधः ॥
पद्भ्यामुभाभ्याञ्च पुनः पश्चिमाभ्यां पराङ्मुखः ।
जघानोरसि दैत्येन्द्रो रौहिणेयं निरायुधम् ॥
ताभ्यामेव स जग्राह पद्भ्यां तं दैत्यगर्द्दभम् ।
आवर्ज्जितमुखस्कन्धं प्रेरयंस्तालमूर्द्धनि ॥
स भग्नोरुकटिग्रीवो भग्नपृष्ठो दुराकृतिः ।
खरस्तालफलैः सार्द्धं पपात धरणीतले ॥
तं गतासुं गतश्रीकं पतितं वीक्ष्य गर्द्दभम् ।
ज्ञातींस्तथापरांस्तस्य तथ्यराजनि सोऽक्षिपत् ॥
सा भूर्गर्द्दभदेहैश्च तालैः पक्वैश्च पातितैः ।
बभासे छन्नजलदा द्यौरिवाव्यक्तशारदी ॥
तस्मिन् गर्द्दभदैत्ये तु सानुगे विनिपातिते ।
रम्यं तालवनं तद्धि भूयो रम्यतरं बभौ ॥"

तीर्थविशेषः । यथा, महाभारते । ३ । ८४ । ८१—८३ ।
"ततो गच्छेत राजेन्द्र ! धेनुकं लोकविश्रुतम् ।
एकरात्रोषितो राजन् ! प्रयच्छेत्तिलधेनुकाम् ॥
सर्व्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् ।
तत्र चिह्नं महाराज ! अद्यापि हि न संशयः ।
कपिला सह वत्सा वै पर्व्वते विचरत्युत ॥
सवत्सायाः पदान्यस्या दृश्यन्तेऽद्यापि भारत ! ।
तेषूपस्पृश्य राजेन्द्र ! पदेषु नृपसत्तम ! ।
यत् किञ्चिदशुभं पापं तत् प्रणश्यति भारत ! ॥")

षोड़शरतिबन्धान्तर्गतद्वादशबन्धः । यथा,—
"सुप्तां स्त्रियं समालिङ्ग्य स्वयं सुप्तो रमेत् पुनः ।
लघुलिङ्गं चालयेद्यो बन्धोऽयं धेनुकः स्मृतः ॥"
इति रतिमञ्जरी ॥

(अपरविधलक्षणं यथा,—
"न्यस्तहस्तयुगला निजे पदे
योषिदेति कटिरूढ़वल्लभा ।
अग्रतो यदि शनैरधोमुखी
धेनुकं तमवदन्नते प्रिये ! ॥")

धेनुकसूदनः, पुं, (धेनुकं गोवर्द्धनोत्तरपार्श्वस्थतालवनवासिनमसुरं निसूदयति बलरामद्वारेति । सूद+णिच्+ल्युः ।) श्रीकृष्णः । इति त्रिकाण्डशेषः ॥ (बलरामः । इति पुराणम् ॥)

धेनुका, स्त्री, (धेनुरिव प्रतिकृतिः । धेनु+कन् । टाप् ।) हस्तिनी । (धेनुरेव । स्वार्थे कन् ।) गौः । इति मेदिनी । के, १०६ ॥ (यथा, महाभारते । ७ । ७६ । १८ ।
"इमां ते तरुणीं भार्य्यां त्वदाधिभिरभिप्लुताम् ।
कथं सन्धारयिष्यामि विवत्सामिव धेनुकाम् ॥")

धेनुदुग्धं, क्ली, (धेनोर्दुग्धमिव शुभ्रं फलमस्य ।) चिर्भिटः । इति राजनिर्घण्टः ॥ (धेनोर्दुग्धम् ।) गोक्षीरम् ॥

धेनुदुग्धकरः, पुं, (करोतीति वर्द्धयतीति । कृ+अच् । धेनोर्दुग्धस्य करः । एतद्भक्षणेन धेनुदुग्धवर्द्धनादस्य तथात्वम् ।) गर्ज्जरः । इति राजनिर्घण्टः ॥

धेनुष्या, स्त्री, (धेनु+"संज्ञायां धेनुष्या ।" ४ । ४ । ८९ । इति सुगागमो यत्प्रत्ययस्य निपात्यते ।) बन्धके स्थिता गौः । इत्यमरः । २ । ९ । ७२ ॥ यां बन्धकेन दत्त्वा अर्थं नीतवान् सा । गौर्म्महिषी वा या दुग्धबन्धके स्थिता सा धेनुष्येति वृद्धाः । इति भरतः ॥

धेनुकं, क्ली, (धेनूनां समूहः । "अचित्तहस्तिधेनोष्ठक् ।" ४ । २ । ४७ । इति ठक् ।) धेनुसमूहः । इत्यमरः । २ । ९ । ६० ॥ (स्त्रीणां करणभेदः । इति मेदिनी । के, १०६ ॥)

धैर्य्यं, क्ली, (धीरस्य भावः कर्म्म वा । धीर+ष्यञ् ।) धीरता । धीरस्य भाव इत्यर्थे ष्यञ्प्रत्ययः ॥ तस्य लक्षणं यथा,—
"स्थिरचित्तोन्नतिर्या तु तद्धैर्य्यमिति कीर्त्त्यते ॥"
इत्युज्ज्वलनीलमणिः ॥
(इदं नायकसत्त्वजगुणानामन्यतमः । यथा, साहित्यदर्पणे । ३ । ५८ ।
"शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी ।
ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥"
तल्लक्षणं यथा, तत्रैव । ३ । ६३ ।
"व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि ॥"
उदाहरणं यथा,—
"श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥")

धैवतः, पुं, (धीमतामयम् । धीमत्+अण् । पृषोदरादित्वात् मस्य वत्वम् ।) सप्तस्वरान्तर्गतषष्ठस्वरः । स तु नारदमते अश्वस्वरतुल्यः । (अश्वस्तु धैवतं रौतीति वचनात् ॥) नानसेनमते भेकस्वरतुल्यः । अस्योच्चारणस्थानं ललाटम् । व्याकरणमते दन्तः । अयं क्षत्त्रियवर्णः । अस्य जातिः षाड़वः । अस्य तानम् ७२० प्रत्येकतानम् ४८ समुदायेन ३४,५६० भवन्ति । इति संगीतशास्त्रम् ॥
"गत्वा नाभेरधोभागं वस्तिं प्राप्योर्द्ध्वगः पुनः ।
धावन्निव च यो याति कण्ठदेशं स धैवतः ॥"
अस्य श्रुतयस्तिस्रः । इति संगीतदामोदरः ॥
(यथा च सङ्गीतदर्पणे । १ । ५५ ।
"मदन्ती रोहिणी रम्येत्येता धैवतसंश्रयाः ॥"
अस्य ऋषिकुले उद्भवः । क्षत्त्रियो जातिः । पीतो वर्णः । श्वेतद्वीपे जन्म । ऋषिस्तुम्बुरुः । गणेशो देवता । उष्णिक् छन्दः । वीभत्सभयानकरसयोरुपयोगित्वम् । इति सङ्गीतदर्पणम् ॥)

धोड़ः, पुं, (धोरति चातुर्य्येण गच्छतीति । धोर गतिचातुर्य्ये+अच् । रस्य ड़त्वम् ।) सर्पविशेषः । धोड़ा इति भाषा । तत्पर्य्यायः । राजिलः २ डुण्डुभः ३ डुन्डुभः ४ । इति शब्दरत्नावली ॥

धोर, ऋ गतिचातुर्य्ये । इति कविकल्पद्रुमः ॥ (भ्वां-पर-सकं-सेट् ।) ऋ, अदुधोरत् । गतौ चातुर्य्यं गतिचातुर्य्यम् । धोरन्त्या धोरणाक्रान्ता विनीता यस्य वारणाः । इति दुर्गादासः ॥

धोरणं, क्ली, (धोरति गच्छत्यनेनेति । धोर+करणे ल्युट् ।) सर्व्ववाहनम् । हस्त्यश्वरथदोलादि । इत्यमरः । २ । ८ । ५८ ॥ (धोर+भावे ल्युट् ।) अश्वप्रथमगतिः । तत्पर्य्यायः । धौरितकम् २ धौर्य्यम् ३ धोरितम् ४ । इति हेमचन्द्रः । ४ । ३१२ ॥

धोरणिः, स्त्री, (धोरति क्रमशः प्राप्नोतीति । धोर+अनिः ।) परम्परा । इति जटाधरः ॥

धोरितं, क्ली, (धोर+क्तः ।) धोरणम् । अश्वप्रथमगतिः । इति हेमचन्द्रः । ४ । ३१२ ॥

धोरितकं, क्ली, (धोरितमश्वप्रथमगतिस्तेन कायतीति । कै+कः ।) धौरितकम् । इत्यमरटीकायां रमानाथः ॥

धौतं, त्रि, (धाव्यते स्मेति । धाव+कर्म्मणि क्तः ।) मार्ज्जितम् । धोया इति भाषा । तत्पर्य्यायः । निर्णिक्तम् २ शोधितम् ३ मृष्टम् ४ क्षालितम् ५ । इति हेमचन्द्रः । ६ । ७३ ॥ * ॥
"ईषद्धौतं स्त्रिया धौतं यद्धौतं रजकेन च ।
अधौतं तद्विजानीयाद्दशा दक्षिणपश्चिमे ॥"
इति कर्म्मलोचनम् ॥

धौतं, क्ली, (धाव+क्तः ।) रूप्यम् । इति राजनिर्घण्टः ॥

धौतकटः, पुं, धौतः कटः । नित्यकर्म्मधारयः ।) सूत्ररचितभाण्डम् । थोकड़ा इति ख्यातः । तत्पर्य्यायः । स्योनः २ स्यूतः ३ प्रसेवकः ४ । इति

ाड़िः, पुं, ( ध्राड़ते शीर्णो भवतीति । ध्राड़+ "सर्व्वधातुभ्य इन् ।" उणां ।४।११८। इति इन् ।) पुष्पचयः। इत्युणादिकोषः ॥

ज, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । ) ध्रेजति । इति दुर्गादासः ॥

ु, णि } स्थैर्य्ये । सर्पणे । इति कविकल्पद्रुमः ॥
ु, शि } ( भ्वां-तुदां च-स्थैर्य्ये अकं-सर्पणे सकं-परं-अनिट् । ) द्वौ रेफयुक्तौ । आद्यो दीर्घान्त इति कश्चित् । णि, ध्रुतोऽस्ति । शि, ध्रुवति अध्रुवीत् । ध्रुवति शैलः । इति दुर्गादासः ॥

ध्रुवं, क्ली, ( ध्रुवति स्थिरीभवतीति । ध्रु+"सुवः कः ।" उणां । २ । ६१ । इत्यत्र । "बाहुलकात् ध्रु स्थैर्य्ये अतोऽपि कः ।" इत्युज्ज्वलदत्तोक्त्या कः । ) निश्चितम् । ( यथा, शाकुन्तले १ अङ्के ।

"ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥")

तर्कः । इति मेदिनी । वे, १३ ॥ आकाशम् । इति हेमचन्द्रः ॥

ध्रुवं, त्रि, ( ध्रु गतिस्थैर्य्ये+बाहुलकात् कः । ) सन्ततम् । शाश्वतम् । इति मेदिनी । वे, १३ ॥ स्थिरम् । निश्चितम् । इति हेमचन्द्रः ।६।८६ ॥ ( यथा, चाणक्यशतके । ६३ ।

"यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥" )

ध्रुवः, पुं, (ध्रुवति स्थिरीभवतीति । ध्रु+बाहुलकात् कः । ) शङ्कुः । हरः । ( यथा, महाभारते । १३ । १७ । १०३ ।

"धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥")

विष्णुः । ( यथा, महाभारते । १३ ।१४९।१९ ।

"विश्वकर्म्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥")

वटः । उत्तानपादजः । ( अस्य विवरणन्तु पश्चात् द्रष्टव्यम् ॥ ) वसुभेदः । ( यथा, मात्स्ये । ५ । २१ ।

"आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥" )

योगभेदः । इति मेदिनी । वे, १३ ॥ ( यथा, ज्योतिषे ।

"गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ॥")

स्थाणुः । इत्यमरः । २ । ४ । ८ ॥ शरारिपक्षी । इति त्रिकाण्डशेषः ॥ ध्रुवकः । इति सङ्गीतदामोदरः ॥*॥ ( रोहिणीगर्भे वसुदेवाज्जातः पुत्त्रविशेषः । यथा, भागवते ।९।२४।४६।

"बलं गदं सारणञ्च दुर्म्मदं विपुलं ध्रुवम् ।
वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥"

पाण्डवपक्षीयः कश्चित् क्षत्त्रियवीरः । इति महाभारते । ७ । १५६ । ३७ ॥ नहुषस्य पुत्त्रविशेषः । यथा, महाभारते । १ । ७५ । ३० ।

"यतिं ययातिं संयातिमायातिमयतिं ध्रुवम् ।
नहुषो जनयामास षट् सुतान् प्रियवाससि ॥"

पुरुवंशीयरन्तिनावस्य पुत्त्रविशेषः । यथा, भागवते । ९ । २० । ६ ।

"ऋतेयो रन्तिनावोऽभूत् त्रयस्तस्यात्मजा नृप ! ।
सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥"

रोमावर्त्तविशेषः । यथा, शब्दार्थचिन्तामणौ ।

"आवर्त्तसाम्यादावर्त्तो रोमसंस्थानमङ्गिनाम् ॥"

ते च दशधा यथा,—

"द्वावुरस्यौ शिरस्यौ द्वौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः ।
एको भाले अपाने च दशावर्त्ता ध्रुवाः स्मृताः ॥"

यज्ञीयग्रहपात्रविशेषः । यथा, कात्यायनश्रौतसूत्रे । ९ । ५ । १७ ।

"यजमानस्ततो ग्रहग्रहणमा ध्रुवात् ॥" )

नासाग्रम् । तत्तु आसन्नमृत्युर्न पश्यति । यथा,

"अरुन्धतीं ध्रुवञ्चैव विष्णोस्त्रीणि पदानि च ।
आसन्नमृत्युर्नो पश्येच्चतुर्थं मातृमण्डलम् ॥
अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते ।
विष्णोः पदानि भ्रूमध्ये नेत्रयोर्म्मातृमण्डलम् ॥"

इति काशीखण्डे । १२ । १३—१४ ॥

ध्रुवलोकोत्पत्तिर्यथा,—

"प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवस्य तु ।
द्वौ पुत्त्रौ सुमहावीर्य्यौ धर्म्मज्ञौ कथितौ तव ॥
तयोरुत्तानपादस्य सुरुच्यामुत्तमः सुतः ।
अभीष्टायामभूद्ब्रह्मन् ! पितुरत्यन्तवल्लभः ॥
सुनीतिर्नाम या राज्ञस्तस्याभून्महिषी द्विज ! ।
स नातिप्रीतिमांस्तस्यां तस्याश्चाभूद्ध्रुवः सुतः ॥
राजासनस्थितस्याङ्कं पितुर्भ्रातरमाश्रितम् ।
दृष्ट्वोत्तमं ध्रुवश्चक्रे तमारोढुं मनोरथम् ॥
सपत्नीतनयं दृष्ट्वा तमङ्कारोहणोत्सुकम् ।
पुत्त्रं पितुस्तथारूढं सुरुचिर्वाक्यमब्रवीत् ॥
एतद्राजासनं सर्व्वभूभृत्संश्रयकेतनम् ।
योग्यं ममैव पुत्त्रस्य किमात्मा क्लिश्यते त्वया ॥
उत्सृज्य पितरं बालस्तत् श्रुत्वा मातृभाषितम् ।
जगाम कुपितो मातुर्निजाया द्विज ! मन्दिरम् ॥
तं दृष्ट्वा कुपितं पुत्त्रमीषत्प्रस्फुरिताधरम् ।
सुनीतिरङ्कमारोप्य मैत्रेयेदमभाषत ॥
वत्स ! कः कोपहेतुस्ते कश्च त्वां नाभिनन्दति ।
कोऽवजानाति पितरं तव यस्तेऽपराध्यति ॥
इत्युक्तः सकलं मात्रे कथयामास तद्यथा ।
सुरुचिः प्राह भूपालप्रत्यक्षमतिगर्व्विता ॥

सुनीतिरुवाच ।

सुरुचिः सत्यमाहेदं स्वल्पभाग्योऽसि पुत्त्रक ! ।
न हि पुण्यवतां वत्स ! सपत्नैरेवमुच्यते ॥
यदि चेद्दुःखमत्यर्थं सुरुच्या वचनात्तव ।
तत् पुण्योपचये यत्नं कुरु सर्व्वफलप्रदे ॥

पराशर उवाच ।

निर्जगाम गृहान्मातुरित्युक्त्वा मातरं ध्रुवः ।
पुराच्च निर्गम्य ततस्तद्बाह्योपवनं ययौ ॥
स ददर्श मुनींस्तत्र सप्त पूर्व्वागतान् ध्रुवः ।
निर्जगाम वनात्तस्मात् प्रणिपत्य स तानृषीन् ॥
मधुसंज्ञं महापुण्यं जगाम यमुनातटम् ।
यत्रैव देवदेवस्य सान्निध्यं हरिमेधसः ॥
सर्व्वपापहरे तस्मिन् तपस्तीर्थे चकार सः ।
पदाङ्गुष्ठेन संपीड्य यदा च वसुधां स्थितः ।
तदा समस्तवसुधा चचाल सह पर्व्वतैः ॥
भगवानपि सर्व्वात्मा तन्मयत्वेन तोषितः ।
गत्वा ध्रुवमुवाचेदं चतुर्भुजवपुर्हरिः ॥
औत्तानपादे भद्रन्ते तपसा परितोषितः ।
वरदोऽहमनुप्राप्तो वरं वरय सुव्रत ! ॥

ध्रुव उवाच ।

भगवन् सर्व्वभूतेश ! सर्व्वस्यास्ते भवान् हृदि ।
किमज्ञातं तव स्वामिन् ! मनसा यन्मयेप्सितम् ॥
नैतद्राजासनं योग्यमजातस्य ममोदरात् ।
इति गर्व्वादवोचन्मां सपत्नी मातुरुच्चकैः ॥
आधारभूतं जगतः सर्व्वेषामुत्तमोत्तमम् ।
प्रार्थयामि प्रभो ! स्थानं त्वत्प्रसादादतोऽव्ययम् ॥

श्रीभगवानुवाच ।

त्रैलोक्यादधिके स्थाने सर्व्वताराग्रहाश्रयः ।
भविष्यति न सन्देहो मत्प्रसादाद्भवान् ध्रुव ! ॥
सूर्य्यात् सोमात् तथा भौमात् सोमपुत्त्राद्बृहस्पतेः ।
सितार्कतनयादीनां सर्व्वर्क्षाणां तथा ध्रुवम् ॥
सप्तर्षीणामशेषाणां ये च वैमानिकाः सुराः ।
सर्व्वेषामुपरि स्थानं तव दत्तं मया ध्रुव ! ॥"

इति विष्णुपुराणे १ अंशे ११ अध्यायः ॥*॥

ध्रुवयोगजातफलं यथा,—

"नरीनर्त्ति वाणी सदा वक्त्रपद्मे
चरीकर्त्ति कार्य्यं वरीभर्त्ति बन्धून् ।
ध्रुवाख्ये प्रसूतिर्ध्रुवा तस्य कीर्त्ति-
र्दिगन्ते नितान्तं भवेच्चारुमूर्त्तिः ॥"

इति कोष्ठीप्रदीपः ॥ * ॥

ध्रुवगणो यथा । उत्तरफल्गुनी १ उत्तराषाढ़ा २ उत्तरभाद्रपद् ३ रोहिणी ४ । इति ज्योतिषम् ॥ * ॥ ताराविशेषः । यथा,—

"मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते ।
निरक्षदेशसंस्थानामुभये क्षितिजाश्रिते ॥
भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः ।
पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥"

इति सूर्य्यसिद्धान्ते १२ अध्यायः ॥

ध्रुवकः, पुं, ( ध्रुव+स्वार्थे कन् । ) स्थाणुः । इति हेमचन्द्रः । ४ । १८८ ॥ गीताङ्गविशेषः । धया इति भाषा । तस्य लक्षणं यथा,—

"उत्तमः षट्पदः प्रोक्तो मध्यमः पञ्चमः स्मृतः ।
कनिष्ठश्च चतुर्भिः स्याद्ध्रुवकोऽयं मयोदितः ॥
उक्तं द्विखण्डमुद्ग्राहे द्विखण्डं ध्रुवके मतम् ।
ततो द्विखण्डमाभोगे तालमानरसैः सह ॥
आभोगे कविनाम स्यात्तथा नायकनाम च ।
उद्ग्राहं प्रथमं गीत्वा ध्रुवं गायेत्ततः परम् ॥
ततोऽन्तरा ध्रुवस्तस्मादाभोगध्रुवकौ मतः ।
उद्ग्राहः प्रथमः पादः कथितः पूर्व्वसूरिभिः ॥
गीत्वा पूर्व्वपदं न्यासो यत्र स ध्रुवको मतः ।
यत्रैव कविनाम स्यात् स आभोग इतीरितः ॥
ध्रुवकादिषु सर्व्वेषु भवेदेवंविधः क्रमः ॥"

स तु षोड़शविधः । यथा,—

"जयन्तः शेखरोत्साहौ मधुरो निर्म्मलस्तथा ।

तुस्ये ।

"घण्टावितानवरतोरणचित्रयुक्तं
नित्योत्सवप्रमुदितेन जनेन सार्द्धम् ।
यः कारयेत् सुरगृहं विधिवद्ध्वजाढ्यं
श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च ॥"

ध्वजयष्ट्यादिमानमाह हयशीर्षपञ्चरात्रम् ।

"ध्वजवंशः प्रकर्त्तव्यो निर्व्रणः सगुणो दृढः ।
तदूर्द्ध्वं ताम्रजं चक्रं सूक्ष्मं कुर्य्याद्द्विजोत्तम ! ॥
प्रासादस्य च विस्तारो मानं दण्डस्य कीर्त्तितम् ।
ध्वजयष्टिर्देवगृहे ऐशान्यां दिशि देशिकैः ॥
स्थापनीयाथ वायव्ये साम्प्रतं ध्वजमुच्यते ।
पट्टकार्पासक्षौमाद्यैर्ध्वजं कुर्य्यात् सुशोभनम् ॥
एकवर्णं विचित्रं वा घण्टाचामरभूषितम् ।
किङ्किणीजालकोपेतं बर्हिपत्रविभूषितम् ।
शुक्लादिवर्णैर्विप्रादिः क्रमाद्वा कारयेत् ध्वजम् ॥
दण्डाग्राद्धरणीं यावत् हस्तैकं विस्तरेण तु ।
महाध्वजन्तु विख्यातं सर्व्वकामप्रदं शुभम् ॥
ध्वजेन रहितो विप्र प्रासादस्तु वृथा भवेत् ।
पूजाहोमादिकं सर्व्वं जपाद्यं यत् कृतं नरैः ॥"

शिवसर्व्वस्वे ।

"देवेभ्यश्च गृहं दद्यात् वाहनैरुपशोभितम् ।
तुरङ्गमेव सूर्य्यस्य हरस्य वृषचिह्नितम् ॥
विष्णवे गरुडाङ्कन्तु दुर्गायै सिंहचिह्नितम् ।
कार्य्यं ध्वजपताकाद्यमन्यथा न कथञ्चन ॥"

गरुडलक्षणमाह नारदपञ्चरात्रे ।

"उपेन्द्रस्याग्रतः पक्षी गुडाकेशः कृताञ्जलिः ।
सव्यजानुगतो भूमौ नूर्द्धादौ मणिमण्डितः ॥
पक्षिजङ्घो नराङ्घ्रिश्च तुङ्गनासो नराङ्गकः ।
द्विबाहुः पक्षयुक्तश्च कर्त्तव्यो विनतासुतः ॥"

विष्णुधर्म्मोत्तरे ।

"प्रतिपाद्य द्विजो दद्यात् ध्वजं त्रिदशवेश्मनः ।
निर्द्दहत्याशु पापानि महापातकजान्यपि ॥"

इति प्रतिष्ठातत्त्वम् ॥ * ॥

अथ ध्वजचिह्नविधिः ।

"सिंहारूढा ध्वजे यस्य नृपस्य रिपुहा उमा ।
द्वारस्था पूज्यते वत्स ! न तस्य रिपुजं भयम् ॥
कपिसंस्था महामाया सर्व्वशत्रुविनाशिनी ।
वृषे यथेप्सितं दद्यात् कलहे श्रेय उत्तमम् ॥
हंसे विद्यार्थकामन्तु बर्हिणे सुतमिष्टदा ।
गरुडगा महामाया सर्व्वरोगविनाशिनी ॥
महिषस्था महामारीः शमयेत् ध्वजसंस्थिता ।
करिगा सर्व्वकार्य्येषु नृपैः कार्य्या त्रिशूलिनी ॥
पद्मस्था चर्च्चिका रौप्या धर्म्मकामार्थमोक्षदा ।
प्रेतस्था सर्व्वभयहा नित्यं मन्त्रनिपातनात् ॥
पूजिता देवराजेन्द्रनीलोत्पलकरावरा ।
भवते सिद्धकामस्य चिह्नाग्रे संव्यवस्थिता ॥
गन्धपुष्पार्च्चितं कृत्वा वस्त्रहेमसुचर्च्चितम् ।
फलशालियवस्वस्तिवर्द्धमानविभूषितम् ॥
शोभने उच्छ्रयेदग्रे पताकां वा मनोरमाम् ॥
चामरं कलसं शक्रमातपत्रं वितानकम् ।
भवते सिद्धकामस्य नृपस्य फलदायकम् ॥
नमो विश्वेश्वरि दुर्गे ! चामुण्डे चण्डहारिणि ॥
ध्वजं समुच्छ्रयिष्यामि वसोर्धारां सुखावहाम् ॥"

अथ ध्वजदानविधिः ।

विश्वेश्वर उवाच ।

"यदीयं सा महाभागा ब्रह्मविष्णुपरापरा ।
तदहं श्रोतुमिच्छामि ध्वजदानं विधानतः ॥

अगस्त्य उवाच ।

यथा त्वं पृच्छसे वत्स ! तथा शुक्रेण ब्रह्मणि ।
पृष्टः पूर्व्वं तथा तेन शम्भुगीतं प्रकाशितम् ॥
शुक्रस्य भावयुक्तस्य तदहन्ते महात्मनः ।
कथयामि यथान्यायं ध्वजदानं महाफलम् ॥

शुक्र उवाच ।

देव्या ध्वजप्रमाणन्तु विधिदत्तस्य लाञ्छनम् ।
दीयते च यथा नाथ ! तदशेषं ब्रवीहि नः ॥

ईश्वर उवाच ।

अच्छिन्नं क्षमिजं वापि ध्वजं केशविवर्ज्जितम् ।
नवं समञ्च श्लक्ष्णञ्च प्रासादाद्दण्डवर्द्धितम् ॥
समं श्लक्ष्णं दृढं शुभ्रं शैलं वा धातुजं हि वा ॥
तस्मिन् पटे लिखेत् सिंहं सर्व्वलक्षणलक्षितम् ।
रोचना सह चन्द्रेण हेमलेखादद्भिर्व्वया ॥
प्रासादाद्दोलमानन्तु क्षितिं विस्तरतः करम् ।
ध्वजाधारेन कर्त्तव्या दर्शयेद्दिक्षु देवताः ॥
सर्व्वा वाहनलाञ्छेन लाञ्छिताः सहजेन च ।
किङ्किणीचामरोपेता घण्टादर्पणशोभिताः ॥
हुतहोमो महाप्राज्ञः सहकारदलान्वितान् ।
महामङ्गलशब्देन देव्याः कुम्भान् प्रपूजयेत् ॥
सुगन्धपुष्पनैवेद्ययथाविभवविस्तरैः ।
कन्यका ब्राह्मणान् भोज्य दधिपायसशर्करैः ॥
भूतानान्तु बलिं दत्त्वा तथा तमुपरोहयेत् ॥
सर्व्वकामानवाप्नोति विद्याधरपतिर्भवेत् ।
मोदते विविधान् भोगान् सर्व्वविद्यार्थपारगः ॥
अथवा हैमं रौप्यं वा तार्क्ष्यं पार्थिवशैलजम् ।
कारयेन्मृगराजन्तु महाकरिमदापहम् ॥
महानखकरोत्खातमुक्ताफलपदप्रदम् ।
एवंविधं ततः कृत्वा नवम्यां पूजयेच्छिवाम् ॥
सोपवासः शुचिर्दक्षः सर्व्वसङ्गविवर्ज्जितः ।
कन्यकाः पूजयित्वा तु विप्रान् वेदविदस्ततः ॥
देव्या भक्ताः सदाचारास्त्रिकालहवने रताः ।
ते यथाशक्तितस्तोष्या ध्वजारोहणकर्म्मणि ॥
कन्या देव्या स्वयं प्रोक्ताः कन्यारूपा तु शूलिनी ।
यावदक्षतयोनिः स्यात्तावद्देवी सुरारिहा ॥
द्विजो ब्रह्मा शिवो विष्णुः स्वकीयव्रतपालकः ।
पूजितैस्तैः सदा शुक्र सर्व्वदेवास्तु पूजिताः ॥
होमान्धतपस्यानान्तु यज्ञं देयन्तु शक्तितः ।
यथा सर्व्वगता देवी तद्वद्दिशाश्रयं भवेत् ॥
नानाभक्ष्याक्षतदधिदूर्व्वातत्कणिकान्वितम् ।
बलिं वै सर्व्वभूतेभ्यो दशदिक्षु निवेदयेत् ॥
वज्रघोषा तथा जम्भा अष्टविंशाक्षरापि वा ।
सिंहं स्तम्भे समारोप्य सर्व्वमङ्गलशब्दितम् ॥
वेदध्वनिमहामन्त्रकालिकाचण्डिकापरम् ।
न्यस्य सिंहं परं ध्यायेद्यादृशं पूर्व्वकल्पितम् ॥
एवन्तु वस्त्रसंवीतं सर्व्वाभरणभूषितम् ।
देव्या महाध्वजं न्यस्य गेहाणामपि विन्यसेत् ॥
ब्रह्मविष्ण्विन्द्ररुद्राणां सोमसूर्य्यदिवौकसाम् ।
ध्वजदानं महादानं सर्व्वदानोत्तमं मतम् ॥
यावन्तो दीयते शुक्र ! ध्वजः प्रासादमूर्द्धनि ।
तावत्तु न भवेद्वत्स ! प्रासादो देववाञ्छितः ॥
शून्यध्वजं सदा भूता नानागन्धर्व्वराक्षसाः ।
विद्रवन्ति महात्मानो नानाबाधाश्च कुर्व्वते ॥
तस्माद्देवगृहद्वारपुरपर्व्वतपत्तने ।
उच्छ्रिताः शान्तिकामाय ध्वजाः शुक्र । सदा
हिताः ॥
न हि चान्यद्ध्वजदानादुत्तमं भारते क्वचित् ।
दानमिष्टञ्च पुष्टञ्च देव्या दीपस्तथैव च ॥
अनेन विधिना यस्तु ध्वजं शुक्र ! निवेदयेत् ।
सर्व्वकामानवाप्नोति स नरः शिवतां व्रजेत् ॥
तस्य दर्शनसम्भाषादपि पापरता नराः ।
विमुक्ताः सर्व्वपापेभ्यो दिवं यान्ति न संशयः ॥
राज्ञा चानेन विधिना देवीलाञ्छनरञ्जिताम् ।
शक्रचक्रवृषभार्क्षहंसवह्निवारणैः ।
साचारो भक्तिमास्थाय ध्वजयष्टिं समुच्छ्रयेत् ।
न तस्य सङ्करे शुक्र ! व्याधयो न च वैरिणः ।
नैव शत्रुभयपीडा भवेद्यो स समुच्छ्रयेत् ॥"

इति देवीपुराणम् ॥

**ध्वजद्रुमः**, पुं, ( ध्वज इव उन्नतो द्रुमः । दीर्घत्वात् तथात्वम् । ) तालवृक्षः । माड़वृक्षः । इति राजनिर्घण्टः ॥

**ध्वजप्रहरणः**, पुं, ( ध्वजं प्रहरति नाशयति भनक्तीति । प्र + हृ + ल्युः । ध्वजस्य प्रहरणो वा । ) वायुः । इति शब्दरत्नावली ॥

**ध्वजभङ्गः**, पुं, ( ध्वजस्य मेढ्रस्य भङ्गः । ) क्लीवत्वजनकरोगविशेषः । तस्य निदानं यथा,—

"अत्यम्ललवणक्षारविरुद्धाशनभोजनात् ।
तथाम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् ॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् ।
कन्याया गमनाच्चापि वियोनिगमनादपि ॥
दीर्घरोगिणीं चिरोत्सृष्टां तथैव च रजस्वलाम् ।
दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्रुताम् ॥
ईदृशीं प्रमदां मोहात् यदि गच्छति मानवः ॥
चतुःपदाभिगमनाच्छेफसश्चाभिघाततः ।
अधावनाच्च मेढ्रस्य शस्त्रदन्तनखक्षतात् ॥
काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात् ।
रेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते ॥"

इति चरकः ॥ * ॥

तस्य चिह्नं यथा,—

"शुक्रं चिरात् प्रसिच्येत शुक्रं शोणितमेव वा ।
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूपायतीव च ॥"

इति वाभटः ॥ * ॥

अपि च ।

"तैस्तैर्भावैरहृद्यैश्च रिरंसोर्मनसि क्षते ।
ध्वजः पतत्यथो नृणां क्लैब्यं सद्यः प्रजायते ॥
भक्ष्यैरक्षोष्णलवणैरतिमात्रोपसेवितैः ।
सौम्यधातुक्षयाद्दुष्टः क्लैब्यं तदपरं स्मृतम् ॥
अतिव्यवायशीलो यो न च वाजिक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥

मात्स्ये ।
"घण्टावितानवरतोरणचित्रयुक्तं
नित्योत्सवप्रमुदितेन जनेन सार्द्धम् ।
यः कारयेत् सुरगृहं विधिवद्ध्वजाढ्यं
श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च ॥"
ध्वजयष्ट्यादिमानमाह हयशीर्षपञ्चरात्रम् ।
"ध्वजवंशः प्रकर्त्तव्यो निर्व्रणः सगुणो दृढः ।
तदूर्द्धं ताम्रजं चक्रं सुक्ष्मं कुर्य्याद्द्विजोत्तम ! ॥
प्रासादस्य च विस्तारो मानं दण्डस्य कीर्त्तितम् ।
ध्वजयष्टिर्देवगृहे ऐशान्यां दिशि देशिकैः ॥
स्थापनीयाथ वायव्ये साम्प्रतं ध्वज उच्यते ।
पट्टकार्पासचौमाद्यैर्ध्वजं कुर्य्यात् सुशोभनम् ॥
एकवर्णं विचित्रं वा घण्टाचामरभूषितम् ।
किङ्किणीजालकोपेतं बर्हिपत्रविभूषितम् ।
शुक्लादिवर्णैर्विप्रादिः क्रमाद्वा कारयेत् ध्वजम् ॥
दण्डाग्राद्धरणीं यावत् हस्तैकं विस्तरेण तु ।
महाध्वजन्तु विख्यातं सर्व्वकामप्रदं शुभम् ॥
ध्वजेन रहितो विप्र प्रासादस्तु वृथा भवेत् ।
पूजाहोमादिकं सर्व्वं जपाद्यं यत् कृतं नरैः ॥"
शिवसर्व्वस्वे ।
"देवेभ्यश्च गृहं दद्यात् वाहनैरुपशोभितम् ।
तुरङ्गमेण सूर्य्यस्य हरस्य वृषचिह्नितम् ॥
विष्णवे गरुड़ाङ्कन्तु दुर्गायै सिंहचिह्नितम् ।
कार्य्यं ध्वजपताकाद्यमन्यथा न कथञ्चन ॥"
गरुड़लक्षणमाह नारदपञ्चरात्रे ।
"उपेन्द्रस्याग्रतः पक्षी गुड़ाकेशः कृताञ्जलिः ।
सव्यजानुगतो भूमौ न्यस्तार्द्धो मणिमण्डितः ॥
पक्षिवक्त्रो नराङ्घ्रिश्च तुङ्गनासो नराङ्गकः ।
द्विबाहुः पक्षयुक्तश्च कर्त्तव्यो विनतासुतः ॥"
विष्णुधर्म्मोत्तरे ।
"प्रतिपाद्य द्विजो दद्यात् ध्वजं त्रिदशवेश्मनः ।
निर्द्दहत्याशु पापानि महापातकजान्यपि ॥"
इति प्रतिष्ठातत्त्वम् ॥ * ॥
अथ ध्वजचिह्नविधिः ।
"सिंहारूढ़ा ध्वजे यस्य नृपस्य रिपुहा उमा ।
दारस्था पूज्यते वत्स ! न तस्य रिपुजं भयम् ॥
कपिसंस्था महामाया सर्व्वशत्रुविनाशिनी ।
वृषे यथेप्सितं दद्यात् कलसे श्रेय उत्तमम् ॥
हंसे विद्यार्थकामन्तु बर्हिणि सुतमिष्टदा ।
गरुत्मगा महामाया सर्व्वरोगविनाशिनी ॥
महिषस्था महामारीः शमयेत् ध्वजसंस्थिता ।
करिणा सर्व्वकार्य्येषु नृपैः कार्य्या त्रिशूलिनी ॥
पद्मस्था चर्च्चिका रौप्या धर्म्मकामार्थमोक्षदा ।
प्रेतस्था सर्व्वभयहा नित्यं शत्रुनिपातनात् ॥
पूजिता देवराजेन्द्रनीलोत्पलकरावरा ।
भवते सिद्धकामस्य चिह्नाग्रे संव्यवस्थिता ॥
गन्धपुष्पार्च्चितं कृत्वा वस्त्रहेमसुचर्च्चितम् ।
फलशालियवस्थचिवर्द्धमानविभूषितम् ॥
शोभने उच्छ्रयेल्लग्ने पताकां वा मनोरमाम् ॥
चामरं कलसं शङ्खमातपत्रं वितानकम् ।
भवते सिद्धकामस्य नृपस्य फलदायकम् ॥
नमो विश्वेश्वरि दुर्गे ! चामुण्डे चण्डधारिणि ।
ध्वजं समुच्छ्रयिष्यामि यशोधारां सुखावहाम् ॥"
अथ ध्वजदानविधिः ।
विश्वेश्वर उवाच ।
"यद्येयं सा महाभागा ब्रह्मविष्णुपरापरा ।
तदहं श्रोतुमिच्छामि ध्वजदानं विधानतः ॥
अगस्त्य उवाच ।
यथा त्वं पृच्छसे वत्स ! तथा शृणुष्व साम्प्रतम् ।
पृष्टः पूर्व्वं तथा तेन शम्भुनीतं प्रकाशितम् ॥
शुक्रस्य भार्गवस्यास्य तदहं ते महात्मनः ।
कथयामि यथान्यायं ध्वजदानं महाफलम् ॥
शुक्र उवाच ।
देया ध्वजप्रमाणन्तु विधिदत्तस्य लाञ्छनम् ।
दीयते च यथा नाथ ! तदशेषं ब्रवीहि नः ॥
ईश्वर उवाच ।
रक्तं कृष्णं वापि ध्वजं केशविवर्ज्जितम् ।
नवं समञ्च कुर्य्याच्च प्रासादाद्दण्डवर्द्धितम् ॥
समं कुर्य्यात् पटं शुभ्रं शैलं वा धातुजं हि वा ॥
तस्मिन् पटे लिखेत् सिंहं सर्व्वलक्षणलक्षितम् ।
रोचना सह चन्द्रेण हेमलेखाद्यदूर्व्वया ॥
प्रासादाद्दोलमानन्तु क्षितिं विस्तरतः करम् ।
ध्वजामादंग कर्त्तव्या दर्शयेद्दिक्षु देवताः ॥
सर्व्वा वाहनलाञ्छेन लाञ्छिताः सहलेन च ।
किङ्किणीचामरोपेता घण्टादर्पणशोभिताः ॥
कृतहोमो महाप्राज्ञः सहकारदलान्विताम् ।
महामङ्गलशब्देन देयाः कुम्भान् प्रपूजयेत् ॥
सुगन्धपुष्पनैवेद्यैर्यथाविभवविस्तरैः ।
कन्यका ब्राह्मणान् भोज्य दधिपायसशर्करैः ॥
भूतानान्तु बलिं दत्त्वा तथा तमुपरोहयेत् ॥
सर्व्वकामानवाप्नोति विद्याधरपतिर्भवेत् ।
मोदते विविधान् भोगान् सर्व्वविद्यार्थपारगः ॥
अथवा हैमं रौप्यं वा ताम्रं पार्थिवशैलजम् ।
कारयेन्मृगराजन्तु महाकारिमदापहम् ॥
महानखकरोत्खातरक्ताफलपदप्रदम् ।
एवंविधं ततः कृत्वा नवम्यां पूजयेच्छिवाम् ॥
सोपवासः शुचिर्दक्षः सर्व्वसङ्गविवर्ज्जितः ।
कन्यकाः पूजयित्वा तु विप्रान् वेदविदस्ततः ॥
देव्या भक्ताः सदाचाराश्चिकाणहवने रताः ।
ते यथाशक्तितस्तोष्या ध्वजारोहणकर्म्मणि ॥
कन्या देया स्वयं प्रोक्ता कन्यारूपा तु शूलिनी ।
यावदक्षतयोनिः स्यात्तावद्देवी सुरार्च्चिता ॥
द्विजो ब्रह्मा शिवो विष्णुः स्वकीयव्रतपालकः ।
पूजितैस्तैः सदा शुक्र सर्व्वदेवास्तु पूजिताः ॥
होमाग्निरूपयागान्तु चक्रं देयन्तु शक्तितः ।
यथा सर्व्वगता देवी तद्दिक्षाश्रयं भवेत् ॥
नानाभक्ष्याक्षतदधिदूर्व्वातत्कणिकान्वितम् ।
बलिं वै सर्व्वभूतेभ्यो दशदिक्षु निवेदयेत् ॥
वलघोषा तथा जम्भा अष्टविंशाक्षरापि वा ।
सिंहं स्तम्भं समारोप्य सर्व्वमङ्गलशब्दितम् ॥
वेदध्वनिमहामन्त्रकालिकाचण्डिकापरम् ।
न्यस्य सिंहं परं ध्यायेद्यथादृशं पूर्व्वकल्पितम् ॥
एवन्तु वस्त्रसंवीतं सर्व्वाभरणभूषितम् ।
देया महाध्वजं न्यस्य गेहाणामपि विन्यसेत् ॥
ब्रह्मविष्ण्विन्द्ररुद्राणां सोमसूर्य्यदिवौकसाम् ।
ध्वजदानं महादानं सर्व्वदानोत्तमं मतम् ॥
यावत्तो दीयते शुक्र ! ध्वजः प्रासादमूर्द्धनि ।
तावत्तु न भवेद्वत्स ! प्रासादो देववाञ्छितः ॥
शून्यध्वजं सदा भूता नानागन्धर्व्वराक्षसाः ।
विध्वंसयन्ति महात्मानो नानाबाधाश्च कुर्व्वते ॥
तस्माद्देवगृहद्वारपुरपर्व्वतपत्तने ।
उच्छ्रिताः शान्तिकामाय ध्वजाः शुक्र । सदा
स्थिताः ॥
न हि चान्यध्वजदानादुत्तमं भारते क्वचित् ।
दानमिष्टञ्च पुरुष देया दीपत्तथैव च ॥
अनेन विधिना यस्तु ध्वजं शुक्र ! निवेदयेत् ।
सर्व्वकामानवाप्नोति स नरः शिवतां व्रजेत् ॥
तस्य दर्शनसम्भाषादपि पापरता नराः ।
विमुक्ताः सर्व्वपापेभ्यो दिवं यान्ति न संशयः ॥
राज्ञा चानेन विधिना देवीलाञ्छनलाञ्छिताम् ।
शङ्खचक्रवृषभार्कहंसबर्हिगवारणैः ।
सागारो भक्तिमास्थाय ध्वजयष्टिं समुच्छ्रयेत् ।
न तस्य सङ्गरे शुक्र ! व्याधयो न च वैरिणः ।
नैव शत्रुभयपीड़ा भवेद्यस्तां समुच्छ्रयेत् ॥"
इति देवीपुराणम् ॥

ध्वजद्रुमः, पुं, ( ध्वज इव उन्नतो द्रुमः । दीर्घत्वात् तथात्वम् । ) तालवृक्षः । माड़वृक्षः । इति राजनिर्घण्टः ॥

ध्वजप्रहरणः, पुं, (ध्वजं प्रहरति नाशयति भनक्तीति । प्र+हृ+ल्युः । ध्वजस्य प्रहरणो वा।) वायुः । इति शब्दरत्नावली ॥

ध्वजभङ्गः, पुं, ( ध्वजस्य मेढ्रस्य भङ्गः । ) क्लीवत्वजनकरोगविशेषः । तस्य निदानं यथा,—
"अत्यम्ललवणक्षारविरुद्धाशनभोजनात् ।
तथाम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् ॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् ।
कन्यायोनिगमनाच्चापि वियोन्गिमनादपि ॥
दीर्घरोगिणीं चिरोत्सृष्टां तथैव च रजस्वलाम् ।
दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्रुताम् ॥
ईदृशीं प्रमदां मोहात् यदि गच्छति मानवः ॥
चतुःपदाभिगमनाच्छेफसश्चाभिघाततः ।
अधावनाच्च मेढ्रस्य शस्त्रदन्तनखक्षतात् ॥
काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात् ।
रेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते ॥"
इति चरकः ॥ * ॥
तस्य चिह्नं यथा,—
"शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा ।
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥"
इति वाभटः ॥ * ॥
अपि च ।
"तैस्तैर्भावैरहृद्यैश्च रिरंसोर्मनसि क्षते ।
ध्वजः पतत्यधो नॄणां क्लैव्यं सद्यः प्रजायते ॥
भक्ष्यैरम्लोष्णलवणैरतिमात्रोपसेवितैः ।
सौम्यधातुक्षयाद्दुष्टः क्लैवं तदपरं स्मृतम् ॥
अतिव्यवायशीलो यो न च वाजिक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥

ध्वाङ्क्षनाशिका, स्त्री, (ध्वाङ्क्षस्य नाशिका इव फलमस्याः ।) काकनाशालता । इति राजनिर्घण्टः ॥

ध्वाङ्क्षपुष्टः, पुं, (ध्वाङ्क्षेण काकेन पुष्टः प्रतिपालितः ।) कोकिलः । इति हारावली । ४४ ॥

ध्वाङ्क्षमाची, स्त्री, (ध्वाङ्क्षान् काकान् मचते पूजयति फलदानेनेति । मच पूजायाम् + अण् । गौरादित्वात् ङीष् ।) काकमाची । इति राजनिर्घण्टः ॥

ध्वाङ्क्षवल्ली, स्त्री, (ध्वाङ्क्षवत् वल्ली लता ।) काकनासा । इति राजनिर्घण्टः ॥

ध्वाङ्क्षादनी, स्त्री, (अदति भक्षति या सा । अद + ल्युट् । स्त्रियां ङीप् । ध्वाङ्क्षाणां काकानामदनी ।) काकतुण्डी । इति राजनिर्घण्टः ॥

ध्वाङ्क्षारातिः, पुं, (ध्वाङ्क्षाणामरातिः शत्रुः ।) पेचकः । इति हलायुधः ॥

ध्वाङ्क्षी, स्त्री, (ध्वाङ्क्षवदाकृतिरस्त्यस्याः । अच् । ङीष् ।) काकोलिका । इति मेदिनी । षे, १६ ॥

ध्वाङ्क्षोली, स्त्री, काकोली । इति राजनिर्घण्टः ॥

ध्वानः, पुं, (ध्वन + भावे घञ् ।) शब्दः । इत्यमरः । १ । ७ । २२ ॥ (यथा, राजतरङ्गिण्याम् । ३ । १८ ।
"शशामाक्रन्दितध्वानो न च चौरो व्यभाव्यत ॥")

ध्वान्तं, क्ली, (ध्वन + "क्षुब्धस्वान्तध्वान्तेति ।" ७ । २ । १८ । इति क्तप्रत्ययेन निपातनात् साधुः ।) अन्धकारः । इत्यमरः । १ । ८ । ३ ॥ (यथा, भागवते । ३ । ८ । २४ ।
"क्ष्मातपत्रायुतमूर्द्धरत्न-
द्युभिर्हतध्वान्तयुगान्ततोये ॥")

ध्वान्तवित्तः, पुं, (ध्वान्ते अन्धकारे वित्तः प्रथितः ।) खद्योतः । इति शब्दरत्नावली ॥

ध्वान्तशात्रवः, पुं, (ध्वान्तस्य शात्रवः ।) श्योणाकवृक्षः । इति शब्दचन्द्रिका ॥ सूर्य्यचन्द्राग्नयश्च ॥

ध्वान्तारातिः, पुं, (ध्वान्तस्य अरातिः ।) सूर्य्यः । इति हेमचन्द्रः । २ । १० ॥ चन्द्राग्नी च ॥

ध्वान्तोन्मेषः, पुं, (ध्वान्ते उन्मेषः प्रकाशो यस्य ।) खद्योतः । इति त्रिकाण्डशेषः ॥

ध्वृ, कौटिल्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-अनिट् ।) वकारोपधः । कौटिल्यमिह कुटिलीकरणम् । ध्वरति तृणं वायुः । इति दुर्गादासः ॥

---

## न

न, नकारः । तवर्गपञ्चमवर्णः व्यञ्जनविंशवर्णश्च । अस्योच्चारणस्थानं दन्तः । इति व्याकरणम् ॥ (यथा, शिक्षायाम् । १७ । "दन्त्या लृतुलसाः स्मृताः ॥") तत्पर्य्यायः । मेषः २ दीर्घो ३ सौरिः ४ । इति वीजाभिधानम् ॥ तत्स्वरूपम् । यथा,—
"नकारं शृणु चार्व्वङ्गि ! कोटिविद्युल्लताकृतिम् ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥
पञ्चप्राणात्मकं वर्णं हृदि भावय पार्व्वति ! ॥"
इति कामधेनुतन्त्रम् ॥
"वामतः कुण्डली रेखा ऊर्द्ध्वाधःक्रमतः स्थिता ।
चन्द्रसूर्य्याग्निरूपा सा मात्रा वाणी प्रकीर्त्तिता ॥"
तस्य ध्यानं यथा, वर्णोद्धारतन्त्रे ।
"ध्यानमस्य नकारस्य वक्ष्यते शृणु भाविनि ! ।
दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम् ॥
चतुर्भुजां कोटराक्षीं चारुचन्दनचर्चिताम् ।
व्याघ्राम्बरपरीधानामीषद्धास्यमुखीं सदा ॥
एवं ध्यात्वा नकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
अस्य नामानि यथा,—
"नो गर्ज्जिनी क्षमा सौरिर्व्वारुणी विश्वपावनी ।
मेषश्च सविता नेत्रं दन्तुरो नारदोऽञ्जनः ॥
ऊर्द्ध्वगामी द्विरण्डश्च वामपादाङ्गुलेर्मुखम् ।
वैनतेयस्तुतिर्व्वर्त्मस्वरचिर्व्वालिरागमः ॥
वामनो ज्वालिनी दीर्घो निरीहः सुगतिर्व्वियत् ।
शब्दात्मा दीर्घघोणा च हस्तिनापुरमेचकौ ॥
गिरिनायकनीलौ च शिवोऽनादिर्म्महामतिः ॥"
इति नानातन्त्रशास्त्रम् ॥
(अनुबन्धविशेषः । यथा, कविकल्पद्रुमे ।
"नः स्वादिः षो मुचादिः ।" इति ॥ काव्यादौ अस्य प्रथमप्रयोगे फलं यथा, वृत्तरत्नाकरटीकायाम् ।
"दो धः सौख्यं मुदं नः सुखमभयमरयक्षो भदुःखं पवर्गः ॥")

न, व्य, निषेधः । (यथा, मनुः । ६ । ४७ ।
"अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
नचेमं देहमाश्रित्य वैरं कुर्व्वीत केनचित् ॥")
उपमा । इति मेदिनी । ने, १ ॥ आद्यस्य पर्य्यायः । नहि २ अ ३ नो ४ अभावः ५ । इत्यमरः । ३ । ४ । ११ ॥ अना ६ ना ७ । इति भरतः ॥ नञर्थश्च ॥

नंशुकः, त्रि, (नश्यतीति । नश + "पश्चिनशोर्युकन्कुकनौ च ।" उणां २ । ३० । इति शुकन् नुमागमश्च ।) नाशकः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

नंष्टा, [ ष्टृ ] त्रि, (नश + तृच् । "मस्जिनशोर्झलि ।" ७ । १ । ६० । इति नुम् ।) नाशाश्रयः । इति नशधातोस्तृचि नुमागमनिष्पन्नः ॥

नः, पुं, (नमतीति । नम + "अन्येष्वपीति डः ।") सुगतः । बन्धः । द्विरण्डः । सुतः । इति मेदिनी । ने १ ॥ रत्नम् । इत्येकाक्षरकोषः ॥ द्वितीयाचतुर्थीषष्ठीबहुवचनमान्तस्यास्मच्छब्दस्य वान्तरूपोऽयञ्च ॥ (यथा, मुग्धबोधे ।
"पुष्णातु वो नोऽपि हरिर्धनं वो
ददातु नो हन्त्वशुभानि वो नः ॥")

नःक्षुद्रः, त्रि, (नसा नासिकया क्षुद्रः ।) क्षुद्रनासिकः । इति हेमचन्द्रः । ३ । ११५ ॥

नकुटं, क्ली, नासिका । इति शब्दमाला ॥

नकुलः, पुं, (नास्ति कुलं यस्य । "नभ्राण्नपान्नवेदेति ।" ६ । ३ । ७५ । इति नञो न लोपादि ।) जन्तुविशेषः । नेउल । इति देशी इति च भाषा । तत्पर्य्यायः । पिङ्गलः २ सर्पहा ३ बभ्रुः ४ । इति हेमचन्द्रः । ४ । ३६८ ॥ सूचीवदनः ५ सर्पारिः ६ लोहिताननः ७ । (यथा, महाभारते । १२ । १५ । २० ।
"सत्त्वैः सत्त्वा हि जीवन्ति दुर्व्वलैर्व्वलवत्तराः ।
नकुलो मूषिकानत्ति विडालो नकुलन्तथा ।
विडालमत्ति श्वा राजन् ! श्वानं व्यालमृगस्तथा ॥")
तस्य मांसगुणाः । पिच्छिलत्वम् । वातनाशित्वम् । श्लेष्मपित्तकारित्वञ्च । इति राजनिर्घण्टः ॥ पाण्डुराजस्य चतुर्थपुत्त्रः स माद्रीगर्भे अश्विनीकुमाराभ्यां जातः । इति महाभारतम् ॥ पुत्त्रः । इति शब्दमाला ॥ शिवः । यथा, विदग्धमुखमण्डने ।
"युधिष्ठिरस्य या कन्या नकुलेन विवाहिता ।
पूजिता सहदेवेन सा कन्या वरदा भवेत् ॥"
कुलरहिते, त्रि ॥

नकुलाढ्या, स्त्री, (नकुलेन नकुलगन्धेन आढ्या प्रचुरा ।) गन्धनाकुली । इति राजनिर्घण्टः ॥

नकुली, स्त्री, (नकुल + ङीष् ।) कुक्कुटी । मांसी । इति मेदिनी । ले, १०० ॥ शङ्खिनी । इति धरणिः ॥ कुङ्कुमम् । इति हेमचन्द्रः ॥ हकारः । इति वीजाभिधानम् ॥ नकुलस्य भार्य्या च ॥

नकुलीशः, पुं, (नकुल्या ईशः ।) भैरवविशेषः । यथा, पीठमालायाम् ।
"नकुलीशः कालिपीठे दक्षपादाङ्गुली मम ॥"
हकारः । यथा,—
"हकारो नकुलीशोऽपि हंसः प्राणोऽङ्कुशः प्रिये ! ।
महेशो नकुली चैव वराहो गगनं रविः ॥
लिङ्गं शून्यो महाशून्यः प्राणश्च परमेश्वरि ! ॥"
इति हकारपर्य्याये वीजाभिधानम् ॥

नकुलेष्टा, स्त्री, (नकुलानामिष्टा प्रिया ।) रास्ना । इत्यमरः । २ । ४ । ११५ ॥ नेदनाई इति भाषा । एतत्पर्य्यायो यथा,—
"नाकुली सुरसा नागसुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )

नक्क, द नाशने । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) कोपधः । नाशनं नष्टीकरणम् । द, नक्कयति पापं गङ्गा । इति दुर्गादासः ॥

नक्तं, [ म् ] व्य, रजनौ । इत्यमरः । ३ । ४ । ६ ॥ (यथा, माघे । १ । २१ ।
"रथाङ्गपाणेः पटलेन रोचिषा-
मृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरो-
स्तुषारमूर्त्तेरिव नक्तमंशवः ॥")

नक्ता, स्त्री, (नज + क्तः ।) रात्रिः । लक्षणया नक्तव्रतम् । यथा,—
"उपवासात् परं भैक्षं भैक्षात् परमयाचितम् ।

"जन्माधाने निधनभे प्रत्यरौ च विपत्करे ।
यदि व्याधिः समुत्पन्नः क्लेशाय मरणाय वा ॥
कृत्तिकासु यदा व्याधिर्नृणाञ्च प्रतिपद्यते ।
नवरात्रं भवेत् पीड़ा त्रिरात्रं रोहिणीषु च ॥
मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽसुभिः ॥
पुनर्व्वसौ तथा पुष्ये सप्तरात्रं विधीयते ।
नवरात्रं तथाश्लेषे मासमेकं मघासु च ॥
द्वौ मासौ पूर्व्वफल्गुन्यामुत्तरासु त्रिपक्षकम् ।
हस्तेषु सप्तमे मोक्षश्चित्रायामर्द्धमासकम् ॥
मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिम् ।
मैत्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम् ॥
मूले न जायते मोक्षः पूर्व्वाषाढ़े त्रिपक्षकम् ।
उत्तरा दिनविंशत्या श्रवणे द्वौ च मासकौ ॥
धनिष्ठायामर्द्धमासं वारुण्याञ्च दशाहकम् ।
न च भाद्रपदे मोक्ष उत्तरासु त्रिपक्षकम् ॥
रेवत्यां दिनविंशत्या चाहोरात्रं तथाश्विनी ।
प्राणैर्व्विमुच्यते नित्यं भरण्यां नात्र संशयः ॥
कौशिकेन सदादिष्टा नक्षत्रव्याधिसम्भवाः ।
नक्षत्रे प्रतिकर्त्तव्यं नक्षत्रमप्यजानता ॥"

नक्षत्रचतुर्भागबोधकानि चत्वारि नामाद्यक्षराणि यथा । अ इ उ ए ३ । ओ व वि वु ४ । वे वो क कि ५ । कु घ ङ छ ६ । के को ह हि ७ । हु हे हो ड ८ । डि डु डे डो ९ । म मि मु मे १० । मो ट टि टु ११ । टे टो प पि १२ । पु ष ण ठ १३ । पे पो र रि १४ । रु रे रो त १५ । ति तु ते तो १६ । न नि नु ने १७ । नो य यि यु १८ । ये यो भ भि १९ । भु ध फ ढ २० । भे भो ज जि २१ । जु जे जो ख । अभिजित् । खि खु खे खो २२ । ग गि गु गे २३ । गो श शि शु २४ । शे शो द दि २५ । दु थ झ ञ २६ । दे दो च चि २७ । चु चे चो ल १ । लि लु ले लो २ । ऋ ऌ युक्त-आकारयुक्तेन ज्ञेयः । ह्रस्वेन दीर्घो ज्ञेयः । तालव्यशकारेण दन्त्यसकारो ज्ञेयः ।" इति ज्योतिस्तत्त्वम् ॥

नक्षत्रकान्तिविस्तारः, पुं, ( नक्षत्राणां कान्ति-रम्या विस्तारो यत्र । ) धवलयावनालः । इति राजनिर्घण्टः ॥

नक्षत्रचक्रं, क्ली, ( नक्षत्राणां चक्रं यत्र ।) मन्त्र-ग्रहणोपयुक्तचक्रान्तर्गतचक्रविशेषः । तथा च रुद्रयामले ।

"उत्तरादक्षिणाग्रान्तु रेखां कुर्य्याच्चतुष्टयीम् ।
दश रेखाः पश्चिमाग्राः कर्त्तव्या वीरवन्दिते ! ॥
अकारादिक्षकारान्तान् द्विचन्द्रवह्निवेदकान् ।
भूमीन्दुनेत्रचन्द्रांश्च अश्विपान्तं खगौ प्रिये ! ॥
द्विभूनेत्रनेत्रयुग्मांश्चेन्दुनेत्राग्निचन्द्रकान् ।
मघादिज्येष्ठपर्य्यन्तं द्वितीयं नवतारकम् ॥
वह्निभूमीन्दुचन्द्रांश्च युग्मेन्दुनेत्रवह्निकान् ।
वेदेन भेदिता वर्णा रेवत्यंशगताः क्रमात् ॥"

निबन्धे ।

"पूर्व्वोत्तरात्रयञ्चैव भरण्यार्द्रा च रोहिणी ।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥
ज्येष्ठा शतभिषामूलाधनिष्ठाश्लेषकृत्तिकाः ।
चित्रामघाविशाखाः स्युस्तारा राक्षसदेवताः ॥
अश्विनी रेवती पुष्यः स्वाती हस्तः पुनर्व्वसुः ।
अनुराधा मृगशिरः श्रवणा देवतारकाः ॥"

तथा ।

"स्वजातौ परमा प्रीतिर्म्मध्यमा भिन्नजातिषु ।
रक्षोमानुषयोर्न्नाशो वैरं दानवदेवयोः ॥"

गणापवादमाह गणाक्षतन्त्रे ।

"शयवक्षाग्रक्षरी माया व्योमव्यापी षड़क्षरः ।
प्रासादो बहुरूपी च सप्त साधारणाः स्मृताः ॥"

शारदायाम् ।

"जन्म सम्पत् विपत् क्षेमः प्रत्यरिः साधको वधः ।
मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः ॥"

जन्मत्रिकञ्चसप्तानि वर्ज्जनीयानि नक्षत्राणि । तथा च राघवभट्टः ।

"रसाष्टनवभद्राणि युगयुग्मगतान्यपि ।
इतराणि न भद्राणि नक्षत्राणि ॥" स्वनक्षत्रादेव-नक्षत्रं गणनीयम् । तदज्ञाने स्वनामाद्यक्षर-सम्बन्धिनक्षत्राद्गणनीयम् । तथा च ।

"प्रादक्षिण्येन गणयेत् साधकाद्यक्षरात् सुधीः ॥"

इति तन्त्रसारः ॥

नक्षत्रनेमिः पुं, ( नक्षत्रस्य नक्षत्रचक्रस्य नेमि-रिव । ) विष्णुः । ( यथा, महाभारते । १३ । १४९ । ६० ।

"नक्षत्रनेमिर्न्नक्षत्री क्षमः क्षामः समीहनः ॥"

"नक्षत्रैस्तारकैः सार्द्धं चन्द्रसूर्य्यादयो ग्रहाः ।
वायुपाशमयैर्बद्धैर्निबद्धा ध्रुवसंज्ञितैः ॥

स ज्योतिषां चक्रं भ्रामयंस्तारामयस्य शिशु-मारस्य पुच्छदेशे ध्रुवस्तस्य शिशुमारस्य हृदये ज्योतिश्चक्रस्य नेमिवत् प्रवर्त्तकः स्थितो विष्णु-रिति नक्षत्रनेमिः शिशुमारवर्णने विष्णुर्हृदय-मिति श्रुतेः ॥" इति शाङ्करभाष्यम् ॥ ) चन्द्रः । ध्रुवः । रेवत्यां स्त्री । इति मेदिनी । मे, ६२ ॥

नक्षत्रपः, पुं, उडुपः । चन्द्रः । नक्षत्रं पातीति व्युत्पत्त्या । ( नक्षत्र+पा+कः ॥ )

नक्षत्रपुरुषः, पुं, ( नक्षत्रैः पुरुष इव । ) व्रत-विशेषः । यथा,—

"श्रूयतां कथयिष्यामि नक्षत्रपुरुषव्रतम् ।
नक्षत्राङ्गाणि देवस्य यानि यानीह नारद ! ॥
मूलर्क्षं चरणौ विष्णोर्जङ्घे द्वे रोहिणी स्थिता ।
द्वे जानुनी तथाश्विन्यौ संस्थिते रूपधारिणः ॥
आषाढ़े द्वे तथा चोरू गुह्यस्थं फल्गुनीद्वयम् ।
कटिस्थाः कृत्तिकाश्चैव वासुदेवस्य संस्थिताः ॥
प्रोष्ठपदद्वयं पार्श्वं कुक्षिभ्यां रेवती स्थिता ।
उरःसंस्था त्वनुराधा श्रविष्ठा पृष्ठसंस्थिता ॥
विशाखा भुजयोर्हस्तः करद्वयमुदाहृतम् ।
पुनर्व्वसुरथाङ्गुल्यो नखाः सर्व्वं तथोच्यते ॥
ग्रीवास्थिता तथा ज्येष्ठा श्रवणः कर्णयोः स्थितः ।
मुखसंस्थस्तथा पुष्यः स्वातिर्द्दन्ताः प्रकीर्त्तिताः ॥
हनू द्वे वारुणश्चोक्तो नासा मैत्रमुदाहृतम् ।
प्राजापत्यञ्च नेत्राभ्यां रूपधाम्नः प्रतिष्ठितम् ॥
शिरो रौद्रस्तथा चैव नक्षत्राङ्गमिदं हरेः ।
विधानं संप्रवक्ष्यामि यथायोगेन नारद ! ॥
संपूजितो हरिः कामान् विदधाति यदीप्सितान् ।
चैत्रे मास्यसिताष्टम्यां यदा मूलगतः शशी ॥
भगवन्तं सह लक्ष्म्या पूजयेच्च विधानतः ।
नक्षत्रसन्निधौ दद्याद्विप्रेन्द्राय च भोजनम् ॥
जानुनी चाश्विनीयोगे पूजयेदथ भक्तितः ।
दोहदे च हविष्यान्नं पूर्व्वदद्द्विजभोजनम् ॥
आषाढ़ाभ्यां तथा ऊर्व्वां द्वापूरू पूजयेद्बुधः ।
सलिलं शिशिरं तत्र दोहदे च प्रकीर्त्तितम् ॥
फल्गुनीद्वितये गुह्यं पूजनीयं विचक्षणैः ।
दोहदे च पयो गव्यं देयञ्च द्विजभोजनम् ॥
कृत्तिकासु कटिः पूज्या सोपचारैर्जितेन्द्रियैः ।
देयञ्च दोहदे विष्णोः सुगन्धिकुसुमोदकम् ॥
पार्श्वे भाद्रपदायुग्मे पूजयित्वा विधानतः ।
गुड़ं सशाकिकं दद्याद्दोहदे देवप्रीतिदम् ॥
द्वे कुक्षी रेवतीयोगे दोहदे मुद्गमोदकम् ।
अनुराधासु जठरं कुलत्थांस्तत्र दोहदे ॥
श्रविष्ठायां तथा पृष्ठं शालिभक्तञ्च दोहदे ।
पुष्ये मुखं पूजयेत दोहदे घृतपायसम् ॥
स्वातियोगे च दशनान् दोहदे तिलशष्कुली ।
भुजयुग्मं विशाखासु दोहदे परमोदनम् ॥
हस्ते हस्तौ तथा पूज्यौ यावकं दोहदे स्मृतम् ।
पुनर्व्वसावङ्गुलीश्च पटोलं तत्र दोहदे ॥
दातव्यं केशवप्रीत्यै ब्राह्मणस्य च भोजनम् ।
हनू शतभिषायां वै पूजयेत्तु प्रयत्नतः ॥
प्रियङ्गुरक्तशाल्यन्नं दोहदञ्च मधुद्विषः ।
मघासु नासिका पूज्या मधु दद्याच्च भोजनम् ॥
मृगोत्तमाङ्गे नयने मृगमांसञ्च दोहदे ।
चित्रायोगे ललाटञ्च दोहदे चारु भोजनम् ॥
भरणीषु शिरः पूज्यं चारु भक्तञ्च दोहदे ।
सम्पूजनीया विद्वद्भिरार्द्रायोगे शिरोरुहाः ॥
विप्रांश्च भोजयेद्भक्त्या दोहदे च गुड़ार्द्रकम् ।
नक्षत्रयोगेष्वेतेषु संपूज्य जगतः पतिम् ॥
ततस्तु दक्षिणां दद्यात् स्त्रीपुंसोश्चारु वाससन् ।
छत्रोपानद्युगञ्चैव सप्त धान्यानि काञ्चनम् ॥
घृतपात्रञ्च गां दोग्ध्रीं ब्राह्मणाय निवेदयेत् ।
प्रतिनक्षत्रयोगेन पूजनीया द्विजातयः ॥
नक्षत्राय विप्राय पृथग्दद्याच्च दक्षिणाम् ।
नक्षत्रपुरुषाख्यं हि व्रतानां व्रतमुत्तमम् ॥
एवं विधानतो ब्रह्मन् ! नक्षत्राङ्गो जनार्द्दनः ।
पूजितो रूपधारी यैस्तैः प्राप्ता च सुकामिता ॥

एतत्तवोक्तं परमं पवित्रं
धन्यं यशस्यं शुभरूपदायि ।
नक्षत्रपुंसः परमं विधानं
शृणुष्व पुण्यामिह तीर्थयात्राम् ॥"

इति वामनपुराणे ७७ अध्यायः ॥

नक्षत्रमाला, स्त्री, ( नक्षत्रसंख्यिका माला । ) सप्त-विंशतिमौक्तिकयुतहारः । इत्यमरः । २ । ६ । १०६ ।

"सप्तविंशतिरूपाढ्ये रूपके रूपरूपकैः ।
नृत्ये नक्षत्रमाला स्यान्मुक्तावलिरिवोज्ज्वला ॥"

इति सङ्गीतदामोदरः ॥

( नक्षत्राणां माला समूहः । ) नक्षत्रश्रेणी ।

नगजः, पुं, ( नगे पर्व्वते जायते इति । जन + डः । ) हस्ती । इत्यमरटीकायां सारसुन्दरी ॥ पर्व्वतजातवस्तुमात्रे, त्रि ॥

नगजा, स्त्री, (नगे जायते या । जन + डः । टाप् ।) क्षुद्रपाषाणभेदा । इति राजनिर्घण्टः ॥

नगणा, स्त्री, ( नास्ति गणो यस्याः । ) लताविशेषः । नयाफट्की इति भाषा । तत्पर्य्यायः । पारावतपदी २ पिण्या ३ स्फुटबन्धनी ४ ज्योतिष्मती ५ पूतितैला ६ इङ्गुदी ७ । इति रत्नमाला ॥

नगनन्दिनी, स्त्री, (नगस्य हिमालयस्य नन्दिनी । दुर्गा । इति शब्दरत्नावली ॥

नगपतिः, पुं, ( नगानां पतिः । ) हिमालयपर्व्वतः । इति त्रिकाण्डशेषः ॥ ( नगानां ओषधीनां पतिः । ) चन्द्रः ॥

नगभित्, पुं, ( नगं भिनत्तीति । भिद् + क्विप् । ) पाषाणभेदनः । इति राजनिर्घण्टः ॥ इन्द्रश्च ॥

नगभूः, पुं, ( नगे भूरुत्पत्तिर्यस्य । ) क्षुद्रपाषाणभेदः । इति राजनिर्घण्टः ॥ पर्व्वतजाते, त्रि ॥

नगरं, क्ली, नगा इव प्रासादादयः सन्ति यत्र । ( "नगपांसुपाण्डुभ्यश्च ।" ५।२।१०७ । इत्यस्य वार्त्तिकोक्त्या रः । ) बहुलोकवासस्थानम् । शहर इति भाषा । तत्पर्य्यायः । पूः २ पुरी ३ पुरिः ४ पुरम् ५ नगरी ६ पत्तनम् ७ पट्टनम् ८ पट्टनी ९ पुटभेदनम् १० पटभेदनम् ११ स्थानीयम् १२ निगमः १३ इत्यमरभरतौ ॥ कटकम् १४ पद्रम् १५ । इति शब्दरत्नावली ॥ केचित्तु नगरपत्तनस्थानीयानां भेदमाहुः । तत्र पुरादित्रयं पुरे । पत्तनादिद्वयं पत्तने । स्थानीयादिद्वयं स्थानीये । इति सम्यक् । यच्चाष्टशतग्रामीयव्यवहारस्थानं मध्यवर्त्ति तत् नगरम् । यत्र राजा तत्परिवारकाश्च तिष्ठन्ति तत् पत्तनम् । प्राकारादिना दुर्गं योजनविस्तीर्णं नगरं स्थानीयम् । केचित्तु पुरनगरयोरपि भेदमाहुः । बहुग्रामीयव्यवहारस्थानं पुरम् । तत्र प्रधानभूतं नगरम् । इति भरतः ॥ * ॥

अथ नगरनिर्म्माणकालः ।

"स्थिरराशिगते भानौ चन्द्रे च स्थिरभोदये ।
शुद्धे काले दिने चैव नगरं कारयेन्नृपः ॥" * ॥

तस्य लक्षणं भविष्योत्तरे ।

"दीर्घं वा चतुरस्रं वा नगरं कारयेन्नृपः ।
त्र्यस्रं वर्त्तुलं वापि कदाचिदपि कारयेत् ॥
दीर्घं पादैकप्रसरश्चतुरस्रं समोचितम् ।
त्रिभिः पादैः समं त्र्यस्रं वर्त्तुलं वलयाकृति ॥
दीर्घं स्याद्दीर्घकालाय सुखसम्पत्तिहेतवे ।
चतुरस्रं चतुर्वर्गफलाय पृथिवीभुजः ॥
त्र्यस्रं त्रिशक्तिनाशाय वर्त्तुलं बहुरोगकृत् ।
ग्रामः खर्व्वैर्दशभी राजहस्त उदाहृतः ॥
राजहस्तैश्च दशभी राजदण्ड उदाहृतः ।
राजदण्डैश्च दशभी राजक्षेत्रमुदाहृतम् ॥
राजक्षेत्रैश्च दशभी राजकाण्ड उदाहृतः ।
राजकाण्डैश्च दशभी राजपूरुष उच्यते ॥
राजधानी तु कथिता दशभी राजपूरुषैः ।
राजधानी दशगुणा राजक्षेत्रमुदाहृतम् ॥
सप्तैव परिमाणानि प्रोक्तानि पुरपत्तने ।
भयत्राणभोगसम्पत्तिसर्व्वाङ्गकीर्त्तिसुखार्थिनाम् ।
राजक्षेत्रेण नृपतिः पुरपत्तनमारभेत् ॥
लक्ष्मीर्जयः क्षमा सौख्यं प्रतापं भाग्यमेकता ।
अष्टविधं नाशश्च सङ्कटश्च बलं क्षयः ।
साम्राज्यं भोगसम्पत्तिरिति पौरुषं कीर्त्तिताः ॥
यथार्थसंज्ञा नगरा मुनिना तत्त्ववेदिना ॥"

इति युक्तिकल्पतरुः ॥ * ॥

अपि च ।

"नृपावासः पुरी प्रोक्ता विप्राद्युरसमीप्यते ।
एकतो यत्र तु ग्रामो नगरञ्चैकतः स्थितम् ॥
मिश्रन्तु खर्व्वटं नाम नदीगिरिसमाश्रयम् ।
विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि ॥
स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च ।
पण्यक्रियादिनिपुणैश्चातुर्वर्ण्यजनैर्युतम् ॥
अनेकजातिसम्बन्धं नैकशिल्पसमाकुलम् ।
सर्व्वदैवतसम्बन्धं नगरन्त्वभिधीयते ॥"

इति विष्णुपुराणटीकायां श्रीधरस्वामिधृतवचनम् ॥ * ॥

अन्यच्च ।

"नगरं सर्व्वतोभद्रं कर्त्तव्यं रोधकं हि वा ।
स्वस्तिकं मध्यगं कार्य्यं कुमारीपुरमेव वा ॥
चतुष्पथचतुर्युक्तं सर्व्वकामसुखावहम् ।
छिन्नकर्णं विनाशाय दुःस्थितं शत्रुदुर्ल्लभम् ॥
नगरं न प्रशंसन्ति गर्गविद्याः विभेदितम् ।
व्यजनं शस्त्रशालाद्यं छिन्नप्रायं विदुर्बुधाः ॥
छिन्नकर्णं विहीनन्तु शस्त्रमध्यं कथं विदुः ।
दुःस्थितं निम्नयाम्यन्तु नैरृतं धनदुर्ल्लभम् ॥
सौम्यं सर्व्वसुखाह्लादपूरितं वारुणं वशम् ।
याम्यमायुःप्रदं पूर्व्वनगरं प्रीतिवर्द्धनम् ॥
ईशावासवसं पूर्व्वं सर्व्वारोग्यसुखप्रदम् ।
मध्यचतुष्पथोपेतं न च तं पीडयेत् क्वचित् ॥
प्रशस्तानं हि तं विप्र शिवस्तत्र यदा स्थितः ।
चतुर्व्विंशतिनाथस्तु हस्ताद्यष्टशतं परम् ॥
अत्र मध्यं प्रशंसन्ति हस्तोत्कर्षविवर्ज्जितम् ।
अथ किष्कुशतान्यष्टौ प्राकुसंख्यं निवेशनम् ॥
नगरार्द्धञ्च विष्कम्भं खेटं ग्रामं ततोऽर्द्धतः ।
नगराद्योजनं खेटं खेटाद्ग्रामोऽर्द्धयोजनः ॥
द्विक्रोशं परमा सीमा क्षेत्रसीमा चतुर्धनुः ।
विंशद्धनूंषि विस्तीर्णो देशो मार्गस्तु तैः कृतः ॥
विंशद्धनुर्ग्राममार्गः सीमामार्गो दशैव तु ।
धनूंषि दश विस्तीर्णः श्रीमान् राजपथः कृतः ॥
नृवाजिरथनागानामसम्बाधः सुसञ्चरः ।
धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः ॥
त्रिकराश्चोपरथ्यास्तु द्विकराण्युपरथ्यिका ।
जङ्घापथश्चतुष्पादस्त्रिपादस्य गृहान्तरम् ॥
इतीपादस्त्वर्द्धपादः प्राग्वंशपादकः स्मृतः ॥"

इति देवीपुराणम् ॥

नगरकीर्त्तनं, पुं, ( नगरे कीर्त्तनं नगरपरिभ्रमणेन हरिनामसंघोषणम् । ) नगरादिभ्रमणकरणकहरिसङ्कीर्त्तनम् । यथा,—

"नाचारो नाधिकारो च न स्थाननियमस्तथा ।
ग्रामे वा नगरे वाथ वने वा कीर्त्तयेद्धरिम् ॥"

इति हरिनाममाहात्म्यम् ॥

नगरघातः, पुं, ( नगरं हन्तीति । हन + अण् । ) हस्ती । इति संक्षिप्तसारव्याकरणम् ॥

नगरी, स्त्री क्ली, ( नगर + ङीप् । ) नगरम् । इत्यमरः । २ । १ । १ ॥ ( यथा, महाभारते । १२ । ५ । ६ ।

"प्रीत्या ददौ स कर्णाय मालिनीं नगरीमथ ।
अङ्गेषु नरशार्दूल ! स राजासीत् सपत्नजित् ॥")

नगरीबकः, पुं, ( नगर्य्यां बक इव । ) काकः । इति त्रिकाण्डशेषः ॥

नगरोत्था, स्त्री, ( नगरादुत्तिष्ठतीति । उत् + स्था + कः । टाप् । ) नगरमुस्ता । इति राजनिर्घण्टः ॥

नगरौषधिः, स्त्री, ( नगरजाता ओषधिः फलपाकान्तत्वात् । ) कदली । इति शब्दचन्द्रिका ॥

नगाटनः, पुं, (नगे वृक्षे अटति भ्रमतीति । अट + ल्युः । ) वानरः । इति त्रिकाण्डशेषः ॥ ( पर्व्वतचारिणि, त्रि ॥ )

नगाधिपः, पुं, ( नगानां पर्व्वतानामधिपः । ) हिमालयपर्व्वतः । इति जटाधरः ॥

नगाश्रयः, पुं, ( नगः पर्व्वतः आश्रय उत्पत्तिस्थानं यस्य ।) हस्तिकन्दः । इति राजनिर्घण्टः ॥ नगवासिनि, त्रि ॥

नगौकाः, [ स् ] पुं, (नगो वृक्षः पर्व्वतो वा ओक आश्रयस्थानं यस्य । ) पक्षी । इत्यमरः । २ । ५ । ३३ ॥ शरभः । सिंहः । इति मेदिनी । से, ५६ ॥ काकः । इति शब्दचन्द्रिका ॥ नगरवासिनि, त्रि ॥

नग्नः, त्रि, ( नग्नते स्मेति । ओ नज ह्रियि + अकर्मकत्वात् कर्त्तरि क्तः । "ओदितश्च ।" ८ । २ । ४५ । इति निष्ठातस्य नः । ) विवस्त्रः । नेंटो इति भाषा ॥ तत्पर्य्यायः । अवासाः २ दिगम्बरः ३ । इत्यमरः । ३ । १ । ३८ ॥ तथा च भृगुः ।

"विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव वा ।
श्रौतं स्मार्त्तं तथा कर्म्म न नग्नश्चिन्तयेदपि ॥
विकच्छः परिधानासंवृतकच्छः । तथा च योगियाज्ञवल्क्यः ।

"परिधानाद्बहिःकक्षा निबद्धा ह्यासुरी भवेत् ॥"

स्मृतिः ।

"वामे पृष्ठे तथा नाभौ कक्षत्रयमुदाहृतम् ।
एभिः कक्षैः परीधत्ते यो विप्रः स शुचिः स्मृतः ॥"

बौधायनः ।

"नाभौ धृतश्च यद्वस्त्रमाच्छादयति जानुनी ।
अन्तरीयं प्रशस्तं तदाच्छन्नमुभयोस्तयोः ॥"

आचारचन्द्रिकायाम् ।

"द्विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च ।
एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः ॥"

इत्याह्निकतत्त्वम् ॥

"न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ।
न च मूत्रं पुरीषं वा न वै संस्पृष्टमैथुनम् ॥

"जगुर्भद्राणि गन्धर्वा नटाश्च ननृतुर्जगुः ॥"
इयं हि पञ्चमकारपूज्यकुलनायिकान्तर्गता । यथा, तन्त्रसारे ।
"नटी कापालिनी वेश्या रजकी नापिताङ्गना । ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका । मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः ॥")

नटेश्वरः, पुं, ( नटानामीश्वरः । नृत्यप्रियत्वात् तथात्वम् । ) शिवः । इति हेमचन्द्रः ।२।११२ ॥

नड, क भ्रंशे । इति कविकल्पद्रुमः ॥ ( चुरां-परं-अकं-सेट् । ) क, नाडयति । भ्रंशोऽधःपतनम् । इति दुर्गादासः ॥

नडः, पुं, (नलतीति । नल+अच् । लस्य डत्वम् ।) नलतृणम् । इत्यमरः । २ । ४ । १६५ ॥ (यथा, वेदे । ६ । १३८ । ५ ।
"यथा नडं कशिपुने स्त्रियो भिन्दन्त्यश्मना ॥")
जातिभेदः । इति पुंनपुंसकसंग्रहटीकायां मधुअथर्ववेदः ॥

नडकीयः, त्रि, ( नडाः सन्त्यत्र । नड+"नडादीनां कुक् च ।" ४ । २ । ९१ । इति छः कुगागमश्च । ) नलसमूहदेशः । इति हेमचन्द्रः । ४ । २० ॥

नडप्रायः, त्रि, ( नडः प्रायेण यत्र । ) नलबहुलदेशः । तत्पर्य्यायः । नडकीयः २ नड्वान् ३ नड्वलः ४ । इति हेमचन्द्रः । ४ । २० ॥

नडमीनः, पुं, ( नलस्थितो मीनः । लस्य डत्वम् । ) चिलिचिममत्स्यः । नलमीन इत्यमरदर्शनात् डलयोरैक्यम् ॥

नडसंहतिः, स्त्री, ( नडानां संहतिः समूहः । ) नडसमूहः । तत्पर्य्यायः । नड्या २ । इत्यमरः । २ । ५ । १६८ ॥ नडसञ्चयः ३ । इति शब्दरत्नावली ॥

नडहः, त्रि, ( नडं अपरिस्कृतस्थानं हन्तीति । हन+डः । ) कान्तः । ललितः । इति भूरिप्रयोगः ॥

नड्या, स्त्री, ( नडानां समूहः । "पाशादिभ्यो यः ।" ४ । २ । ४९ । इति यः । ) नडसमूहः । इत्यमरः । २ । ५ । १६८ ॥

नड्वलः, त्रि, ( नडाः सन्त्यत्र । नड+"नडशादात् ड्वलच् ।"४ । २ । ८८ । इति ड्वलच् ।) नलबहुलदेशः । इत्यमरः । २ । १ । ६ ॥ (यथा, रघुः । १८ । ५ ।
"यो नड्वलानीव गजः परेषां बलान्यमृद्नान्नलिनाभवक्त्रः ॥" )

नड्वान्, [त्] त्रि, ( नडाः सन्त्यत्र । नड+"कुमुदनडवेतसेभ्यो ड्मतुप् ।" ४ । २ । ८७ । इति ड्मतुप् । डित्वात् टिलोपः । मस्य वः । ) नलबहुलदेशः । इत्यमरः । २ । १ । ६ ॥

नड्वाभूः, स्त्री, कृत्रिमः । इति भूरिप्रयोगः ॥

नतं, क्ली, ( नम+क्तः । ) तगरपादी । तगरमूलम् । इति मेदिनी । ते, २६ ॥ ( पर्य्यायोऽस्य यथा,—
"कालानुसार्य्यवक्रं तगरं कुटिलं शठम् । महोरगं नतं जिह्मं दीनं तगरपादिकम् ॥"
इति वैद्यकरत्नमालायाम् ॥ )

नतः, पुं, ( नमति स्मेति । नम+क्तः । ) जन्मनाडिकाविशेषः । तद्यथा,—
"असम्यक्कर्मणा येन यान्ति ह्रस्वतुल्यतां दिवि । नतोन्नतौ ततः साध्यौ भावाः खेटवलानि षट् ॥ दिनार्द्धान्तरिता जन्मनाडिका नतनाडिका । पूर्व्वापरार्द्धे जातस्य प्राक्परांख्या दिने भवेत् ॥ रात्रेर्गतघटीशेषघटीदिनार्द्धसंयुता । परपूर्व्वाभिधा ज्ञेया रजन्यां नतनाडिका ॥"
इति कोष्ठीप्रदीपः ॥

नतः, त्रि, ( नम+क्तः । ) कुटिलः । नम्रः । इति मेदिनी । ते, २६ ॥ ( यथा, हरिवंशे । २०१ । ३६ ।
"पतन्ति युगपत् सर्व्वे पादयोर्मूर्द्धभिर्नताः ॥" )

नतद्रुमः, पुं, ( नतो द्रुमः । ) लताशालः । इति रत्नमाला ॥

नतनासिकः, त्रि, ( नता नासिका यस्य । ) अल्पनासिकायुक्तः । खाँदा इति भाषा । तत्पर्य्यायः । अवटीटः २ अवनाटः ३ अवभ्रटः ४ । इत्यमरः । २ । ६ । ४५ ॥

नताङ्गी, स्त्री, ( नतमङ्गमस्याः । ङीष् । ) नारी । इति राजनिर्घण्टः ॥

नतिः, स्त्री, ( नम+भावे क्तिन् । ) नमनम् । नम्रता । यथा,—
"नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां धृतिर्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो गिराम् । लावण्यं वपुषः स्मृतिः सुमनसः शान्तिर्द्विजस्य क्षमा शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम् ॥"
इति नवरत्नम् ॥
( नतिलक्षणादिकन्तु नमस्कारशब्दे द्रष्टव्यम् ॥ )

नद, टु इ संदृधि । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-अकं-सेट् । ) टु, नन्दथुः । इ, नन्द्यते । संदृधि आनन्दयुक्तभावे । ननन्द पारिप्लवनेत्रया नृपः । नन्दते च कुले पुंसाम् । इति गणकृतानित्यत्वात् । इति दुर्गादासः ॥

नदः, पुं, ( नदति प्रवाहवेगेन शब्दायते इति । नद+अच । ) पुंवाचकाकृत्रिमखाताबच्छिन्नजलप्रवाहः । ( यथा, मनुः । ६ । ९० ।
"यथा नदीनदाः सर्व्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिनः सर्व्वे गृहस्थे यान्ति संस्थितिम् ॥")
स च सिन्धुभैरवशोणदामोदरब्रह्मपुत्रादिः । तत्पर्य्यायः । पुनर्भवः २ भिद्यः ३ उद्यः ४ सरस्वान् ५ । इति हेमचन्द्रः । ४ । १५६ ॥
"अशीतिस्तु तीर्थानि नदाश्च दशकोटयः ॥"
इति पाद्मे भूखण्डे ८५ अध्यायः ॥

नदनुः, पुं, ( नदतीति । नद+"नदेश्च ।" उणां ३ । ५२ । इति अनुङ् । ) मेघः । इत्युणादिकोषः ॥ ( यथा ऋग्वेदे । ८ । २१ । १४ ।
"यदा स्तवोषि नदनुं समूहस्यादित् पितेव हूयसे ॥" )
सिंहः । इति शब्दमाला ॥ (नद+भावे अनुङ् । शब्दः । यथा, ऋग्वेदे । ६ । १८ । २ ।
"स युध्मः सत्वा खजकृत्समद्वा तुविम्रक्षो नदनुमाँ ऋजीषी ॥" )

नदी, स्त्री, ( नदतीति । नद+अच् । पचादिगणे नदट् इति निर्द्देशात् टिड्ढाणञिति ङीप् । ) अष्टसहस्रधनुरन्यूनप्रवाहनतोया । सा च गङ्गायमुनासरस्वतीकावेरीगोदावरीप्रभृतिः । तस्या लक्षणमाह छन्दोगपरिशिष्टम् ।
"धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥"
इति तिथितत्त्वम् ॥
तत्पर्य्यायः । सरित् २ तरङ्गिणी ३ शैवलिनी ४ तटिनी ५ ह्रदिनी ६ धुनी ७ स्रोतस्वती ८ द्वीपवती ९ स्रवन्ती १० निम्नगा ११ आपगा १२ । इत्यमरः । १ । १० । ३० ॥ ह्रादिनी १३ धुनिः १४ स्रोतस्विनी १५ स्रोतोवहा १६ सागरगामिनी १७ अपगा १८ । इति भरतः ॥ निर्झरिणी १९ सरस्वती २० समुद्रगा २१ कूलङ्कषा २२ कूलवती २३ शैवालिनी २४ सिन्धुः २५ समुद्रकान्ता २६ सागरगा २७ लहरी २८ रोधोवती २९ वाहिनी ३० । तज्जलगुणाः । स्वच्छत्वम् । लघुत्वम् । दीपनत्वम् । पाचनत्वम् । रुच्यत्वम् । तृष्णापहत्वम् । पथ्यत्वम् । मधुरत्वम् । ईषद्गुरुत्वञ्च ॥ * ॥
"सर्व्वा गुर्व्वी प्राङ्मुखी वाहिनी स्याल्लघ्वी पश्चाद्वाहिनी निश्चयेन । देशे देशे तद्गुणा सा विशेषान्नैषा धत्ते गौरवं लाघवञ्च ॥
प्रायो मन्दवहा गुर्व्वी लघुः शीघ्रवहाः स्मृताः । नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ॥ हिमवत्प्रभवा याश्च जलं तास्वमृतोपमम् ॥
विन्ध्यात् प्राची प्राच्यवाची प्रतीची या चोदीची स्यान्नदी या क्रमेण । वातारोग्यं श्लेष्मपित्तानिलौघं पित्तोद्रेकं पथ्यपाकञ्च धत्ते ॥
पारिपात्रभवा याश्च विन्ध्याद्रिप्रभवाश्च याः । शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥"
इति राजनिर्घण्टः ॥
( यथा च ।
"तथा प्राच्यां गमाश्चान्याः पश्चिमाशुगमास्तथा ।"
"ससैकता सपाषाणा द्विविधा चाम्बुवाहिनी । एवं चतुर्विधा नद्यो वातपित्तकफात्मिकाः ॥
सदावहायास्त्ववहसूर्य्या मरुत्कफानां प्रशमश्च तस्याः नीरं वसन्ते हितकृद्विशेषात् नदीभवं नैव हिमागमे च ॥
घनविमलशिलानां स्फालनाज्जातफेनं बहुलसजलवीचिक्षुब्धसंक्षोभदग्धम् ।

दासीगर्भसमुद्भूतां गोलकां कण्वकोद्भवाम् ।
वर्ज्जनीया सदा चैता सर्व्वपूजादिकर्म्मसु ॥
अरोगिणीं सुरूपाङ्गीं सुन्दरीं व्रणवर्ज्जिताम् ।
एकवंशसमुद्भूतां कन्यां साधक प्रपूजयेत् ॥
ब्राह्मणी सर्व्वकार्य्येषु जयार्थे नृपवंशजा ।
लाभार्थे वैश्यवंशोत्था क्षेमे च शूद्रवंशजा ॥
ब्राह्मणैर्ब्रह्मजाः पूज्याः राजन्यैर्ब्रह्मवंशजाः ।
वैश्यैस्त्रिवर्गजाः पूज्याश्चतस्रः पादसम्भवैः ॥
कारुभिश्चैव वंशोत्था यथायोग्यं प्रपूजयेत् ।
नवरात्रविधानेन भक्तिपूर्व्वं सदैव हि ॥
अशक्तो नियतं पूजां कर्त्तुं चेन्नवरात्रके ।
अष्टम्याञ्च विशेषेण कर्त्तव्यं पूजनं सदा ॥
पुराष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽष्टम्यां विशेषेण कर्त्तव्यं पूजनं सदा ।
नानाविधोपहारैश्च गन्धमाल्यानुलेपनैः ॥
पायसैरामिषैर्होमैर्ब्राह्मणानाञ्च भोजनैः ।
फलपुष्पोपहारैश्च तोषयेज्जगदम्बिकाम् ॥
उपवासे ह्यशक्तानां नवरात्रव्रते पुनः ।
उपोषणत्रयं प्रोक्तं यथोक्तं फलदं शुभम् ॥
सप्तम्याञ्च तथाष्टम्यां नवम्यां भक्तिभावतः ।
त्रिरात्रकरणात् सर्व्वं फलं भवति पूजनात् ॥
सम्पूर्णं तद्व्रतं प्रोक्तं विप्राणाञ्चैव भोजनैः ।
व्रतानि यानि चान्यानि दानानि विविधानि च ॥
नवरात्रव्रतस्यास्य नैव तुल्यानि भूतले ।
धनधान्यप्रदं नित्यं सुखसन्तानवृद्धिदम् ॥
आयुरारोग्यदञ्चैव स्वर्गदं मोक्षदं तथा ।
विद्यार्थी वा धनार्थी वा पुत्त्रार्थी वा भवेन्नरः ।
तेनेदं विधिवत् कार्य्यं व्रतं सौभाग्यदं शिवम् ॥
विद्यार्थी सर्व्वविद्यां वै प्राप्नोति व्रतसाधनात् ।
राज्यभ्रष्टो नृपो राज्यं समवाप्नोति सर्व्वथा ॥
पूर्व्वजन्मनि यैर्नूनं न कृतं व्रतमुत्तमम् ।
ते व्याधिनो दरिद्राश्च भवन्ति पुत्त्रवर्ज्जिताः ॥
वन्ध्या च या भवेन्नारी विधवा धनवर्ज्जिता ।
अनुमा तत्र कर्त्तव्या नैव कृतवती व्रतम् ॥
नवरात्रव्रतं प्रोक्तं न कृतं येन भूतले ।
स कथं विभवं प्राप्य मोदतेऽत्र तथा दिवि ॥
रक्तचन्दनसंमिश्रैः कोमलैर्बिल्वपत्रकैः ।
भवानी पूजिता येन स भवेन्नृपतिः क्षितौ ॥”॥)
अथ नवरात्रपारणानिर्णयः । सा च दशम्यां कार्य्या । ॥ दशम्यां विशेषस्तु भार्गवार्च्चन-दीपिकायां भविष्ये ।
“शमीवृक्षं जगन्नाथ भक्तानामभयङ्करम् ।
अर्च्चयित्वा शमीरूपमर्च्चयेच्च ततः पुनः ॥”
शमीमन्त्रः । स्कान्दे हेमाद्रौ गोपथब्राह्मणे ।
“अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ।
दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ॥”
तथा भविष्ये ।
“शमी शमयते पापं शमी शत्रुविनाशिनी ।
अर्ज्जुनस्य धनुर्द्धारी रामस्य प्रियवादिनी ॥
करिष्यमाणा या यात्रा यथाकालं सुखं मया ।
तत्र निर्व्विघ्नकर्त्त्री त्वं भव श्रीरामपूजिते ॥”

अथ बलनीराजनम् । कश्यपः । तत्र मन्त्रः ।
‘चतुरङ्गं बलं मह्यं निरनिष्टं प्रजास्विह ।
सर्व्वत्र विजयो मेऽस्तु त्वत्प्रसादात् सुरेश्वरि ॥’
गौड़निबन्धे ज्योतिषे ।
“कृत्वा नीराजनं राजा बलवृद्ध्यै यथाक्रमम् ।
शोभनं खञ्जनं पश्येत् जलगोष्ठस्य सन्निधौ ॥”
इति निर्णयसिन्धुः ॥

**नवरात्रिक**, क्ली, ( नवरात्रेण निर्वृत्तम् । नवरात्र + “तेन निर्वृत्तम् ।” ५ । १ । ७९ । इति ठक् । ) नवरात्रम् । यथा, भविष्योत्तरे ।
“आश्विने शुक्लपक्षे तु कर्त्तव्यं नवरात्रिकम् ।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥”

**नववधू**, स्त्री, ( नवा नूतना वधूः । ) नवोढ़ा । नवीना भार्य्या । यथा,—
‘अथ समवहमानस्रस्ततालिगणसेविता ।
तां न सहते राजन् ! भूमिर्नववधूरिव ॥’
इति हयग्रीवकाव्यम् ॥ ॥
नववध्वागमनदिनं यथा । तत्र अष्टमद्वादश द्वादशषष्ठचतुर्थवर्षाणि निषिद्धानि । ( यदुक्तं ज्योतिषे ।
‘श्वश्रू हन्त्यष्टमे वर्षे श्वशुरञ्च दशाब्दिके ।
संप्राप्ते द्वादशे वर्षे पतिं हन्ति द्विरागमे ॥
विवाहमासि प्रथमं वध्वा नागमनं यदि ।
तदा सर्व्वमिदं चिन्त्यं युग्माब्दादि विवर्ज्जयेत् ॥”)
माघफाल्गुनवैशाखा विहिताः । पक्षः शुक्लः । विहितनक्षत्राणि पुष्यस्वातीहस्ताश्विनीोत्तराषाढ़ोत्तरफल्गुन्युत्तरभाद्रपदारेवतीमृगशिरोरोहिणीपुनर्व्वसुपूर्व्वाषाढ़ाः । वाराः बृहस्पतिबुधशुक्रसोमानाम् । तिथयो यात्राप्रकरणोक्ताः । भद्रसमयवारवेलादिकशूलादीन् परित्यज्य ताराचन्द्रशुद्धौ कालशुद्धौ च कार्य्यम् ॥
इति ज्योतिषम् ॥ अपि च ।
“स्वातीमूलपुनर्व्वसूत्तरकराश्विन्यनुराधाश्विनी रोहिण्यः श्रवणा द्विरागमविधौ पुष्या धनिष्ठा तथा ।
भर्त्तुर्गोचरशोभने दिनपतौ काले पुनः शोभने कुम्भाजालिरवौ शुभे शुभतिथौ वारादियात्रोदिते ॥
वैशाखे मार्गशीर्षे हि फाल्गुने हि शुभे रवौ ।
नववध्वागमं कुर्य्यादन्यमासे विवर्ज्जयेत् ॥”
इति मधुरेशचक्रवर्त्तिकृतसारसंग्रहः ॥
( अन्यद्द्विरागमनशब्दे द्रष्टव्यम् । )

**नववध्वागमनं**, क्ली ( नववध्वा आगमनम् । ) नवोढ़ायाः प्रथमपतिगृहगमनम् । तद्दिनं यथा
“चौमूलाजचटालिसुतरवौ काले विशुद्धे भर्त्तुः सत्यन्य प्रतिलोमगं शुभदिने यात्राप्रवेशोचिते ।
व्यक्ताहस्तु निरग्रक नववधूयात्राप्रवेशौ पति कुर्य्यादेकपुरादिषु प्रतिभृगोर्न्नैहन्ति दोषः क्वचित् ॥
एकग्रामे चतुःग्रामे दुर्भिक्षे राष्ट्रविप्लवे ।
पतिना नीयमानायाः पुरः शुक्रो न दुष्यति ॥”
इति दीपिका ॥
अन्यत् नववधूशब्दे द्रष्टव्यम् ॥

**नववरिका**, स्त्री, ( नवो वरोऽस्त्यस्या इति । नववर + ठन् । ) नवोढ़ा । इति हारावली । १५४ ॥

**नववल्लभ**, क्ली, ( नवानां नवीनानां वल्लभम् । ) दाहागुरु । इति राजनिर्घण्टः ॥ ( नवो वल्लभो यस्य । ) नवीनप्रिये, त्रि ॥

**नववस्त्र**, क्ली ( नवं वस्त्रम् । ) नवीनवसनम् । नूतन कापड़ इति भाषा ॥ तत्पर्य्यायः । अनाहतम् २ आहतम् ३ अहतम् ४ तन्त्रकम् ५ निष्प्रवाणि ६ । इति शब्दरत्नावली ॥ नवाम्बरम् ७ इत्यमरः । २ । ६ । ११२ ॥
अथ नववस्त्रपरिधानदिनम् ।
तत्र वाराः बुधबृहस्पतिशुक्राणाम् । नक्षत्राणि रोहिण्यश्विनीमृगशिरोमघानुराधाधनिष्ठापुष्यविशाखाहस्तचित्रोत्तरफल्गुन्युत्तराषाढ़ोत्तरभाद्रपदाश्विनीस्वातीपुनर्व्वसुरेवत्यः ॥
‘धनिष्ठा रोहिणी हस्ता विशाखा चोत्तरासु च ।
ज्येष्ठा पुनर्व्वसुस्वाती चित्राश्विनी च रेवती ।
इति सारसंग्रहः ॥
अपि च ।
‘धातानुराधवसुपुष्यविशाखहस्ता चित्रोत्तराश्विपवनादितिरेवतीषु ।
जन्मक्षणीवबुधशुक्रदिनोत्सवादौ धार्य्यं नवं वसनमीश्वरविप्रतुष्टौ ॥
शीर्णं रवौ सततमम्बुभिरार्कमिन्दौ भौमे शुचं बुधदिने च भवेद्धनाय ।
ज्ञानाय मन्त्रिणि भृगौ प्रियसङ्गमाय मन्दे मलाय च नवाम्बरधारणं स्यात् ॥”
इति समयप्रदीपः ॥

**नवशायक**, पुं, ( नवविधः शायक इव । ) नवधा गोपादिजातिविशेषः । नवशाक इति भाषा । यथा, पराशरसंहितायाम् ।
‘गोपमाली तथा तैली तन्त्री मोदकवारुजौ ।
कुलालः कर्म्मकारश्च नापितो नवशायकाः ॥”

**नवसूतिका**, स्त्री ( नवा सूतिः प्रसवो यस्याः । कप् । ) धेनुः । इत्यमरः । २ । ९ । ७१ ॥ नूतनप्रसवायाञ्च ॥

**नवांश**, पुं ( नवमोंऽशः । ) मेषादिद्वादशलग्नानां नवभागः । यथा दीपिकायाम् ।
‘चराणां सन्निकोणानां तत्रराद्या नवांशकाः ॥’
“मेषकेशरिधनुषां मेषाद्यास्तु नवांशकाः ।
वृषकन्यामृगाणाञ्च मकरादिनवांशकाः ॥
तुलामिथुनकुम्भानां तुलाद्याः समुदाहृताः ।
कर्किवृश्चिकमीनानां कर्कटाद्या नवांशकाः ॥
स्वनवांशस्तु राशीनां वर्गोत्तम इति स्मृतः ॥”
इति ज्योतिस्तत्त्वम् ॥
( नवभागमात्रम् ॥ )

**नवाङ्गा**, स्त्री, ( नवमिव अङ्गं यस्याः । टाप् । ) कर्कटशृङ्गी । इति राजनिर्घण्टः ॥ ( नवविधेन प्रयोगेन अङ्गं यस्येति विग्रहे । ) पाचनविशेषे, स्त्री । यथा, वैद्यके ।
“विश्वाब्दतिक्तभूनिम्बः पञ्चमूलीसमन्वितैः ।
कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥”

नवान्नं, क्ली, ( नवं नूतनं अन्नम् । ) नूतनान्नम् । तन्निमित्तश्राद्धम् । यथा,—

वराह उवाच ।

"अदत्त्वा यो नवान्नानि मम कर्म्मपरायण: ।
भुञ्जन्ति ये नवान्नानि परै: प्रश्नानि केन च ॥
नाहं लोभेन चेच्छामि पुनर्भोगेन सुन्दरि ! ।
अवश्यमेव कर्त्तव्यं मम कर्म्मपरायणै: ॥
ततो भागवतो भूत्वा नवान्नं यो न कारयेत् ।
पितरस्तस्य नाश्नन्ति वर्षाणि दश पञ्च च ॥
अदत्त्वा यस्तु भुञ्जीत नवान्नानि कथञ्चन ।
न तस्य धर्म्मो विद्येत एवमेतन्न संशय: ॥
अन्यच्च ते प्रवक्ष्यामि येन तत्र प्रमुच्यते ।
प्रायश्चित्तं महाभागे ! मम भक्तसुखावहम् ॥
उपवासं त्रिरात्रन्तु तत एकेन वा पुन: ।
आकाशशयनं कृत्वा चतुर्थेऽहनि शुध्यति ॥
एवं तत्र विधिं कृत्वा उदिते च दिवाकरे ।
पञ्चगव्यं तत: पीत्वा शीघ्रं मुच्येत किल्बिषात् ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
सर्व्वसङ्गान् परित्यज्य मम लोकाय गच्छति ॥"

इति नवान्नभोजनापराधप्रायश्चित्तम् ॥ इति वराहपुराणम् ॥*॥ तस्य निषिद्धदिनं यथा,—

"सूर्य्ये चैव विशाखगे सारतिथौ मापे चित्राम्बान्विते
नन्दामन्दमहीजकार्य्यदिवसे पौषे मघौ कार्त्तिके ।
मैत्रूग्राद्विशिनेषु विष्णुशयने कृष्णे शशिन्यष्टमे
श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम् ॥"

सूर्य्ये चैव विशाखगे मार्गशीर्षस्य विंशतिदशाधिकप्रथमदिनत्रयावस्थिते सूर्य्ये । सार तिथौ त्रयोदश्याम् । मापे प्रथमतारात्रये । उग्र: पूर्व्वात्रयमघाभरण्य: । अद्विरश्लेषा । शिव आर्द्रा ।

"ज्येष्ठाश्लेषाद्वेगे सूर्य्ये न्टगनेधानिशात्मके ।
नवान्नैर्भोजनं श्राद्धं जन्मचन्द्रे तिथौ न च ॥
अश्लेषाकृत्तिकाज्येष्ठामूलाजपदक्षेषु च ।
भृगुभौमदिने रिक्ततिथौ नाद्यान्नवौदनम् ॥"

तस्य विधिर्यथा,—

"प्राश्नीयाद्दधिसंयुक्तं नवं विप्राभिमन्त्रितम् ॥"

दीपिकायाम् ।

"मैत्रूग्राद्विशिवान्त्येषु विभौमशनिवासरे ।
अन्नप्राशनवत् कुर्य्यान्नवान्नप्राशनम् ॥"

अधिकन्तु ।

"हस्ता स्वातिपुनर्व्वसू म्टगशिर:पुष्यानुराधा तथा
मूलायां श्रवणे च रेवतिधने पित्रासवे वारुणे ।
आर्द्रे शक्रविशाखयोश्च तुरगे सौम्येन्दुजीवाह्वये
चन्द्रे शोभनतारके च शुभदं श्राद्धं नवान्नैः कृतम् ॥"

भोजराज: ।

"मत्वा विष्णुदधसती शशधरो मार्त्तण्डपौष्णादितौ
मैत्रे चैव विशाखवासुधनमे मूलाश्विवह्नौ तथा ।
शुक्रे वाचस्पतेश्च शुभदिने श्राद्धं नवं शस्यते
नन्दाभार्गवभूमिजेषु न भवेच्छ्राद्धं नवान्नोद्भवम् ॥"

इति ज्योतिस्तत्त्वम् ॥

आश्विनाधिकारे ।

"शुक्लपक्षे नवं धान्यं ज्ञात्वा पक्वं सुशोभनम् ।
गच्छेत् चैत्री विधानेन गीतवाद्यपुर:सर: ॥"

इत्यादिना ब्रह्मपुराणेन श्राद्धविधानात् ॥

अपि च ।

"शरद्वसन्तयो: केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिन: स्मृत: ॥"

इति मलमासतत्त्वम् ॥

नवाम्बरं, क्ली, (नवं नूतनमम्बरं वस्त्रम् ।) नूतनवस्त्रम् । इत्यमर: । २ । ६ । ११२ ॥ ( यथा, समयप्रदीपे ।

"शीर्षे रवौ नततममुभिरार्द्रमिन्दौ
भौमे शुचं बुधदिने च भवेद्धनाय ।
ज्ञानाय मन्त्रिणि भृगौ प्रियसङ्गमाय
मन्दे मलाय च नवाम्बरधारणं स्यात् ॥")

नवार्चि:, [ स् ] पुं, ( नव अर्चींषि यस्य । ) मङ्गलग्रह: । इति त्रिकाण्डशेष: ॥ ( स्त्री, नवं नूतनं अर्चि: ।) नवशिखा ॥ (नव अर्चींषि इति विग्रहेऽत्र तु नवसंख्यककिरणार्थे बहुवचनम् ॥ )

नवाह:, पुं, ( नवं अह: । समासे टच् । ) नवदिनम् । प्रतिपत्तिथि: । इति विश्व: ॥

नविका, स्त्री, ( नवोऽस्त्यस्या इति । नव+ठन्+टाप् । नविं नवं कायति इति वा ।) नवशब्दयुक्ता । इति स्त्रीप्रत्ययप्रकरणे दुर्गादास: ॥

नवीनं, त्रि, ( नवमेव । नव+"नवस्य न्वादेशो-ऽप्तनप्खाश्च प्रत्यया वक्तव्या: ।"५ । ४ । २५ । इत्यस्य वार्त्तिकोक्त्या ख: न्वादेशश्च ।) नूतनम् । इत्यमर: । ३ । १ । ७७ ॥ ( यथाह गदाधर: ।

"गदाधरविनिर्म्मिता विविधदुर्गतर्काटवी
नवीनपदवीमुदं वितनुतां सतां धीमताम् ॥" )

नवोढ़ा, स्त्री, (नवा नूतना ऊढ़ा) नवविवाहिता । तत्पर्य्याय: । वधू: २ जनी ३ । इति जटाधर: ॥ नववरिका ४ दिक्करी ५ नवयौवना ६ । इति हारावली । १५४ ॥ मुग्धानायिकाभेद: । तस्या लक्षणं यथा ।"लज्जाभयपराधीनरतिर्नवोढ़ा ॥" तस्या उदाहरणं यथा, रसमञ्जर्य्याम् ।

"वलोन्नीता पार्श्वं सुखमसुखं नैव कुरुते
धुनानामूर्द्धानं क्षिपति वदनं चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्तापयति च ॥"

नवोदकं, क्ली, (नवमुदकम् ।) नूतनजलम् । यथा, मिताक्षरायां स्मृति: ।

"काले नवोदकं शुद्धं न पातव्यञ्च तत् त्र्यहम् ।
अकाले तु दशाहानि पीत्वा नाद्यादहर्निशम् ॥"

इति शुद्धितत्त्वम् ॥

तन्निमित्तकं श्राद्धं कर्त्तव्यम् । [illegible]

"नवोदके नवान्ने च गृहप्रच्छादने [illegible]
पितर: स्पृहयन्त्यन्नमष्टकासु मघासु च ।
तस्माद्दद्यात् सदा युक्तो विद्वत्सु ब्राह्मणेषु च ॥
नवोदकैर्वर्षोपक्रमे । [illegible]
'आर्द्रादितो विशाखान्तं [illegible]'

इति [illegible]

'प्रावृट्काले समायाते रौद्रमृक्षे [illegible]
नार्द्रविधसमायोगे नवतोयं [illegible]'

इति [illegible]

रौद्रमार्द्रा ॥ * ॥ नवोदकश्राद्धस्य [illegible] त्वात् त्रयोदश्यादिकनिषेधकत्वं [illegible]

'त्रयोदशी जन्मदिनञ्च [illegible]
जन्मर्क्षतारां पितृमातृ[illegible]
त्यक्त्वा चरेन्मेदिनीमन्त्र[illegible]
पुर्वेषु च श्राद्धविधानमेतत् ॥'

मितवासरं कुर्य्यात् । [illegible] दय: श्रवणपुष्यमृगशिरोहस्ता[illegible] त्रितयरोहिण्य: । कृष्णपक्षे [illegible] कालमन्दौभयो: श्राद्धयोजना[illegible] तिथ्यादितत्त्वम् ॥

नवोद्धृतं, क्ली, ( नवमुद्धृतम् । ) नवनीतम् । इत्यमर: । २ । ९ । ५२ ॥ नूतनोद्धृते, त्रि ।

नव्यं, त्रि, (नूयते स्तूयते इति । णु स्तुतौ+"अचो यत् ।" ३ । १ । ९७ । इति यत् । नव एव । "शाखादिभ्यो यत् ।" ५ । ३ । १०३ । इति स्वार्थे यत् ।) नूतनम् । इत्यमर: । [illegible] ( यथा, ऋग्वेदे । ३ । ५५ । १६ ।

"नव्या नव्या युवतयो भवन्तीर्महद्देवानामसुरत्वमेकम् ॥" )

स्तुत्यम् । यथा, ऋग्वेदे । ५ । १३ । ३ ।

"कया नो अग्न ऋतयन्नृतेन
भुवो नवेदा उचथस्य नव्य: ॥" )

स्त्री, स्तुति: । णु ल स्तुतौ भावे [illegible] स्वार्थे ये निष्पन्न: ॥

नव्य:, पुं, ( नूयते इति । णु+यत् ।) रक्तपुनर्नवा इति राजनिर्घण्ट: ॥

नशाक:, पुं, ( नश्यतीति । नश नाशे+"[illegible] खजादि: स तु कित् ।" ४ । ८२ । इति उज्ज्वलदत्तधृतसूत्रात् आक: ।) काकभेद: इत्युणादिकोष: ॥

नशिता, [ ऋ ] त्रि, नाशाश्रय: । इति नशधातो: कर्त्तरि तृच्प्रत्ययनिष्पन्न: ॥

नश्यत्प्रसूतिका, स्त्री, ( नश्यन्ती प्रसूति: सन्तति-र्यस्या: । कप् । ततष्टाप् । ) मृतप्रजा । तत्पर्य्याय: । निन्दु: २ मृतपुत्त्रिका ३ । इति हेमचन्द्र: । ३ । १९५ ॥

नश्वर:, त्रि, ( नश्यतीति । नश+"इण्नश-जिसर्त्तिभ्य: क्वरप् ।"३ । २ । १६३ । इति क्वरप् ।) नाशप्रतियोगी । ध्वंसयोग्य: । इति नशधातो: कर्त्तरि वरप्रत्ययनिष्पन्न: ॥ ( यथा, भागवते । ५ । १८ । ४ ।

'वदन्ति विश्वं कवयः स्म नश्वरं
पश्यन्ति चाध्यात्मविदो विपश्चितः ।
तथापि मुह्यन्ति तवाज मायया
सुविस्मितं कृत्यमजं नतोऽस्मि तम् ।')
नष्ट, त्रि (नश्+क्त ।) अदर्शनविशिष्ट । तत्पर्य्यायः । तिरोहितः २ । इत्यमरः । २ । ८ । ११२ ॥ (यथा, पञ्चतन्त्रे । १ । ३७८ ।
*"नष्टे स्वभर्तृकाले बाहु प्रोञ्चन्ति मक्षिकाः ।*
प्राक्तनानां मुखानां विशेषोऽयं यतः स्मृतः ॥"
अधमः । यथा चाणक्ये । ८० ।
"असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जास्तु कुलस्त्रियः ॥"
पलायितः । यथा हरिवंशे । १७४ । १२३ ।
"तृतीये तु मुहूर्त्ते सा नष्टा बाणपुरात् तदा ।
मार्गेऽपि च चिकीर्षन्ती पूजयन्ती तपोधनान् ॥"
पलायितः । यथा रत्नावल्याम् ।
"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम्॥"
निष्फलः । यथा मनुः । ३ । १८० ।
"नष्टं देवलके दत्तमप्रतिष्ठन्तु वार्द्धुषौ ॥" )
नाशाश्रयः । यथा । 'योगो नष्टः परन्तप ।'
इति श्रीभगवद्गीता ॥ नाशे क्ली ॥
नष्टचन्द्र, पुं (नष्टो दृश्यश्चन्द्रः ।) सौरभाद्रस्य शुक्लपक्षे चतुर्थ्यामुदितश्चन्द्रः । यथा —
"नष्टचन्द्रो न द्रष्टव्यो भाद्रे मासि सितासिते ।
चतुर्थ्यामुदितोऽसौ हि प्रतिषिद्धो मनीषिभिः ॥
चन्द्रस्तारापहरणे कलङ्कमतिदुष्करम् ।
तस्मै ददाति हे नन्द कामतो यदि पश्यति ॥
अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् ।
तदा शुद्धो भवेत् सद्यो निष्कलङ्को महीतले ॥
सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तकः ॥
इति मन्त्रेण पूतञ्च जलं साधु पिबेद्ध्रुवम् ॥
पुरा तारा गुरोः पत्नी नवयौवनसंयुता ।
रत्नभूषणभूषाढ्या रत्नकल्पाम्बरा सती ॥
सुश्रोणी सुस्मिता रम्या सुन्दरी सुमनोहरा ।
ग्रीवकबरीरम्या मालतीमाल्यभूषिता ॥
सिन्दूरबिन्दुना सार्द्धं चारुचन्दनबिन्दुभिः ।
कस्तूरीबिन्दुनाधश्च भालमध्यस्थलोज्ज्वला ॥
रत्नेन्द्रसारनिर्म्माणक्वणन्मञ्जीररञ्जिता ।
सुवक्रलोचना श्यामा सुचारुकज्जलोज्ज्वला ॥
सुचारुचारुमुक्ताभदन्तपङ्क्तिमनोहरा ।
रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्ज्वला ॥
कामिनीष्वतुला बाला गजेन्द्रमन्दगामिनी ।
सुकोमला चन्द्रमुखी कामाधारा च कामुकी ॥
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरा वरा ।
ध्यायन्ती गुरुपादं सा स्वगृहं गमनोन्मुखी ॥
दृष्ट्वा तस्याश्च सर्व्वाङ्गमनङ्गबाणपीडितः ।
भाद्रे चतुर्थ्याञ्चन्द्रश्च जहार चेतनं वशे ॥
प्राणं चयेन संप्राप्य रथस्थो रसिको बली ।
रथमारोहयामास करे धृत्वा च तारकाम् ॥
कामान्तः कामिनीं तां समाश्लिष्य चुचुम्ब सः ।
शृङ्गारं कर्त्तुमुद्युक्तं तमुवाच गुरुप्रिया ॥

तारकोवाच ।
त्यज मां त्यज मां चन्द्र ! सुरेषु कुलपांसक ! ।
गुरुपत्नीं ब्राह्मणीञ्च पतिव्रतपरायणाम् ॥
गुरुपत्नीमङ्गमेन ब्रह्महत्याशतं लभेत् ।
पुत्त्रस्त्वं तव मातास्मि धैर्य्यं कुरु सुरेश्वर ! ॥
धिक् त्वां श्रुत्वा सुरगुरुर्भस्मीभूतं करिष्यति ।
गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता ॥
*ब्रह्महत्यासहस्रञ्च तस्याः सङ्गमने लभेत् ।*
पुत्त्राधिकश्च शिष्यश्च प्रियो भर्त्तुर्म्महामिनो भवान्॥
स्वधर्म्मं रक्ष पापिष्ठ ! मामेव मातरं त्यज ।
दास्यामि स्त्रीवधं तुभ्यं यदि मां संग्रहीष्यसि ॥
विलङ्घ्य तारावचनं ताञ्च सम्भोक्तुमुद्यतम् ।
शशाप तारा कोपेन निष्कामा सा पतिव्रता ॥
राहुग्रस्तो यक्ष्मग्रस्तः पापयुक्तो भवान् भव ।
कलङ्की यत्कृतागा त्वं त्रस्तो भविष्यसि न संशयः ॥
चन्द्रमेवं तदा तूर्णं कामदेवं शशाप सा ।
तेजस्विना केनचित्त्वं भस्मीभूतो भविष्यसि ।
चन्द्रस्तारां गृहीत्वा च स्नात्वा च रमणं व्रजन् ।
क्रोडे निधाय प्रययौ रुदन्तीं तां सुविस्मिताम् ॥
निर्ज्जने निर्ज्जने रम्ये शैले शैले मनोहरे ।
तत्र दृष्ट्वा सुरगुरुं वलिगेहात् समागतम् ॥
प्रणम्य सर्व्वमुक्त्वा च चन्द्रस्य शरणं ययौ ।
शुक्रस्तं बोधयामास वचनं नीतियुक्तिमत् ॥

शुक्र उवाच ।
शृणु वत्स ! प्रवक्ष्यामि गुरवे देहि तारकाम् ।
गुरुपत्नीं मातृपरां त्यज महद्वचनाद्विधो ! ॥
कुरु पापक्षयोपायं निष्कृतिस्तु महाफला ।
सतीनां गुरुपत्नीनां ग्रहणं बलनं च ॥
ब्रह्महत्यासहस्राणां पातकं लभते जनः ।
कुम्भीपाके पच्यते च यावद्वै ब्रह्मणः शतम् ॥
बृहस्पतिश्च तेजस्वी त्वां भस्मीकर्त्तुमीश्वरः ।
न चकार कृपालुश्चेत् प्रियशिष्येण हेतुना ॥
उतथ्यपत्नीं दृष्ट्वा स पुरा रेमे सकामतः ।
ततपतः प्रापतोऽस्यैव परस्त्री प्रिया सती ॥
'एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कविं विभुः ।
समानीय निशानाथं तारकासहितं व्रज ! ।
शम्भोश्च चरणाम्भोजे चकार च समर्पणम् ।
शम्भुस्तं प्रीतियुक्तश्च वासयामास वक्षसि ।
दत्त्वा तस्मै पादरेणुं निष्पापञ्च चकार सः ।
दत्त्वा तन्मस्तके हस्तं कृपालुरभयं ददौ ॥
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शङ्करः ।
चकार चन्द्रं निष्पापं ब्रह्मणा सहितं मुदितम् ॥
यागेन चन्द्रं योगीन्द्रो द्विखण्डञ्च चकार सः ।
ररक्षाङ्गं ललाटे च सोऽप्यर्द्धं ब्रह्मणः पुरः ॥
तमेव महादेवो बभूव चन्द्रशेखरः ।
स्वगात्रो लज्जितश्चैव कलङ्की दिवससदि ॥
लज्जया च स्वयोगेन देहत्यागं चकार सः ।
तच्छरीरञ्च क्षीरोदे ब्रह्मणा च समर्पितम् ॥
ददौ चित्रं च तपसा सुधा क्षीरोदधेस्तटे ।
कर्त्तव्यसुजनं तस्य प्रपात च वयं व्रज ! ॥
भस्माद्बभूव चन्द्रश्च निष्पापी दिवसदि ।
ब्रह्मा च भगवान् शम्भुरभिषेकं चकार तम् ॥
उवाच च महादेवो निर्भयं देवसंसदि ॥

महादेव उवाच ।
स्वस्थानं गच्छ पुत्र ! त्वं कुरु स्वविषयं मुदा ।
पश्चात् श्वशुरशापेन यक्ष्मग्रस्तो भविष्यसि ॥
यथं पतिव्रताशापं कर्त्तुमीशश्च को भुवि ।
ममाशिषा यक्ष्मणश्च प्रतिकारो भविष्यति ॥
यस्माद्भाद्रचतुर्थ्यान्तु गुरुपत्नी हृता त्वया ।
*तस्मात् कश्चिन्न्निन वत्स शापग्रस्तो युगे युगे ॥*
मा भुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम् ॥
देहत्यागेन हे वत्स ! कर्म्मभोगो न नश्यति ।
प्रायश्चित्तात् सन्देहो ह्रस्वमेव भविष्यति ॥
तारापहरणे वत्स ! कलङ्कश्चन्द्रमण्डले ।
स्वगात्रेण विलग्नश्च भविष्यति युगे युगे ॥'
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८० ८१ अः ॥
नष्टचेष्टता, स्त्री (नष्टा चेष्टा यस्य । तस्य भावः तल् ।) प्रलयः । इत्यमरः । १ । ७ । ३३ ॥ शोकादिना परिस्पन्दनाशो नष्टचेष्टता तत्र प्रलयः प्रलीयतेऽनेन प्रलयः ली ङ ष च्यो शिष अल् । प्रलयः सात्त्विको भावः मूर्च्छायः । इति सर्व्वस्वम् ॥ सुखशोकादिभिरशेषचेष्टानाशः प्रलयः इत्यर्थः । इति भरतः ॥ ईहा शून्यता च ॥
नष्टाग्नि, पुं (नष्टः प्रमादात् निर्व्वाणमाप्तः अग्निर्यस्य ।) यस्याग्निहोत्रिणः प्रमादादिना कारणान्तरेण वा अग्निर्नष्टो निर्व्वाणः स्यात् सः । तत्पर्य्यायः । वीरहा २ । इत्यमरः । २ । ७ । ५३ ।
नष्टाशिस्त्र, क्ली (नष्टस्य चौर्य्यापहृतस्य वस्तुनः आशि तस्य सूत्रमिव ।) किञ्चित्प्राप्तचौरशीतदयम् । तत्पर्य्यायः । लोप्त्रम् २ । इति हारावली । १५८ ॥
नष्टेन्दुकला, स्त्री (नष्टा इन्दुकला यस्याम् ।) कुहूः । इत्यमरः । १ । ४ । ६ ॥
नसा, स्त्री (नस्+वा टाप् । यद्वा नसते कुटिलतां प्रकाशयतीति । नस कौटिल्ये+अच् । टाप् ।) नासिका । इति त्रिकाण्डशेषः ॥
नस्तः, पुं (नसते कुटिलतां प्रकाशयत्यनेनेति । नस्+क्त । बाहुलकात् इडभावः ।) नासिका । इति शब्दमाला ॥ (यथा महाभारते । ५ । १३१ । १० ।
'नचाभ्यां नस्ततश्चैव श्रोत्राभ्याञ्च समन्ततः ।
प्रादुरासन् महारौद्राः सधूमाः पावकार्च्चिषः ॥')
नस्यं क्ली । इति रत्नमाला ॥ पञ्चविधनस्तकर्म्माणि यथा —
"प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनं तथा ।
शिरोविरेचनञ्चैव नस्तकर्म्म तु पञ्चधा ॥
ईषदुच्छ्वसनात् स्नेहो यावान् वक्त्रं प्रपद्यते ।
नस्ते निषिक्तस्तं विद्यात् प्रतिमर्षं प्रमाणतः ॥
प्रतिमर्षश्च नस्यार्थं करोति च न दोषभाक् ।
शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः ।
अवपीड्य दीयते यस्मादवपीडस्ततः स्मृतः ।

स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा ॥
बलार्थं दीयते स्नेहो नस्तशब्दोऽत्र वर्त्तते ।
नस्यस्य स्नैहिकस्यात्र देयास्त्वष्टौ तु विन्दवः ॥
प्रत्येकशो नस्तकयोर्नृणामिति विनिर्णयः ॥”
इति वैद्यकपरिभाषा ॥
“शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकी-
र्त्तिताः ।
द्वात्रिंशद्विन्दवश्चात्र शुक्तिरित्यभिधीयते ॥
द्विशुक्ती पाणिशुक्तिश्च देयास्तु कुशलैर्नरैः ।
तैलं कफे च वाते च केवले पवने वसाम् ॥
दद्यान्नस्यं सदा पित्ते सर्पिर्मज्जां समारुते ।
आपनं रेचनं चूर्णं युञ्ज्यात्तं सुखवायुना ॥
षड़ङ्गुलद्विमुखया नाड्या भेषजगर्भया ।
न हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥
शिरोविरेचनद्रव्यैः स्नेहैर्वातैः प्रसाधितैः ।
शिरोविरेचनं दद्यात् रोगेष्वेतेषु बुद्धिमान् ॥
गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये ।
शोथगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ॥
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
भुक्तभक्तशिरः स्नातस्नातुकामसुतास्रजाम् ॥
नवपीनसरोगार्त्तसूतिकाश्वासकासिनाम् ।
शुद्धानां दत्तवस्तीनां तथा नार्त्तवदुर्द्दिने ॥
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत् ।
न नस्यं न्यूनसप्ताब्दे नातीताशीतिवत्सरे ।
न चोनद्वादशे धूमः कवड़ो नोनपञ्चमे ॥
न शुद्धिर्न्यूनदशमे न चातिक्रान्तसप्ततौ ।
आजन्ममरणं शस्तं प्रतिमर्षन्तु वस्तिवत् ॥”
इति सारकौमुदी ॥

नस्ता, स्त्री, ( नस्त+टाप् । ) नासाकृतं छिद्रम् ।
इति नस्तितशब्दटीकायां भरतः ॥
“नस्ताभेदनदाहाभ्यां कर्णदाहादिभेदनैः ।
अतिदाहातिवाहाभ्यां वधे चान्द्रायणञ्चरेत् ॥”
इति स्मृतिः ॥

नस्तितः, पुं, ( नस्ता नासाच्छिद्रं जाता अस्य ।
तारकादित्वादितच् । ) नासानिक्षिप्तरज्जुवली-
वर्द्दादि । नाकफोँड़ा बलद इति भाषा । तत्-
पर्य्यायः । नस्योतः २ । इत्यमरः ।२ । ९ । ६३॥

नसोतः, पुं, (वे ञ तन्तुसन्ताने+भावे क्तः । नसि
नासिकायां उतं वयनं यस्य ।) नस्तितः । इत्य-
मरटीकायां रमानाथः ॥

नस्यं, क्ली, ( नासिकायै हितम् । नासिका+यत् ।
नसादेशश्च । ) नासिकादेयचूर्णादि । तत्-
पर्य्यायः । नस्तम् २ लावणम् ३ । इति रत्न-
माला ॥ यथा, वैद्यकपरिभाषायाम् ।
“वमनं रेचनं नस्यं निरूहश्चानुवासनम् ।
ज्ञेयं पञ्चविधं कर्म्म मात्रा तस्य प्रवक्ष्यते ॥”
नासाद्वारा देयौषधविशेषः । यथा,—
“अस्थि द्वे गण्डमालानां क्वाथयेत् द्रोणमम्भसाम् ।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥
काञ्जिकस्याढ़कं दत्त्वा पिष्टान्येतानि दापयेत् ।
पुनर्नवां गोक्षुरकं सैन्धवं त्र्यूषणं वचा ॥
सरलं सुरदारुञ्च वृहती कण्टकारिका ।



नस्यपानाद्धरत्येव कर्णशूलं हनुग्रहम् ॥”
इति गारुड़े १९८ अध्यायः ॥
अपि च ।
“सिद्धार्थकवचाहिङ्गुकरञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् ।
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम् ॥”
इति गारुड़े १९९ अध्यायः ॥
( यथा च ।
“नस्यन्तत् कथ्यते धीरैर्नासाग्राह्यं तदौषधम् ।
नावनं नस्यकर्म्मेति तस्य नामद्वयं मतम् ॥
नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनन्तथा ।
रेचनं कर्षणं प्रोक्तं स्नेहनं वृंहणं मतम् ॥
कफपित्तानिलध्वंसे पूर्व्वमध्यापराह्णके ।
दिनस्य गृह्यते नस्यं रात्रौ चाप्युत्कटे गदे ॥
नस्यं त्यजेद्भोजनान्ते दुर्द्दिने चापि तर्पणे ।
तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ॥
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ।
क्रुद्धः शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ ॥
वेगावरोधी तापी च स्नातुकामश्च वर्ज्जयेत् ।
अष्टवर्षस्य बालस्य नस्यकर्म्म समाचरेत् ॥
अशीतिवर्षादूर्द्धञ्च नावनं नैव दीयते ।
अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः ॥
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथै रसैस्तथा ।
नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च विन्दवः ॥
प्रत्येकं रेचने योज्या मुख्यमध्यान्त्यमात्रया ।
नस्यकर्म्मणि दातव्यं शाणैकं तीक्ष्णमौषधम् ॥
हिङ्गुः स्याद्यवमात्रस्तु माषैकं सैन्धवं मतम् ।
क्षीरञ्चैवाष्टशाणं स्यात् पानीयञ्च त्रिकार्षिकम् ॥
कार्षिकं मधुरं द्रव्यं नस्यकर्म्मणि योजयेत् ॥
अवपीड़ः प्रधमनं द्वौ भेदावपरौ स्मृतौ ।
शिरो विरेचनस्थाने तौ तु देयौ यथायथम् ॥
कल्कीकृतादौषधाद्यः पीड़ितो निःसृतो रसः ।
सोऽवपीडः समुद्दिष्टस्तीक्ष्णद्रव्यसमुद्भवः ॥
षड़ङ्गुला द्विवक्त्राया नाड़ीचूर्णन्तया धमेत् ।
तीक्ष्णकोलमितं वक्त्रवातैः प्रधमनं हितम् ॥
जत्रूर्द्ध्वगते रोगे कफजे स्वरसंक्षये ।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥
शोफापस्मारकुष्ठेषु नस्यं वैरेचनं हितम् ।
भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते ॥
गलरोगे सन्निपाते निद्रायां विषमज्वरे ।
मनोविकारे क्रिमिषु युज्यते चावपीड़नम् ॥
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते ।
चूर्णं प्रधमनन्धीरैस्तद्धि तीक्ष्णतरं यतः ॥
नस्यं स्याद्गुड़शुण्ठीभ्याम्पिप्पल्या सैन्धवेन च ।
जलपिष्टेन तेनाक्षिकर्णनासाशिरोगदाः ॥
हनुमन्यागलोद्भूता नश्यन्ति भुजपृष्ठजाः ।
मधूकसारकृष्णाभ्यां वचा मरिचसैन्धवैः ॥
नस्यङ्कोष्णजले पिष्टं दद्यात् संज्ञा प्रबोधनम् ॥
अपस्मारे तथोन्मादे सन्निपातेऽपतन्त्रके ॥”

इति मध्यखण्डे विंशेऽध्याये शार्ङ्गधरेणोक्तम् ॥
“नस्यकर्म्म यथाकालं यो यथोक्तं निषेवते ।
न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते ॥
न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः ।
न च केशाः प्रमुच्यन्ते वर्द्धन्ते च विशेषतः ।
मन्यास्तम्भःशिरःशूलमर्द्दितं हनुसंग्रहः ॥
पीनसार्द्धावभेदौ च शिरःकम्पश्च शाम्यति ।
सिराः शिरःकपालानां सन्धयः स्नायुकण्डराः ॥
नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥
मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान् ।
सर्व्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम् ॥
न चास्य रोगाः सहसा प्रभवन्त्यूर्द्ध्वजत्रुजाः ।
जीर्य्यतश्चोत्तमाङ्गे च जरा न लभते बलम् ॥”
इति चरके सूत्रस्थाने पञ्चमेऽध्याये ॥
“औषधमौषधसिद्धो वा स्नेहो वा नासि
काभ्यां दीयत इति नस्यं तद्द्विविधं शिरोवि
चनं स्नेहनञ्च । तद्द्विविधमपि पञ्चधा । तद्
यथा । नस्यं शिरोविरेचनं प्रतिमर्शोऽवपीड़
प्रधमनञ्च । तेषु नस्यं प्रधानं शिरोविरेचन
नस्यविकल्पः प्रतिमर्शः शिरोविरेचनविक
ल्पोऽवपीड़ः प्रधमनञ्च । ततो नस्यशब्द
पञ्चधा निपातितः । तत्र यः स्नेहनार्थं शून्य
शिरसां ग्रीवास्कन्धोरसां बलजननार्थं दृष्टि
प्रसादजननार्थं वा स्नेहो विधीयते तस्मि
वैशेषिको नस्यशब्दः । तत्तु नस्यं देयं वाता
भिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुण
कर्णशूलकर्णक्ष्वेड़तिमिरस्वरोपघातनासारोगम
शोषापबाहुकाकालजवलीपलितप्रादुर्भावदारु
णप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु
वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति ॥”
“तच्चैतद्द्विविधमभुक्तवतोऽन्नकाले पूर्व्वाह्
श्लेष्मरोगिणां मध्याह्ने पित्तरोगिणामपराह्
वातरोगिणाम् ॥”
इति सुश्रुते चिकित्सितस्थाने ४० अध्याये ॥)
नासाया हिते तत्सम्बन्धिनि च, त्रि । प्रग्रहे
पुं । इति संक्षिप्तसारव्याकरणम् ॥

नस्या, स्त्री, ( नासिकायै हिता । नासिका+
“शरीरावयवात् यत् ।” ५ । १ । ६ । इति य
ततो नसादेशः । ) नासिका । यथा,—
“घ्राणं गन्धवहा नासा नसा नस्या च नासिका ॥”
इति भरतधृतवाचस्पतिः ॥
( नासाकृतछिद्रम् । इति कश्चित् । )

नस्योतः, पुं, ( नस्यया नासारज्ज्वा उतः । )
नस्तितः । इत्यमरः । २ । ९ । ६३ ॥ ( यथा,
महाभारते । ३ । ३० । २६ ।
“मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ॥”)

नहि, व्य, निषेधः । ( यथा,—
“इयं सन्ध्या दूरादुपगतो हन्त मलयात्
तदेकां त्वङ्गेहे विनयवति ! नेष्यामि रजनीम् ।
समीरेणोक्तैवं नवकुसुमिता चूतलतिका
धुनाना मूर्द्धानं नहि नहि नहीत्येव कुरुते ॥”
इत्युद्भटः ॥)

वदान्त विश्व कवय स नश्वर
पश्यन्ति चाध्यात्मविदो विपश्चित ।
तथापि मुह्यन्ति तवाज मायया
सुवासितं शथमज नतोऽस्मि तम् ॥" )

नष्ट त्रि, ( नश्+क्त । ) अदर्शनविशिष्ट । तत्पर्याय । तिरोहित २ । इत्यमर । २ । ८ । ११२ ॥ ( यथा, पञ्चतन्त्रे । १ । ३७८ ।
"नष्ट मृतमतिक्रान्त नानुशोचन्ति पण्डिताः ।
पण्डितानाञ्च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥"
अधम । यथा चाणक्ये । ८० ।
"असन्तुष्टा द्विजा नष्टा सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जास्तु कुलस्त्रियः ॥"
प्रचलित । यथा हरिवंशे । १७४ । १२३ ।
"तृतीये तु मुहूर्त्ते सा नष्टा बाणपुरात् तदा ।
मनसोऽप्रियं चिकीर्षन्ती पूजयन्ती तपोधनान् ॥"
पलायित । यथा रत्नावल्याम् ।
"नष्ट वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम् ॥"
निष्फल । यथा मनु । ३ । १८० ।
"नष्ट देवलक दत्तम् अप्रतिष्ठन्तु वार्द्धुषौ ॥" )
नाशाश्रय । यथा । "योगो नष्ट परन्तप ।"
इति श्रीभगवद्गीता ॥ नाश क्ली ॥

नष्टचन्द्र पु ( नष्टो दृष्टचन्द्र । ) चौरभाद्रस्य भयपक्षे चतुर्थ्यामुदितश्चन्द्र । यथा —
"नष्टचन्द्रो न द्रष्टव्यो भाद्रे मासि सितासिते ।
चतुर्थ्यामुदितोऽशुद्ध प्रतिषिद्धो मनीषिभि ॥
चन्द्रस्तारापहरणे कलङ्कमतिदुष्करम् ।
तस्मै ददाति हे नन्द । कामतो यदि पश्यति ॥
अकामतो नरो दृष्ट्वा मन्त्रपूत जल पिबन् ।
तदा शुद्धो भवेत् सद्यो निष्कलङ्को महीतले ॥
सिंह प्रसेनमवधीत् सिंहो जाम्बवता हत ।
सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तक ॥
इति मन्त्रेण पूतञ्च जल साधु पिबेद्ध्रुवम् ॥
पुरा तारा गुरो पत्नी नवयौवनसंयुता ।
रत्नभूषणभूषाढ्या रत्नकञ्चुकाम्बरा सती ॥
सुश्रोणी सुस्मिता रम्या सुन्दरी सुमनोहरा ।
अतीवकबरीरम्या मालतीमाल्यभूषिता ॥
सिन्दूरबिन्दुना साक चारुचन्दनबिन्दुभि ।
कस्तूरीबिन्दुनाधश्च भालमध्यस्थलोज्ज्वला ॥
रत्नेन्द्रसारनिर्म्माणक्वणन्मञ्जीररञ्जिता ।
सुवक्रलोचना श्यामा सुचारुकज्जलोज्ज्वला ॥
सुचारुचारुसुन्नाभमन्त्रपङ्क्तिमनोहरा ।
रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्ज्वला ॥
कामिनीष्वतुला बाला गजेन्द्रमन्दगामिनी ।
सुकोमला चन्द्रमुखी कामाधारा च कामुकी ॥
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरा वरा ।
ध्यायन्ती गुरुपाद सा स्वगृह गमनोन्मुखी ॥
दृष्ट्वा तस्याश्च सर्व्वाङ्गमनङ्गबाणपीडित ।
भाद्रे चतुर्थ्याञ्चन्द्रश्च जहार चैतन ब्रज ! ॥
ध्यानं चक्रेण समाप्य रथस्थो रसिको बली ।
रथमारोहयामास करे धृत्वा च तारकाम् ॥
कामान्वित कामिनीं तां समाश्लिष्य चुचुम्ब च ।
चकार कर्णसत्राणां तत्रोवाच गुरुप्रिया ॥

तारकोवाच ।
त्यज मां त्यज मां चन्द्र ! सुरेषु कुलपांसक ! ।
गुरुपत्नीं नाहणीष्व पतिव्रतपरायणाम् ॥
गुरुपत्नीमङ्गमेन ब्रह्महत्याशतं लभेत् ।
पुत्रस्त्वं तत्र मा नाह धैर्य्य कुरु सुरेश्वर ! ॥
धिक् त्वां श्रुत्वा सुरगुरुर्भस्मीभूत करिष्यति ।
गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता ॥
ब्रह्महत्यासहस्रञ्च तस्या सङ्गमने लभेत् ।
पुत्राधिकश्च शिष्यश्च प्रियो मत्स्वामिनो भवान् ॥
स्वधर्म्म रक्ष पापिष्ठ ! मामेव मातर त्यज ।
दास्यामि स्त्रीवध तुभ्य यदि मां सङ्गृहीष्यसि ॥
विलङ्घ्य तारावचन ताञ्च सम्भोक्तुमुद्यतम् ।
शशाप तारा कोपेन निष्कामा सा पतिव्रता ॥
राहुग्रस्तो घनग्रस्त पापयुक्तो भवान् भव ।
कलङ्की यक्ष्मणा ग्रस्तो भविष्यसि न सशय ॥
चन्द्रमेव तदा तूर्ण कामान्ध शशाप सा ।
तेजस्विना केनचिच्च भस्मीभूतो भविष्यसि ॥
चन्द्रस्तारां गृहीत्वा च कृत्वा च रमण व्रज ! ।
क्रोडे निधाय प्रययौ रुदन्तीं तां सुविस्मिताम् ॥
निर्गते निर्जने रम्ये शैले शैले मनोहरे ।
तत्र दृष्ट्वा सुरगुरु बलिगेहात् समागतम् ॥
प्रणम्य सर्व्वमुक्त्वा च चन्द्रस्त शरण ययौ ।
शुक्रस्त बोधयामास वचन नीतियुक्तितः ॥

शुक्र उवाच ।
शृणु वत्स ! प्रवक्ष्यामि गुरवे देहि तारकाम् ।
गुरुपत्नीं मातृपरां त्यज मद्वचनाद्विधो ! ॥
कुरु पापक्षयोपाय निष्कृतिस्तु महाफला ।
सतीनां गुरुपत्नीनां ग्रहणेन बलेन च ॥
ब्रह्महत्यासहस्राणां पातक लभते जन ।
कुम्भीपाके पच्यते च यावद्वै ब्रह्मण शतम् ॥
बृहस्पतिश्च तेजस्वी त्वां भस्मीकर्त्तुमीश्वर ।
न चकार कृपालुश्चेत् प्रियशिष्येण हेतुना ॥
उतथ्यपत्नीं दृष्ट्वा स पुरा रेमे सकामत ।
तत्पत तापनोऽस्त्येव परग्रस्ता प्रिया सती ॥
एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कवि विधु ।
समानीय निशानाथ तारकासहित व्रज ! ।
शम्भोश्च चरणाम्भोजे चकार च समर्पणम् ॥
शम्भुस्त प्रीतियुक्तश्च वासयामास वक्षसि ॥
दत्त्वा तस्मै पादरेणु निष्पापञ्च चकार स ।
दत्त्वा तन्मस्तके हस्त कृपालुरभय ददौ ॥
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शङ्कर ।
चकार चन्द्र निष्पाप ब्रह्मणा सहित सुधिम् ॥
योगेन चन्द्र योगीन्द्रो द्विखण्डञ्च चकार स ।
ररक्षाङ्ग ललाटे च सोऽप्यर्द्ध ब्रह्मण पुर ॥
अतएव महादेवो बभूव चन्द्रशेखर ।
मृगाङ्को लाञ्छनस्तत्र कलङ्की देवसंसदि ॥
लज्जया च स्वयोगेन देहत्यागञ्चकार स ।
तच्छरीरञ्च क्षीरोदे ब्रह्मणा च समर्पितम् ॥
दग्धोऽग्निरिव तपसा सुधा क्षीरोदधिस्तटे ।
चन्द्रस्त्रसुजल तस्य पपात च जले व्रज ! ॥
भस्माद्बभूव चन्द्रश्च निष्पापो देवसंसदि ।
ब्रह्मा च भगवान् शम्भुरभिषेकञ्चकार तम् ॥
ददौ च महादेवो निर्भय देवसंसदि ।

महादेव उवाच ।
स्वस्थान गच्छ पुत्र ! त्व कुरु स्वविषय सुखम् ।
पश्चात् श्वशुरशापेन यक्ष्मग्रस्तो भविष्यसि ॥
वर्षं पतिव्रताशाप कर्त्तुमीशश्च को भुवि ।
ममाशिषा यक्ष्मणश्च प्रतिकारो भविष्यति ॥
यस्माद्भाद्रचतुर्थ्यान्तु गुरुपत्नी हृता कृता ।
तस्मात्तस्मिन् दिने वत्स ! पापदृश्यो युगे युगे ॥
मा भुक्त क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्य कृत कर्म्म शुभाशुभम् ॥
देहत्यागेन हे वत्स ! कर्म्मभागो न नश्यति ।
प्रायश्चित्तात् सन्देहो ह्रस्तमेव भविष्यति ॥
तारापहरणे वत्स ! कलङ्कश्चन्द्रमण्डले ।
मृगाङ्कत विलम्बश्च भविष्यति युगे युगे ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८० ८१ अ ॥

नष्टचेष्टता, स्त्री ( नष्टा चेष्टा यस्य । तस्य भाव । तल् । ) प्रलय । इत्यमर । १ । ७ । ३३ ॥ शोकाग्निना परिस्पन्दनाशो नष्टचेष्टता तत्र प्रलय । प्रलीयतेऽनेन प्रलय लीङ् ड म ञो शिथिल । प्रलय सात्त्विको भाव मूर्च्छेत्यर्थ । इति सर्व्वस्वम् ॥ ‍हर्षशोकादिभिरशेषचेष्टानाश प्रलय इत्यर्थ । इति भरत ॥ इहा शून्यता च ॥

नष्टाग्नि पु ( नष्ट प्रमादात निर्व्वाणमाप्त अग्निर्यस्य । ) यस्याग्निहोत्रिण प्रमादाग्निना कारणान्तरेण वा अग्निर्नष्टो निर्व्वाण स्यात् स । तत्पर्याय । वीरहा २ । इत्यमर । २ । ७ । ५३ ॥

नष्टाशिक्षण, क्ली ( नष्टस्य चौरणापहृतस्य वस्तुन आशि तस्या इक्षणमिव । ) किञ्चित्प्राप्तचौरनीतद्रव्यम् । तत्पर्याय । लाप्तम् २ । इति हारावली । १५८ ॥

नष्टेन्दुकला, स्त्री ( नष्टा इन्दुकला यस्याम् । ) कुहू । इत्यमर । १ । ४ । ६ ॥

नसा, स्त्री, ( नस्+वा टाप् । यद्वा नसते कुटिलतां प्रकाशयतीति । नस कौटिल्ये+अच् । टाप् । ) नासिका । इति त्रिकाण्डशेष ॥

नस्त पु, ( नसते कुटिलतां प्रकाशयत्यनेनेति । नस्+क्त । बाहुलकात् इडभाव ।) नासिका । इति शब्दमाला ॥ ( यथा महाभारते । ५ । १३१ । १० ।
"नेत्राभ्यां नस्ततश्चैव श्रोत्राभ्याञ्च समन्तत ।
प्रादुरासन् महारौद्रा सधूमा पावकार्च्चिष ॥" )
नस्ये क्ली । इति रत्नमाला ॥ पञ्चविधनस्तकर्म्माणि यथा —
"प्रतिमर्षोऽवपीडश्च नस्य प्रधमनन्तथा ।
शिरोविरेचनश्चैव नस्तकर्म्म तु पञ्चधा ॥
ईषदुच्छ्वसनात् स्नेहो यावान् वक्त्र प्रपद्यते ।
नस्ते निषिक्त त विद्यात् प्रतिमर्ष प्रमाणत ॥
प्रतिमर्षेण नस्यार्थं करोति च न दोषभाक् ।
शोधन स्तम्भनञ्च स्यादवपीडो द्विधा मत ॥
अवपीड दीयते यस्मादवपीडस्तत स्मृत ।

"नागोद्भवो नागधनाभिलाषी
वक्रोक्तिशाली नितरां कुशीलः ।
क्रोधाग्निसन्तापितबन्धुवर्गो
भवेदिमः स्यात् किल रङ्गभूमौ ॥"
इति कोष्ठीप्रदीपः ॥

रङ्गसीसकार्थे क्वचित् पुंलिङ्गोऽपि दृश्यते । पाक-हीनयोस्तयोर्दोषो यथा,—
"पाकहीनौ नागवङ्गौ कुष्ठगुल्मरुजाकरौ ।
मेहपाण्डुकरौ वातकफच्छर्द्दिकरौ पुनः ॥"
तयोर्मारणं यथा,—
"अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् ।
स्तपात्रे विद्रुते नागे लौहदर्व्या च चालयेत् ॥
यामैकेन भवेद्भस्म तत्तुल्याञ्च मनःशिलाम् ।
काञ्जिकेन द्वयं पिष्ट्वा पचेद्दृढपुटेन च ॥
स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च ॥
पुनः पुटेच्छरावाभ्यामेवं षड्भिः पुटैर्मृतिः ॥"
नागः सिन्दूरवर्णाभो म्रियते सर्व्वकार्य्यकृत् ।
सतिक्तमधुरो नागो मृतो भवति भस्मसात् ॥
आयुःकीर्त्तिं वीर्य्यवृद्धिं करोति सेवनात् सदा ।
रोगान् हन्ति मृतो नागो वङ्गवद्गुणकारकः ॥"
इति सुखबोधः ॥

नागः, पुं, (नगे भवः । नग+अण् । यद्वा, दंष्ट्र-वलात् विषाग्निनेति । दन्श+"दन्शेर्गो लोपो-दस्य नः ।" उणां ५ । ६१ । गः । अन्तलोपः । दस्य नः । बाहुलकात् नकारस्य ना ।) पन्नगः । (यथा, विष्णुपुराणे । १ । ९ । ९६ ।
"जगृहुश्च विषं नागाः क्षीरोदाब्धिसमुत्थितम् ॥")
हस्ती । (यथा, रघुः । ४ । ८३ ।
"भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥")
क्रूराचारी । मेघः । नागकेशरः । पुन्नागः । नागदन्तकः । मुस्तकः । देहानिलभेदः ।
"उद्गारे नाग इत्युक्तो नीलजीमूतसन्निभः ॥"
इति शारदातिलकटीका ॥
उत्तरपदस्थिते श्रेष्ठः । इति मेदिनी । गे, १० ॥
(सीसकम् ।* अस्योत्पत्तिर्नामानि गुणाश्च । यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु समोच यत् ।
वीर्य्यं जातस्ततो नागः सर्व्वरोगापहो हृणाम् ॥"
"नागस्तु नागशततुल्यबलं ददाति
व्याधिं विनाशयति जीवनमातनोति ।
वह्निं प्रदीपयति कामबलं करोति
मृत्युञ्च नाशयति सन्ततसेवितः सः ॥
पाकेन हीनौ किल वङ्गनागौ
कुष्ठानि गुल्मांश्च तथातिकष्टान् ।
कण्डूप्रमेहानिलसादशोथ-
भगन्दरादीन् कुरुतः प्रयुक्तौ ॥")
ताम्बूली । देशभेदः । इति नानार्थटीकायां भरतः ॥ पर्व्वतविशेषः । (यथा, विष्णुपुराणे । २ । २ । २८ ।
"शङ्खकूटोऽथ ऋषभो हंसो नागस्तथापरः ।
कालञ्जराद्याश्च तथा उत्तरे केसराचलाः ॥")
नगे गिरौ चन्दनादितरौ वा भवः । न गच्छ-तीति अगः न अगः नागः इति वा । तक्षक-कर्कोटप्रभृतिर्देवयोनिर्मनुष्याकारः फणालाङ्गूल-युक्तः । इति भरतः ॥ तत्पर्य्यायः । काद्रवेयः । २ । इत्यमरः । १ । ८ । ४ ॥ नागोत्पत्तिर्यथा,—
"इच्छता ब्रह्मणा सृष्टिं मरीचिः सृतिकारणम् ।
प्रथमं मनसा ध्यातस्तस्य पुत्त्रस्तु कश्यपः ॥
तस्य दाक्षायणी भार्य्या कद्रुर्नाम शुचिस्मिता ।
मारीचो जनयामास तस्यां पुत्त्रान्महाबलान् ॥
अनन्तं वासुकिञ्चैव कम्बलञ्च महाबलम् ।
कर्कोटकञ्च राजेन्द्र ! पद्मं चान्यं सरीसृपम् ॥
महापद्मं तथा शङ्खं कुलिकञ्चापराजितम् ।
एते कश्यपदायादाः प्रधानाः परिकीर्त्तिताः ।
एतेषान्तु प्रसूत्या तु इदमापूरितं जगत् ॥
कुटिलाः हीनकर्म्माणस्तीक्ष्णास्योत्थविषोल्बणाः ।
दृष्ट्या संदह्य मनुजान् भस्म कुर्य्युः षडाद्भुवम् ॥
अहन्यहनि जायेत क्षयः परमदारुणः ॥
शब्दगामी यथा सर्पो मनुष्याणां नराधिप ! ।
आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्व्वाः समन्ततः ।
जग्मुः शरण्यं शरणं परन्तु परमेश्वरम् ॥
इमं सेवार्थमुद्दिश्य प्रजाः सर्व्वा महीपते ! ।
ऊचुः कमलजं देवं पुराणं ब्रह्मसंज्ञितम् ॥
देवा ऊचुः ।
देव देवेश लोकानां प्रकृतिः परमेश्वर ।
त्राहि नस्तीक्ष्णदंष्ट्रेभ्यो भुजङ्गानां महात्मनाम् ॥
अहन्यहनि ये देव ! पश्येयुरुरगा दृशा ।
मनुष्यं मृगयूथं वा तत् सर्व्वं भस्मसाद्भवेत् ॥
त्वया सृष्टिः कृता देव क्षीयते सा भुजङ्गमैः ।
एतज्ज्ञात्वा तु दुर्वृत्तं तत् कुरुष्व महामते ॥
ब्रह्मोवाच ।
अहं रक्षां विधास्यामि भवतीनां न संशयः ।
व्रजध्वं स्वानि धिष्ण्यानि प्रजापालाः सबान्धवाः ॥
एवमुक्ताः प्रजाः तेन ब्रह्मणाव्यक्तजन्मना ।
आगताश्च प्रजास्ताश्च आनाय्य भुजङ्गमान् ॥
शशाप परमक्रुद्धो वासुकिप्रमुखांस्तथा ।
ब्रह्मोवाच ।
यतो मत्प्रभवान्नित्यं क्षयं नयत मानुषान् ॥
भवान्तरे तथान्यस्मिन्मातुः शापात् सुदारुणात् ।
भविताक्षिक्षयो घोरो नूनं स्वायम्भुवान्तरे ॥
एवमुक्तास्तु वेपन्तो ब्रह्मणा भुजगोत्तमाः ।
निपत्य पादयोस्तस्य इदमूचुस्तदा ॥
नागा ऊचुः ।
भगवन् ! कुटिला जातिरस्माकं भवता कृता ।
विषोल्बणत्वं क्रूरत्वं दृक्शस्त्रत्वञ्च ब्रह्मणा ॥
उपशान्तिं त्वया देव इदानीं शमयाच्युत ! ॥
ब्रह्मोवाच ।
यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः ।
ततः किं मनुजान्नित्यं भक्षयध्वं गतघृणाः ॥
नागा ऊचुः ।
मर्य्यादां कुरु देवेश ! स्थानञ्चैव पृथक् पृथक् ।
नागानां वचनं श्रुत्वा देवो वचनमब्रवीत् ॥
अहं करोमि वो नागाः समयं मनुजैः सह ।
तदेकमनसः सर्व्वे शृणुध्वं मम शासनम् ॥
पातालं वितलञ्चैव सुतलाख्यं तृतीयकम् ।
दत्तं वै वसुकामानां गृहं तत्र गमिष्यथ ॥
तत्र भोगान् बहुविधान् भुञ्जध्वं मम शासनात् ।
तिष्ठध्वं सप्तमं यावत्तावदन्तन्ते पुनः पुनः ॥
ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ ।
दायादाः सर्व्वदेवानां सुपर्णस्य च धीमतः ॥
तदा प्रसूतिर्व्वः सर्व्वा भोक्ष्यते चित्रभानुना ।
भवतां नैव दोषोऽयं भविष्यति न संशयः ॥
ये ये क्रूरा भोगिनो दुर्व्विनीता-
स्तेषामन्तो भविता नान्यथैतत् ।
काले प्राप्ते भक्षयध्वं दशध्वं
तथा नरान् चापकृतो मनुष्यान् ॥
मन्त्रौषधैर्गारुडमण्डलैश्च
बद्धैर्दृष्टा मानवा ये चरन्ति ।
तेषां भीतैर्व्वर्त्तितव्यं नचान्य-
च्चिन्त्यं कार्य्यं चान्यथा वो विनाशः ॥
इतीरिते ब्रह्मणा ते भुजङ्गा
जग्मुः स्थानं ब्रह्मणोक्तं हि सर्व्वे ।
तस्थुर्भोगान् भुञ्जमानाः समग्रान्
रसातले लीलया संस्थितास्ते ॥
एवं शापं ते तु लब्ध्वा प्रसादञ्च चतुर्मुखात् ।
तस्थुः पातालनिलये मुदितेनान्तरात्मना ॥
एतत् सर्व्वञ्च पञ्चम्यां तेषां जातं महात्मनाम् ।
अतस्त्वियं तिथिर्धन्या सर्व्वपापहरा शुभा ॥
एतस्यां संयतो यस्तु अम्लन्तु परिवर्ज्जयेत् ।
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ॥"
इति वराहपुराणम् ॥
एषां शिवभूषणत्वप्राप्तिर्यथा,—
"वासुक्याद्याश्च ये सर्पा यथास्थानञ्च ते हरन् ।
भूषयाञ्चक्रुरत्यन्तं शिरोबाह्वादिषु द्रुतम् ॥"
इति कालिकापुराणे शिवविवाहे १८ अः ।
कम्बलाश्वतरनागयोः सरस्वत्या गानवरप्राप्ति-विवरणं यथा,—
"एवं स्तुता तदा देवी विष्णोर्जिह्वा सरस्वती ।
प्रत्युवाच महात्मानं नागमश्वतरं ततः ॥
सरस्वत्युवाच ।
वरन्ते कम्बलभ्रातः ! प्रयच्छाम्युरगाधिप ! ।
वक्ष्यतां प्रदास्यामि यत्ते मनसि वर्त्तते ॥
अश्वतर उवाच ।
सहायं देहि देवि ! त्वं पूर्व्वं कम्बलमेव मे ।
समस्तस्वरसम्बन्धमुभयोः संप्रयच्छ च ॥
सरस्वत्युवाच ।
सप्त स्वरा ग्रामरागाः सप्त पन्नगसत्तम ! ।
गीतकानि च सप्तैव तावतीश्चापि मूर्च्छनाः ॥
तानाश्चैकोनपञ्चाशत्तथा ग्रामत्रयञ्च यत् ।
एतत् सर्व्वं भवान् गाता कम्बलश्चैव ते सखा ॥
ज्ञास्यते मत्प्रसादेन भुजगेन्द्र परन्तथा ।
चतुर्व्विधं पदं तालं त्रिप्रकारं लयत्रयम् ॥
यतित्रयं तथा तोद्यं मया दत्तं चतुर्व्विधम् ॥
एतद्भवान् मत्प्रसादात् पन्नगेन्द्रापरञ्च यत् ।
अस्यान्तर्गतमायत्तं स्वरव्यञ्जनयोश्च यत् ॥
[illegible] मया दत्तं भवतः कम्बलस्य च ।

"नागोद्भवो नागधनाभिलाषी
वक्रोक्तिजाली नितरां कुशीलः ।
क्रोधाग्निसन्तापितबन्धुवर्गो
भर्गोपमः स्यात् किल रङ्गभूमौ ॥"
इति कोष्ठीप्रदीपः ॥

रङ्गसीसकार्थे क्वचित् पुंलिङ्गोऽपि दृश्यते । पाकहीनयोस्तयोर्दोषो यथा,—
"पाकहीनौ नागवङ्गौ कुष्ठगुल्मरुजाकरौ ।
मेहपाण्डुकरौ वातकफघ्नल्लुकरौ पुनः ॥"
तयोर्मारणं यथा,—
"अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् ।
मृत्पात्रे विद्रुते नागे लौहदर्व्या च चालयेत् ॥
यामैकेन भवेद्भस्म तत्तुल्यञ्च मनःशिलाम् ।
काञ्जिकेन द्वयं पिष्ट्वा पचेद्गजपुटेन च ॥
स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च ॥
पुनः पुटेच्छरावाभ्यामेवं षड्भिः पुटैर्मृतिः ॥"
नागः सिन्दूरवर्णाभो म्रियते सर्व्वकार्य्यकृत् ।
वलितुल्यमधुरो नागो मृतो भवति भस्मसात् ॥
आयुःकीर्त्तिं वीर्य्यवृद्धिं करोति सेवनात् सदा ।
रोगान् हन्ति मृतो नागो वङ्गवद्गुणकारकः ॥"
इति सुखबोधः ॥

नागः, पुं, (नगे भवः । नग + अण् । यद्वा, दृशवशात् विषाग्निनेति । दृश + "दृशेर्गो लोपोऽस्य च नः ।" उणां ५ । ६१ । गः । अन्तलोपः । दस्य नः । बाहुलकात् नकारस्य ना ।) पन्नगः । (यथा, विष्णुपुराणे । १ । ६ । ६६ ।
"नगच्छुच्च विषं नागाः क्षीरोदाच्च समुत्थितम् ॥")
हस्ती । (यथा, रघुः । ४ । ८३ ।
"भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥")
क्रूरचारी । मेघः । नागकेशरः । पुन्नागः । नागदन्तकः । मुस्तकः । देहानिलप्रभेदः ।
"उद्गारे नाग इत्युक्तो नीलजीमूतसन्निभः ॥"
इति शारदातिलकटीका ॥
उत्तरपदस्थिते श्रेष्ठः । इति मेदिनी । गे, १० ॥ (सीसकम् । अस्योत्पत्तिर्नामानि गुणाश्च । यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु समोघ यत् ।
वीर्य्यं जातस्ततो नागः सर्व्वरोगापहो त्वयम् ॥"
"नागस्तु नागशततुल्यबलं ददाति
व्याधिं विनाशयति जीवनमातनोति ।
वह्निं प्रदीपयति कामबलं करोति
मृत्युञ्च नाशयति सन्ततसेवितः सः ॥
पाकेन हीनौ किलवङ्गनागौ
कुष्ठानि गुल्मांश्च तथातिकष्टान् ।
कण्डूः प्रमेहानिलसादशोथ-
भगन्दरादीन् कुरुतः प्रयुक्तौ ॥")
ताम्बूली । देशभेदः । इति नानार्थटीकायां भरतः ॥ पर्व्वतविशेषः । (यथा, विष्णुपुराणे । २ । २ । २८ ।
"शङ्खकूटोऽथ ऋषभो हंसो नागस्तथापरः ।
कालाञ्जराद्याश्च तथा उत्तरे केसराचलाः ॥")
नगे गिरौ चन्दनादितरौ वा भवः । न गच्छतीति अगः न अगः नागः इति वा । तच्च कर्कोटप्रभृतिर्देवयोनिर्मनुष्याकारः फणालाङ्गूलयुक्तः । इति भरतः ॥ तत्पर्य्यायः । काद्रवेयः । २ । इत्यमरः । १।८।४ ॥ नागोत्पत्तिर्यथा,—
"सृजता ब्रह्मणा सृष्टिं मरीचिः सूतिकारणम् ।
प्रथमं मनसा ध्यातस्तस्य पुत्त्रस्तु काश्यपः ॥
तस्य दाक्षायणी भार्य्या कद्रुर्नाम शुचिस्मिता ।
मारीचो जनयामास तस्यां पुत्त्रान्महाबलान् ॥
अनन्तं वासुकिञ्चैव कम्बलञ्च महाबलम् ।
कर्कोटकञ्च राजेन्द्र ! पद्मं चान्यं सरीसृपम् ॥
महापद्मं तथा शङ्खं कुलिकञ्चापराजितम् ।
एते काश्यपदायादाः प्रधानाः परिकीर्त्तिताः ।
एतेषान्तु प्रसूत्या तु इदमापूरितं जगत् ॥
कुटिला हीनकर्म्माणस्तीक्ष्णास्योत्थविषोल्बणाः ।
दृष्ट्वा संदश्य मनुजान् भस्म कुर्य्युः क्षणाद्ध्रुवम् ॥
शब्दगामी यथा सर्पो मनुष्याणां नराधिप ! ।
अहन्यहनि जायेत क्षयः परमदारुणः ॥
आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्व्वाः समन्ततः ।
जग्मुः शरण्यं शरणं परन्तु परमेश्वरम् ॥
इमं सेवार्थमुद्दिश्य प्रजाः सर्व्वा महीपते ! ।
ऊचुः कमलजं देवं पुराणं ब्रह्मसंज्ञितम् ॥
देवा ऊचुः ।
देव देवेश लोकानां प्रकृतिः परमेश्वर ।
त्राहि नस्तीक्ष्णदंष्ट्रेभ्यो भुजङ्गानां महात्मनाम् ॥
अहन्यहनि ये देव ! पश्येयुरुरगा इमा ।
मनुष्यं स्वापदं वा तत् सर्व्वं भस्मसाद्भवेत् ॥
त्वया सृष्टिः कृता देव नीयते सा भुजङ्गमैः ।
एतज्ज्ञात्वा तु दुर्व्वृत्तं तत् कुरुष्व महामते ॥
ब्रह्मोवाच ।
अहं रक्षां विधास्यामि भवतीनां न संशयः ।
व्रजध्वं स्वानि धिष्ण्यानि प्रजापालाः सबान्धवाः ॥
एवमुक्ताः प्रजास्तेन ब्रह्मणाव्यक्तमूर्त्तिना ।
आगतास्तु प्रजास्तावदकानाहूय भुजङ्गमान् ॥
शशाप परमक्रुद्धो वासुकिप्रमुखांस्तथा ।
ब्रह्मोवाच ।
यतो मत्प्रभवानित्थं क्षयं नयत मानुषान् ॥
भवान्तरे तथान्यस्मिन्मातुः शापात् सुदारुणात् ।
भवितातिक्षयो घोरो नूनं स्वायम्भुवान्तरे ॥
एवमुक्तास्तु वेपन्तो ब्रह्मणा भुजगोत्तमाः ।
निपत्य पादयोस्तस्य इदमूचुर्व्वचस्तदा ॥
नागा ऊचुः ।
भगवन् ! कुटिला जातिरस्माकं भवता कृता ।
विषोल्बणत्वं क्रूरत्वं दृक्शस्त्रत्वञ्च जन्मना ॥
सम्पादितं त्वया देव इदानीं शमयाच्युत ! ॥
ब्रह्मोवाच ।
यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः ।
ततः किं मनुजानित्थं भक्षयध्वं शतशो यथा ॥
नागा ऊचुः ।
मर्य्यादां कुरु देवेश ! स्थानञ्चैव पृथक् पृथक् ।
नागानां वचनं श्रुत्वा देवो वचनमब्रवीत् ॥
अहं करोमि वो नागाः समयं मनुजैः सह ।
तदेकमनसः सर्व्वे शृणुध्वं मम शासनम् ॥
पातालं वितलञ्चैव सुतलाख्यं तृतीयकम् ।
दत्तं वै वसुकाभानां गृहं तत्र गमिष्यथ ॥
तत्र भोगान् बहुविधान् भुञ्जध्वं मम शासनात् ।
तिष्ठध्वं सप्तमं यावन्मन्वन्तरं पुनः पुनः ॥
ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ ।
दायादाः सर्व्वदेवानां सुपर्णस्य च धीमतः ॥
तदा प्रसूतिर्व्वः सर्व्वा भोक्ष्यते चित्रभानुना ।
भवतां नैव दोषोऽयं भविष्यति न संशयः ॥
ये वै क्रूरा भोगिनो दुर्व्विनीता-
स्तेषामन्तो भविता नान्यथैतत् ।
काले प्राप्ते भक्षयध्वं दशध्वं
तथा नरान् चापकृतो मनुष्यान् ॥
मन्त्रौषधैर्गारुडमण्डलैश्च
बद्धैर्दृष्टा मानवा ये चरन्ति ।
तेषां भीतैर्व्वर्त्तितव्यं नचान्य-
च्चिन्त्यं कार्य्यं चान्यथा वो विनाशः ॥
इतीरिते ब्रह्मणा ते भुजङ्गा
जग्मुः स्थानं क्ष्मातलाख्यं हि सर्व्वे ।
तस्थुर्भोगान् भुञ्जमानाः समग्रान्
रसातले लीलया संस्थितास्ते ॥
एवं शापं ते तु लब्ध्वा प्रसादञ्च चतुर्मुखात् ।
तस्थुः पातालनिलये मुदितेनान्तरात्मना ॥
एतत् सर्व्वञ्च पञ्चम्यां तेषां जातं महात्मनाम् ।
अतस्त्वियं तिथिर्धन्या सर्व्वपापहरा शुभा ॥
एतस्यां संयतो यस्तु अम्लन्तु परिवर्ज्जयेत् ।
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ॥"
इति वराहपुराणम् ॥

एषां शिवभूषणप्रमाणं यथा,—
"वासुक्याद्याश्च ये सर्पा यथास्थानञ्च ते हरन् ।
भूषयाञ्चक्रुरत्यन्तं शिरोबाह्वादिषु द्रुतम् ॥"
इति कालिकापुराणे शिवविवाहे १८ अः ।

कम्बलाश्वतरनागयोः सरस्वत्या गानवरप्राप्तिविवरणं यथा,—
"एवं स्तुता तदा देवी विष्णोर्जिह्वा सरस्वती ।
प्रत्युवाच महात्मानं नागमश्वतरं ततः ॥
सरस्वत्युवाच ।
वरन्ते कम्बलभ्रातः ! प्रयच्छाम्युरगाधिप ! ।
तदुच्यतां प्रदास्यामि यत्ते मनसि वर्त्तते ॥
अश्वतर उवाच ।
सहायं देहि देवि ! त्वं पूर्व्वं कम्बलमेव मे ।
समस्तस्वरसम्बन्धमुभयोः संप्रयच्छ च ॥
सरस्वत्युवाच ।
सप्त स्वरा ग्रामरागाः सप्त पन्नगसत्तम ! ।
गीतकानि च सप्तैव तावतीश्चापि मूर्च्छनाः ॥
तानाश्चैकोनपञ्चाशत्तथा ग्रामत्रयञ्च यत् ।
एतत् सर्व्वं भवान् गाता कम्बलश्चैव ते सखा ॥
ज्ञास्यते मत्प्रसादेन भुजङ्गेन्द्र परन्तप ।
चतुर्व्विधं पदं तालं त्रिप्रकारं लयत्रयम् ॥
यतित्रयं तथा तोद्यं मया दत्तं चतुर्व्विधम् ॥
एतद्भवान् मत्प्रसादात् पन्नगेन्द्रापरञ्च यत् ।
अस्यान्तर्गतमायत्तं स्वरव्यञ्जनयोश्च यत् ॥
तदशेषं मया दत्तं भवतः कम्बलस्य च ।

वरिष्ठः १२। अस्य गुणाः। मधुरत्वम्। अम्लत्वम्। गुरुत्वम्। उष्णत्वम्। रोचनत्वम्। वातामदाग्निशूलश्रमनाशित्वम्। बल्यत्वम्। रुच्यत्वञ्च। इति राजनिर्घण्टः॥ तत्केशरगुणाः।
"अत्यम्लमीषन्मधुरं हृद्यं वातविनाशनम्।
रुच्यं वातहरञ्चैव नागरङ्गस्य केशरम्॥"
इति राजवल्लभः॥

नारदः, पुं, (नारं परमात्मविषयकं ज्ञानं ददातीति। दा+कः। यद्वा, नारं नरसमूहं द्यति खण्डयति कलहेनेति। दो+कः। नारं जलं ददाति पितृभ्य इति वा। तदुक्तम्,—
"नारं पानीयमित्युक्तं तत् पितृभ्यः सदा भवान्।
ददाति तेन ते नाम नारदेति भविष्यति॥")
देवर्षिविशेषः। स तु भोगाशी ब्रह्मशापादुपबर्हणनामा गन्धर्व्वो भूत्वा पुनर्ब्रह्मवीर्य्यात् शूद्रपत्न्यां जातः। यथा,—
शौनक उवाच।
"ब्रह्मवीर्य्याच्छूद्रपत्न्यां गन्धर्व्वश्चोपवर्हणः।
जातः केन प्रकारेण तद्भवान् वक्तुमर्हति॥
सौतिरुवाच।
कान्यकुब्जे च देशे च द्रुमिलो गोपराजकः।
कलावती तस्य पत्नी वन्ध्या चापि पतिव्रता॥
स्वामिदोषेण सा वन्ध्या काले च भर्त्तुराज्ञया।
उपस्थितं वने घोरे नारदं काश्यपं मुनिम्॥
शोभमानञ्च शीघ्राग्निं ज्वलन्तं ब्रह्मवर्च्चसा।
तस्थौ सुवेशं कृत्वा सा ध्यानगतस्य मुनेः पुरः॥
उवाच विनयेनैव कृत्वा च श्रीहरिं हृदि।
गोपिकाहं द्विजश्रेष्ठ! द्रुमिलस्य च कामिनी।
पुत्त्रार्थिनी चागताहं तन्मूलं भर्त्तुराज्ञया॥
वीर्य्याधानं कुरु मयि! स्त्री नोपेक्ष्या ह्युपस्थिता।
तेजीयसां न दोषाय वह्निः सर्व्वभुजो यथा॥
वृषलीवचनं श्रुत्वा चुकोप मुनिपुङ्गवः।
वृषली तत्पुरस्तस्थौ शुष्ककण्ठौष्ठतालुका॥
एतस्मिन्नन्तरे तेन पथा याश्यति मेनका।
तस्या ऊरुस्थलं दृष्ट्वा मुनिवीर्य्यं पपात ह॥
ऋतुस्नाता च वृषली कृत्वा तद्भक्षणं मुदा।
सा विप्र! गेहे वाड्वी च सुषुवे तनयं वरम्॥
तप्तकाञ्चनवर्णाभं ज्वलन्तं ब्रह्मतेजसा।
अनावृष्टिप्रदेशे च काले बालो बभूव ह॥
नारं ददौ जन्मकाले तेनायं नारदाभिधः॥
ददाति नारं ज्ञानञ्च बालकेभ्यश्च बालकः।
जातिस्मरो महाज्ञानी तेनायं नारदाभिधः॥
वीर्य्येण नारदस्यैव बभूव बालको मुने!।
मुनीन्द्रस्य वरेणैव तेनायं नारदाभिधः॥
कल्पान्तरे ब्रह्मकण्ठाद्बभूवुर्वैष्णवा नराः।
नरान्ददौ तत्कण्ठश्च तेन स नारदः स्मृतः॥
ततो बभूव कालश्च नारदात् कण्ठदेशतः।
ततो ब्रह्मा नाम चक्रे नारदश्चेति मङ्गलम्॥
एतस्मिन्नन्तरे विप्रा आययुर्विप्र मन्दिरम्।
शिशवः पञ्चवर्षीया महातेजस्विनो यथा॥
चतुर्थ्येको मुनिस्तस्मै ब्राह्मणाश्च कृपालवः।
मन्त्रपूतं शिशुं मत्वा विष्णुमन्त्रं ददौ मुदा॥
महाज्ञानी शिशुस्तस्थौ गङ्गातीरे मनोहरे।
तत्र स्नात्वा विप्रदत्तं विष्णुमन्त्रं जजाप सः॥
दिव्यं वर्षसहस्रञ्च निराहारः कृशोदरः।
ददर्श बालको ध्याने दिव्यं लोकञ्च बालकम्॥
द्विभुजं मुरलीहस्तञ्चन्दनेन विचर्च्चितम्।
विरराम च शोकार्त्तो यदा यद्दृष्टमद्भुतम्॥
हृदीदाश्वत्थमूले च न दृष्ट्वा बालकं शिशुः।
बभूवाकाशवाणीति वदन्तं बालकं प्रति॥
यत्त्वद्यदर्शितं रूपं तदेव नाधुना पुनः।
पुनर्द्रक्ष्यसि गोविन्दं जन्मान्तरे हरिम्॥
इति श्रुत्वा बालकश्च विरराम मुदान्वितः।
काले तत्याज तीर्थे च तनुं कृष्णं हृदि स्मरन्॥
बभूव शापमुक्तिश्च नारदस्य महामुने!।
तनुं त्यक्त्वा स जीवश्च विलीनो ब्रह्मविग्रहे॥
कतिकल्पान्तरेऽतीते स्रष्टुं सृष्टिविधौ पुनः।
मरीचिमिश्रैर्मुनिभिः सार्द्धं कण्ठाद्बभूव सः॥
नारदश्चेति विख्यातो मुनीन्द्रस्तेन हेतुना॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे २१—२२ अध्यायौ॥
तस्य सर्व्वदा भ्रमणकारणं यथा,—
"तांश्चापि नष्टान् विज्ञाय पुत्त्रान् दक्षप्रजापतिः।
क्रोधञ्चक्रे महाभाग! नारदं स शशाप च॥"
नारदशापश्च श्रीभागवतोक्तः।
"तस्माल्लोकेषु ते मूढ़ न भवेद्भ्रमतः पदम्।"
इति विष्णुपुराणे १ अंशे १५ अध्यायस्तट्टीका च॥ (पञ्चविंशतिसहस्रश्लोकात्मक उपपुराणविशेषः। यथा, देवीभागवते। १। ३। ६।
"षोडशैव सहस्राणि पुराणञ्चाग्निसंज्ञितम्।
पञ्चविंशतिसाहस्रं नारदं परमं मतम्॥"
शाकद्वीपस्य पर्व्वतविशेषः। यथा, मात्स्ये। १२१। ११।
"नारदो नाम चैवोक्तो दुर्गशैलो महाचितः।
तत्राचले समुत्पन्नौ पूर्व्वं नारदपर्व्वतौ॥"
विश्वामित्रपुत्त्रविशेषः। यथा, महाभारते। १३। ४। ५८।
"उर्ज्जयोनिरुदापेक्षी नारदश्च महानृषिः।
विश्वामित्रात्मजाः सर्व्वे मुनयो ब्रह्मवादिनः॥")

नारा, स्त्री, (नरस्य मुनेरियम्। नर+"तस्येदम्।" ४। ३। १२०। इति अण्। ततष्टाप्। "यद्यपि अणि कृते ङीप्प्रत्ययः प्राप्तस्तथापि छान्दसलक्षणैरपि स्मृतिषु व्यवहारात् सर्व्वे विधयश्छन्दसि विकल्प्यन्ते इति पाक्षिको ङीप्प्रत्ययः। तस्याभावपक्षे सामान्यलक्षणप्राप्ते टापि कृते नारा इति रूपसिद्धिः।" इति मनुसंहिताटीकायां कुल्लूकभट्टः।१।१०।) जलम्। इति शब्दरत्नावली॥ (यथा, मनुः। १। १०।
"आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
ता यदस्यायनं पूर्व्वं तेन नारायणः स्मृतः॥")

नाराचः, पुं, (नारं नरसमूहं आचामतीति। चमु अदने+"अन्येष्वपि दृश्यते।" ३।२।१०१। इति डः।) समुदायलौहमयबाणः। तत्पर्य्यायः। प्रक्ष्वेडनः २। इत्यमरः। २। ८। ८७॥ लौहनालः ३। इति शब्दरत्नावली॥ (यथा, वृहच्छार्ङ्गधरे।
"सर्व्वलौहास्तु ये बाणा नाराचास्ते प्रकीर्त्तिताः।
पञ्चभिः पृथुलैः पक्षैर्युक्ताः सिध्यन्ति कस्यचित्॥")
दुर्दिनम्। इति शब्दमाला॥ (अष्टादशाक्षरवृत्तिविशेषः। इति छन्दोमञ्जरी॥ अस्य लक्षणादिकं छन्दःशब्दे द्रष्टव्यम्॥ वैद्यकोक्तघृतविशेषः। यथा, भावप्रकाशे उदररोगाधिकारे।
"स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग-
सिंहीत्रिवृच्चित्रकसर्षपाख्यैः।
घृतं विपक्वं कुडवप्रमाणं
तोयेन तस्याक्षसमेन कर्षम्॥
पीतोष्णमम्भोऽनुपिबेद्विरेके
पेयं रसं वा प्रपिबेद्विधिज्ञः।
नाराचमेनं जठरामयानां
युक्तं प्रयुक्तं प्रवदन्ति सन्तः॥"
इति नाराचघृतम्॥ * ॥)

नाराचिका, स्त्री, (नाराचस्तदाकारोऽस्त्यस्या इति। नाराच+ठन्। टाप्।) नाराची। इति शब्दरत्नावली॥ (अष्टाक्षरवृत्तिविशेषः। तल्लक्षणं यथा,—
"नाराचिका तरौ लगौ॥")

नाराची, स्त्री, (नाराचवदाकृतिरस्त्यस्या इति। अच्। गौरादित्वात् ङीष्।) स्वर्णकारादीनां नाराचाकृतिलौहतुला। निक्ति इति भाषा। तत्पर्य्यायः। नाराचिका २ एषणिका ३ एषणी ४। इति शब्दरत्नावली॥

नारायणः, पुं, (नारा जलं अयनं स्थानं यस्य। अय गतौ+भावे ल्युट्। सर्व्वे गत्यर्थाः प्राप्त्यर्थाश्च इति नियमात् नारस्य ज्ञानस्य मुक्तेर्वा अयनं प्राप्तिर्यस्मात् इति वा। "नराणां समूहो नारं तत्रायनं स्थानं यस्य नारायणः रेफात् परनकारस्य णत्वविधानात् सर्व्वप्राणिबुद्धिगुहानिवासाच्छुद्धचैतन्यमित्यर्थः।" इति शङ्करविजये नवमप्रकरणम्।) विष्णुः। तस्य चत्वारो व्यूहाः। वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्याः। इति महाभारतम्॥ वेदान्तमते। शुद्धान्तर्य्यामिहिरण्यगर्भविराडाख्याः॥ तन्नामव्युत्पत्तिर्यथा,—
"सारूप्यमुक्तिवचनो नारेति च विदुर्बुधाः।
यो देवोऽप्ययनं तस्य स च नारायणः स्मृतः॥
नाराश्च कृतपापाश्चाप्ययनं गमनं स्मृतम्।
यतो हि गमनं तेषां सोऽयं नारायणः स्मृतः॥
नारञ्च मोक्षणं पुण्यमयनं ज्ञानमीप्सितम्।
तयोर्ज्ञानं भवेद्यस्मात् सोऽयं नारायणः स्मृतः॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०६ अः॥
"आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः॥"
इति विष्णुपुराणम्॥
यद्वा।
"नराणामानि तत्त्वानि नाराणीति विदुर्बुधाः।
तान्येव चायनं तस्य तेन नारायणः स्मृतः॥"

( यथा च साहित्यदर्पणे । ३ । ६५—८१ ।
'अथ नायिका त्रिभेदा स्वान्या साधारणस्त्रीति।
नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥
विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया।
सापि कथिता त्रिविधा मुग्धा मध्या प्रगल्भेति॥
प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥
मध्या विचित्रसुरता प्ररूढ़स्मरयौवना।
ईषत्प्रगल्भवचना मध्यमव्रीड़िता मता ॥
स्मरान्धा गाढ़तारुण्या समस्तरतकोविदा।
भावोन्नता दरव्रीड़ा प्रगल्भाक्रान्तनायका ॥
ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे।
प्रिय सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा ॥
धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ।
प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ॥
उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहि ।
धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम् ॥
तत्र ज्येष्ठाकनिष्ठत्वात् प्रत्येक ता अपि द्विधा।
कनिष्ठज्येष्ठरूपत्वान्नायकप्रणय प्रति ॥
मध्याप्रगल्भयोर्भेदास्तस्माद् द्वादश कीर्त्तिता।
मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥
परकीया द्विधा प्रोक्ता परोढ़ा कन्यका तथा।
यात्रादिनिरताऽन्योढ़ा कुलटा गलितत्रपा ॥
कन्या त्वजातोपयमा सलज्जा नवयौवना।
धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥
निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि।
वित्तमात्र समालोक्य सा राग दर्शयेद् बहि ॥
काममङ्गीकृतमपि परिक्षीणधन नरम्।
मात्रा निष्कासयेदेषा पुन सन्धानकाङ्क्षया ॥
तस्करा पण्डका मूर्खा सुखप्राप्तधनास्तथा।
लिङ्गिनश्छन्नकामाद्या आसा प्रायेण वल्लभा ॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणी।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥
अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिता ।
स्वाधीनभर्तृका तद्वत् खण्डिताऽथाभिसारिका ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥
कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम्।
विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्तृका॥
पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नित ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥
अभिसारयते कान्त या मन्मथवशंवदा।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका ॥
संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा।
अवगुण्ठनसंवीता कुलजाऽभिसरेद् यदि ॥
विचित्रोज्ज्वलवेशा तु रणन्नूपुरकङ्कणा।
प्रमोदस्मेरवदना स्याद् वेश्याऽभिसरेद् यदि ॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना।
आविद्धगतिसञ्चारा स्यात् प्रेष्याभिसरेद् यदि॥
क्षेत्र वाटी भग्नदेवालयो दूतीगृह वनम्।
मालयञ्च श्मशानञ्च नद्यादीनां तटी तथा।
एवं कृताभिसाराणां पुंश्चलीनां विनोदने।
स्थानान्यष्टौ तथा ध्वान्तच्छन्ने कुत्रचिदाश्रय ॥
चाटुकारमपि प्राणनाथ रोषादपास्य या।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥
प्रियः कृत्वापि सङ्केत यस्या नायाति सन्निधिम्।
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ॥
नानाकार्यवशाद् यस्या दूरदेश गत पतिः ।
सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्तृका ॥
कुरुते मण्डन यस्याः सज्जिते वासवेश्मनि।
सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा ॥
आगन्तु कृतचित्तोऽपि दैवान्नायाति यत्प्रियः।
तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा ॥
इति साष्टाविंशतिशतमुत्तममध्यमाधमस्वरूपत ।
चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदानां
स्यात् ॥
क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते।
इतरा अप्यसंख्यास्ता नोक्ता विस्तरशङ्कया ॥"
एतासामुदाहरणानि तत्रैव विस्तरशो द्रष्टव्यानि॥
अथासामलङ्काराः । यथा तत्रैव । ३ । ८४ ।
'यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यका ।
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजा ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यञ्च प्रगल्भता।
औदार्य्य धैर्य्यमित्येते सप्तैव स्युरयत्नजाः ॥
लीलाविलासो विच्छित्तिर्विब्बोकः किलकिञ्चितम्।
मोट्टायित कुट्टमित विभ्रमो ललित मद ॥
विहृत तपन मौग्ध्य विक्षेपश्च कुतूहलम्।
हसित चकित केलिरित्यष्टादशसंख्यका ।
स्वभावजाश्च भावाद्या दश पुंसा भवन्त्यपि ॥'
अथ मुग्धाकन्ययोरनुरागेङ्गितानि । यथा,
तत्रैव । ३ । १२३ ।
'दृष्ट्वा दर्शयति व्रीडां सम्मुखे नैव पश्यति।
प्रच्छन्न वा भ्रमन्त वा तिक्रान्त पश्यति प्रियम्॥
बहुधा पृच्छ्यमानापि मन्दमन्दमधोमुखी।
सगद्गदस्वर किञ्चित् प्रिय प्रायेण भाषते ॥
अन्यै प्रवर्त्तितां शश्वत् सावधाना च तत्कथाम्।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥'
अथ सकलानामपि नायिकानामनुरागेङ्गितानि।
यथा तत्रैव । ३ । १२४—१२५ ।
'चिराय सविधे स्थान प्रियस्य बहु मन्यते ।
विलोचनपथञ्चास्य न गच्छत्यनलङ्कृता ॥
क्वापि कुन्तलसव्यानसंयमव्यपदेशत ।
बाहुमूल स्तनौ नाभिपङ्कज दर्शयेत् स्फुटम् ॥
आच्छादयति वाग्भि प्रियस्य परिचारकान्।
विश्वसित्यस्य मित्रेषु बहुमान करोति च ॥
सखीमध्ये गुणान् ब्रूते स्वधन प्रददाति च।
सुप्ते स्वपिति दुःखेऽस्य दुःख धत्ते सुखे सुखम् ॥
स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरत ।
आभाषते परिजन सम्मुखे स्मरविक्रियम् ॥
यत् किञ्चिदपि सवीक्ष्य कुरुते हसित सुधा।
कर्णकण्डूयन तद्वत् कबरीमोक्षसंयमौ ॥
जृम्भते स्फोटयत्यङ्ग बालमाश्लिष्य चुम्बति।
भाले तथा वयस्याया आरचयेत् तिलकक्रियाम् ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्ष ...
दशति स्वाधरं चापि ब्रूते
न स्पृशति च तं दृष्ट्वा नायको यत्र
आगच्छति यदं चास्य कार्य्याण्येन
दत्त किमपि कान्तेन धृत्वाङ्गे
नित्य स्वपिति तद्योगे वियोगे मलिना
मन्यते बहु तच्छील तत्प्रियं मन्यते
प्रार्थयतेऽल्पमूल्यानि सुप्ता न
विकारान् सात्त्विकानस्य सम्मुखी
भाषते सूनृत स्निग्धमनुरक्ता नितां
एतेष्वधिकलज्जानि चेष्टितानि
मध्यव्रीडानि मध्याया
अन्यस्त्रियाः प्रगल्भायास्तथा
सेष्यप्रसाधने
दूतीधर्म्मे धर्म्मोऽस्या भावा
कस्तूरीविशेषः । यथा राजनिर्घण्टे ।
'पूर्णेन्दुतिलकं नलिका तिलका
कोलस्थवीणबद्धश्री च कुलस्थिकाख्या ।
स्थूला यस्तु कियदिव किञ्च पिच्छिका
तस्याश्च किञ्चिदधिकापि च नायिकैषा
नार, क्ली (नराणां समूह । नर
अण् ।) नरसमूह । इति
खेदमिति । नर + "तस्येदम् ।" ४ । ३
इत्यण् ।) नरसम्बन्धिनि, त्रि । यथा
"मलमूत्रपुरीषास्थिनिर्गत स्नुचि
नार स्पृष्ट्वा तु सचैलं स्नायात्
इति
नार पुं (नरस्यायमिति । नर +
तस्येदम् । जलम् । इति मेदिनी । रे,
नारक, पुं (नरक एव । प्रज्ञाद्यण् ।)
(नरके भव । 'तत्र भव ।" ४।३।५३।
नरकस्थप्राणिनि, त्रि । इत्यमर । १ ।
(यथा मार्कण्डेये । १५ । ७१ ।
"अनुकम्पामिमामद्य नारकेष्विह ...
तदेव प्रतसाहस मन्यासुपगत तव
नारकी [न्] त्रि, (नरको
ऽस्तीति । नरक + इनि ।) नरकस्थ ।
"परेण विहित कर्म्म स्वकर्म्मेति
स उच्यते ब्रह्मघाती
इति बृहद्धर्म्मपुराणे उत्तरखण्डे ७८
नारकीट पुं व्यर्थकीट । (
कीट इव तुच्छत्वात् ।)
इति मेदिनी । टे ६२ ॥
नारङ्ग क्ली (नृणातीति । नॄ नये
अङ्गच् धातोर्वृद्धिश्च । इत्युज्ज्वलदत्त ।
गज्जरम् । इति राजनिर्घण्ट ।
नारङ्ग, पुं (नॄ नये + अङ्गच् । वृद्धिश्च ।)
रस । यमजप्राणी । विट । इति
३९ ॥ फलवृक्षविशेष । नारङ्गी इति
तत्पर्य्याय । नागरङ्ग २ सुरङ्ग
ऐरावत ५ वक्त्रवास ६ योगरङ्ग
रङ्ग ८ सुरङ्ग ९ गन्धाढ्य १०

तथा ।

"यच्च किञ्चिज्जगत् सर्व्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्ब्बहिश्च तत् सर्व्वं व्याप्य नारायण-
स्थित ॥"

तथा ।

'प्रकृतेः परं एवाद्य स नरः पञ्चविंशकः ।
तस्येमानि च भूतानि नाराणीति प्रचक्षते ॥
तेषामयनं यस्मात्तस्मान्नारायणः स्मृतः ॥"
कश्चिन्मन्वन्तरे नरनामऋषेरपत्यतां गत इति
नारायणः । इत्यमरटीकायां भरत ॥ * ॥
("नराणामयनाच्चापि ततो नारायणः स्मृतः ॥"
इति महाभारते । ५ । ७० । १० ॥)

अस्य स्वरूपो यथा,—

'श्रीकृष्णश्च द्विधारूपो द्विभुजश्च चतुर्भुजः ।
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम् ॥
चतुर्भुजस्य पत्नी च महालक्ष्मीः सरस्वती ।
गङ्गा च तुलसी चैव देवी नारायणप्रिया ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६४ अध्यायः ॥

तस्य ध्यानं यथा,—

"ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥"
इत्यादिब्रह्मस्तवम् ॥

अपि च ।

'शङ्खचक्रगदापद्मधरं कमललोचनम् ।
शुद्धस्फटिकसङ्काशं क्वचिन्नीलाम्बुजच्छविम् ॥
गरुडोपरि शुक्लाजपद्माक्षगतं हरिम् ।
श्रीवत्सवक्षसं प्रान्तं वनमालाधरं परम् ॥
केयूरकुण्डलधरं किरीटमुकुटोज्ज्वलम् ।
निराकारं ज्ञानगम्यं साकारं रूपधारिणम् ॥
नित्यानन्दं निरानन्दं व्योममण्डलमध्यगम् ।
मन्त्रेणानेन देवेशं विष्णुं भज शुभानने ॥'
इति कालिकापुराणे ८२ अध्यायः ॥

तन्नाममाहात्म्यं यथा,—

"नारायणाच्युतानन्तवासुदेवेति यो नरः ।
सततं कीर्त्तयेत् भूमे ! याति मल्लयतां प्रिये ! ॥"
इति वराहपुराणम् ॥

"सकृन्नारायणेत्युक्त्वा पुमान् कल्पशतत्रयम् ।
गङ्गादिसर्व्वतीर्थेषु स्नातो भवति निश्चितम् ॥
इति श्रीब्रह्मवैवर्त्ते ब्रह्मखण्डे १०६ अध्यायः ॥

'नारायणेति शब्दोऽस्ति वागस्ति वशवर्त्तिनी ।
तथापि नरके मूढाः पतन्तीति किमद्भुतम् ॥'
इति महाभारतम् ॥

तस्य तुष्टिजनककर्म्माणि यथा —

श्रीकृष्ण उवाच ।

'कर्म्मणा येन विप्रेन्द्र ! तुष्टिर्मे हृदि जायते ।
क्रोधञ्च तत समस्तं ते कथयामि समासतः ॥
या दयायुग्विजश्रेष्ठ ! सर्व्वभूतेषु सर्व्वदा ।
अहङ्कारेण हीनञ्च तस्य तुष्टोऽस्म्यहं सदा ॥
कर्म्म कुर्य्यात्सदा यो धर्म्मं भक्तिसमन्वितः ।
अत्र यथार्थं रञ्जकः तस्य तुष्टोऽस्म्यहं सदा ॥
मिष्टं वस्तु समासाद्य दत्त्वा मे योऽत्ति मानवः ।
मानापमानसद्भक्तस्तस्य तुष्टोऽस्म्यहं सदा ॥
सर्व्वभूतशरीरस्थं यो मां जानाति मानवः ।
परहिंसाविहीनो यस्तस्य तुष्टोऽस्म्यहं सदा ॥
कर्म्माणि कुरुते यस्तु सुविचार्य्य पुनः पुनः ।
गोब्राह्मणहितैषी च तस्य तुष्टोऽस्म्यहं सदा ॥
स्वयं निरक्तं वचनं यत्नाद् यः परिपालयेत् ।
प्रपन्नं पाति यत्नाद्यस्तस्य तुष्टोऽस्म्यहं सदा ॥
दानान्यनुपकारिभ्यो यो ददाति द्विजोत्तम ! ।
मयि चित्तं सदा यस्य तस्य तुष्टोऽस्म्यहं सदा ॥
कर्म्मणा येन तुष्टोऽस्मि निरुक्तं तत् समासतः ॥"

तस्य रोषजनककर्म्माणि यथा —

"रुष्टोऽस्मि कर्म्मणा येन विप्र ! वच्मि शृणुष्व
तत् ॥
परहिंसारतो यस्तु निर्द्दयः सर्व्वजन्तुषु ।
अहङ्कारः सर्व्वदा क्रुद्धः स मां नयति प्रक्रुताम् ॥
असत्यभाषी क्रूरश्च परनिन्दापरस्तु यः ।
परवर्त्मनविध्वंसी स मां नयति प्रक्रुताम् ॥
अदुष्टदोषौ पितरौ स्त्रीभ्रातृभगिनीस्तथा ।
मोहात्त्यजति मूढो यः स मां नयति प्रक्रुताम् ॥
पितृनिभर्त्सनं यस्तु कुरुते मूढधीर्नरः ।
गुर्व्वज्ञाश्च विप्रेन्द्र ! स मां नयति प्रक्रुताम् ॥
दम्पत्योर्भेदनं यस्तु दत्तुमाश्रित्य केनचित् ।
कुरुते ब्राह्मणश्रेष्ठ ! स मां नयति प्रक्रुताम् ॥
विप्रस्य देवतादेश्च परद्रव्यञ्च मानवः ।
हरते यस्तु विप्रेन्द्र ! स मां नयति प्रक्रुताम् ॥
आरामच्छेदिनो ये च जलाशयविलोपिनः ।
ग्रामनाशकरा ये च तेषां रुष्टोऽस्म्यहं सदा ॥
परस्त्रियं समालोक्य विषादं यान्ति ये जनाः ।
प्रचलन्ति पापचर्य्यां ये तेषां रुष्टोऽस्म्यहं सदा ॥
द्विषन्त्यनाथं ये मूढा अनाथस्वं हरन्ति ये ।
विश्वासघातिनो ये च तेषां रुष्टोऽस्म्यहं सदा ॥
यश्च गोवीर्य्यहन्तारो वृषलीपतयश्च ये ।
अश्वत्थघातिनो ये च तेषां रुष्टोऽस्म्यहं सदा ॥
ब्रह्मविष्णुमहेशानां मध्ये ये भेदकारिणः ।
वेदनिन्दाकरा ये च तेषां रुष्टोऽस्म्यहं सदा ॥
एकादश्यां भुञ्जते ये मोहात् पापधियो नराः ।
परदारानुरक्ता ये तेषां रुष्टोऽस्म्यहं सदा ॥
पापबुद्धिप्रदा ये च ये च मित्रद्रुहो द्विज ! ।
धार्म्मिकश्च ये सन्ति तेषां रुष्टोऽस्म्यहं सदा ॥
दिवसे मैथुनं ये च कुर्व्वते काममोहिताः ।
रजस्वलां स्त्रियं यान्ति तेषां रुष्टोऽस्म्यहं सदा ॥
ये च दुष्टातुरां नारीं मोहादृच्छन्ति सत्तम ! ।
व्रतस्थाश्च सदा ते मां नयन्ति प्रक्रुतां भुवि ॥
अमावास्यातिथौ ये च कुर्व्वते निशिभोजनम् ।
भोजनद्वयमकार्षुः तेषां रुष्टोऽस्म्यहं सदा ॥
आमिषं मैथुनं तैलममावास्यादिने द्विजाः ।
न ये त्यजन्ति विप्रेन्द्र ! तेषां रुष्टोऽस्म्यहं सदा ॥
वर्द्धनाम्ना किशुकेन सचेपात्तं सदाम्यहम् ।
निन्दन्ति वैष्णवान् ये च तेषां रुष्टोऽस्म्यहं
सदा ॥"
इति क्रियायोगसारे १८ अध्यायः ॥

अजामिलपुत्त्र । यथा,—
"कान्यकुब्जे द्विजः कश्चिद्दासीपति
नाम्ना नष्टसदाचारो दास्या
तस्य प्रवयसः पुत्त्रा दश
बालो नारायणो नाम्ना पित्रोश्च
दूरे क्रीडनकासक्तं पुत्त्रं
प्लावितेन
निशम्य म्रियमाणस्य मुखतो
भर्त्तुर्नाम महाराज ।

यमप्रेष्यान् विष्णुदूता
इति श्रीभागवते षष्ठस्कन्धे

सैन्यविशेष । यथा,—
"मत्संहननतुल्यानां
नारायणा इति ख्याताः सर्व्वे
"दुर्य्योधनश्च तत
सहस्राणां सहस्रश
इति महाभारते । ५ । ७

धर्म्मपुत्त्रर्षिविशेष । यथा,—
"धर्म्मस्य दक्षदुहितर्य्यजनिष्ट
नारायणो नर इति स्वतप
इति श्रीभागवते । २ ।

"दण्डग्रहणमात्रेण नरो नारायणो
।
(
मुक्तिकोपनिषदि ।
"गर्भो नारायणो हरेः
चूर्णौषधिविशेष । यथा,
रोगाधिकारे ।
"यवानी हपुषा धान्य
कारवी पिप्पलीमूलमजगन्धा शटी
शताह्वा जीरको चोव स्वर्णक्षीरी
द्वौ क्षारौ पौष्करं मूलं कुष्ठं
विडङ्गञ्च समांशानि दन्त्या
त्रिवृद्विशाले द्विगुणे सातला
एष नारायणो नाम्ना चूर्णो रोग
एन प्राप्य निवर्त्तन्ते रोगाः
तक्रेणोदरिभिः पेयो गुल्मि
आनद्धवाते सुरया वातरोगे
दधिमण्डेन विड्बन्धे
परिकर्त्तिषु
भगन्दरे पाण्डुरोगे कासे श्वासे
हृद्रोगे ग्रहणीरोगे कुष्ठे मन्देऽनले
दद्रुविषे मूलविषे गरे कृत्रिमे
यथार्हं

नारायणक्षेत्र क्ली, ( नारायणस्य क्षेत्र
मिकस्थानम् । यथा, ब्रह्मपुराणे ।
'प्रवाहमवधि कृत्वा यावद्धस्तचतुः
अत्र नारायणः स्वामी नान्य
"यत्र किञ्चिन्न दृश्येत साधात्

"श्वा शृगालो वृको गृध्रो व्याड़ः कङ्कस्तथा-
क्रमात् ॥")

इन्द्रः। इति शब्दरत्नावली ॥ वञ्चकः। इति रायमुकुटः ॥

व्याड़ायुधं, क्ली, (व्याड़स्य व्याघ्रस्यायुधं नखमिव।) व्याघ्रनखाख्यद्रव्यम्। इत्यमरः ॥

व्याड़िः, पुं, कोषकारमुनिविशेषः। तत्पर्य्यायः। विन्ध्यवासी २ नन्दिनीतनयः ३। इति हेमचन्द्रः ॥ विन्ध्यस्थः ४ नन्दिनीसुतः ५। इति त्रिकाण्डशेषः ॥

व्यात्तं, त्रि, (वि + आ + दा + क्तः।) प्रसारितम्। विस्तृतम्। यथा,—

"सद्योऽर्द्धकर्य्यं गिरिकन्दराद्भुत-
व्यात्तास्यनासं हनुभेदभीषणम्।
दिवि स्पृशत्कायमदीर्घपीवर-
ग्रीवोरुवक्षःस्थलमल्पमध्यमम् ॥"

इति श्रीभागवते ७ स्कन्धे ८ अध्यायः।

गिरिकन्दरवत् अद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिन्। इति तट्टीकायां श्रीधरस्वामी ॥

व्यात्युक्षी, स्त्री, (व्यतिहारेण उक्षणम्। वि + आ + अति + उक्ष + "कर्म्मव्यतीहारे णच् स्त्रियाम्।"३।३।४३। इति णच्। ततः "णच: स्त्रियामञ्।"५।४।१४। इति अञ्।"टिड्ढाणञिति।" ४।१।१५। इति ङीप्।) रसिकानामन्योन्यं जलक्रीड़नम्। इति संक्षिप्तसारोणादिवृत्तिः। तत्पर्य्यायः जलक्रीड़ाशब्दे द्रष्टव्यः ॥

व्यादिशः, पुं, (विशेषेणादिशति स्वस्वकर्म्मणि नियोजयति जगत्। वि + आ + दिश + कः।) विष्णुः। यथा,—

"अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः॥"

इति महाभारते तस्य सहस्रनामस्तोत्रम् ॥

व्याधः, पुं, (विध्यति मृगादीन्। व्यध + "श्याद्व्यधेति।" ३।१।१४१। इति णः।) मृगहिंसकजातिः। शिकारी इति भाषा। स तु सर्व्वक्षियपत्न्यां चत्रियाज्जातः। यथा,—

"नापिताद्गोपकन्यायां सर्व्वस्वी तस्य योषिति।
क्षत्राद्बभूव व्याधश्च बलवान् मृगहिंसकः॥"

इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥

तत्पर्य्यायः। मृगवधाजीवः २ मृगयुः ३ लुब्धकः ४। इत्यमरः ॥ मृगाविन् ५ द्रोहाटः ६। इति जटाधरः ॥ मृगाजीवनः ७ वलमांशुनः ८। इति शब्दरत्नावली ॥ (यथा,—

"विद्धा मृगी व्याधशिलीमुखेन
मृगोऽपि तत्कातरवीक्षणेन।
अहन् परित्यज्य गतव्यथा सा
मृगस्य जीवावधिराधिरासीत् ॥"

इत्युद्भटः ॥)

दुष्टः। इति मेदिनी ॥ (यथा, भागवते। ३। १४। ३४।

"व्याधस्याप्यनुकम्प्यानां स्त्रीणां देवः सतीपतिः॥")



व्याधभीतः, पुं, (व्याधाद्भीतः।) मृगः। इति शब्दचन्द्रिका ॥ (व्याधभीते, त्रि ॥)

व्याधामः, पुं, वज्रम्। इति हेमचन्द्रः ॥

व्याधिः, पुं, (विविधा आधयोऽस्मात्। यद्वा, वि + आ + धा + "उपसर्गे घोः किः।"३।३।९२। इति किः।) कुष्ठम्। रोगः। इत्यमरः ॥ (यथा, महाभारते। १२। १६। ८।

"द्विविधो जायते व्याधिः शारीरो मानसस्तथा।
परस्परं तयोर्जन्म निर्द्वन्द्वं नोपलभ्यते॥")

कामव्यथासन्तापजन्यस्पृहता। इति रसमञ्जरी॥ कुष्ठस्य निदानं यथा,—

"व्यालोकनमनस्यौल्यक्रीड़ाविषयचेष्टितैः।
विरोधरूक्षभोज्यैर्विषादाद्यैश्च दूषितः॥
पुंस्त्वोत्साहबलभ्रंशशोथचित्ताप्नवज्वरान्।
सर्व्वाकाराङ्गनिस्तोदं रोमहर्षं सुसुप्तताम्॥
कुष्ठं विषममन्यच्च कुर्य्यात् सर्व्वाङ्गमार्दवम्॥"

इति गारुड़े १७२ अध्यायः ॥

अन्यत् कुष्ठशब्दे द्रष्टव्यम् ॥ * ॥ अथ कुष्ठस्य चिकित्सा।

"वातोत्तरेषु सर्पिर्व्वमनं कफोत्तरेषु कुष्ठेषु।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं श्रेष्ठम्॥
पथ्याकरञ्जसिद्धार्थनिशावल्गुजसैन्धवैः।
विड़ङ्गसहितैः पिष्टैर्लेपो मूत्रेण कुष्ठनुत्॥"

अवल्गुजः वाकुचीति लोके। पथ्यादिभिर्लेपः ॥ * ॥

"सोमराजीभवचूर्णं शृङ्गवेरसमन्वितम्।
उद्वर्त्तनमिदं हन्ति कुष्ठरोगं सुतासदम्॥"

सोमराजी वाकुचीति लोके। सोमराज्युद्वर्त्तनम् ॥ * ॥

"रसायनं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम्।
मार्कण्डेयप्रभृतिभिर्येन प्रयुक्तं महर्षिभिः॥
पुष्पकाले तु पुष्पाणि फलकाले फलानि च।
संगृह्य पिचुमर्दस्य त्वङ्मूलानि दलानि च॥
दिरंशानि समाहृत्य भागिकानि प्रकल्पयेत्।
त्रिफला त्र्यूषणं ब्राह्मी श्वदंष्ट्रारुष्कराग्नयः॥
विड़ङ्गवारवाराहीलौहचूर्णाः स्मृताः समाः।
निशाद्वयावल्गुजकव्याधिघाताः सशर्कराः॥
कुष्ठमिन्द्रयवाः पाठाः चूर्णमेषान्तु संयुतम्।
खदिरासननिम्बानां घनं क्वाथेन भावयेत्॥
सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन च।
स्निग्धः शुद्धतनुर्धीमान् योजयेत्तच्छुभे दिने॥
मधुना तिक्तहविषा खदिरासनवारिणा।
लेह्यमुष्णाम्भसा वापि कोलवृद्ध्या पलं भवेत्।
जीर्णे तस्मिन् समश्नीयात् स्निग्धं लघु हितं च यत्॥

विचर्च्चिकोदुम्बरपुण्डरीक-
कपालदद्रुकिटिभालसादि।
शतारुविस्फोटविसर्पमालाः
कफप्रकोपं त्रिविधं किलासम्॥
भगन्दरश्लीपदवातरक्त-
जड़ान्धनाड़ीव्रणशीर्षरोगान्।



सर्व्वान् प्रमेहान् प्रदरांश्च सर्व्वा
दंष्ट्राविषं मूलविषं निहन्ति ॥
स्थूलोदरः सिंहकृशोदरः स्यात्
सुश्लिष्टसन्धिर्मधुनोपयोगात्।
सदोषरोगादपि ये दशन्ति
सर्पादयो यान्ति विनाशमाशु
जीवेच्चिरं व्याधिजराविमुक्तः
शुभे रतिश्चन्द्रसमानकान्तिः॥"

व्ययमर्षः। निम्बस्य फलपुष्पत्वक् [illegible]
सर्व्वाणि समुदितानि द्विगुणानि
भृङ्गराजस्य रसेन सप्तवारान्
त्रिफलादीनि पाठान्तानि [illegible]
भागानि चूर्णितानि खदिर [illegible]
निविड़क्वाथेन भावयेत्। ततः [illegible]
मध्वादिनावलिह्यात्। पञ्चनिम्ब [illegible]
शशिलेखापञ्चपलं तावन्निरिजस्य [illegible]

ताप्यस्य पलमितयं [illegible]
त्रिफलावारकञ्जसप्तवरखदिरगुड़ूची [illegible]
[illegible]

इत्तं रचिता वटिका मधुघृतमिश्रा।

शीघ्रमेव च कुष्ठं गुदगवर्त्मगवातम [illegible]
श्वित्राणि पाण्डुरोगं विषमाणुदरप्रमे

नाशयति वलीपलितं योगः [illegible]
शशिलेखा सोमराजी। [illegible]
चतुर्[illegible]। ताप्यस्य स्वर्णमाक्षिकस्य।
गुड़ूचीति लोके। स्वायम्भुवो गुग्गुलु
"चित्रकं त्रिफला व्योषमजाजी क [illegible]
सैन्धवातिविषे कुष्ठं [illegible]
विड़ङ्गान्यजमोदा च मुस्ता [illegible]
यावन्त्येतानि सर्व्वाणि तावन्मात्रन्तु
संचूर्ण्य सर्पिषा सार्द्धं गुटिकां [illegible]
प्रातर्भोजनकाले च खादेदग्निवलं
हन्त्यष्टादश कुष्ठानि क्रमीन् [illegible]
ग्रहण्यर्शोविकारांश्च [illegible]
गृध्रसीमस्थिभग्नञ्च गुल्मञ्चापि [illegible]
व्याधिं कोष्ठगतांश्चापि [illegible]
एकविंशतिको गुग्गुलुः ॥ * ॥
"वातरक्ताधिकारोक्तः पुरः कैश [illegible]
कुष्ठानां वातरक्तानां नाशयेत् [illegible]
इति कैशोरको गुग्गुलु
"भल्लातकं प्रस्थयुगं छित्त्वा [illegible]
प्रस्थद्वयं गुड़ूच्याश्च कुर्य्यं तत्राम्भसि
चतुर्थांशावशेषन्तु कषायमवतारयेत्
वस्त्रपूते कषाये च वक्ष्यमाणानि नि
शरावमात्रं गोमहिषीदुग्धस्याढ़कं [illegible]
सितां प्रस्थमितां दद्यात् प्रस्थार्द्धं सर्पि
सर्व्वाण्येकत्र भाण्डे तु पचेत् [illegible]
सर्व्वद्रव्ये घनीभूते [illegible]

जम्बीराद्भिर्दिनं घृष्टं त्रिंशद्दंशं विषं क्षिपेत् ।
अस्य माषद्वयं खादेन्माहिषीघृतसंयुतम् ॥
मध्वाज्यैर्वाकुचीबीजैः कर्षं लिह्यात्ततः परम् ।
तालकेश्वरनामायं सर्व्वकुष्ठहरो रसः ॥”
अर्कौ मारितं ताम्रम् । इति द्वितीयतालकेश्वरो रसः ॥ * ॥

“रसो बलिस्ताम्रमयः पुरोऽग्निः
शिलाजतु स्याद्विषतिन्दुकश्च ।
वरा च तुल्यं गगनं करञ्ज-
बीजं पृथग्भागचतुष्टयञ्च ॥
संमर्द्य सर्व्वं मधुना घृतेन
घृतस्य पात्रे निहितं प्रयत्नात् ।
कर्षं भजेत् प्रत्यहमस्य पथ्यं
शाल्योदनं दुग्धमधुत्रयञ्च ॥
विशीर्णकर्णाङ्गुलिनासिकोऽपि
भवेदनेन स्मरतुल्यमूर्त्तिः ।
क्षारापरित्याग इह प्रदिष्टो
तिलौदनं तत्र निबद्धमूले ॥”

ताम्रमयञ्च मारितम् । पुरो गुग्गुलुः । अग्निः चित्रकम् । विषतिन्दुकः कुचिला । वरा त्रिफला । रसादि त्रिफलान्तं सर्व्वं तुल्यम् । गगनमभ्रकम् । करञ्जबीजञ्च पृथक् चतुर्गुणं रसात् । तत्र कुष्ठे बद्धमूले सति तिलौदनमेव पथ्यम् । इति गलत्कुष्ठाधिकारः । इति भावप्रकाशः ॥ * ॥ अथ सर्व्वव्याधिहरकवचम् ।

हरिरुवाच ।

“सर्व्वव्याधिहरं वक्ष्ये वैष्णवं कवचं शिवम् ।
येन रक्षा कृता शम्भोः श्वेतं रक्षयतः पुरा ॥
प्रणम्य देवमीशानमजं नित्यमनामयम् ।
देवं सर्व्वेश्वरं विष्णुं सर्व्वव्यापिनमव्ययम् ॥
बध्नाम्यहं प्रतिसरं नमस्कृत्य जनार्द्दनम् ।
अमोघाप्रतिमं सर्व्वं सर्व्वदुःखनिवारणम् ॥
विष्णुर्मामग्रतः पातु कृष्णो रक्षतु पृष्ठतः ।
हरिर्मे रक्षतु शिरो हृदयञ्च जनार्द्दनः ॥
मनो मम हृषीकेशो जिह्वां रक्षतु केशवः ।
पातु नेत्रे वासुदेवः श्रोत्रे सङ्कर्षणोऽवतु ॥
प्रद्युम्नः पातु मे घ्राणमनिरुद्धश्च चर्म्मकम् ।
वनमाली गलस्यान्तं श्रीवत्सो रक्षतादधः ॥
पार्श्वं रक्षतु मे चक्रं वामं दैत्यनिवारणः ।
दक्षिणन्तु गदा देवी सर्व्वासुरनिवारिणी ॥
उदरं मुषलं पातु पृष्ठं मे पातु लाङ्गलम् ।
ऊरू रक्षतु मे शार्ङ्गं जङ्घे रक्षतु नन्दकः ॥
पार्ष्णी रक्षतु शङ्खश्च पद्मं मे चरणावुभौ ।
सर्व्वकार्य्यार्थसिद्ध्यर्थं पातु मां गरुडः सदा ॥
वराहो रक्षतु जले विषमेषु च वामनः ।
अटव्यां नरसिंहश्च सर्व्वतः पातु केशवः ॥
हिरण्यगर्भो भगवान् हिरण्यं मे प्रयच्छतु ।
सांख्याचार्य्यस्तु कपिलो धातुसाम्यं करोतु मे ॥
श्वेतद्वीपनिवासी च श्वेतद्वीपं नयत्वजः ।
सर्व्वान् शत्रून् सूदयतु मधुकैटभसूदनः ॥
विष्णुः सदा विकिरतु किल्बिषं मम विग्रहात् ।
हंसो मत्स्यस्तथा कूर्म्मः पातु मां सर्व्वतो दिशम् ॥
त्रिविक्रमस्तु मे देवः सर्व्वान् पापान् निकृन्ततु ।
नरनारायणौ देवौ बुद्धिं पालयतां मम ।
शेषो मे निर्म्मलं ज्ञानं करोत्वज्ञाननाशनम् ।
बलरामो नाशयतु कल्मषं यत् कृतं मया ॥
पद्भ्यां ददातु परमो सुखं मूर्द्ध्ना मम प्रभुः ।
दत्तात्रेयः कलयतु सपुत्त्रपशुबान्धवम् ॥
सर्व्वानरीन्नाशयतु रामः परशुना मम ।
रक्षोघ्नस्तु दाशरथिः पातु नित्यं महाभुजः ॥
शत्रून् मे समरे हन्याद्रामो यादवनन्दनः ।
प्रलम्बकेशिचाणूरपूतनाकंसनाशनः ॥
कृष्णस्य यो बालभावः स मे कामान् प्रयच्छतु ।
अन्धकारं तमो घोरं पुरुषं कृष्णपिङ्गलम् ॥
पश्यामि भयसन्त्रस्तः पाशहस्तमिवान्तकम् ।
ततोऽहं पुण्डरीकाक्षमच्युतं शरणं गतः ॥
धन्योऽहं निर्भयो नित्यं यस्य मे भगवान् हरिः ।
ध्यात्वा नारायणं देवं सर्व्वोपद्रवनाशनम् ॥
वैष्णवं कवचं बद्ध्वा विचरामि महीतले ।
अप्रधृष्योऽस्मि भूतानां सर्व्वदेवमयो ह्यहम् ॥
स्मरणाद्देवदेवस्य विष्णोरमिततेजसः ।
सिद्धिर्भवतु मे नित्यं यथामन्त्रमुदाहृतम् ॥
यो मां पश्यति चक्षुर्भ्यां यांश्च पश्यामि चक्षुषा ।
सर्व्वेषां पापदुष्टानां विष्णुर्बध्नाति चक्षुषी ॥
वासुदेवस्य यच्चक्रं तस्य चक्रस्य ये त्वराः ।
ते छिन्दन्तु च पापं मे मम हिंसन्तु हिंसकान् ॥
राक्षसेषु पिशाचेषु कान्तारेष्वटवीषु च ।
विवादे राजमार्गेषु द्यूतेषु कलहेषु च ॥
नदीसन्तरणे घाते संप्राप्ते प्राणसंशये ।
अग्निचौरनिपाते च सर्व्वग्रहनिवारणे ॥
विद्युत्सर्पविषोद्वेगे रोगे च विघ्नसङ्कटे ।
जप्यमेतज्जपेन्नित्यं शरीरे भयमागते ॥
अयं भगवतो मन्त्रो मन्त्राणां परमो महान् ।
विख्यातं कवचं गुह्यं सर्व्वपापप्रणाशनम् ॥
स्वमायाकृतिनिर्म्माणकल्पान्तगहनो महत् ।
अनाद्यन्त जगद्वीज पद्मनाभ नमोऽस्तु ते ॥
ॐ कालाय स्वाहा । ॐ कालपुरुषाय स्वाहा । ॐ कृष्णाय स्वाहा । ॐ कृष्णपुरुषाय स्वाहा । ॐ चण्डाय स्वाहा । ॐ चण्डपुरुषाय स्वाहा । ॐ प्रचण्डाय स्वाहा । ॐ प्रचण्डपुरुषाय स्वाहा । ॐ सर्व्वाय स्वाहा । ॐ सर्व्वपुरुषाय स्वाहा । ॐ नमो भुवनेशाय त्रिलोकधात्रे इलिटि मिलिटि स्वाहा । ॐ नमो अम्बे चाभये ये ये सत्त्वा या पात्रचरा वैषा दैत्यदानवयक्षराक्षसभूतपिशाचकुश्माण्डापस्मारकोच्छादनज्वराणामैकाहिकद्वितीयतृतीयचातुर्थकमौहूर्त्तिकदिनज्वररात्रिज्वरसन्ध्याज्वरसर्व्वज्वरादीनां लूताकीटकण्टपूतनाभुजङ्गस्थावरजङ्गमविषादीनामिदं शरीरं ममापथ्यं भवतु तुम्बुरुस्फुटप्रकटोत्कटविकटदंष्ट्रपूर्व्वतो रक्ष । ॐ हैहै हैहै दिनकर सहस्रकाल समाहतो जय पश्चिमतो रक्ष । ॐ निवि निवि प्रदीप्तज्वलनज्वालाकारा महाकपिल उत्तरतो रक्ष । ॐ मिलि मिलि विलि विलि गारुडि गौरि गान्धारि विषमोह विषविषमांसं मोहयतु स्वाहा । दक्षिणतो रक्ष मां अमुकस्य सर्व्वभूतभयोपद्रवेभ्यो रक्ष रक्ष जय जय विजयते न हीयते विप्रश्रमोऽहं कृतवाच्यते । भयरुद्य भयवोभयोऽभयं दिशतु ममास्तात् सादनमच्युतः । तदुदरमखिलं विशन्तु लोका युगपरिवर्त्तसहस्रं छायात्ममनमिव प्रविशन्ति कलयणो ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
सर्व्वज्वरान्मम घ्नन्तु विष्णुर्नारायणो हरिः ॥”
इत्यादिमहापुराणे गारुडे सर्व्वव्याधिहरविष्णुकवचं नाम २०० अध्यायः ॥

व्याधिघातः, पुं, ( व्याधेर्घातो यस्मात् । ) आरग्वधवृक्षः । इत्यमरः ॥

व्याधितः, त्रि, (व्याधिः संजातोऽस्येति । तारकादित्वादितच् । ) व्याधियुक्तः । तत्पर्य्यायः । आमयावी २ विकृतः ३ अपटुः ४ आतुरः ५ अभ्यमितः ६ अभ्यान्तः ७ । इत्यमरः ॥ रोगी ८ । इति जटाधरः ॥ ( यथा, हितोपदेशे ।
“दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥”)

व्याधिहन्ता, [ऋ] पुं, ( व्याधेर्हन्ता । ) वाराहीकन्दः । इति राजनिर्घण्टः ॥ व्याधिघातके, त्रि ॥

व्याधुतः, त्रि, ( वि + आ + धु + क्तः । ) कम्पितः । इति शब्दरत्नावली ॥

व्याधूतः, त्रि, ( वि + आ + धू + क्तः । ) कम्पितः । इति शब्दरत्नावली ॥ ( यथा, गीतगोविन्दे । १ । ३८ ।
“उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्ण-
ज्वराः ॥”)

व्यानः, पुं, (व्यानिति सर्व्वशरीरं व्याप्नोतीति । वि + आ + अन + अच् । ) शरीरस्थपञ्चवाय्वन्तर्गतसर्व्वशरीरगवायुः । इत्यमरः ॥ इमे प्राणादयः पञ्चवायवः शरीरे तिष्ठन्ति ते च नियतस्थानस्थाः । यदाहुः ।
“हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे च व्यानः सर्व्वशरीरगः ॥”
इति ॥

एवं तच्चापाराश्च यथा,—
“अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम् ।
भाषणादि निमेषादि तद्व्यापाराः क्रमादमी ॥”
इति भरतः ॥

श्रीधरस्वामिमते तत्कर्म्म । व्यायनम् । आकुञ्चनप्रसारणादि । अन्यच्च ।
“व्यानो व्यानशयत्यन्नं सर्व्वव्याधिप्रकोपणः ।
महारजतसुप्रख्यो ह्यानोपादानकारणः ॥
स चाक्षिकर्णयोर्मध्ये कट्यां वै गुल्फयोरपि ।
घ्राणे गले स्फिग्देशे तिष्ठत्यत्र निरन्तरम् ।
स्पन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपणः ॥”
इति शारदातिलकटीका ॥

व्यापकः, त्रि, ( वि + आप् + ण्वुल् । ) विशेषेण आप्नोति यः । तद्वन्निष्ठात्यन्ताभावाप्रतियोगी

